THE

HARIDAS SANSKRIT SERIES

66



THE

# DHVANYĀLOKA

OF

ĀNANDAVARDHANĀCHĀRYA

## WITH THE DĪDHITI COMMENTARY

INTRODUCTION, INDEX ETC.,

BY

*Kavis'ekhara Pandit Badari Nāth S'armā*

EDITED

## WITH HINDĪ COMMENTARY

BY

Nyāya-Vyākaraṇācharya

PANDIT S'RĪ S'OBHIT MISHRA.

PUBLISHED BY

JAYA KRISHNA DAS HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office*

BANARAS

1953

# भूमिका

अये सुधीसहृदयधौरेयाः साहित्याम्भोधिनिष्णाताः !

कीर्तिचतुर्वर्गादिप्रयोजकस्य सहृदयहृदयाह्लादिनः शब्दार्थमयस्य (१)काव्यस्य कायस्य जीवितमिव सारभूतं व्यक्तिमात्रावलम्बेन गुणीकृताभ्यां शब्दार्थाभ्यां मध्यमानादेन शाब्दिकाङ्गीकृतं स्फोटमिव स्फुटीक्रियमाणं वस्त्वलङ्काररसादिरूपतया त्रिशाखमपि रसादिप्रधानं ध्वनिमभाववादेन, भाक्तत्वोपन्यासेन, ब्रह्मतत्त्ववदनिर्वचनीयताऽऽख्यानेन, समासोक्त्याद्यर्थालङ्कारान्तर्भावनेन, गुणवत्संघटनाऽऽत्मकरीतिलक्षणताऽङ्गीकारेण, वक्रोक्त्यन्तःपातनेन, परामर्शप्रभवसंविद्विषयत्वव्यवस्थापनेन च विविधाभिर्भङ्गीभिः खण्डयतां प्रतिपक्षिप्राचीनविपश्चितां मतं ध्वनिस्थापनयाऽपाचिकीर्षुः सुगृहीतनामधेयो राजानकानन्दवर्धनाचार्यः साहित्याध्वन्यालोकमादधानं 'ध्वन्यालोक' समभिधानं ध्वनिग्रन्थमिमं प्रथमं प्राणैषीत् ।

इह च प्रथमोद्द्योते—ध्वनिस्वरूपनिरूपणं प्रतिज्ञाय तदभाव-भाक्तत्वानिर्वाच्यत्ववादिनां मतं निराकृतम्, ध्वनिं लक्षयित्वा समासोक्त्याद्यलङ्कारानन्तर्भावश्च दर्शितः । द्वितीयोद्द्योते—व्यङ्ग्यमुखेन ध्वनेः प्रभेदानां लक्षणोदाहरणानि प्रकाशयता रसादिध्वनि-रसवदाद्यलङ्काराणां मिथो वैलक्षण्यं परिपन्थिसमयमन्थनपूर्वकं व्यवस्थाप्य गुणा निरूपिताः । तृतीयोद्द्योते-पुनर्व्यञ्जकमुखेन ध्वनेः प्रकारान् सपरिकरं निरूपयता रीतीर्वृत्तीश्च प्रदर्श्य भाट्ट-प्राभाकर-तार्किक-वेदान्ति-बौद्धादिनयेष्वपि व्यक्तिः स्थापिता । तुरीयोद्द्योते च—ध्वनिसम्बन्धेन प्रागुक्तानामप्यर्थानामपूर्वत्वं निदर्श्य, कविप्रतिभाऽऽनन्त्यं ध्वनिप्रयोजनान्तरं प्रकटयता शान्तादिरसानां भारतादिप्रबन्धव्यङ्ग्यतां व्यवस्थापयता सप्रबन्धनामनिर्देशमुपसंहारो विहितः ।

अत्र हि ध्वनिशब्देन बहुत्र गुणीभूतशब्दार्थनिष्ठव्यक्तिप्रयोज्यबोधविषयप्रधानीभूतार्थस्य, कुत्रापि तदर्थव्यञ्जनक्षमशब्दार्थयोः, क्वचित् तादृशार्थबोधनव्यापारस्य च परामर्शः । भक्तिपदेन शुद्धगौणलक्षणयोः, लक्षणापदेन तु गौणलक्षणामात्रस्य प्रतीतिः । शब्दशक्त्युद्भवध्वनेरलङ्कारमात्ररूपतयैकविधत्वमेव । शब्दार्थोभयशक्त्युद्भवध्वनिरप्युपपत्त्यैवोहनीयः । काव्यस्य मुख्यतया ध्वनिर्गुणीभूतव्यङ्ग्यं चेति द्वावेव प्रकारौ, चित्रं तु गौणः प्रभेदः । सर्वापेक्षया ध्वनेः प्राधान्यम्, तत्रापि विशेषेण रसादिलक्षणस्य । लेखशैली च पातञ्जलमहाभाष्यादिवत् पुनःपुनरुपात्तविष-

(१) एतन्मदीयसाहित्यमीमांसायां स्फुटम् ।

थोपपादिका नितरामुत्तानप्रायाभिर्गाथाऽपि गभीराशया प्रबन्धप्राचीनतरत्वं द्योतयति। ध्वनेः सर्वतः प्रथमं लक्षणस्य प्रवर्तकत्वाद् ग्रन्थकृदयं ध्वनिकारसञ्ज्ञासम्मानस्य भूमिः। लक्ष्यन्तु महर्षिवाल्मीकि-द्वैपायनादिभिरेव असेधितम्। अत एव 'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः' इतिकारिकायां निगमप्रस्थानादिपारस्परिकप्रसिद्धेः सूचयिता समाम्नातशब्द उपक्रम एव प्रयुक्तः।

ग्रन्थोऽयं कारिकारूपो ध्वनिनामा, परिकरश्लोक-सङ्ग्रहश्लोक-सङ्क्षेपश्लोकघटित-वृत्तिरूपश्चालोकनामेतिभागद्वयभाक्, ध्वन्यालोकः सहृदयालोकः काव्यालोकश्चेतिसंज्ञात्रयभाक् च। तत्र कारिकाग्रन्थस्याद्यमङ्गलराहित्येन, कारिकावृत्त्योः प्रतिपाद्यविपर्यैक्येन, ध्वनिग्रन्थकृन्नाम्नः पृथगनुपलम्भेन जल्हणगुम्फितायां सूक्तिमुक्तावली—

'ध्वनिनाऽतिगभीरेण काव्यतत्त्वनिवेशिना।

आनन्दवर्धनः कस्य नासीदानन्दवर्धनः ? ॥' इति राजशेखरीयपद्यस्य दर्शनाद्, व्यक्तिविवेके महिमभट्टेनोभयो(१)रविभागेनैव खण्डनात्, सूरिकल्हण-हेमेन्द्र-क्षेमेन्द्र-जयरथ-विश्वनाथ-गोविन्द-कुमारस्वामिप्रभृतिनिबन्धृमतानुकूल्यात्, समुद्रबन्धस्य काव्यपञ्चकोपपादितसिद्धान्ताच्च कारिकावृत्तिग्रन्थयोः प्रणेताऽऽनन्दवर्धन एवैक इति पौरस्त्या विपश्चितो निश्चिन्वन्ति।

'जैकोबी' प्रभृतयः पाश्चात्यास्तु 'अत एव मूलकारिका तन्निराकरणार्था न श्रूयते, वृत्तिकृत्तु निराकृतमपि प्रमेयसङ्ख्यापूरणाय कण्ठेन तत्पक्षमनूद्य निराकरोति।' इति ( निर्णयसागरे पूर्वं मुद्रितस्य लोचनस्य ५९ पृष्ठे ) 'तेनात्र प्रथमोद्द्योते ध्वनेः सामान्यलक्षणमेव कारिकाकारेण कृतम्, द्वितीयोद्द्योते कारिकाकारोऽवान्तरविभागं विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान्। तदाशयानुसारेण तु वृत्तिकृदत्रैवोद्द्योते मूलविभागमवोचत्।' इति ( ५९ पृष्ठे ) 'न चैतन्मयोक्तम्, अपि तु कारिकाकाराभिप्रायेणेत्याह—' इति ( ६० पृष्ठे ) 'भवति मूलतो द्विभेदत्वं कारिकाकारस्यापि सम्मतमेवेति भावः।' इति (६० पृष्ठे) 'एतत् तावत् त्रिभेदत्वं न कारिकाकारेण कृतम्, वृत्तिकारेण तु दर्शितम्।' (इति १२३ पृष्ठे) च लोचनस्य दर्शनान्मम्मटादिस्वरसानुसन्धानाच्च कारिकावृत्तिकर्त्रोर्भेदं प्रतिपादयन्ति।

एवं सति यदा कारिकावृत्तिकृतोर्भेदः, तदा कारिकाकारो ध्वनिकारातिरिक्तनाम्ना सर्वैरपरिचित एव। अत एव तदीयः समयोऽपि विशेषेण निर्धारयितुमशक्यः।

( १ ) कारिकावृत्त्योः।

# भूमिका

अये सुधीसहृदयधौरेयाः साहित्याम्भोधिनिष्णाताः !

कीर्तिचतुर्वर्गादिप्रयोजकस्य सहृदयहृदयाह्लादिनः शब्दार्थमयस्य (१)काव्यस्य कायस्य जीवितमिव सारभूतं व्यक्तिमात्रावलम्बेन गुणीकृताभ्यां शब्दार्थाभ्यां मध्यमानादेन शाब्दिकाङ्गीकृतं स्फोटमिव स्फुटीक्रियमाणं वस्त्वलङ्काररसादिरूपतया त्रिशाखमपि रसादिप्रधानं ध्वनिमभाववादेन, भाक्तत्वोपन्यासेन, ब्रह्मतत्त्ववदनिर्वचनीयताऽऽख्यानेन, समासोक्त्याद्यर्थालङ्कारान्तर्भावनेन, गुणवत्संघटनाऽऽत्मकरीतिलक्षणताऽङ्गीकारेण, वक्रोक्त्यन्तःपातनेन, परामर्शप्रभवसंविद्विषयत्वव्यवस्थापनेन च विविधाभिर्भङ्गीभिः खण्डयतां प्रतिपक्षिप्राचीनविपश्चितां मतं ध्वनिस्थापनयाऽपाचिकीर्षुः सुगृहीतनामधेयो राजानकानन्दवर्धनाचार्यः साहित्याध्वन्यालोकमादधानं 'ध्वन्यालोक' समभिधानं ध्वनिग्रन्थमिमं प्रथमं प्राणैषीत् ।

इह च प्रथमोद्द्योते—ध्वनिस्वरूपनिरूपणं प्रतिज्ञाय तदभाव-भाक्तत्वानिर्वाच्यत्ववादिनां मतं निराकृतम्, ध्वनिं लक्षयित्वा समासोक्त्याद्यलङ्कारानन्तर्भावश्च दर्शितः । द्वितीयोद्द्योते—व्यङ्ग्यमुखेन ध्वनेः प्रभेदानां लक्षणोदाहरणानि प्रकाशयता रसादिध्वनि-रसवदाद्यलङ्काराणां मिथो वैलक्षण्यं परिपन्थिसमयमन्थनपूर्वकं व्यवस्थाप्य गुणा निरूपिताः । तृतीयोद्द्योते-पुनर्व्यञ्जकमुखेन ध्वनेः प्रकारान् सपरिकरं निरूपयता रीतीर्वृत्तीश्च प्रदर्श्य भाट्ट-प्राभाकर-तार्किक-वेदान्ति-बौद्धादिनयेष्वपि व्यक्तिः स्थापिता । तुरीयोद्द्योते च—ध्वनिसम्बन्धेन प्रागुक्तानामप्यर्थानामपूर्वत्वं निदर्श्य, कविप्रतिभाऽऽनन्त्यं ध्वनिप्रयोजनान्तरं प्रकटयता शान्तादिरसानां भारतादिप्रबन्धव्यङ्ग्यतां व्यवस्थापयता सप्रबन्धनामनिर्देशमुपसंहारो विहितः ।

अत्र हि ध्वनिशब्देन बहुत्र गुणीभूतशब्दार्थनिष्ठव्यक्तिप्रयोज्यबोधविषयप्रधानीभूतार्थस्य, कुत्रापि तदर्थव्यञ्जनक्षमशब्दार्थयोः, क्वचित् तादृशार्थबोधनव्यापारस्य च परामर्शः । भक्तिपदेन शुद्धगौणलक्षणयोः, लक्षणापदेन तु गौणलक्षणामात्रस्य प्रतीतिः । शब्दशक्त्युद्भवध्वनेरलङ्कारमात्ररूपतयैकविधत्वमेव । शब्दार्थोभयशक्त्युद्भवध्वनिरप्युपपत्त्यैवोहनीयः । काव्यस्य मुख्यतया ध्वनिर्गुणीभूतव्यङ्ग्यं चेति द्वावेव प्रकारौ, चित्रं तु गौणः प्रभेदः । सर्वापेक्षया ध्वनेः प्राधान्यम्, तत्रापि विशेषेण रसादिलक्षणस्य । लेखशैली च पातञ्जलमहाभाष्यादिवत् पुनःपुनरुपात्तविष-

(१) एतन्मदीयसाहित्यमीमांसायां स्फुटम् ।

योपपादिका नितरामुत्तानप्रायाभिनयाऽपि गभीराशया प्रबन्धप्राचीनतरत्वं द्योतयति। ध्वनेः सर्वतः प्रथमं लक्षणस्य प्रवर्तकत्वाद् ग्रन्थकृदयं ध्वनिकारसञ्ज्ञासम्मानस्य भूमिः। लक्ष्यन्तु महर्षिवाल्मीकि–द्वैपायनादिभिरेव प्रसेधितम्। अत एव 'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः' इतिकारिकायां निगमप्ररूढानादिपारम्परिकप्रसिद्धेः सूचयिता समाम्नातशब्द उपक्रम एव प्रयुक्तः।

ग्रन्थोऽयं कारिकारूपो ध्वनिनामा, परिकरश्लोक–सङ्ग्रहश्लोक–सङ्क्षेपश्लोकंघटित–वृत्तिरूपश्चालोकनामेतिभागद्वयभाक्, ध्वन्यालोकः सहृदयालोकः काव्यालोकश्चेतिसंज्ञात्रयभाक् च। तत्र कारिकाग्रन्थस्याद्यमङ्गलराहित्येन, कारिकावृत्त्योः प्रतिपाद्यविषयैक्येन, ध्वनिग्रन्थकृन्नाम्नः पृथगनुपलम्भेन जल्हणगुम्फितायां सूक्तिमुक्तावलौ—

'ध्वनिनाऽतिगभीरेण काव्यतत्त्वनिवेशिना।

आनन्दवर्धनः कस्य नासीदानन्दवर्धनः ? ॥' इति राजशेखरीयपद्यस्य दर्शनाद्, व्यक्तिविवेके महिमभट्टेनोभयो(१)रविभागेनैव खण्डनात्, सूरिकल्हण–हेमेन्द्र–क्षेमेन्द्र–जयरथ–विश्वनाथ–गोविन्द–कुमारस्वामिप्रभृतिनिबन्धृमतानुकूल्यात्, समुद्रबन्धस्य काव्यपञ्चकोपपादितसिद्धान्ताच्च कारिकावृत्तिग्रन्थयोः प्रणेताऽऽनन्दवर्धन एवैक इति पौरस्त्या विपश्चितो निश्चिन्वन्ति।

'जैकोबी' प्रभृतयः पाश्चात्यास्तु 'अत एव मूलकारिका तन्निराकरणार्था न श्रूयते, वृत्तिकृत्तु निराकृतमपि प्रमेयसङ्ख्यापूरणाय कण्ठेन तत्पक्षमनूद्य निराकरोति।' इति (निर्णयसागरे पूर्वं मुद्रितस्य लोचनस्य ५९ पृष्ठे) 'तेनात्र प्रथमोद्द्योते ध्वनेः सामान्यलक्षणमेव कारिकाकारेण कृतम्, द्वितीयोद्द्योते कारिकाकारोऽवान्तरविभागं विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान्। तदाशयानुसारेण तु वृत्तिकृदत्रैवोद्द्योते मूलविभागमवोचत्।' इति (५९ पृष्ठे) 'न चैतन्मयोक्तम्, अपि तु कारिकाकाराभिप्रायेणेत्याह—' इति (६० पृष्ठे) 'भवति मूलतो द्विभेदत्वं कारिकाकारस्यापि सम्मतमेवेति भावः।' इति (६० पृष्ठे) 'एतत् तावत् त्रिभेदत्वं न कारिकाकारेण कृतम्, वृत्तिकारेण तु दर्शितम्।' (इति १२३ पृष्ठे) च लोचनस्य दर्शनान्मम्मटादिस्वरसानुसन्धानाच्च कारिकावृत्तिकर्त्रोर्भेदं प्रतिपादयन्ति।

एवं सति यदा कारिकावृत्तिकृतोर्भेदः, तदा कारिकाकारो ध्वनिकारातिरिक्तनाम्ना सर्वैरपरिचित एव। अत एव तदीयः समयोऽपि विशेषेण निर्धारयितुमशक्यः।

(१) कारिकावृत्त्योः।

सामान्यतस्तु दण्डिभामहोद्भटादिभ्यः सप्तमादिशताब्द्युद्भूतेभ्योऽर्वाचीनः नवमशताब्दीसमुत्पन्न-वृत्तिकृतश्च प्राचीनो ध्वनिकार इत्युच्यते। वृत्तिकारस्य परिचयस्त्वनुपदं वितीर्यते। यत्तु दाक्षिणात्यः शोभनकविः सहृदयमेव ध्वनिकारमुररीचकार, तन्न, 'सहृदयमनःप्रीतये' इत्यादिकारिकाघटकसहृदयशब्दस्य तदाख्यानबीजभूतस्य विदग्धपरताया एव सकलसुधीसम्मतत्वात्।

अमेदं तु राजानकोपाधिरानन्दवर्धनाचार्यः काश्मीरिक-भूसुरवंशावतंसस्य भट्टनोणस्य (१)तनयः खैष्टनवमशताब्द्या उत्तरार्धे(२) तन्त्रसाहित्यरत्नखनिं कश्मीरावनिं शासतोऽवन्तिवर्मनृपतेः सभापण्डित आसीदिति राजतरङ्गिणीतो जैकोबी-बुलनराभ्यां निर्धारितम्। तदेव काव्यप्रकाशव्याख्यातुर्वामनाचार्यस्यापि सम्मतम्। 'यस्मिन्नस्ति न वस्तु किञ्चन' इत्यादिध्वनिखण्डनपरवृत्तिघटकपद्यस्य प्रणेता मनोरथनामा कविरप्यानन्दवर्धनस्य समानकालिक एवेति तत्रत्यलोचनान्मतिगोचरीभवति। आलङ्कारिकशिरोमणिरयं निखिलेषु दर्शनेषु परमां प्रौढिं बिभ्राणोऽपि व्याकरणे निरतिशयं पक्षपातमवाक्षीदित्यपि तत्तन्मतनिराकृतिपरसन्दर्भेभ्यः(३) 'प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्' इति(४)वृत्तिग्रन्थाच्चावसातुं न दुश्शकम्।

आनन्दवर्धनाचार्यविरचितप्रबन्धेषु ध्वन्यालोकः, देवीशतकम्, विषमबाणलीला (प्राकृतभाषामयी), अर्जुनचरितम्, धर्मोत्तमानाम्नी विनिश्चयबौद्धग्रन्थविवृतिः, इति पञ्चानां नामान्याकर्ण्यन्ते। तेषु ध्वन्यालोक-देवीशतके काव्यमालायां मुद्रिते, विषमबाणलीलाऽर्जुनचरिते क्वचित् क्वचिद् ध्वन्यालोक एवोद्धृतनामनी, धर्मोत्तमाविवृतिस्तु तृतीयोद्द्योतान्त(५)वृत्तिगम्या तल्लोचनेन स्फुटीकृता।

किञ्च ध्वन्यालोके—'अर्जुनचरितम्' 'कादम्बरी' 'कुमारसम्भवम्' 'तापसवत्सराजम्' 'नागानन्दम्' 'भारतम्' 'मधुमथनविजयम्' 'रत्नावली' 'रामाभ्युदयम्' 'रामायणम्' 'विषमबाणलीला' 'वेणीसंहारम्' 'सेतुबन्धम्' (६) 'हरिविजयम्' (७) 'हर्षचरितम्' इत्येतेषां प्रत्नानां ग्रन्थरत्नानाम्, 'अमरुकः' 'आदिकविवाल्मीकिः' 'उद्भटः' 'कालिदासः' 'धर्मकीर्तिः' 'बाणः' 'भरतः' 'भामहः' 'व्यासः' 'सर्वसेनः' इत्यमीषां प्रबन्धॄणां च नामान्युपलभ्यन्ते। तत्र भट्टभामहः खैष्टाष्टमशताब्द्यां कश्मी-

---

(१) क्वचित्तु 'जोन' इति तन्नाम। (२) खैष्ट ८५५ तः ८८४ वर्ष यावत्।
(३) व्यञ्जनास्थापनप्रसङ्गे। (४) ध्वनिलक्षणप्रकरणे। (५) 'यत्त्वनिर्देश्यत्वम्' इत्यादिना। (६) प्राकृतमहाकाव्यम्। (७) सर्वसेनकृतम्।

रावनिमण्डलं मण्डयामास । एतदीयदेवीशतकव्याख्याऽन्ते महाभाष्यप्रदीपकृत् कैयटश्च ग्रन्थसमाप्तिसमयं ९७७ तमं खैष्टाब्दमाख्यत् । ध्वन्यालोकलोचनकारोऽभिनवगुप्तोऽपि स्वरचित 'प्रत्यभिज्ञाविमर्शिणी' समाप्तौ—

'इति नवतितमेऽस्मिन् वत्सरेऽन्त्ये युगांशे,

तिथिशशिजलधिस्थे मार्गशीर्षावसाने ।' इत्यादिपद्यं निगद्य खैष्टदशमशताब्द्यवसानं स्वसमयमुल्लिलेख दशमशताब्दीसमुद्भूतो राजशेखर एकादशशताब्दीसमुद्भूतो हेमेन्द्रः क्षेमेन्द्रश्च स्वस्वप्रबन्धेषु श्लाघ्यं राजानकानन्दवर्धनं प्रामाणिकत्वेन स्वीचकार । एतावताऽप्यानन्दवर्धनस्य नवमशताब्दी स्थितिकाल इति निश्चेतुं शक्यम् ।

यत्तु भरतसूत्रटीकायाम् 'अस्मद्गुरवः' इत्यभिनवगुप्तस्यानन्दवर्धनोल्लोखिलेखमवलोक्य समसामयिकत्वमुभयोः पिशेल्महाशयोहितम् ; तन्न, गुरुत्वस्य परम्परया कालभेदेऽपि सारस्वतमहत्त्वख्यापनाय वक्तुं शक्यत्वात् , उभयोः समानकालिकत्व एकतरसम्बन्धिग्रन्थस्यापरेण सश्रद्धं व्याख्यातुमनौचित्याच्च ।

ध्वन्यालोकस्य चन्द्रिका लोचनं चेतिटीकाद्वयं श्रूयते । तत्र चन्द्रिका नेदानीमुपलभ्यते , किन्तु—

'किं लोचनं विनाऽऽलोको भाति चन्द्रिकयाऽपि हि ।

तेनाभिनवगुप्तोऽत्र लोचनोन्मीलनं व्यधात् ॥' इति तृतीयोद्द्योतान्तलोचनश्लोकात् , 'यस्तु व्याचष्टे' इत्युपक्रम्य 'इत्यलं निजपूर्वजसगोत्रैः(१) साकं विवादेन ।' इतितृतीयोद्द्योतस्यारम्भे, 'चन्द्रिकाकारस्तु पठितमनुपठतीतिन्यायेन गजनिमीलिकया व्याचचक्षे' इत्युपक्रम्य 'इत्यलं पूर्ववंश्यैः सह विवादेन बहुना ।' इति ( १९५ पृष्ठे ) तन्मध्ये लोचनलेखाच्च केवलमुन्नीयते ।

लोचनन्तु खैष्टदशमशताब्द्यवसाने कश्मीराख्यजनपदनिवासिना भट्टतौतादि(२) गुरुत्रयीशिक्षितेन वराहगुप्तस्य पौत्रेण चुखलस्य तनुजन्मना मनोरथ(३)गुप्तस्याग्रजेन कर्मक्षेमराजादिगुरुणा महामाहेश्वराचार्याभिनवगुप्तेन विरचितं तृतीयोद्द्योतान्तं (४) मोहमयीनगरे निर्णयसागरमुद्रणागारे मुद्रितञ्च ।

---

( १ ) चन्द्रिकाकारोऽभिनवगुप्तस्य पूर्ववंश्य इत्यप्यतो ज्ञायते ।

( २ ) आदिपदेन लक्ष्मणगुप्त-भट्टेन्दुराजयोः सङ्ग्रहः ।

( ३ ) आनन्दवर्धनसमकालिकमनोरथकवेरयं भिन्नः, कालभेदात् ।

( ४ ) तच्चतुर्थोद्द्योतस्तु 'कलकत्तायूनिवर्सिटीजर्नल' पत्रादुपलब्धः ।

अथास्य ध्वन्यालोकस्य प्रथममुद्रणावसरे परिशुद्धादर्शपुस्तकानुपलब्धेस्त्रुटीरशुद्धीश्च पठन-पाठनपरायणानामरुन्तुदा नितरामाकलय्य लोचनं च प्राचीनतमक्रमनिबद्धतयाऽऽधुनिकधीगोचरतामनासादयदवधार्य कतिपयैः सुहृद्भिरन्तेवासिभिश्च समुत्साह्यमानः काममति सरलां विवृतिं नूतनया भङ्गया विरचयितुं चिराद् विचारयन् १९२८ खृष्टाब्दे सहायकसामग्रीविरहेऽपि कथञ्चन दीधितिसमभिधानां विवृतिमेतां सामि विरचय्य राजकीय-विहारोत्कलसंस्कृतसमितेः शास्त्रविचारपरिषदे निबन्धपरीक्षाप्रसङ्गेन समर्प्य प्रधानं पारितोषिकं चावाप्य किञ्चित्सफलप्रयत्नम्मन्यो दीधितिं पूरयितुमुदयंसिषम्, श्री १०८ राधागोविन्दानुग्रहेणैषमः पूर्णामकार्षं च ।

यद्यपीह लोचनप्रतिपादितानेव पदार्थान् प्रायेणोपादाम् , क्वचित्तु सन्दर्भशुद्ध्यनुरोधात् सिद्धान्ताभिन्नत्वीभावात्, तदनुपलम्भाच्च नूतनां पद्धतिमाशिश्रियम्, तथाऽपि भूयांसि स्खलितानि संशयानो महाशयांस्तान्यपोहितुमूहकुशलान् सङ्ख्यावतो विदग्धमूर्धन्यानभ्यर्थये ।

एतत्सम्बन्धे विहारोत्कलसंस्कृतसमितेर्भूतपूर्वकार्यसम्पादकानां सारस्वतमहामहिम्नां स्वर्गातिथीनां सुरेन्द्रनाथ ( मजुमदार, एम· ए·, पी· आर· एस· ) शास्त्रिणां, मान्यवराणां तेजनारायण ( जुवली ) महाकलाशालाप्रधानाध्यक्षाणां ( डाक्टर ) श्री हरिचन्द्र ( आइ· ई· एस्· ) शास्त्रिणां, समृद्धश्रद्धासम्मानभाजनानां महामहोपाध्यायानां कर्मकाण्डप्रधानाचार्यपण्डितश्रीमुकुन्द (झा, बख्शी) शर्मणां च प्रोत्साहनजन्यमुपकारमपारं प्रत्युपकर्तुमसमर्थः परमाचेतनं स्मरिष्यामि । अन्तेवासिषु चायुष्मतः साहित्याचार्यस्य श्रीवेचनशर्मणः, श्रीदरबारिशर्मणः, साहित्यशास्त्रिणः, श्रीश्यामानन्दशर्मणश्च पूर्वपत्रसंशोधनादिसाहाय्योपकृतिमविस्मरंस्तानाशिखं शुभाशिषां राशिना योजयामि ।

स चायं दीधितिविवृतिविशदीकृतो मुद्रणाय वितीर्णसर्वाधिकारो ध्वन्यालोकः सर्वविधसंस्कृतपुस्तकमुद्रणानवरतप्रवद्धपरिकरेण वाराणसेयचौखम्बासंस्कृतपुस्तकालयाधिपतिना श्रेष्ठिश्रीजयकृष्णदासगुप्तेन स्वकीये विद्याविलासनाम्नि मुद्रणालये सम्मुद्रय प्रकाशित इति तदीयेनाप्युपकारभरेण प्रेर्यमाणस्तस्मै शतमाशिषो वितरामीति—

कौमुदीमहोत्सवः }
२-११-३७ }

विनीतो निवेदयते—
**श्रीबदरीनाथः**

# साहित्य-समीक्षा

## कवि की श्रेष्ठता

**'रसो वै ब्रह्म'** रस ही ब्रह्म है। मनीषियों ने जीवन के परम उद्देश्य इस अनिर्वचनीय, अलौकिक रसानन्द को प्राप्त करने के लिये साहित्यशास्त्र की रचना की है। **'रसं ह्ययं लब्ध्वा आनन्दी भवति'** इत्यादि श्रुतिवचनों से काव्यपरिशीलनजन्य जो लोकोत्तर आह्लादात्मक आनन्दरसास्वाद सहृदयों को होता है, वह आनन्दमय ब्रह्म के ही आनन्दस्वरूप का एक प्रतीक है। विश्वनाथ ने कहा भी है—**'वेद्यान्तरस्पर्शशून्यो ब्रह्मानन्दसहोदरः'**। इस विषय को सहृदयहृदयवेद्य होने के कारण सहृदय जन ही हृदयङ्गम करते हैं, इसलिये वे ही इसमें साक्षी हो सकते हैं। जिसप्रकार शरीरियों को शारीरिक बुभुक्षा शान्त्यर्थ अपने जीवन में अन्नफलादि आहार की आवश्यकता अनुभूत होती है उसीप्रकार मानसिक तृप्ति के लिये आध्यात्मिक आहार की भी अनिवार्यता प्रतीत होती है। भगवान् ने समदर्शिता के कारण यद्यपि सभी प्राणियों को समान सुख पहुंचाने के लिये गिरि, कानन, उद्यान, लता, नदी, झरना, फल, पुष्पादि विविध साधनों का निर्माण किया है, क्योंकि सभी जीवों में आहार-निद्रा-बुभुक्षा-विषयवासना आदि की मात्रा प्रायः समान ही दिखाई पड़ती है, तथापि मनुष्य का ही ऐसा जीवन है, जिसमें कविद्वारा एक विलक्षण ढङ्ग से पूर्वोक्त सभी वस्तुएं यथायोग्य काव्य में उपनिबद्ध होकर रससुधासार को वर्षाती हुई अमरत्व प्रदान करती हैं। अत एव सच्चिदानन्द भगवान् ने सभी में आनन्दरस के संचारार्थ सारस्वती सृष्टि के लिये कवि को ही प्रजापति के पद पर स्थापित किया है। कहा भी है—

'अपारे काव्यसंसारे कविरेव प्रजापतिः।
यथाऽस्मै रोचते विश्वं तथेदं परिवर्तते'।

इसलिये प्रत्येक पदार्थ को अपनी रचनाकला द्वारा सरसता प्रदान कर मनोरञ्जन का एक प्रधान साधन बनाना कवि के ऊपर ही आश्रित है। कवि की इच्छा से अचेतन में चैतन्य और चेतन में अचैतन्य का संचार होने लगता है। कभी तो वह ऊसर को उर्वरा, मरु और रेगिस्तान को सस्यश्यामल तथा खंड्हर को राजमहल में परिणत कर मनुष्य को आनन्दविभोर कर देता है। किं बहुना कवि ही एक ऐसा धन्वन्तरि भगवान् है, जो सन्तप्त हृदयों को भी अपनी सरस सुधामयी रचनाकला की ओर आकर्षित कर आनन्दरस का पीयूषपान कराकर पूर्ण सुखी

बना देता है, इसलिये ब्रह्मा की सृष्टि में कवि की सृष्टि एक निराली ही माननी होगी। इसी दृष्टि से काव्यप्रकाश में मम्मट ने कहा है—

**'नियति कृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।**
**नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति'।**

## काव्य और ध्वनि

साहित्य जगत में प्रायः वही कविता सहृदय-हृदयहारिणी होती है, जिसमें पिहित कामिनीकुच-कलशवत् कुछ छिपे हुए रसादि व्यङ्ग्य (ध्वनि) पदार्थ रसिकजनों के अलौकिक आह्लादजनक प्रतीत होते हैं, उस व्यङ्ग्य रसादि के ऊपर ही सारा काव्य का महत्त्व आश्रित रहता है, इसलिये काव्य में व्यङ्ग्यार्थ का होना अत्यन्त आवश्यक माना गया है, उस व्यङ्ग्यार्थ की प्रतीति अभिधा या लक्षणावृत्ति द्वारा न होकर व्यञ्जनावृत्ति से ही होती है, इस व्यञ्जना से प्रतीयमान व्यङ्ग्य रसादि ही काव्य का जीवन या सर्वस्व है यह कहें तो कोई अत्युक्ति न होगी। उसी के आधार पर काव्यशास्त्र समस्त विश्व का उपादेय होने से अत्यन्त श्लाघ्य बना हुआ है। व्यञ्जना का महत्त्व केवल साहित्य में ही नहीं, अपितु लोकव्यवहार में भी उसकी व्यापकता देखी जाती है, क्योंकि प्रायः मनोरञ्जन में या अन्य लौकिकव्यवहार में व्यञ्जना द्वारा प्रयोग या व्यापार करने पर एक अत्यन्त ही चमत्कार का अनुभव होता है।

ध्वनि पदार्थ का निर्वचन स्वभावतः सब से उपयुक्त ध्वनिकार के ही निम्न शब्द से हो सकता है:—**'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ व्यक्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।'** अर्थात् जहां वाच्यार्थ अपने को तथा शब्द अपने अभिधेय को गौण करके उस (व्यङ्ग्य) अर्थ को प्रकाशित करते हैं उस काव्यविशेष को विद्वानों ने ध्वनि कहा है। पुनश्च ध्वनिकार ने ही उपर्युक्त व्यङ्ग्य पदार्थ के स्वरूप को निम्न रूपसे प्रदर्शित किया है:—

**'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।'**

अर्थात् प्रतीयमान वह व्यङ्ग्यरसादिवाच्य अर्थ से कुछ विलक्षण ही है, जो रमणियों के प्रसिद्ध मुखनेत्रादि अवयवों से भिन्न (उनके) लावण्य के समान महाकवियों की सूक्तियों में भासित होता है। उपर्युक्त ध्वनिकार के उद्धरणों से एवं निम्न व्युत्पत्तियों से ध्वनि शब्द से केवल काव्य ही नहीं व्यवहृत होते, अपितु व्यंजक शब्द, अर्थ और शब्द-अर्थ के व्यञ्जनात्मक व्यापार इन सब को ही ध्वनि कहते हैं। जैसे:—**'ध्वनति ध्वनयति वा यः स ध्वनिः व्यंजकः शब्दः अर्थश्च ध्वनिः। ध्वन्यते इति ध्वनिः व्यङ्ग्यरसादिरलंकारः स्तु च ध्वनिः। ध्वन्यते अनेनेति ध्वनिः शब्दार्थयोर्व्यञ्जनाव्यापारो ध्वनिः।**

ध्वन्यतेऽस्मिन् इति ध्वनिः काव्यम्।' इस प्रकार ध्वनिशब्द का प्रयोग निम्न पांच भिन्न भिन्न परन्तु परस्पर सम्बद्ध अर्थों में होता है— १. व्यञ्जक शब्द, २. व्यञ्जक अर्थ, ३. व्यङ्ग्य रसादि अर्थ, ४. व्यञ्जना व्यापार, और ५. व्यङ्ग्य प्रधान काव्य।

## ध्वनि की व्यापकता

ध्वनि के प्रथम प्रवक्ता मम्मट ने ध्वनि को काव्य की आत्मा माना है और रसादि का असंलक्ष्यक्रमध्वनि के अन्तर्गत प्रतिपादन किया है। पण्डितराज जगन्नाथ ने भी इसी मार्ग का अनुसरण किया है। विश्वनाथ ने तो **'वाक्यं रसात्मकं काव्यम्'** इस तरह रस को ही काव्य की आत्मा कहा है। परन्तु ध्वनिकार ने ध्वनि शब्द के उक्त व्यापक अर्थ को मानते हुए **'काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः'** इत्यादि श्लोक से ध्वनि को ही काव्य की आत्मा घोषित कर मम्मट आदि सर्वोच्च कवियों के अभिलषित प्राथमिक मौलिक सिद्धान्त को ही उन सब से पहले ही प्रकाशित कर दिया है,। वस्तुतः यह उनकी मान्यता अधिक युक्तिसंगत प्रतीत होती है, क्योंकि उक्त व्युत्पत्तियों से ध्वनि की अत्यन्त व्यापकता सिद्ध हो जाने के कारण काव्य का कोई भी ऐसा रूप नहीं है जो ध्वनि से विमुख होता हो, रस तो ध्वनि का एक व्याप्यांग ही है, इसलिये व्यापक ध्वनि को ही काव्य की आत्मा कहना ठीक है। परन्तु इतना अवश्य मानना होगा कि रस के साथ ध्वनि का बहुत घनिष्ठ सम्बन्ध है क्योंकि ध्वनि रस के बिना काव्य नहीं बन सकता और रस भी ध्वनित हुए बिना केवल कथित होकर काव्य या काव्य का विषय नहीं हो सकता। अतः काव्य में ध्वनि को सरस रमणीय होना और रस को ही व्यङ्ग्य होना अनिवार्य है। **'गतोऽस्तमर्कः'** इससे एक, ध्वनि यह निकलती है कि—अब काम बन्द करो, इस प्रकार ध्वनि की स्थिति निश्चित होने पर भी रसके अभाव में इसको काव्य नहीं कह सकते। एवं 'उदयन वासवदत्ता से प्रेम करते हैं' यह वाक्य रस का कथन करने पर भी व्यञ्जनात्मक ध्वनि के अभाव में काव्य नहीं कहलाता, इसलिये दोनों का परस्पर सम्बद्ध रहना अनिवार्य है।

## रस-निरूपण

प्रसङ्गवश रस का थोड़ा निर्वचन करना परम आवश्यक है—भरत ने विभाव, अनुभाव और संचारीभाव आदि के संयोग से रस की निष्पत्ति बतलाई है, उनके कथन का सारांश यह है कि काव्य में केवल विभाव आदि का ही शब्द से प्रतिपादन किया जाता है—न कि रस का, क्योंकि रस वाच्य नहीं होता। इतना ही नहीं प्रत्युत रस का वाचक शब्दों द्वारा कथन भी एक रसदोष समझा जाता है, रस तो केवल प्रतीत होता है और वह रस सहृदय व्यक्ति की हृदयस्थित वासना का एक आनन्दमय परिणाम है। इसलिये आवरणभङ्गावच्छिन्न रत्यावच्छिन्न अखण्ड स्वप्रकाश चिदानन्द चमत्कार ही रस पदार्थ है।

## काव्य के भेद

ध्वनिकार ने काव्य के तीन भेद किये हैं—उत्तम, मध्यम और अधम। इनमें ध्वनि नामक उत्तम काव्य में व्यङ्ग्यार्थ की प्रधानता रहती है अर्थात् वाच्यार्थ की अपेक्षा व्यङ्ग्यार्थ प्रधान रहता है। विश्वनाथ ने कहा है—

**'वाच्यातिशायिनी व्यङ्ग्ये ध्वनिस्तद् काव्यमुत्तमम्।'**

ध्वन्यात्मक उत्तम काव्य के भी तीन भेद हैं—रसध्वनि, अलंकारध्वनि और वस्तुध्वनि। इनमें रसध्वनि सर्वश्रेष्ठ है। मध्यम काव्य को गुणीभूतव्यङ्ग्य भी कहते हैं। इसमें व्यङ्ग्यार्थ की सत्ता तो अवश्य रहती है, परन्तु वह वाच्यार्थ की अपेक्षा अधिक रमणीय नही होता। विश्वनाथ ने ही कहा है—**'अपरं तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये'**। अधम काव्य के अन्तर्गत अस्तित्व ही नहीं होता, न वा अर्थगत चारुत्व चित्रकाव्य आजाता है, जो वास्तव में काव्य ही नहीं है क्योंकि उसमें व्यङ्ग्यार्थ का अस्तित्व ही नहीं होता, न वा अर्थगत चारुत्व ही होता है। परन्तु ध्वनिकार ने उसकी अधमता स्वीकार करते हुए भी काव्य की श्रेणी में उसे स्थान दे दिया है। अभिनव गुप्ताचार्य और विश्वनाथ ने तो उसको काव्य की कोटि से पूर्णतः बहिष्कृत कर दिया है। इस प्रकार ध्वनि के अनुसार काव्य का उत्तम रूप ध्वनि है और ध्वनि में भी सर्वोत्तम रसध्वनि है। पण्डितराज जगन्नाथ ने इसको उत्तमोत्तम भेद माना है, अर्थात् रस या रसध्वनि ही काव्य का सर्वोत्तम रूप है। इन सब सिद्धान्तों से यह सार निकलता है कि रस ही काव्य का सर्वश्रेष्ठ तत्त्व है।

## ध्वनि के भेद

ध्वनि के मुख्यतः दो भेद हैं—१. लक्षणामूलध्वनि और २. अभिधामूलध्वनि। इनमें लक्षणामूलध्वनि स्पष्टतः लक्षणा के आश्रित होती है, इसको अविवक्षितवाच्य भी कहते हैं अर्थात् वाच्यार्थ बाधित रहता है इसलिये उसके द्वारा व्यङ्ग्यार्थ की प्रतीति नहीं होती। लक्षणामूलध्वनि के दो भेद होते हैं—अत्यन्ततिरस्कृत वाच्य और अर्थान्तरसंक्रमित वाच्य। अत्यन्ततिरस्कृत वाच्य में वाच्यार्थ अत्यन्त तिरस्कृत रहता है—वाच्यार्थ को लगभग छोड़ ही दिया जाता है। जैसे—**'निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते।'** यहाँ पर अन्ध शब्दका नेत्रहीन अर्थ न होकर लक्षणा से मलिनत्व अर्थ के बोधन द्वारा अप्रकाशातिशय रूप व्यङ्ग्यार्थ प्रतीत होता है। यह पदगत का उदाहरण है। वाक्यगत का उदाहरण ध्वनिकार ने निम्न प्रकार से दिया है—

**'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।**
**शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्'।**

यहां सम्पूर्ण वाक्य का ही मुख्यार्थ सर्वथा बाधित है, क्योंकि न तो पृथिवी कभी

सुवर्ण-पुष्पवाली होती है और न उसका चयन ही सम्भव है। इसलिये लक्षणा की सहायता से इसका यह व्यङ्ग्यार्थ होगा कि उक्त तीन प्रकार के नरश्रेष्ठ वसुन्धरा से समृद्धि का उपार्जन करते हैं। इस ध्वनि में लक्षणलक्षणा (जहत्स्वार्था लक्षणा) रहती है। अर्थान्तरसंक्रमित वाच्य ध्वनि में वाच्यार्थ दूसरे अर्थ में संक्रमित (परिणत) हो जाता है। जैसे—

'कदली कदली, करभः करभः, करिराजकरः करिराजकरः।
भुवनत्रितयेऽपि विभर्ति तुलामिदमूरुयुगं न चमूरुदृशः।'

यहां पर द्वितीय कदली पद शैत्यजाड्यातिशय गुणविशिष्ट कदली रूप विशिष्ट अर्थपरक होने से पुनरुक्तार्थक नहीं होता। विलक्षण शैत्यात्मक जाड्यातिशय की प्रतीति व्यञ्जना वृत्ति से होती है। लक्षणामूलध्वनि स्वभावतः प्रयोजनवती लक्षणा के ही आश्रित रहती है, क्योंकि रूढिमूलक लक्षणा में व्यङ्ग्यार्थ का सम्भव ही नहीं रहता। अभिधामूलध्वनि अभिधा पर आश्रित रहती है। इसे विवक्षितान्यपरवाच्यध्वनि भी कहते हैं। विवक्षितान्यपरवाच्य का अर्थ है कि जिसमें वाच्यार्थ विवक्षित होने पर भी अन्यपरक अर्थात् व्यङ्ग्यनिष्ठ हो। अर्थात् इस ध्वनि में वाच्यार्थ का अपना अस्तित्व अवश्य रहता है परन्तु वह अन्ततः (पर्यवसान में) व्यङ्ग्यार्थ का माध्यम ही होता है। अभिधामूलध्वनि के दो भेद हैं—असंलक्ष्यक्रम व्यङ्ग्य और संलक्ष्यक्रम व्यङ्ग्य। असंलक्ष्यक्रम व्यङ्ग्य शब्द का अर्थ है—वाच्यार्थ और व्यङ्ग्यार्थ की प्रतीति का पूर्वापर क्रम कमलशतपत्रभेदवत् सम्यग् रूप से लक्षित नहीं होता है। समस्त रसप्रपञ्च इसके अन्तर्गत आता है। संलक्ष्यक्रमव्यङ्ग में वाच्यार्थ और व्यङ्ग्यार्थ की प्रतीति का पौर्वापर्य क्रम सम्यग्रूपसे लक्षित होता है। इसके तीन भेद हैं—१. शब्दशक्त्युद्भव, २. अर्थशक्त्युद्भव और ३. शब्दार्थोभयशक्त्युद्भव। अर्थात् कहीं यह शब्द के आश्रित रहती है, कहीं अर्थ के आश्रित रहती और कहीं शब्द-अर्थ दोनों के आश्रित रहती है। वस्तुध्वनि और अलंकारध्वनि संलक्ष्यक्रम के अन्तर्गत ही आती है। क्योंकि इनमें वाच्यार्थ और व्यङ्ग्यार्थ का पौर्वापर्यक्रम स्पष्टरूप से लक्षित होता है। ध्वनि के ये ही प्रधान भेद हैं। विस्तारभय से सबका उदाहरण देना यहां सम्भव न हो सका है। ध्वनिकार के मुख्य दो ही उद्देश्य हैं—एक तो ध्वनिसिद्धान्त को निर्भ्रान्त स्थापित करना और दूसरा अन्य सभी प्रचलित काव्यसम्बन्धी सिद्धान्तों को ध्वनि में अन्तर्भूत करना। वास्तव में ध्वनिकारने ध्वनि को इतना व्यापक रूप दे दिया है कि उसमें उनके न केवल पूर्ववर्ती रस, गुण, रीति, अलंकार आदि का ही अन्तर्भाव होता है, अपितु उनके वक्रोक्ति, औचित्य आदि भी उससे वाहर नहीं जा सकते। रस की भांति माधुर्यादि गुण, परवर्ती रीति, अलंकार, वक्रोक्ति आदि भी व्यङ्ग्यरूप से प्रतीत होने पर ही सहृदयों के आह्लाद जनक होते हैं, इस लिये ध्वनि का सबसे अधिक महत्व सुतराम सिद्ध होता है।

## ग्रंथ और ग्रंथकार

अभिनव गुप्ताचार्य की लोचन टीका से ध्वन्यालोक का महत्व उतना ही अधिक बढ़ गया है, जितना कि पाणिनि व्याकरण का महत्व भगवान् पतञ्जलि के महाभाष्य से बढ़ा हुआ है। ध्वन्यालोक की रचना के विषय में संस्कृत के विद्वानों में तीव्र मतभेद रहते हुए भी यह निर्भ्रान्त निर्णय हो चुका है कि मूलकारिका एवं विवृति दोनों के कर्त्ता कविवर आनन्दवर्द्धनाचार्य ही हैं। इन्होंने कारिका में सिद्धान्त विषय का सूत्ररूप से प्रतिपादन किया है और वृत्ति में उन कारिकाओं की स्फुट रूप से व्याख्या की है।

आनन्दवर्धनाचार्य का स्थितिकाल ८५५ से ८८३ ई० तक था। इसका निर्णय—**'मुक्ताकणः शिवस्वामी कविरानन्दवर्द्धनः। प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः।'** इस राजतरङ्गिणी के पद्य से होता है। क्योंकि अवन्तिवर्मा काश्मीर के महाराज थे और उनका राज्यकाल उक्त ई० तक था। किंच उक्त श्लोक से यह भी पता चलता है कि कविवर आनन्दवर्द्धनाचार्य अवन्ति वर्मा के राज्य के ख्यातिलब्ध कवियों में सर्वोपरि प्रसिद्ध कवि थे। आप रत्नाकर कवि के समकालीन थे यह भी ऐतिह्यसिद्ध है।

## भाषानुवाद

आनन्दवर्द्धनाचार्य ने अत्यन्त प्रौढि के साथ प्राञ्जल भाषा में साहित्य के तत्त्व का निर्वचन किया है। इसलिये इनके मार्मिक शब्दों के भावों को खोलने में लोचन, दीधिति आदि संस्कृत टीकाओं के रहने पर भी आधुनिक युग में उनसे छात्रों को अल्प समय में अधिक लाभ नहीं हो पाता था, अतः मैंने ग्रन्थ के मार्मिक अभिप्राय को राष्ट्र भाषा के सरल शब्दों में प्रकट करने का प्रयास किया है। यह अनुवाद मैथिल-कुल-कमल-दिवाकर कविशेखर आचार्य श्री पं० बदरीनाथ झा जी विरचित 'दीधिति' टीका के आलोक में ही सम्पन्न हुआ है। मूल ग्रंथ के साथ साथ मैंने आचार्य जी के गूढाशयों को भी प्रकाश में लाने का भरसक प्रयत्न किया है, फिर भी मानव सहज भ्रमवश मुझसे यदि कोई त्रुटियां होगयी हों तो पूज्य आचार्य तथा गुणग्राही पाठक क्षमाप्रदान कर मुझे अनुगृहीत करेंगे।

गुरुपूर्णिमा
सं० २०१०

—शोभित मिश्र

॥ श्री कृष्णःशरणम् ॥

# विषयानुक्रमणिका ।

### तृतीयोद्द्योते—

चतुर्थोद्द्योते—

इति सदीधितिध्वन्यालोकस्य विषयानुक्रमणिका ।

---

प्राप्तिस्थानम्

चौखम्बा-संस्कृत-पुस्तकालय,

पो० बा० नं० ८, बनारस-१

प्रधानीभूतव्यङ्ग्यव्यञ्जकस्य ध्वनेरेवायं प्रकारो न तु गुणीभूतव्यङ्ग्यादेरित्यर्थः। व्यङ्ग्यभेदनिरूपणोपयोगि वाच्यभेदनिरूपणमिह प्रासङ्गिकं नासङ्गतमिति सारम्।

उक्त रीतिसे अर्थान्तर संक्रमित वाच्य और अत्यन्त तिरस्कृत वाच्योंसे व्यङ्ग्य-की ही विशेषता सिद्ध होती है, वाच्यकी नहीं, इसलिये प्रधानभूत व्यङ्ग्यके व्यञ्जक ध्वनि नामक उत्तम काव्यका ही यह प्रकार समझना चाहिये, गुणीभूत व्यङ्ग्य काव्यका नहीं।

अविवक्षितवाच्यध्वनेराद्यं भेदमुदाहर्तुमाह—

तत्रार्थान्तरसंक्रमितवाच्यो यथा—

वैदेहीविरहव्यग्रो रामो व्याहरति—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना,
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे,
वैदेही तु कथं भविष्यति हहा हा देवि! धीरा भव॥'

स्निग्धा मसृणा श्यामला नीला च या कान्तिस्तया लिप्तमाच्छादितं वियद्गगनं यैरतादृशाः, तथा वेल्लन्त्यः प्रमदभरेण सविलासं स्फुरन्त्यो बलाका बकपंक्तयो येषु तादृशा घना मेघाः, तथा शीकरिणो वृष्टिसम्पर्केण जललवभृतो वाता वायवः, तथा पयोदःसुहृद् येषां ते, पयोदसुहृदस्तेषां, यद्वा पयोदस्य मेघस्य सुहृदां मित्राणां, केका-शब्दसमासत्या केकिनाम्, कला अस्फुटमधुराः, आनन्दकेकाः प्रमोदजमयूरध्वनयः कामं यथेच्छं, सन्तु समुज्जृम्भन्ताम् (ततो मे न भीतिरितिभावः) दृढमत्यन्तं, कठोरहृदयः कर्कशमनाः, रामो दाशरथिर्दुःखसहनैकशीलप्रसिद्धः, अस्मि। तत् सर्वं मेघाद्युद्दीपनकृताखिलकदनं, सहे मर्षयामि। तु पुनः, वैदेही विदेहराजदुहिता, कथं भविष्यति केन प्रकारेण जीविष्यति। इति विमृश्य भावनया प्रत्यक्षीक्रियमाणां वैदेहीं तज्जनयित्रीं धरित्रीं वा सद्यो मरणोन्मुखीं सम्भाव्याश्वासयति हहा हा देवि! सीते! [illegible]! धीरा भव धृतिं बधान मा शोकेन विदीर्णा भूरित्यर्थः। तथा च [illegible]गम्' इत्यमरः।

भावश [illegible] रामपदं स्ववाच्यार्थसम्बद्धं राज्यपरित्याग—भीषणगहनगमन—जटाव-
'सुतनु [illegible] ननकनिधन—दयिताहरणजन्यदुःखातिशयसहनशीलं, तावताऽपि सम्भा-
इति

वितजीवितत्वं च व्यनक्तीति वाच्यो दाशरथिरूपोऽर्थो व्यङ्ग्येष्वर्थान्तरेषु संक्रमित इत्यर्थान्तरसङ्क्रमितवाच्यध्वनिः ।

कान्तेःस्निग्धत्वश्यामलत्वाभ्यां झटिति मनोहरणशक्तिमुखेनोद्दीपनत्वातिशयः, वातानां शीकरित्वेन शैत्यमान्द्ये, बहुत्वेनानियतदिक्सम्बन्धः, तेनानिवार्यता, पयोदसौहृद्येन मयूराणामानन्दौचिती, केकाया आनन्दजन्यतया भूयः प्रवृत्तिः, ततोऽप्युद्दीपनतरत्वम्, प्रतीयते ।

लेपनसौहृद्ययोश्चेतनमात्रधर्मतया मेघे वाधाल्लिप्तसुहृत्पदयो व्याॅपनोपकारयोर्लक्षणलक्षणायां तत्तदतिशयो व्यङ्ग्य इति संसृष्टाभ्यामत्यन्ततिरस्कृतवाच्यध्वनिभ्यामर्थान्तरसंक्रमितवाच्यध्वनेः सङ्करः । अर्थान्तरसंक्रमितवाच्यध्वनिना च शृङ्गारध्वने रामपदैकवाचकानुप्रवेशेन सङ्करः । शब्दालङ्कारेण च संसृष्टिः ।

'तद्गेहं नतभित्ति मन्दिरमिदं लब्धावगाहं दिवः' इत्यादिवक्ष्यमाणश्लोके बुद्धिविषयताऽवच्छेदकत्वोपलक्षित-तत्तद्धर्म्मावच्छिन्नवाचकेन तच्छब्देनैव प्रतीतिसौकर्येऽपि 'नतभित्ति' इति विशेषणवद्, रामशब्दमहिम्नैव सिद्धे 'कठोरहृदयः' इति विशेषणमर्थान्तरध्वनिं विकासयितुम् । तथाहि—तादृशविशेषणसाहाय्यमेव स्वानुकूलं व्यङ्ग्यमवगमयति । इतरथा रामपदं कौशल्या-दशरथप्रीतिपात्रत्वाद्यनुपयोगिव्यङ्ग्यमेव कथं न वोधयेदिति केचिदाहुः ।

यच्च काव्यालङ्कारसारकारः—श्लोकेऽस्मिन् पर्यायोक्तालङ्कारप्रभवमेव चमत्कारमवधार्य ध्वनिमधुनोत्, तन्न निरवद्यम्, व्यङ्ग्यस्यात्र विच्छित्तिविशेषाधायित्वेन गुणीभावाभावात्। शार्दूलविक्रीडितं छन्दः ।

तदाह—

इत्यत्र रामशब्दः ।

अर्थान्तरसङ्क्रमितवाच्य इति शेषः । एवमग्रेऽपि योजनीयम् ॥

उनमें अब अर्थान्तर संक्रमित वाच्यध्वनिका उदाहरण बतलाते हैं—तत्रेति । सीता विरहसे व्याकुल रामचन्द्र कहते हैं—अत्यन्त मञ्जुल नीली आभासे गगन-प्राङ्गणको व्याप्त किये हुये एवं केलिक्रीडासक्त सरस सारस सारसियोंसे अत्यन्त रमणीय बादल, तथा सूक्ष्म जल कणोंसे तर हवा और घनघोर घटाके [illegible] प्रसन्न होकर नाचनेवाले मोर पक्षियोंकी मधुर काकलिध्वनि, ये सभी व[illegible]ले ही अत्यन्त उन्मादक क्यों न हों, उनकी चिन्ता नहीं, अत्यन्त कठोर मैं [illegible]म हूँ, सबको यों ही सह (झेल) लूँगा। किन्तु अत्यन्त सुकुमारी सीता मेरे विन[illegible] हेगी,

हा देवि सीते ! तू अधीर न हो । यहां पर रामपद राज्य-परित्याग, भीषण वन गमन, जटावल्कल धारण, पितृ-मरण, दयिताहरण आदि भयंकर संकट जन्य अतिशय दुःख सहनशीलत्वादि व्यङ्ग्यार्थको मुख्यतया व्यक्त करता हुआ दाशरथि रूप वाच्यको भी उक्त व्यङ्ग्यविशेषविशिष्ट रूपसे ही बतलाता है, इसलिये स्पष्ट ही अर्थान्तर संक्रमित वाच्य ध्वनि प्रतीत होती है ।

उपपादयति—

**अनेन हि व्यङ्ग्यधर्म्मान्तरपरिणतः सञ्ज्ञी प्रत्याय्यते, नतु सञ्ज्ञिमात्रम् ।**

हि यतः अनेन रामशब्देन दाशरथिरूपवाच्यमात्रस्यानुपयोगात् व्यङ्ग्यधर्म्मान्तरे तादृशदुःखातिशयसहनशीलत्वे, परिणतोऽनुस्यूतः, सञ्ज्ञी दाशरथिरूपो वाच्योऽर्थः, प्रत्याय्यते बोध्यते, नतु सञ्ज्ञिमात्रं केवलो वाच्य इत्यर्थः । अतोऽर्थान्तरसंक्रमितवाच्योऽत्र रामशब्द इति सङ्गतिः ।

'न तु सञ्ज्ञामात्रम्' इति पाठस्त्वसङ्गतः, देवदत्तादिशब्दवदर्थे शक्तस्य रामशब्दस्यानपेक्षप्रवृत्तशब्दरूपायां संज्ञायां शक्त्यभावात् ततः प्रत्यायनासम्भवात् ।

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥'

इत्यानुभविकोक्तेः सङ्केतसम्बन्धेन सञ्ज्ञाशब्दावच्छिन्ने शक्तिं स्वीकुर्वतां शाब्दिकानां नयेऽप्यर्थविधुरायाः सञ्ज्ञायास्ततो बोधो नानुभविक इति दिक् ॥

उक्त स्थलमें रामशब्द केवल दाशरथिरूप वाच्यार्थको ही नहीं बतलाता, अपितु तादृश राज्य परित्यागादि भीषण अनेक दुर्घटना जन्य दुःखातिशयको सहन करनेवाले एक विलक्षण अत्यन्त गम्भीर रामको प्रतिपादित करता है, इसलिये रामके तादृश विशेष अर्थमें परिणत होनेसे स्पष्ट ही अर्थान्तर संक्रमित वाच्यध्वनि है ।

स्वीयं पद्यमुदाहरति—

यथा ममैव 'विषमबाणलीलायाम्'—

पद्यमिदं ज्ञेयः । विषमबाणलीलाऽऽख्ये काव्ये ॥

'ताला जाअन्ति गुणा जाला दे सहिअएहिँ घेप्पन्ति ।
रइकिरणाणुग्गहिआइँ होन्ति कमलाइँ कमलाइँ ॥'
'तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते ।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥' इति च्छाया ।

गुणाः पाण्डित्यादयः, तदा गुणा विशेषप्रशस्यताऽऽश्रया गुणा जायन्ते भवन्ति। यदा ते गुणाः, सहृदयैर्गुणज्ञै गृह्यन्ते ज्ञायन्ते। रवेः किरणैः, अनुगृहीतानि विकासनेनानुकम्पितानि, कमलानि कमलानि सौरभसौन्दर्य्यादिमन्ति भवन्तीत्यर्थः। जघनविपुलाच्छन्दः।

अत्र यथा कमलानां सूर्यकिरणसंयोगेन विकास एव शोभाद्युत्कर्षः, तथा गुणानां सहृदयावगम एव विशेषप्रशस्यतेति प्रतिवस्तूपमाऽलङ्कारः। 'अर्थान्तरन्यासमाह—रविकिरणेति' इति लोचनलेखस्तु चिन्तनीयः, गुण—कमलादिपदार्थानां मिथः सामान्यविशेष—कार्यकारणभावाभावात्।

द्वितीयकमलशब्दार्थस्य च व्यङ्ग्यवैशिष्ट्येनाकारभेदाद्विभिन्नधर्मावच्छिन्नप्रकारताकोपस्थितिविषयतया प्रथमकमलशब्दार्थेन सहाभेदान्वयबोधः। अन्यथा 'अभेदान्वयबोधश्च विरूपोपस्थितयोरेव' इति व्युत्पत्तिविरोधस्य दुरुद्धरत्वमेव।

यत्तु रुय्यकेन लाटानुप्रासोदाहरणमिदमुक्तम्, तदसत्, यतः—

'शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः'।

इति मम्मटोक्ततल्लक्षणघटकतात्पर्यपदं वक्त्रिच्छाविषयीभूतसंसर्गपरं प्रदीपोद्द्योतयोर्व्याख्यातम्। तथा चात्र कमलशब्दयो र्न संसर्गमात्रेण भेदः, किन्तूत्तरांशे व्यङ्ग्यसङ्गतेरर्थेनापि भेदः।

नच वाच्यार्थमात्रमादाय तयोरर्थाभेदो वक्तुं शक्यत एवेति वाच्यम्, अर्थसामान्योपादाने व्यङ्ग्यस्य परिहर्तुमनौचित्यात्। अतएव विश्वनाथोऽपि—'नयने तस्यैव नयने च' इत्यत्र द्वितीयनयनशब्दो 'भाग्यवत्त्वादिगुणविशिष्टत्वरूपतात्पर्यमात्रेण भिन्नार्थः' इति वदन्निदं प्रत्युदाहरणत्वेनोपन्यस्तवान्। अतएव च सप्तमोल्लासे—कथितपदत्वदोष—गुणत्वस्थलपरिगणनावसरे लाटानुप्रासतःपार्थक्येनेदमेव पद्यमर्थान्तरसङ्क्रमितवाच्यध्वनावुदाजहार प्रकाशकारः। इतरथोभयोरेकत्रैव समावेशे पृथगुपादानं वृथा स्यादिति दर्पणविवृतिप्रभृतावपि व्यक्तम्। अधिकं पुनरलङ्कारमञ्जूषायां निरूपयिष्यामः॥

अब ग्रन्थकार स्वरचित विषमबाण लीला नामक काव्यका भी एक उदाहरण देते हैं—यथेति। कवि कहता है—गुण (पाण्डित्य आदि) वास्तवमें गुण होते हैं, जब वे सरसगुणज्ञोंसे जाने जाते हैं, कमल तभी कमल होते हैं, जब वे सूर्य किरणोंसे विकसित होकर सुशोभित होते हैं। द्वितीय कमल शब्द सौरभ-सौन्दर्यशाली कमलके बोधक होनेसे अर्थमें परिणत

वृष्टिजन्य विलुलित अर्जुन वृक्ष विशेष सहित विपिन और चन्द्रिका रहित निरहंकार (निस्तेज) चन्द्रवाली रात मन लुभा रही है।

तदाह—

**अत्र मत्तनिरहङ्कारशब्दौ ।**

अत्यन्ततिरस्कृतवाच्याविति शेषः । पदद्वयापेक्षतयाऽत्र वाक्यध्वनित्वमवधारणीयम् ॥

यहाँ उन्मत्तता और अहंकारका अचेतन मेघ और चन्द्रमामें बाध होनेसे मत्त-निरहंकार शब्द क्रमशः चौतरफ भ्रमण और मालिन्यार्थको लक्षित करते हुए तदतिशय रूप व्यङ्ग्यमें उक्त वाच्योंके बिलकुल भान न होनेसे वाक्यगत अत्यन्त तिरस्कृत वाच्यध्वनिके प्रत्यायक हैं।

अथ प्राप्तावसरस्य विवक्षितान्यपरवाच्यध्वनेः स्वरूपप्रदर्शनगर्भं विभागं दर्शयति—

**असंलक्ष्यक्रमोद्द्योतः, क्रमेण द्योतितः परः ।**
**विवक्षिताभिधेयस्य ध्वनेरात्मा द्विधा मतः ॥ २४ ॥**

न सम्यगलक्ष्योऽसंलक्ष्यः, स क्रमो यत्र, तादृश उद्द्योतः प्रकाशो यस्य स एकोऽसंलक्ष्यक्रमो ध्वनिः, क्रमेण द्योतितः संलक्ष्यक्रमः, परो द्वितीयो ध्वनिरिति विवक्षिताभिधेयस्य विवक्षितान्यपरवाच्यस्य, ध्वनेर्ध्वन्यत इति योगात्प्रधानीभूतव्यङ्ग्यस्य आत्मा स्वरूपं द्विधा द्विप्रकारको मतः सुधीभिरित्यर्थः ।

अब विवक्षितान्यपरवाच्यध्वनिका विशेषनिरूपणार्थ पहले विभाग करते हैं—असंलक्ष्येति । 'असंलक्ष्य क्रमव्यङ्ग्य और संलक्ष्य क्रमव्यङ्ग्य'के भेदसे विवक्षितान्यपरवाच्य ध्वनि दो प्रकारकी होती है।

विवृणोति—

**मुख्यतया प्रकाशमानो व्यङ्ग्योऽर्थो ध्वनेरात्मा । स च वाच्यार्थापेक्षया कश्चिदलक्ष्यक्रमतया प्रकाशते, कश्चित् क्रमेणेति द्विधा मतः ।**

सा केवलं हरिणशाप[illegible] [illegible]तया, तत्र [illegible] कल्पगुरुकन्याविषयकत्वेन रतेरिहानौचित्यप्रवृत्तिः ॥

भावशान्तिर्यथाऽमरुककवेः शतके—

'सुतनु ! जहि हि कोपं पश्य पादानतं मां न खलु तव कदाचित् कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्यगामीलिताक्ष्या नयनजलमनल्पं मुक्तमुक्तं न किञ्चित् ॥'

वाच्यव्यङ्ग्यप्रतीत्योः क्रमः स्फुटं लक्ष्यत एव । स च संलक्ष्यक्रमो ध्वनिरिति द्वैविध्यं ध्वनेरिति सारम् । तुल्यमितिपाठे सहेवेत्यर्थः ।

विस्तरेण क्रमस्थापना तृतीयोद्द्योते करिष्यते । प्रथमकारिकया वाच्यभेदप्रयोज्यो ध्वनिभेद उक्तः । अनया तु क्रमसम्यग्लक्ष्यालक्ष्यत्वप्रयोज्यः स उच्यत इति विशेषः ।

वृत्तिकार उक्तार्थको ही स्फुट करते हैं—मुख्यतयेति । वाच्यार्थकी अपेक्षा अलौकिक चिदानन्द-चमत्कार-जनकतया भासमान व्यङ्ग्यार्थ ही ध्वनिका वास्तविक स्वरूप है, परन्तु विभावादि वाच्यप्रतीतिका व्यङ्ग्यप्रतीतिके प्रति कारण होनेसे पहले भासित होना स्वभावसिद्ध होने पर भी जहाँ कमलोंके शतपत्रभेदनवत् अत्यन्त सूक्ष्मक्षण-व्यवधानके कारण दोनोंकी प्रतीति होनेमें व्यवधान क्रम नहीं लक्षित होता है, उसे असंलक्ष्य क्रमव्यङ्ग्य ध्वनि कहते हैं, और जहाँ दोनोंकी प्रतीतिका क्रम लक्षित होता है, उसे संलक्ष्यक्रम व्यङ्ग्य ध्वनि कहते हैं ।

असंलक्ष्यक्रमध्वनिं लक्षयन् विभजते—

तत्र ।

तत्र ध्वनिद्वये ।

**रसभाव—तदाभास—भावशान्त्यादिरक्रमः ।**
**ध्वनेरात्माऽङ्गिभावेन भासमानो व्यवस्थितः ॥ २५ ॥**

रसा आवरणभङ्गावच्छिन्नरत्याद्यवच्छिन्नचिद्रूपाः शृङ्गारवीरकरुणाद्भुतहास्यभयानकबीभत्सरौद्रशान्तेति नव प्रभेदाः, भावा रसरूपतासम्पादकविभावादिसंसर्गविरहिताः केवलाः स्थायिनः, प्राधान्येन व्यक्ता व्यभिचारिणश्च, तदाभासा अनौचित्येन प्रवृत्तेर्दुष्टा रसा रसाभासा दुष्टा भावा भावाभासाश्च, तत्प्रशान्तिर्भावस्योक्तरूपस्य शान्तिः प्रशाम्यदवस्था, आदिः प्रधानं यस्य स तादृशः, अक्रमोऽसंलक्ष्यक्रमः, अङ्गित्वेन प्राधान्येन, भासमानः सहृदयचर्वणा—गोचरीभवन् , ध्वनेर्विवक्षितान्यपरवाच्यप्रकारस्य, आत्मा स्वरूपं व्यवस्थित इत्यर्थः ।

समभि[illegible]शब्दादेकवचनम् [illegible]

अब ग्रन्थकार स्वरचित विषमबाण लीला नामक काव्यका भी एक उदा[illegible]
देते हैं—यथेति । कवि कहता है—गुण ( पाण्डित्य [illegible] वास्तवमें गुण
होते हैं, जब वे सरसगुणज्ञोंसे जाने जाते हैं, कमल त[illegible] कमल होते हैं,
जब वे सूर्य किरणोंसे विकसित होकर सुशोभित होते हैं [illegible] द्वितीय कमल
शब्द सौरभ-सौन्दर्यशाली कमलके बोधक होनेसे [illegible]र्थमें परिणत

नागेशेन तेषां मिथः पार्थक्यं विवेचितम्। अपरिच्छिन्नानन्दचिन्मयब्रह्मसतत्त्वस्य रसस्य शान्त्युदयसन्धिशबलत्वानि नैव सम्भवन्ति, तस्माद्भावानुबन्धीन्येवैतान्यास्वादपदवीमवतरन्ति। ननु विभावानुभावयोरपि भाववच्चमत्कारभूमितया न कथं तद्ध्वनिरिति चेत्, न तयोर्वाच्यतायामेव चमत्कारित्वात्, तच्चर्वणायाश्चित्तवृत्तिष्वेव पर्यवसानाच्च। तयोरपि कथञ्चन व्यज्यमानतादशायान्तु वस्तुध्वनिकुक्षिप्रवेश एवेति लोचने व्यक्तम्। रसभावादीनां स्वरूपनिरूपणमाचार्य्यैराकरेषु, मया रसमञ्जरीसुरभौ च विहितमेवेति नेह तत्प्रतन्यते, उदाहरणानि पुनरेषां क्रमेण विदग्धविनोदाय निर्दिश्यन्ते।

तत्र सम्भोगश्रृङ्गाररसो यथा भवभूतेरुत्तररामचरिते—

'किमपि किमपि मन्दं मन्दमासत्तियोगादविरलितकपोलं जल्पतोरक्रमेण।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णोरविदितगतयामा रात्रिरेव व्यरंसीत्॥'

श्रीकृष्णविषयो रतिभावो यथा मम राधापरिणये शक्रसुरभिस्तवे—

'जपारागप्रेङ्खन्महिममहनीयाङ्गुलिदले शरद्राकाऽधीशोज्ज्वलनखमहःकेसरवृते।
पदाम्भोजे भक्तव्रजहृदयभृङ्गोपचरिते तवास्मत्संसारज्वरपरमशान्त्यै प्रभवताम्॥'

रसाभासो यथा कालिदासस्य कुमारसम्भवे वसन्तवर्णने—

'मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः।
श्रृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः॥'

यथा वा मदीये राधापरिणये निदाघवर्णने—

'उन्मदोऽसितमणिप्रभलोलद्-भृङ्गजातपरिवीतकपोलः।
कानने मुकुलिताननकोशां, वासितामनुससार करीन्द्रः॥

अनयोस्तिर्यग्विषयत्वादनौचित्यप्रवृत्तिः॥

भावाभासो यथा जगन्नाथस्य भामिनीविलासे करुणोल्लासे—

'सर्वेऽपि विस्मृतिपथं विषयाः प्रयाता विद्याऽपि खेदकलिता विमुखीबभूव।
सा केवलं हरिणशावकलोचना मे नैवापयाति हृदयादधिदेवतेव॥'

गुरुकन्याविषयकत्वेन रतेरिहानौचित्यप्रवृत्तिः॥

भावशान्तिर्यथाऽमरुककवेः शतके—

'सुतनु! जहिहि कोपं पश्य पादानतं मां न खलु तव कदाचित् कोप एवंविधोऽभूत्।
इति निगदति नाथे तिर्यगामीलिताक्ष्या नयनजलमनल्पं मुक्तमुक्तं न किञ्चित्॥'

इह नयनजलमोचनेनेर्ष्यारूपव्यभिचारिभावस्य प्राधान्यभाजः शान्तिः ॥

भावोदयो यथा तस्य तत्रैव—

'चरणपतनप्रत्याख्यानात् प्रसादपराङ्मुखे निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते। व्रजति रमणे निश्वस्योच्चैःस्तनस्थितहस्तया नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता ॥'

अत्र व्यभिचारिणो विषादस्योदयः ॥

भावसन्धिर्यथा भवभूतेर्महावीरचरिते—

'उत्सिक्तस्य तपःपराक्रमनिधेरभ्यागमादेकतः,
सत्सङ्गप्रियता च वीररभसोत्फालश्च मां कर्षतः।
वैदेहीपरिरम्भ एष च मुहुश्चैतन्यमामीलय-
न्नानन्दी हरिचन्दनेन्दुशिशिरस्निग्धो रुणद्ध्यन्यतः ॥'

इहावेगहर्षयोः समकक्षयोर्व्यभिचारिणोः सन्धिः ॥

शबलता यथा विद्यानाथस्य प्रतापरुद्रयशोभूषणे—

'निन्दन्त्वत्र कुलस्त्रियः प्रियतमो लभ्यः सुखं केन वा,
भाग्येनानुमतं न किं गुरुजनैः का वा सखी प्रेष्यते।
किं लोकस्य भवेत्प्रसिद्धमचिरात् स्वच्छन्दमङ्कं कदाऽऽ-
रोक्ष्यामि स्थिरता कदा हृदि भवेद्यातव्य एव प्रियः ॥'

अत्र लज्जा-वितर्क-दैन्य-विषाद-शङ्कौ-त्सुक्य-धृति-मतयो व्यभिचारिणः क्रमेण प्रतीयन्ते ॥

अब असंलक्ष्यक्रम ध्वनिका विशद निरूपण करनेके लिये विभाग करते हैं—तः त्रेति। उक्त ध्वनिद्वयमें जहां असंलक्ष्यक्रम व्यङ्ग्यात्मक रस-रसाभास-भाव-भावाभास-भावप्रशम-भावोदय-भावसन्धि-भावशवलतायें सहृदयों द्वारा अङ्गी (मुख्य) रूपसे अलौकिक चर्वणा विषयीभूत होती हुई अत्यन्त चमत्कारजनक प्रतीत हों, वहां विवक्षितान्यपरवाच्य ध्वनिका प्रथम प्रकार समझना चाहिये। विभावादियोंके काव्य-नाटकादि योगसे परिपुष्ट होकर रत्यादि स्थायिभाव ही प्रपाणक रस न्यायसे श्रृंगारादि रसरूपमें परिणत होकर रसपदसे व्यवहृत होने लगते हैं, और विभावादि समूहालम्बनात्मक अलौकिक अखण्ड स्वयं प्रकाशमान चिदानन्द चमत्कार विशेषको ही रस कहते हैं। उसके 'श्रृङ्गार-वीर-करुण-अद्भुत-हास्य-भयानक-वीभत्स-रौद्र और शान्त' ये नौ भेद हैं। उनमें 'संभोग और विप्रलम्भ' के भेदसे श्रृङ्गार रस दो प्रकारका है। नायक-नायिकाके परस्पर रति विशेषको

शृङ्गार कहते हैं। परन्तु श्रेष्ठ देव, गुरु, नृपति आदि विषयक भक्तिरूप रति विशेष शृङ्गारमें न परिणत होकर भावपदसे ही व्यवहृत होता है, एवं रत्यादि स्थायिभाव भी जब किसी दोष ( त्रुटि ) वश विभावादिसे परिपुष्ट न हो पाता, तब रस रूपमें परिणत न होकर भावरूपसे ही व्यवहृत होता है, तथा जहां प्रणय कोपादि संचारिभाव ही अन्यको दबाकर प्रधानतया अधिक चमत्कारजनक प्रतीत होता है, वहां भी रसका व्यवहार न होकर भावका ही व्यवहार होता है। वही रस जब विशेषानुभवहीन पशु-पक्षी आदि जीवगतत्वेन वर्णित होता है, तब रसाभास कहा जाता है। उक्त रत्यादि भाव अनुचित गुरुकन्यादि विषयक हो, तो भावाभास कहा जाता है। उक्त संचारी आदि भावोंकी प्रशमावस्थाको भावशान्ति कहते हैं। उक्त संचारी आदि भावकी उद्गमावस्थाको भावोदय कहते हैं। उक्त संचारी आदि भावोंके तुल्यरूपसे एक साथ आस्वादको भावसन्धि कहते हैं। लगातार पूर्व-पूर्वका उपमर्दन करते हुए उत्तरोत्तर उक्तभावोंके आस्वादको भावशबलता कहते हैं। अब संभोग शृङ्गारका दिग्दर्शन कराते हैं—केलिगृहमें शय्या पर धीमे २ अङ्गोंमें अङ्गोंके सटनेसे रोमाञ्चादि विकारजन्य एक विलक्षण आनन्दका अनुभव करते हुए, कपोलमें कपोल मिलाकर वेसिरपांवके रङ्गरभसकी उटपटाङ्ग सी बातें करते हुए, बाहोंमें बाहोंसे गलमें गलेको बड़ी चावसे लिपट कर आलिङ्गनादि जन्य अलौकिक रसको लूटते हुए प्रिय-प्रेयसीके परस्परमें बात करते करते हास्य विनोदमें रात ही बीत गई पर बातें नहीं बीतीं। यहाँ पर सरस विदग्धजनोंको वाच्यप्रतीतिके साथ ही एक अद्भुत संभोगशृङ्गार रसका अनुभव होता है। इसी प्रकार रसाभासादिका उदाहरण समझना चाहिये।

असंलक्ष्यक्रमत्वोपपत्तिमभिधत्ते—

**रसादिरर्थो हि सहेव वाच्येनावभासते। स चाङ्गित्वेनावभासमानो ध्वनेरात्मा**

हि यतो रसादिर्व्यङ्ग्योऽर्थो वाच्येन विभावादिना सह इव न तु सहैव, न वा विलम्बेन, अवभासते प्रतीतिविषयो भवति, तस्मादसंलक्ष्यक्रमः, कार्यकारणभावेन निर्णीतस्य क्रमस्य सम्यगलक्ष्यत्वात्। स रसादिश्च, अङ्गित्वेन प्राधान्येन अवभासमानः प्रतीतिगोचरीभवन्, ध्वनेरात्मा स्वरूपमित्यर्थः।

'सहैव' इति पाठस्यासङ्गतिस्तु प्रागेव दर्शिता। अतएव च 'इवशब्देनासंलक्ष्यता विद्यमानत्वेऽपि क्रमस्य व्याख्याता' इति लोचनं सङ्गच्छते॥

वृत्तिकार उक्त असंलक्ष्यक्रमको व्यक्त करते हैं—रसादिरिति उक्त रसादि, विभावादि वाच्योंके साथ एक साथकी भांति प्रतीत होते हैं, इसलिये सूक्ष्म

व्यवधान होने पर भी व्यवधान-क्षण क्रम लक्षित नहीं होता, अतः ये असंलक्ष्य क्रम कहे गये हैं। परन्तु वे रसादि मुख्यरूपसे सहृदयों द्वारा आस्वादित होनेके कारण ही ध्वनिरूपमें व्यवहृत होते हैं।

नन्वङ्गिनोऽपि रसादिध्वने रसवदाद्यलङ्कारेभ्यः को भेदः इत्याशङ्कां कारिकाद्वितयेन समाधातुमवतारयति—

**इदानीं रसवदाद्यलङ्कारादलक्ष्यक्रमद्योतनात्मनो ध्वनेर्विभक्तो विषय इति प्रदर्श्यते—**

अलक्ष्यक्रमद्योतनात्मनोऽसंलक्ष्यक्रमस्य रसादिध्वनेः। विभक्तोऽतिरिक्तः। विषयो लक्ष्यः। अलङ्कारादिति जातितात्पर्यकमेकवचनं प्रदर्श्यते, प्रस्तुतकारिकाभ्यामिति शेषः॥

अब आगे वक्ष्यमाण रसवदादि अलंकारोंसे असंलक्ष्यक्रम व्यङ्ग्यात्मक उक्त रसादिध्वनिका विषय अतिरिक्त ही है, इस बातको अग्रिम दो कारिकाओं द्वारा कहते हैं।

**वाच्यवाचकचारुत्व-हेतूनां विविधात्मनाम्।**
**रसादिपरता यत्र स ध्वनेर्विषयो मतः॥ २६॥**

यत्र काव्ये विविधात्मनां नानारूपाणां, वाच्यं च वाचकं च तच्चारुत्वहेतवश्चेति तेषां शब्दार्थ-तदुभयालङ्कारादीनाम्, रसादिपरता प्रधानीभूतरसादिव्यङ्ग्योपस्कारकत्वम्, भवतीति शेषः, स ध्वनेर्विषयो लक्ष्यो मतः प्रागुक्त इत्यर्थः।

विभागाय पुनरिहोपादानं ध्वनेरवगमनीयम्॥

जिस काव्यमें नाना प्रकारक वाच्य-वाचक और इनके सौन्दर्यको बढ़ानेवाले अलंकारादि, मुख्यरूपसे चर्वणाविषयीभूत उक्तरसादिको बतलानेमें तत्पर रहते हैं, वहीं पर ध्वनिका विषय समझा जाता है।

तदाह वृत्तिकृत्—

**रस-भाव-तदाभास-तत्प्रशमलक्षणं मुख्यमर्थमनुवर्तमाना यत्र शब्दार्थालङ्कारा गुणाश्च परस्परं ध्वन्यपेक्षया च विभिन्नरूपा व्यवस्थिताः, तत्र काव्ये ध्वनिरिति व्यपदेशः।**

तत्प्रशमपदं भावोदयादीनां त्रयाणामप्युपलक्षणम्। अनुवर्तनमुपस्करणम्। प्राग्वच्छब्दश्चार्थश्चालङ्काराश्चेति द्वन्द्वः। शब्दादीनां स्वरूपतोऽधिकरणभेदतश्च भेदोऽवसेयः। अन्यत्स्फुटम्॥

वृत्तिकार उक्त विषयको स्पष्ट करते हैं—रसेति। रस-भाव-तदाभास-भाव-प्रशमादि रूप मुख्य व्यङ्ग्योंके अनुगमन करते हुए जिस काव्यमें वाच्य-वाचक-अलंकार और गुणादि, ध्वनिकी अपेक्षा और परस्परमें विभिन्नरूपसे व्यवस्थित हैं, उसी काव्यमें ध्वनिका व्यवहार होता है।

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥ २७॥

तु पुनः, यत्र काव्ये, अन्यत्रान्यस्मिन् स्वभिन्ने वस्त्वलङ्काररसादिरूपे व्यङ्ग्ये, वाच्ये वा वस्त्वलङ्कारलक्षणे, वाक्यार्थे तदर्थबोधे, प्रधाने सति, रसादयो नातिचमत्कारितयाऽङ्गम्, तस्मिन् काव्ये रसादि—नामैकदेशग्रहणे नाममात्रग्रहणं देवदत्तो दत्तः इति न्यायेन रसवदादिः 'रसवत्, प्रेयः, ऊर्जस्वि, समाहितम्, भावोदयम्, भावसन्धिः, भावशबलत्वम्' अलङ्कारो भवतीति मे मतिरित्यर्थः।

अत्र 'मे मतिः' इत्युक्तिरेव खण्डनीयपक्षान्तराणामपि सद्भावं सूचयति। तथाच 'रसादीनामलङ्कार्यत्वेन शब्दार्थवृत्त्यभावेन च नालङ्कारता' 'रसादीनामङ्गितायामेव रसवदाद्यलङ्काराः, अङ्गतायान्तूदात्तालङ्कारस्य द्वितीयो भेदः' 'रसादिषु रूपकादिसाम्यादलङ्कारत्वव्यपदेशो गौणः' इत्यादय औद्भटाः पक्षाः पूर्वपक्षायमाणाः समुल्लसन्ति।

तत्खण्डनान्यपि क्रमशः 'प्रधानानामेव रसादीनामलङ्कार्यता, अङ्गते त्वङ्गत्वमेवेत्यलङ्कारतैव, शब्दार्थवृत्तित्वं नालङ्कारतायां नियामकम्, किन्तु चमत्कारः, स च प्रकृतेऽप्यक्षतः। यद्वा व्यङ्ग्यव्यञ्जकभावेन रसादीनां शब्दार्थयोरपि वृत्तिः' 'रसादीनामङ्गित्वे, स्वयमेवालङ्कार्यत्वात् कुतोऽलङ्कारता?। अङ्गतायामुदात्तालङ्कारप्रकारकल्पना न सम्भवति, तत्र महतां चरितस्यैवोपलक्षणत्वनियमो नतु रसादीनाम्' 'विच्छित्तिविशेषकृत्त्वरूपमुख्यधर्मयोगेऽपि कुतो व्यवहारस्य गौणत्वम्?' इत्यादीनि ज्ञेयानि।

इत्थञ्च रसस्याङ्गत्वे रसवत्, भावस्य प्रेयः, रसाभासस्य भावाभासस्य चोर्ज्जस्वि, भावशान्तेः समाहितम्, भावोदयस्य भावोदयम्, भावसन्धेर्भावसन्धि, भावशबलताया भावशबलत्वं चालङ्कारोऽवधारणीयः॥

किन्तु जिस काव्यमें पूर्वोक्त व्यङ्ग्यरसादिकी अपेक्षा दूसरे ही वस्तु अलंकारादि वाच्यार्थ, प्रधानरूपसे चमत्कारितया वाक्यार्थ बोधके विषय प्रतीत होते हैं, और उक्त रसादि तो अप्रधान रूपसे ही प्रतीत होते हैं, उस काव्यमें क्रमशः रसके अङ्ग होने पर 'रसवत्' भावके अङ्ग होने पर 'प्रेयः' रसाभास और भावाभासके अङ्ग होने पर

'ऊर्जस्वी' भावशान्तिके अङ्ग होने पर 'समाहित' एवं शेषके भावोदय, भावसन्धि, और भावशबलता, अलंकार माने गये हैं। यह ग्रन्थकारका सिद्धान्त है।

तदाह वृत्तिकारः—

यद्यपि रसवदलङ्कारस्यान्यैर्दर्शितो विषयः, तथापि यस्मिन् काव्ये प्रधानतयाऽन्योऽर्थो वाक्यार्थीभूतः, तस्य चाङ्गभूता ये रसादयः, ते रसादेरलङ्कारस्य विषया इति मामकीनः पक्षः।

चकारस्त्वर्थकः। उद्भटादिभि र्यद्यपि रसादीनां वाक्यार्थबोधे प्राधान्य एव रसवदाद्यलङ्कारा उक्ताः, किन्तूक्तयुक्त्या सिद्धान्तभूतेऽस्मन्मते रसादीनां तत्राप्रधानतायामेव तेऽलङ्कारा इति सारम्। यद्यपीत्यनेन परमतस्य युक्तिरिक्तत्वम्, तथाऽपीत्यनेन स्वमतस्यागतार्थत्वं च सूच्यते॥

वृत्तिकार उक्त कारिकाशयोंको विशद करते हैं—यद्यपीति। यद्यपि उद्भट प्रभृतियोंने तो प्रधानरूपसे वाक्यार्थ बोध विषयतया रसादिके भासित होने पर ही रसवदादि अलंकार माना है, अन्य किसीने तो रसादिके अलंकार्यत्व होनेसे उस (रसादि) में अलंकारत्वका खण्डन ही कर दिया है, तथापि रसादिके अङ्गी (प्रधान) होने पर चमत्कारजनक होनेसे उसमें अलंकार्यत्व ही हो सकता है, अलंकारत्व मानना ठीक नहीं, क्योंकि प्रधानीभूत रसादिमें ही सब कोई अलंकार्यत्व मानते हैं, अप्रधान रसादिमें नहीं मानते, इन युक्तियोंसे जिस काव्यमें प्रधानरूपसे अन्य वाच्य अर्थ ही वाक्यका बोध विषय हो रहा है, और उसका अङ्ग होकर ही पूर्वोक्त रसादि भासित होता है, उस काव्यमें रसवदादि अलंकार माननेमें कोई आपत्ति नहीं आती। यह ग्रन्थकारका मत है।

निदर्शनेन स्वमतं द्रढयति—

तद्यथा—चाटुषु प्रेयोऽलङ्कारस्य वाक्यार्थत्वेऽपि रसादयोऽङ्गभूता दृश्यन्ते।

तद् रसादीनामङ्गत्वं यथाऽनुपदं वक्ष्यमाणोदाहरणे—चाटुषु राजादिस्तुषाप्रशंसासु, भामहोक्तरीत्या प्रेयोऽलङ्कारो यस्मिन् स प्रेयोऽलङ्कारो वाक्यार्थबोधप्रधानीभूतोऽर्थः, तस्य वाक्यार्थत्वे तद्बोधप्राधान्येऽपि, रसादयोऽङ्गभूता दृश्यन्ते, नतु प्रधानीभूता इत्यर्थः।

उद्भटानुसारिणस्तु भिन्नक्रममपिशब्दं मत्वा प्रेयोऽलङ्कारसञ्ज्ञाहकं वाक्यमिदमङ्गीकृत्य 'चाटुषु (षष्ठ्यर्थे सप्तमी) चाटूनां वाक्यार्थत्वे प्रेयोऽलङ्कारोऽपि, न केवलं रसवदलङ्कारः' इति व्याचक्षते।

परन्तु षष्ठ्यर्थे सप्तम्या अननुशिष्टाया इह कल्पने क्लेशादुक्तं भामहानुसारिव्याख्यानमेव ज्यायः। वस्तुतस्तु चाटुषु प्रशंसनीयविषयकरतिभावस्य प्राधान्याज्

प्रेयोऽलङ्कारत्वम्, तेन तत्र रसादीनां प्रधानीभूतभावाङ्गतयैव रसवदाद्यलङ्कारत्वमिति द्रष्टव्यम् ॥

दृष्टान्त द्वारा अपने मतको पुष्ट करते हैं—तथेति। जैसे राजा आदिकी मिथ्या प्रशंसा स्थलमें प्रेयोऽलंकारके वाक्यार्थबोधका प्रधान विषयत्व होने पर, रसादि अङ्ग रूपसे ही भासित होता है। वास्तवमें तो चाटु स्थलमें भी प्रशंसनीय राजादि-विषयक रति भावके प्राधान्य होनेसे प्रेयोऽलंकार नहीं है, अपितु रसादिके प्रधानीभूत उक्त रति भावके प्रति अङ्ग होनेसे रसवदाद्यलंकार ही समझना चाहिये।

तत्र रसवदलङ्कारं द्विधा विभजते—

स च रसादिरलङ्कारः शुद्धः सङ्कीर्णो वा।

वाशब्दः समुच्चये। यत्रान्यामिश्रणं स शुद्धः, यत्र चावयवावयविभावेनान्यमिश्रणं स सङ्कीर्णः। रसादी रसवदादिः ॥

वह रसवदादि अलंकार 'शुद्ध और संकीर्ण' के भेदसे दो प्रकारका होता है। जहां अन्यसे मिश्रण नहीं है, उसे शुद्ध और जहाँ अवयवावयविभावसे अन्यका मिश्रण हो, उसे संकीर्ण कहते हैं।

उदाहरति—

तत्राद्यो यथा—

तत्र शुद्धसङ्कीर्णयोर्मध्ये आद्यः शुद्धः।

चाटुकारो राजानं प्रसादयति—

'किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं,
केयं निष्करुण! प्रवासरुचिता? केनासि दूरीकृतः?।
स्वप्नान्तेष्विति ते वदन् प्रियतमव्यासक्तकण्ठग्रहो
बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः॥'

हास्येन प्रणयपरिहासेन किम्? न किमपि। चिरान्मे दर्शनं दृष्टिविषयं प्राप्तो ननु बुद्धिपूर्वकं स्वयमागतस्त्वं पुनर्न प्रयास्यसि प्रस्थातुं शक्ष्यसि भुजनिगडनिबद्धो मोक्षं न लप्स्यस इति यावत्। हे निष्करुण! निर्दय! कान्त! तव इयमनिवार्या, प्रवासे विदेशवासे रुचिरासक्तिर्यस्य तद्भावः प्रवासरुचिता का? अनुचितेति यावत्। केन ममापराधेन दुर्भाग्येन वा दूरीकृतः, असि, इत्येवं स्वप्नान्तेषूत्स्वप्नायितेषु, वदन् व्याहरन्, प्रियतमे विशेषादासक्तः सम्बद्धः कण्ठस्य ग्रहो ग्रहणं येन स

तादृशः ते तव रिपूणां स्त्रीजनः, बुद्ध्वा जागरित्वा, रिक्तं प्रियेण शून्यं वाहुवलयं भुजमण्डलं यस्य तथाभूतः, तारमुच्चै रोदितीत्यर्थः।

इह 'किं हास्येन' इत्यनेन हसत एव प्रियतमस्य स्वप्नेऽवलोकनम्, 'न मे प्रयास्यसि पुनः' इत्यनेन भुजशृङ्खलया दृढं संयतस्य मोक्षासम्भवः, द्वाभ्यां शठत्वावगमोत्तरमुपालम्भौचित्यम्, 'निष्करुणे'त्यनेन प्रवासरुचितोपपत्तिः, 'केने'त्यनेन तदसह्यापराधानामपि सदा तूष्णीम्मर्षणम्, 'स्वप्नान्तेषु' इति वहुवचनेन स्वप्नानां पुनः पुनरुद्भूततया वहुत्वम्, रिक्तवाहुवलयत्वेन रोदनौचित्यम्, रोदनस्य तारत्वेन शोकस्यासह्यता च सूच्यते।

अत्र वस्त्वन्तरेणानुपस्कृतः स्वप्नदर्शनोद्दीपितः शोकस्थायिभावकः करुणरसः स्तुत्यराजप्रभावातिशयस्य वस्तुनोऽङ्गमिति शुद्धो रसवदलङ्कारः॥

अव शुद्ध रसवदलंकारका उदाहरण वतलाते हैं—तत्रेति। चाटुकार प्रशंसा द्वारा राजाको प्रसन्न करता है—हे राजन्! आपके शत्रुकी स्त्री स्वप्नमें हसते हुए अपने पतिको देखकर कहती है—अव व्यर्थ हास्य-विनोद करनेसे क्या लाभ, चिर दिनों पर आज तुम भाग्यवशसे ही मिले हो, अव मेरे वांह पाशसे जकड़े हुए तुम भाग नहीं सकते, हे निर्दय! प्रदेशमें रहनेकी यह कौन सी तुम्हारी आदत हो गयी। किसने तुमको मुझसे इतनी दूर कर दिया। इस तरह स्वप्नमें प्रियतमके गलेमें लिपटकर वोलती हुई रिपु-स्त्री जागकर, भुजपाशको प्रियसे खाली ही पाकर वहुत जोरोंसे रोने लगी। यहां स्वप्न दर्शनसे उद्दीपित शोक स्थायिभाव वाला करुणरस प्रशंसा योग्य राजाके पराक्रमातिशयरूप वस्तुका अङ्ग है, इसलिये यह शुद्ध रसवत् अलंकार है।

तदाह वृत्तिकृत्—

**इत्यत्र करुणरसस्य शुद्धस्याङ्गभावात् स्पष्टमेव रसवदलङ्कारत्वम्।**

वृत्तिकार उसीको संक्षेपसे वतलाते हैं—इत्यत्रेति। उक्त स्थलमें शुद्ध करुणरस स्तुत्य राजाके प्रभावातिशयका अङ्ग होनेसे स्पष्ट ही रसवदलंकार प्रतीत होता है।

लक्ष्यान्तराणामपि सङ्ग्रहाय व्याहरति—

**एवमेवंविधे विषये रसान्तराणां स्पष्ट एवाङ्गभावः।**

एवंविधे—वस्तुप्राधान्यभाजि चाटुरूप इत्यर्थः।

इसी तरह वस्तुप्रधानात्मक चाटु स्थलमें दूसरे रसोंको भी अङ्ग समझना चाहिये।

अथ द्वितीयमुदाहर्तुमाह—

सङ्कीर्णो रसादिरङ्गभूतो यथा—

अमरुककविर्मङ्गलमाचरति—

'क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं,
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः,
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः॥'

आर्द्रापराधस्तत्कालकृतपराङ्गनासङ्गलक्षणापराधः, कामी कामुक इव, साश्रूणि भयेन कोपेन च बाष्पपूर्णानि, नेत्रोत्पलानि नयनकमलानि यासां ताभिस्त्रिपुरयुवतिभि-स्त्रिपुरासुरतरुणीभिः, हस्तेऽवलग्नो हस्तस्पर्शी क्षिप्तः पृथक्कृतस्तिरस्कृतश्च, प्रसभं हठात्, अंशुकान्तं वसनाञ्चलम्, आददानो गृह्णन्नपि, अभिहतो निर्धूतस्ताडितश्च, यद्वा प्रसभमभिहतोऽप्यंशुकान्तमाददानः, केशेषु केशावच्छेदेन गृह्णन्स्पृशन्नुपाददानश्च, अपास्तो दूरीकृतोऽनादृतश्च, चरणयोर्निपतितो भ्रष्टः प्रणतश्च, सम्भ्रमेण भयेन संवे-गेन च नेक्षितोऽनवलोकितः, तथा य आलिङ्गन्नुपगूहन् संस्पृशंश्च, अवधूतः प्रक्षिप्तो ऽवहेलितश्च स शम्भोरयं शाम्भवः, शिवनियुक्तः, शराग्निर्बाणवह्निः, वो युष्माकं, दुरितं पापं दहतु भस्मीकरोत्वित्यर्थः।

तथाच 'सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि' इति मेदिनी। स्रग्धरा-च्छन्दः।

अब संकीर्ण रसवदलंकार का उदाहरण देते हैं—क्षिप्त इति। पराई स्त्रीके तत्कालकृत संसर्गके अपराधी कामुक पुरुषके समान त्रिपुरारि शिवजीका वह भीषण बाणाग्नि तुम्हारे पापपुञ्जको जलावे। श्लेषालंकार द्वारा दोनोंका विशेषण बतलाते हैं—भय या क्रोधके मारे आँसू भरे नयनकमल वाली त्रिपुरासुरकी तरुणियोंसे हस्तस्पर्श करनेपर पृथक् किया गया, या तिरस्कृत किया गया, बलात्कार वस्त्राञ्चल को पकड़नेपर दूर हटाया गया, या ताडित किया गया, केश ग्रहण करनेपर दूर फेका गया, या फटकारा गया, पैरों पर गिरनेपर या प्रणत होने पर भयसे या वेगसे नहीं देखा गया और छूनेपर या आलिङ्गन करने पर प्रक्षिप्त किया गया, या भर्त्सित किया गया, इस प्रकार ( बाणाग्नि और कामुकको ) समझना चाहिये।

उपादानोपयोगं दर्शयति वृत्तिकारः—

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वे, ईर्ष्याविप्रलम्भस्य श्लेषसहितस्याङ्गभाव इत्येवंविध एव रसवदलङ्कारस्य न्याय्यो विषयः।

अत्रोक्तश्लोके त्रिपुररिपोः शिवस्य, प्रभावातिशयस्य महिमोत्कर्षस्य, वाक्यार्थबोधविषयत्वेन प्राधान्येऽङ्गित्व इति यावत्, श्लेषोपस्कृतस्येर्ष्याविप्रलम्भाख्यशृङ्गाररसस्य, अङ्गभावोऽङ्गत्वम्, इति हेतोः, एवंविध एतादृशोऽप्रधानीभूतरसक एव, न तु रसप्राधान्यवानपि, रसवदलङ्कारस्य विषयो न्याय्यो न्यायादनपेतस्समुचित इत्यर्थः।

अत्र हि शिवप्रभावातिशयोऽङ्गी, परेषां तस्यैवोपस्करणात् तस्येर्ष्याविप्रलम्भोऽङ्गम्, स च न शुद्धः, किन्तु श्लेषालङ्कारप्रसाधित इति सङ्कीर्णस्य रसस्याङ्गत्वम्। श्लेषस्तु-क्षिप्त इत्यादिष्वर्थगतः। यद्यपि करुणोऽपीहास्त्येव रसः, तथाऽपि तस्य विच्छित्तिविशेषानाधायकत्वादङ्गाङ्गित्वेनानुपादानमित्येके।

परे तु श्लेषस्य च्छायात्मनो नेह प्ररोहः, अतः शिवप्रभावातिशयस्याङ्गिनो वस्तुनः शिवविषयकरतेर्भावस्य वा करुणः, तस्य च विप्रलम्भशृङ्गारो रसोऽङ्गमित्येवं सङ्कीर्णतां वदन्ति। केचित्त्वत्र शिवविषयकरतिभावमेव प्रधानं मन्यन्ते।

वृत्तिकार उक्तका ही समन्वय करते हैं—इत्यत्रेति। उक्त स्थलमें त्रिपुररिपु शिवजीका महिमातिशय ही चमत्कारी होनेसे वाक्यार्थबोधका प्रधान विषय प्रतीत होता है, और उक्त श्लेष-मिश्रित ईर्ष्याख्य विप्रलम्भ शृङ्गार तो उसका अङ्ग ही है, इसलिये इस तरहके अप्रधान रसादिको ही रसवदलंकारका समुचित विषय समझना चाहिये।

उपोद्घलकमाह—

**अतएव चेर्ष्याविप्रलम्भकरुणयोरङ्गत्वेन व्यवस्थानात्समावेशो न दोषः।**

अतएव शृङ्गारस्याप्रधानत्वादेव, मिथो विरुद्धयोरपि शृङ्गारकरुणयोरङ्गिनो वस्तुनोऽङ्गत्वेन व्यवस्थानात् स्थितेः, समावेशो सन्निवेशो, न दोष इत्यर्थः।

तृतीयोद्द्योते दर्शयिष्यमाणया रीत्या विरुद्धयोरपि रसयोः समावेशः पराङ्गत्वेन न दोषावहः। यद्युभयो रसयोरङ्गत्वं न स्यात्तर्हि समावेशोऽप्येकत्र दुष्टः स्यादिति सारम्॥

अतएव उक्तस्थलमें शृंगारके अप्राधान्यसे ही परस्पर विरुद्ध शृङ्गार-करुण रसोंका प्रधानभूत वस्तुके अङ्गरूप होनेसे एकत्र समावेश करनेमें भी आगे कोई दोष नहीं होगा, अर्थात् यदि उक्त ये दोनों रस किसीके भी अङ्ग नहीं होते तो, आगे तीसरे उद्द्योतमें दोनोंका एकत्र समावेश करना भी कठिन सा हो जाता, किन्तु अब यह बात नहीं रही, क्योंकि रतिस्थायिभाव होनेके नाते सापेक्षभावसे रहने वाले शृङ्गाररसका, और शोकस्थायिभावतया निरपेक्षभावसे रहनेवाले करुणरसके साथ

विरोध होनेसे एकत्र तुल्य प्रधानतया दोनोंका हरना असंभवित होने पर भी दूसरेका अङ्ग होकर रहनेमें कोई दोष नहीं हुआ।

एवंविध एवेत्येवशब्दार्थं समर्थयति—

यत्र हि रसस्य वाक्यार्थीभावः, तत्र कथमलङ्कारत्वम् ।

यतो रसः प्रधानम् , तस्मान्नालङ्कार इति निष्कर्षः ॥

परन्तु जहां रस प्रधानरूपसे ही चमत्कारजनक रूपमें आस्वादित होता हुआ वाक्यार्थ बोधका विषय प्रतीत होता है, वहां वह ध्वनि रूपसे ही व्यवहृत होता है, अलंकार रूपसे व्यवहृत नहीं होता।

तत्र हेतुमाह—

अलङ्कारो हि चारुत्वहेतुः प्रसिद्धः । नत्वसावात्मैवात्मनश्चारुत्वहेतुः ।

यथाऽऽत्मनः शोभायाः सम्पादकः कटकादिरलङ्कारः, तथाऽङ्गिनो रसादेरुपमाऽऽदिः । इत्थं च प्रधानस्य रसस्येतरचारुतासम्पादकत्वाभावान्नालङ्कारत्वम्, तत्त्वे च न प्राधान्यम् । अलङ्कारस्य ध्वन्यमानतादशायां क्वचित्तद्व्यपदेशस्तु गौणो ब्राह्मणश्रमणन्यायेन भूतपूर्वालङ्कारत्वमादायैव, अङ्गित्वालङ्कारत्वयोर्विरोधात् । नहि स्वनिष्ठसुषमायाः सम्पादकः स्वयम्भवितुमर्हति, अलङ्कार्यालङ्कारभावस्य भेदप्रतिष्ठानात् ।

क्योंकि जैसे कुण्डल कटकादि भूषण शरीरकी शोभाका वर्द्धक होता है, वैसे ही उपमा आदि अलंकार अङ्गीभूत रसादिकी शोभावर्द्धक होता है। कोई भी स्वयं ही स्वको अलंकृत नहीं करता। प्रधानरसादि तो स्वयं अलंकार्य हैं, वे प्रधान होते हुए अलंकार नहीं हो सकते। यदि उस दशामें भी वे अलंकार मान लिये जायं तो, उनकी प्रधानता ही नष्ट हो जायगी।

उपसंहरति—

तथा चायमत्र संक्षेपः—

'रसभावादितात्पर्यमाश्रित्य विनिवेशनम् ।
अलङ्कृतीनां सर्वासामलङ्कारत्वसाधनम् ॥ २८ ॥

सर्वासामुपमाऽऽदीनामलङ्कृतीनामलङ्काराणां, रसभावादीनामुक्तप्रतीयमानप्रधानानां, तात्पर्य्यमलञ्चिकीर्षाम् , आश्रित्य, विनिवेशनं विन्यसनम् , अलङ्कारत्वस्य, साधनं प्रयोजकमित्यर्थः ।

रसादेरात्मभूतस्योत्कर्षं कुर्वतामेवोपमादीनामलङ्कारत्वम् , नतु स्वरूपत इति तात्पर्य्यम् । ननु वाच्यवृत्तीनामुपमाऽऽदीनां रसाद्युत्कर्षणमसम्भवि साक्षात्सम्बन्धाभा-

चादिति चेत् , मैवम् , शरीरवृत्तीनां कटककुण्डलादीनां शरीरद्वाराऽऽत्मन इव, काव्यावयववृत्तीनामुपमाऽऽदीनां तदात्मभूतस्य रसादेरवयवद्वारा परम्परयोत्कर्षस्य जनकत्वेऽप्यलङ्कारतायाः सुवचत्वात् ।

यथा कटकादयो न शरीरमात्रमलङ्कुर्वन्ति, किन्तु तद्द्वाराऽऽत्मानम् । इतरथा न कथं शवशरीराश्रयिणां तेषामलङ्कारत्वम् । 'अहमलङ्कृतः' 'ममायमलङ्कारः' इत्यादिप्रतीतिविषयता चात्मन एव भवति, नतु शरीरस्य । तथैवोपमाऽऽदयो न केवलं काव्यावयवमलङ्कुर्वन्ति, अपित्वात्मभूतं रसादिकम् । क्वचिद्रसादितात्पर्यविरहेऽप्यलङ्कारत्वव्यपदेशस्तु सादृश्यहेतुकत्वादौपचारिक एव—

भावबोधकत्विनप्रत्ययान्तालङ्कृतिपदस्योपमाऽऽदिबोधकत्वमपि लक्षणामन्तरेण न सम्भवतीति द्रष्टव्यम् ॥

अब सबका उपसंहार करते हैं—तथाचेति । सहृदयोंके अत्यन्त आह्लादजनक मुख्यरूपसे प्रतीयमान उक्तरसभावादिकी रमणीयताको बढ़ानेके तात्पर्यसे ही उपमा आदि अलंकारोंका काव्यमें कवियों द्वारा निवेश किया जाता है, और वही उनमें अलंकारत्वका प्रयोजक है, अर्थात् आत्मस्थानापन्न उक्तरसादिके उत्कर्षको करनेसे ही उपमा आदिमें अलंकारत्व माना जाता है, अन्यथा नहीं। जैसे शरीरवृत्ति कटककुण्डलादि शरीरमात्रको अलंकृत नहीं करता, अपितु उसके द्वारा आत्माको ही अलंकृत करता है, क्योंकि मृत शरीरको अलंकृत करता हुआ नहीं देखा गया है, वैसे ही काव्यके एकदेशभूत वाच्यादि वृत्ति उपमादि भी काव्यके अवयवभूत वाच्य को ही अलंकृत नहीं करता है, अपितु काव्यात्मभूत रसादिको ही अलंकृत करता है ।

पर्यवसितं दर्शयति—

**तस्माद्यत्र रसादयो वाक्यार्थीभूताः, स सर्वो न रसादेरलङ्कारस्य विषयः, स ध्वनेः प्रभेदः । तस्योपमाऽऽदयोऽलङ्काराः । यत्र तु प्राधान्येनार्थान्तरस्य वाक्यार्थीभावे, रसादिभिश्चारुत्वनिष्पत्तिः क्रियते, स रसादेरलङ्कारताया विषयः ।**

तस्माद्रसादीनां प्राधान्येऽलङ्कारत्वाभावाद्धेतोः यत्र रसादीनां वाक्यार्थबोधप्राधान्यम् , तत्र न रसवदाद्यलङ्काराणां प्रसरः, किन्तु रसादिध्वनेरेव, रसादीनामलङ्कार्यत्वात् । उपमाऽऽदयस्तु प्रधानीभूतस्य तस्य प्रसाधकत्वादलङ्काराः । यत्र पुनरर्थान्तरस्य वस्तुतोऽलङ्कारस्य रसादेर्वा वाक्यार्थबोधप्राधान्यम् , रसादिभिश्च तस्य चारुत्वस्य शोभाविशेषस्य, निष्पत्तिः सम्पादनं, क्रियते । तत्र रसादीनां प्रधानालङ्कारकत्वादलङ्कारत्वस्य प्रसर इत्यर्थः ।

'न रसादेरलङ्कारस्य वा विषयाः' इति पाठस्तु वाशब्दार्थस्यायोग्यत्वादुपेक्षितः।

रसादीनां प्राधान्ये ध्वनिः उपमाऽऽदीनां तदुपकारत्वेऽलङ्कारत्वम्, रसादेरन्यस्य व्यङ्ग्यस्य प्राधान्ये रसादेः पुनरङ्गत्वे रसवदादयोऽलङ्कारा इति विषयविभागः स्फुटमवगन्तव्यः॥

सबका सारांश बतलाते हैं—तस्मादिति। जिस काव्यमें उक्त रसादि ही वाक्यार्थबोधका प्रधान विषय प्रतीत होता है, वहां ध्वनिका ही विषय समझना चाहिये, रसवदादि अलंकारोंका नहीं, वहां तो उक्त व्यङ्ग्य रसादिकी रमणीयताका वर्द्धक उपमादि ही अलंकार माना जाता है। परन्तु जहां रसादिसे भिन्न व्यङ्ग्य वस्तु या अलंकारादि ही वाक्यार्थबोधका प्रधान विषय प्रतीत होता है, रसादि तो उसकी शोभाको ही बढ़ाता है, वहां रसवदादि अलंकार समझना चाहिये।

तदाह—

**एवं ध्वनेरुपमाऽऽदीनां रसवदलङ्कारस्य च विभक्तविषयता भवति।**

विभक्तो विषयो येषां ते विभक्तविषयास्तेषां भावो विषयविभाग इत्यर्थः।

तत्र रसवदलङ्कारस्योदाहरणद्वयमुक्तमेव।

प्रेयसो यथा—

'तद्वक्त्रामृतपानदुर्ललितया दृष्ट्या क्व विश्रम्यताम्?,
तद्वाक्यश्रवणाभियोगपरयोः श्राव्यं कुतः कर्णयोः।
एभिस्तत्परिरम्भनिर्भरतरैरङ्गैः कथं स्थीयतां,
कष्टं तद्विरहेण सम्प्रति वयं कृच्छ्रामवस्थां गताः॥'

अत्र चिन्तारूपस्य व्यभिचारिभावस्य विप्रलम्भाङ्गतया प्रेयोऽलङ्कारः।

ऊर्जस्विनो यथाऽभिनवगुप्तपादानां देवतास्तोत्रे—

'समस्तगुणसम्पदः सममलंक्रियाणां गुणैर्भवन्ति यदि भूषणं तव तथाऽपि नो शोभसे।
शिवं हृदयवल्लभं यदि यथा तथा रञ्जयेस्तदेव ननु वाणि! ते जगति सर्वलोकोत्तरम्॥'

अत्र हि परमेशस्तुतिमात्रं वाचः परमोपादेयमिति वाक्यार्थे शृङ्गाररसाभासोऽङ्गम्।

'स पातु वो यस्य हतावशेषा-स्तत्तुल्यवर्णाञ्जनरञ्जितेषु।
लावण्ययुक्तेष्वपि वित्रसन्ति, दैत्याः स्वकान्तानयनोत्पलेषु॥'

इत्यत्र रौद्रप्रभृतीनामनुचितत्रासो भगवत्प्रभावातिशयस्याङ्गम्।

समाहितस्य यथा—

'अक्ष्णोः स्फुटाश्रुकलुषोऽरुणिमा विलीनः, शान्तं च सार्धमधरस्फुरणं भ्रुकुट्या।

'भावान्तरस्य तव चण्डि ! गतोऽपि रोषो, नोद्गाढयासनतया प्रसरं ददाति ॥'

अत्रानौचित्यप्रवृत्तस्य कोपभावस्य शान्तिःशृङ्गारस्याङ्गम् ।

भावोदयस्य यथा—

'साकं कुरङ्गकदृशा मधुपानलीलां, कर्तुं सुहृद्भिरपि वैरिणि सम्प्रवृत्ते ।
अन्याभिधायि तव नाम विभो ! गृहीतं, केनापि तत्र विषमामकरोदवस्थाम् ॥'

अत्र त्रासभावोदयस्य राजरतिभावाङ्गत्वम् ।

भावसन्धेर्यथा—'जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका ।
सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥'

इहौत्सुक्यलज्जयोर्भावयोः सन्धिः कविनिष्ठपार्वतीविषयकरतिभावस्याङ्गम् ।

भावशबलताया यथा—

'पश्येत् कश्चिच्चल चपल ! रे का त्वराऽहं कुमारी,
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः,
कन्या कश्चित् फलकिसलयान्याददानाऽभिधत्ते ॥'

अत्र शङ्काऽसूया-धृति-स्मृति-श्रम-दैन्य-विवाधौत्सुक्यानां शबलता राजरतेरङ्गम् । एषामलङ्कारसर्वस्वकारोक्तान्युदाहरणानि तु चिन्तनीयान्येव, तेषु भावोदयादेः प्रधानतया व्यङ्ग्यत्वात् ॥

**उक्त रीतिसे प्रत्येकके अलग २ विषय होनेसे ध्वनि, उपमादि, और रसवदादि अलंकारका विषय विभाग स्पष्ट हो जाता है ।**

'मे मतिः' इत्यनेन सूचितं परैकदेशिनो मतं निराकर्तुमनुवदति—

**यदि तु 'चेतनानां वाक्यार्थीभावो रसाद्यलंकारस्य विषयः' इत्युच्यते ।**

यदित्वित्यस्य तर्हीत्यनेनाग्रिमेसरेणान्वयः । चेतनानां चैतन्यभृतां प्राणिनाम् । अयमाशयः पूर्वपक्षिणः—चिद्रूपाणां रसानां, चित्तवृत्तिविशेषरूपाणां भावादीनां च जडेऽसम्भवात्तत्प्राधान्येऽचेतनवस्तुवृत्तान्तवर्णने रसवदादयोऽलङ्कारा न सम्भवन्तीति चेतनानामेव वाक्यार्थबोधप्रधानतायां तेषां सद्भावोऽङ्गीकरणीयः ।

**किसी विद्वान्‌ने कहा कि चिदात्मक रस और चित्तवृत्तिविशेष उक्त भाव आदिके अचेतन वस्तुमें नहीं सम्भव होनेसे अचेतन वस्तुके प्रधानतया वर्णन स्थलमें रसवदादि अलंकार नहीं हो सकता, अपितु चेतनोंके मुख्य रूपसे वाक्यार्थ ... ही रसवदादि अलंकार होता है ।**

निराकरोति—

**तर्ह्युपमाऽऽदीनां प्रविरलविषयता निर्विषयता वाऽभिहिता स्यात्।**

तर्हि तत्स्वीकृतौ रसवदाद्यलङ्कारैरुपमाऽऽदीनामपि विषयेषु व्याप्तेषु, तेषामुदाहरणाल्पता, सर्वथोदाहरणाभावो वा स्यादित्येपाऽऽपत्तिः।

**परन्तु वक्ष्यमाण युक्तियोंसे उपमादि विषयोंको भी रसवदादि अलंकार द्वारा व्याप्त कर लेनेसे उपमादिका उदाहरण मिलना असंभव सा हो जायगा।**

नन्वचेतनचरितवर्णनात्मकान्युपमाऽऽदीनां लक्ष्याणि कुतो रसवदादिभिर्व्याप्येरन्नित्यत आह—

**यस्मादचेतनवस्तुवृत्तान्ते वाक्यार्थीभूते, पुनश्चेतनवस्तुवृत्तान्तयोजनया यथाकथञ्चिद्भवितव्यम्।**

यतो जडसम्बन्धिन्यपि व्यापारे प्राधान्येन वर्णनीये, चेतनसम्बन्धिव्यापारोपारोपो यथाकथञ्चिद् विभावादित्वेनापि भवत्येव। ततश्च जडमपि वस्तु चेतनव्यापारोपारोपवशाच्चेतनायत इति तत्रापि रसवदादीनामेव साम्राज्यं, न तूपमाऽऽदीनाम्; बलीयसा दुर्बलस्य बाधादिति व्यक्तं निर्विषयत्वमुपमाऽऽदीनाम्॥

**क्योंकि चेतन विभावादि सम्बन्धि व्यापारके समारोप द्वारा अचेतन वस्तुओंके भी चेतनवत् चमत्कृत होनेसे अचेतन सम्बन्धि वृत्तान्तके प्रधान रूपसे वर्णन स्थलमें भी रसवदादि अलंकारका ही साम्राज्य हो जायगा, उपमादिका नहीं, इसलिये निरुक्त कल्पना करना ठीक नहीं।**

पुनः शङ्कते—

**अथ 'सत्यामपि तस्यां यत्राचेतनानां वाक्यार्थीभावो, नासौ रसवदलंकारस्य विषय' इत्युच्यते।**

अथेति यद्यर्थे। तस्यामचेतने चेतनवस्तुवृत्तान्तयोजनायां सत्यामपि, यत्र वस्तुतोऽचेतनानामेव प्राधान्यम्, असौ रसवदलङ्कारस्य न विषयः चेतनवृत्तान्तारोपेऽपि जडे चैतन्यविरहेण रसादेर्बाधात्। स एवोपमाऽऽदेर्विषयः इति भवद्भिरुच्यते चेत्, तदाऽपि न निरवद्यत्वमिति शेषः॥

**यदि अचेतन वस्तुमें चेतन वृत्तान्तके आरोप होने पर भी वास्तवमें चैतन्यके अभावसे रसादिके बाध होनेसे अचेतनोंका ही प्राधान्य है, इसलिये ऐसे स्थलोंमें उपमादिका ही सम्भव है, रसवदादि अलंकारका नहीं, ऐसा कहें—**

तदेव दूषणं दर्शयति—

**तन् महतः काव्यप्रबन्धस्य रसनिधानभूतस्य नीरसत्वमभिहितं स्यात् ।**

तत् तदा, महतो विपुलस्य वक्ष्यमाणस्यान्यस्य च, काव्यप्रबन्धस्य, रसनिधानभूतस्य रसैकाश्रयतया प्रसिद्धस्य, नीरसत्वं रसराहित्यम् , अभिहितमुक्तं स्यादित्यर्थः ।

रसप्राधान्ये रसवदलङ्कार इत्युद्भटानुयायिनो मन्यन्ते । नगनगरनदीगहनाद्यचेतनानां वर्णनं प्रायेण महाकवीनां काव्येषु रसैकजीवितेषु च समुपलभ्यते । नच तत्र नीरसत्वं कथञ्चन व्याहर्तुमुचितम् , रससारस्य चमत्कारविशेषस्यानुभूयमानस्यापलपितुमशक्यत्वात् , काव्यत्वाभावप्रसङ्गाच्च । अचेतने चेतनवस्तुवृत्तान्तयोजनायामपि वास्तविकचैतन्याभावे भवन्तः साम्प्रतं रसवदलङ्कारमुपमाऽऽदिविषयरक्षणानुरोधेन नोरीकुर्वन्ति । ततश्च भवन्नयेन नगादिवर्णने रसवतोऽभावे रसाभावोऽप्यर्थत एवापतितः । मन्मते तु तत्र रसवतोऽभावेऽपि रसप्राधान्येन ध्वनेरेव सद्भाव इति नैव नीरसत्वम् । नहि वर्णनीयस्य चैतन्याचैतन्ये अपेक्ष्येते रसास्वादे, अपित्वास्वादयितुरिति तत्त्वम् ॥

**तो रसके निधि स्वरूप बहुतसे काव्य प्रबन्धोंमें नीरसत्व होकर उद्देश्य ही नष्ट हो जायगा, अर्थात् वन, उपवन, गिरि, नदी, नगरादि, अचेतन वस्तु वर्णनात्मक सरस काव्य स्थलमें आपके दृष्टिकोणसे रसवान् चैतन्यके अभावसे रसाभाव ही सिद्ध हो जायगा। किन्तु उक्त स्थलोंमें भी रसके सारभूत अनुकूल अनुभूयमान चमत्कार विशेषका अपलाप नहीं किया जा सकता, इसलिये रसैकजीवित उक्त काव्योंको नीरस माननेके लिये कोई भी सहृदय व्यक्ति सहमत नहीं होगा। वास्तवमें तो रसास्वाद करनेमें वर्णनीय वस्तुके चैतन्यकी अपेक्षा नहीं होती, अपितु आस्वाद कर्ताओंका ही चैतन्य होना आवश्यक होता है।**

अचेतनवर्णनमुदाहरति—

**यथा—**

नायको वदति—

**'तरङ्गभ्रूभङ्गा क्षुभितविहगश्रेणिरसना,**
**विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम् ।**
**यथाऽऽविद्धं याति स्खलितमभिसन्धाय बहुशो-**
**नदीरूपेणेयं ध्रुवमसहना सा परिणता ॥'**

तरङ्गा ऊर्मय एव दैर्घ्यकौटिल्ययोगाद्भ्रुवोर्भङ्गाः क्षेपा यस्याः सा, तथा क्षुभिता तरङ्गाघातेन चञ्चला, विहगश्रेणिः पक्षिपङ्क्तिरेव कलकलस्वनमाचरन्ती रसना काञ्ची-यस्याः सा, संरम्भेण त्वरया रोषेण वा शिथिलं श्लथमुच्छ्वसितबन्धमिति यावत्, वसनमिव धवलं फेनं विकर्षन्ती नीचैः पतदपि प्रियकरग्रहणशङ्कयेव बलान्नयन्ती, बहुशो नैकधा, स्खलितं मदपराधं गतिभङ्गं वा, अभिसन्धाय विभाव्य, असहना मानिनी-त्वादमर्षणा, सेयं मद्दयिता, नदीरूपेण परिणता सरिदाकारेण पर्यवसिता, यथाऽऽविद्वं सकीलितं, यातीत्यर्थः। दन्त्यमध्योऽपि रसनशब्दः काञ्चीबोधकः।

दयितापक्षे पूर्वविशेषणयुगले रूपकसमासं विहायोपमितिसमासमेवाश्रयन्ति।

इहाचेतनायाः सरितश्चरिते गतिविशेषे मानवतीचरितारोपात्सरसताऽनुभूयमानाऽपि भवन्नयेन तिरोधाप्येत।

अब अचेतनोंका चैतन्यवत् वर्णन करते हैं—यथेति। उर्वशीके विषयमें नायकोक्ति द्वारा नदीको लक्ष्य कर कवि उत्प्रेक्षा करता है—यह नदी नहीं है, अपितु प्रिय विरहजन्य तापको नहीं सहन कर पीड़ा शान्त करनेके लिये प्रियतमा उर्वशी ही नदी रूपमें परिणत हो गयी है, ऐसी मैं सम्भावना करता हूं, क्योंकि इसमें तरङ्ग ही कौटिल्ययुक्त कटाक्ष विक्षेप हैं, एवं तरङ्गोंके आघातसे अत्यन्त चञ्चल पक्षियोंकी श्रेणी ही काञ्ची (करधनी) है, और वह वेग या कोपावेशसे बन्धन खुल जाने पर नीचे गिरते हुए कपड़ेको प्रियद्वारा पकड़ लेनेकी शङ्कासे मानो ऊपर खींचती हुई की तरह स्वच्छ फेनको आकृष्ट करती हुई, अनेकों बार प्रियकृत अपराध या शिलादिस्खलनका अनुभव कर तिर्यग्गमन करती हो। यहां अचेतन नदीके गति विशेषरूप चरितमें मानिनी नायिकाके चरितके समारोप द्वारा सहृदयों से आस्वाद्यमान सरसता आपकी विचारधारासे तिरोहित (छिप) हो जायगी।

पुनरुदाहरति—

यथा वा—

कश्चन सुहृदं व्याहरति—

'तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः,
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा।
चिन्तामौनमिवाश्रिता मधुलिहां शब्दैर्विना लक्ष्यते,
चण्डी मामवधूय पादपतितं जातानुतापेव सा॥'

तन्वी कृशा कोमला च, मेघजलेनार्द्रपल्लवतया क्लिन्नकिसलयत्वेन, अश्रुभिर्धौताधरेव क्षालितोष्ठेव, स्वकालस्य पुष्पोद्गमसमयस्य, विरहाद्व्यतिगमाद्, विश्रान्त

उपरतः पुष्पोद्गमो यस्याः सा, आभरणैर्भूषणैः शून्या रहितेव, मधुलिहां भ्रमराणां शब्दैर्विना, चिन्तया मत्समागमोपायानुसन्धानेन मौनं तूष्णीम्भावम् आश्रिताऽवलम्बितेव, सा प्रसिद्धा चण्डी कोपना, पादयोः पतितं चरणयोः प्रणतं मामवधूय तिरस्कृत्य, जातानुतापोद्भूतानुशयेव, पुरो लक्ष्यत इत्यर्थः।

इह लताचरिते कलहान्तरितावृत्तान्तारोपाद्रसवत्ता।

उदाहरणान्तर बतलाते हैं—यथा वेति। कोई युवक अपनी प्रेयसीके विषयमें मित्रसे कहता है—हे सखे! मेघके जलवृष्टिसे भींगे हुए नये पल्लवकी भांति आँसूधारासे प्रक्षालित होठवाली, एवं पुष्पोद्गम समयके बीत जानेसे विकसित पुष्प रहित की तरह आभूषणोंसे शून्य, तथा भ्रमरोंके मधुर गुञ्जनोंके बिना स्तब्ध एक कोमल लताकी तरह चिन्तासे मौनत्वको प्राप्तकी हुई, और पैर पर गिरे हुए मुझको तिरस्कार कर पीछे पछताने वाली कोपवती वह मेरी प्राणप्रिया मुझसे कलहकर रूठी हुई अभी भी मेरे सामने मानो अत्यन्त खिन्न सी लक्षित हो रही है। यहां पर लताके चरितमें कलहान्तरिता नायिकाके वृत्तान्तके आरोप द्वारा ही रसवत्ता प्रतीत हो रही है।

दार्ढ्याय पुनरप्युदाहरति—

**यथा वा—**

व्रजादागतमुद्धवं श्रीकृष्णः पृच्छति—

'तेषां गोपवधूविलाससुहृदां राधारहस्साक्षिणां,
क्षेमं भद्र! कलिन्दशैलतनयातीरे लतावेश्मनाम्।
विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना,
ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः॥'

हे भद्र! सौम्य! तेषामद्यापि मनोरमतया मत्स्मृतौ लग्नानां, गोपवधूनां विलासे सुहृदां नर्मसचिवानाम्, (तत्रापि) राधाया यद्रह एकान्तक्रीडनं, तस्य साक्षिणां साक्षात्कारिणाम्, कलिन्दशैलतनयाया यमुनायास्तीरे तटे, (स्थितानाम्) लतावेश्मनां कुञ्जानां, क्षेममनामयं कच्चित्? अधुना मयि चिरप्रोषिते, स्मरतल्पस्य सुरतशय्यायाः कल्पनाय विन्यासाय यो मृदुरल्पः, छेदनोपयोगस्त्रोटनकार्य्यम्, तस्मिन् विच्छिन्ने विरते सति, ते तदीयाः पल्लवाः किसलयाः, विगलन्त्यो जीर्णतया विनश्यन्त्यो नीलास्त्विषः कान्तयो येषां तादृशा, जरठीभवन्ति पुराणीभवन्तीति जाने मन्य इत्यर्थः।

इहापि जडलतावेश्मवृत्तौ चेतननर्मसचिववृत्तान्तारोपाद्रसवत्ता॥

दृढताके लिये तीसरा उदाहरण देते हैं—यथा वेति। व्रजसे आये हुए उद्धवको कृष्ण भगवान् पूछते हैं—हे सौम्य ! आज भी मेरी ही स्मृतिमें लीन एवं गोप युवतियोंकी रतिक्रीडा-विलासमें नर्म सचिवकी तरह सहायता देनेवाले तथा राधा के एकान्त क्रीडनका साक्षात्कार करनेवाले, यमुना तट पर विराजमान उन लता कुञ्जोंकी कुशलता तो है न ? अभी बहुत दिनोंसे मुझको वहांसे चले आने पर सुरतशय्याके विन्यासार्थ थोड़ेसे त्रोटन कार्यके भी बन्द हो जानेसे उपयोग नहीं होनेके कारण हरे २ नये पल्लव जीर्ण होकर पीलेसे हो रहे होंगे, ऐसा मैं समझता हूं। यहां भी जड लता कुञ्जोंके वृत्तमें चेतन क्रीडासचिवके वृत्तान्तके आरोपसे स्पष्ट ही सहृदयोंको रसवत्ताका अनुभव हो रहा है।

उदाहरणत्रयेऽस्मिन् वक्तव्यमाह—

इत्येवमादौ विषयेऽचेतनानां वाक्यार्थीभावेऽपि चेतनवस्तुवृत्तान्तयोजनाऽस्त्येव।

व्यक्तोऽर्थः।

इस तरहके उक्त उदाहरणोंमें अचेतन नदी-लता-कुञ्जोंमें प्रधान रूपसे वाक्यार्थबोधविषयताके प्रतीत होने पर भी चेतन नायिका, और क्रीडासचिवोंका वृत्तान्त-समारोप स्फुटरूपसे ही प्रतीयमान हो रहा है।

पुनरेकदेशिमतमुपसंहारावसरेऽनुवदति—

अथ यत्र चेतनवस्तुवृत्तान्तयोजनाऽस्ति तत्र रसादिरलंकारः।

इत्युच्यत इति शेषः।

जहां चेतन वस्तु वृत्तान्तका आरोप हो, वहां अवश्य ही रसवदादि अलंकार होता है, ऐसा यदि आप कहें—

तत्रापत्तिं दर्शयति—

तदेवं सत्युपमाऽऽदयः प्रविरलविषया निर्विषया वा स्युः।

व्याख्यातं प्रागेव।

तब तो उपमादि अलंकार हमेशाके लिये काव्य जगत्से हाथ धोकर चला जायगा।

तत्र हेतुमाह—

यस्मान्नास्त्येवासावचेतनवस्तुवृत्तान्तो यत्र चेतनवस्तुवृत्तान्तयोजना नास्ति। अन्ततो विभावत्वेन।

असावीदृशोऽचेतनवस्तुवृत्तान्त एव नास्ति, यस्मिंस्तद्वृत्तान्ते चेतनवृत्तान्तयोजना नास्ति। अन्ततः पर्यवसाने ( सर्वप्रकारस्वीकारासद्भावे ) विभावत्वेनास्तीत्यन्वयः।

अयम्भावः—प्रकृतिजडान्यपि चन्द्रचन्दनादीनि चेतनसम्बन्धेन वर्ण्यमानानि वस्तूनि सचेतनानीव शृङ्गारविभावतया यथा चित्तमाक्षिपन्ति, तथैवान्यान्यपि। किञ्च शिखरितरुप्रभृतीनामपि स्तम्भरोमाञ्चादिवर्णनमनायत्या चेतनत्वमवभासयति यत्र नान्य उपायः, तत्रापि कस्यचिद्रसस्य विभावत्वमागूरणीयम्, विभावत्वस्य वस्तुस्वसमनियतत्वात्। नहीदृशं किमपि वस्तु, यत् कस्यापि रसस्य विभावत्वं नालम्बितुं शक्नुयात्। स्वभावजडोऽपि गिरिः कविवाग्विषयतामवगाहमानः क्वचिच्छृङ्गारस्योद्दीपनत्वम्, कुत्रचिद्भयानकस्याद्भुतस्य वाऽऽलम्बनतामवलम्बत एव। इत्थञ्च सर्वेषु पदार्थेषु रसानां पारम्परिकसम्बन्धस्य दुष्परिहरत्वेन गुणीभावे प्राधान्ये वा रसवदलङ्कारस्य व्यापकतायामक्षुण्णायामुपमाऽऽदीनामेकोऽपि विषयः कोऽप्यवशिष्यते भवन्मते ?॥

**क्योंकि ऐसा कोई भी अचेतन वस्तु वृत्तान्त नहीं है, जहां चेतन वस्तु वृत्तान्त का समारोप नहीं हो अर्थात् स्वभावसे जड़ भी चन्द्र चन्दनादि पदार्थ चेतन रूपसे वर्णित होकर ही सचेतनोंकी तरह चित्ताकर्षक होते हैं, जैसे प्रकृतिसे जड भी गिरि पदार्थ कवियोंकी वाणीका विषय होकर कहीं शृङ्गाररसका उद्दीपन-विभाव हो जाता है, और कहीं भयानक या अद्भुत रसका आलम्बन विभाव हो जाता है, इसी प्रकार सभी जड वस्तुएं विभाव रूपसे वर्णित हो सकती हैं, ऐसी स्थितिमें सभी पदार्थोंमें साक्षात् या परम्परया रसके सम्बन्ध होनेसे रसवदादि अलंकारोंके ही व्याप्त करलेने पर उपमादिका उदाहरण सर्वथा लुप्त सा हो जायगा।**

इत्थं परमतं निराकृत्य पर्यवसितं स्वमतं प्रत्यामनति—

**तस्मादङ्गत्वेन च रसादीनामलङ्कारता। यः पुनरङ्गी रसो भावो वा सर्वाकारमलङ्कार्य्यः, ध्वनेरात्मेति।**

सर्वाकारमिति क्रियाविशेषणम्। सर्वथेत्यर्थः। अन्यत्स्पष्टम्॥

**इसलिये जहाँ व्यङ्ग्य रसादि अङ्ग ही हैं, अङ्गी तो वाच्य या व्यङ्ग्य वस्तु अलंकारादि ही हैं, वहां रसवदादि अलंकार समझना चाहिये। किन्तु जहां व्यङ्ग्य रसादि अङ्गी ही प्रतीत होते हैं, वहां सर्वथा वे अलंकार्य ही होते हुए ध्वनिके विषय समझे जाते हैं।**

गुणगुणिनोरिवालङ्कार्य्यालङ्कारयोरपि भेदो दुरपह्नव इत्यतोऽप्यङ्गिनो रसध्वने रसवदाद्यलङ्कारा भिन्ना एवेति परमतमयुक्तमिति रहस्यं सूचयन् विभागगर्भगुणालङ्कारस्वरूपं प्रदर्शयति—

किञ्च—

**तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः॥**
**अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्॥ २६॥**

येऽङ्गिनं तमर्थं रसमवलम्बन्तेऽधितिष्ठन्ति, ते गुणाः स्मृताः। तु पुनर्येऽङ्गाश्रितारशब्दार्थवर्त्तिनः, ते कटककुण्डलादिवद् अलङ्कारा मन्तव्या इत्यन्वयः॥

**गुण-गुणीकी तरह अलंकार्यसे अलंकार भिन्न है, इस सिद्धान्त द्वारा अङ्गीभूत रसादि ध्वनिसे रसवदादि अलंकार भिन्न है, इस रहस्यको सूचित करनेके तात्पर्यसे विभाग पूर्वक गुण और अलंकारका स्वरूप बतलाते हैं—**किञ्चेति। **जो अङ्गीभूत उस रसको आश्रय कर रहते हैं, वे गुण कहे जाते हैं और जो अङ्गभूत शब्दार्थोंको आश्रय कर रहते हैं, वे कटक कुण्डलादिवत् अलंकार माने जाते हैं।**

तदाह वृत्तिकृत्—

**ये तमर्थं रसादिलक्षणमङ्गिनं सन्तमवलम्बन्ते, ते गुणाः शौर्यादिवत्। वाच्यवाचकलक्षणान्यङ्गानि ये पुनराश्रिताः, तेऽलङ्कारा मन्तव्याः कटकादिवत्।**

शूरतासौजन्यविद्यादयो गुणा यथा प्रधानात्मनि विद्यमानास्तं प्रगुणयन्ति, तथैव माधुर्यौजःप्रसादा रसस्था आत्मभूतं रसादिम्। यथा च वलयकेयूरादयः शरीरस्था अलङ्काराश्शरीरद्वाराऽऽत्मानं भूषयन्ति, तथैव च शब्दार्थनिष्ठा अनुप्रासोपमाऽऽदयश्शब्दार्थद्वारा रसादिम्। इत्थञ्च गुणालङ्कारयोरात्मभूताद्रसान्मिथश्च लोकवन्महान् भेदः। अतएव 'रसोत्कर्षप्रयोजकत्वविशिष्टरसमात्रवृत्तित्वं गुणत्वम्' 'रसोत्कर्षप्रयोजकत्वविशिष्टशब्दार्थान्यतरवृत्तित्वमलङ्कारत्वम्' इति तयोर्लक्षणे पर्यवस्यतः। लक्षणद्वयघटकरसपदं रसादिपरम्, रस्यत आस्वादयत इति रस इति व्युत्पत्तेः। अलङ्कारलक्षणविशेषस्त्वलङ्कारचन्द्रिकायां द्रष्टव्य इति सारम्॥

**वृत्तिकार उक्ताशयको विशद करते हैं—**ये तमर्थमिति। **जैसे शौर्य-सौजन्य-विद्या आदि गुण, शरीरके अन्दर प्रधानभूत आत्मामें रहते हुए उसीके उत्कर्षको बढ़ाते हैं, वैसे ही माधुर्य-ओज-प्रसाद आदि गुण रसादि स्वरूप प्रधान अङ्गीमें रहते हुए रसादिकी ही उत्कृष्टताको बढ़ाते हैं, और जैसे केयूरवलय आदि आभूषण शरीरमें रहता हुआ उसी ( शरीर ) के द्वारा आत्माको भूषित करता है, वैसे ही क्रमशः शब्दार्थ-वृत्ति अनुप्रास-उपमादि अलंकार शब्दार्थ रूप अङ्गोंके द्वारा ही रसादिको सुशोभित करता है।**

गुणानां रसमात्रवृत्तित्वेऽपि शब्दार्थवृत्तित्वप्रसिद्धिं कथञ्चिदुपपादयति—

तथाच—

**शृङ्गार एव मधुरः परः प्रह्लादनो रसः ॥**
**तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति ॥ ३० ॥**

यतः परः प्रह्लादनो मधुरो रसश्शृङ्गार एव अतो माधुर्य्यं गुणस्तन्मयं शृङ्गार प्रधानं, काव्यं शब्दार्थावाश्रित्य व्यङ्ग्यव्यञ्जकभावेनाधिष्ठाय प्रतितिष्ठतीत्यन्वयः।

रतेरापामरमाकीटञ्च प्रमोदातिशयमयत्वप्रसिद्धेस्तत्सारस्य शृङ्गारस्य सुतरां तत्त्वमिति माधुर्यनामा गुणो यद्यपि साक्षात्तत्रैव तिष्ठति, तथाऽपि शृङ्गारव्यञ्जकशब्दार्थयोरप्युपचारेण प्रतिष्ठितो भवतीति व्यञ्जकत्वेन गुणवत्ता शब्दार्थयोर्वर्तत एव—

'गुणवृत्त्या पुनस्तेषां वृत्तिश्शब्दार्थयोर्मता' इतिमम्मटानुशासनात्, तथैव तृतीयोद्द्योतेऽपि व्यवस्थापयिष्यमाणत्वाच्च।

नचाग्रेसरेण 'करुणे च प्रकर्षवत्' इति करुणरसेऽपि माधुर्यगुणप्रकर्षबोधकग्रन्थेन शृङ्गारभिन्नरसेषु माधुर्यव्यावृत्तिं बोधयत एवकारस्य सत्त्वाद् 'शृङ्गार एव मधुरः' इत्यस्य विरोध इति वाच्यम्, कार्यात्मनि शृङ्गार एव माधुर्य्यं नतु शब्दार्थयोरिति शब्दार्थवृत्तित्वव्यावृत्तावेवैवकारस्य तात्पर्यपर्यवसानात्।

नचैवं माधुर्य्यादेश्शब्दार्थवृत्तित्वप्रसिद्धेरनुपपत्तिः, उपचारस्य तदुपपादकस्य जागरूकत्वात् ॥

**गुणोंके रसादिमात्रवृत्ति होने पर भी परम्परा सम्बन्धसे उपचार द्वारा शब्दार्थवृत्तित्वका प्रतिपादन करते हैं—**तथा चेति। **यद्यपि अत्यन्त आह्लाद जनक शृंगार रस ही साक्षात् माधुर्यगुणविशिष्ट प्रतीत हो रहा है, तथापि शृङ्गार प्रधान शब्दार्थमय काव्य भी स्वाश्रयाभिव्यञ्जकत्वरूप परम्परा सम्बन्धसे माधुर्य गुणवान् व्यवहृत होता है।**

तदभिप्रेत्याह वृत्तिकृत्—

**शृङ्गार एव रसान्तरापेक्षया मधुरः प्रह्लादहेतुत्वात् प्रकाशनपरः।**
**शब्दार्थतया काव्यस्य स माधुर्यलक्षणो गुणः।**

प्रकाशनं चित्तस्य निर्गलितत्वरूपा द्रुतिः इतरद् व्यक्तम् ॥

**वृत्तिकार उक्ताशयको व्यक्त करते हैं—**शृङ्गारेति। **अन्य रसोंकी अपेक्षा शृङ्गार रस ही आकीट पामर पर्यन्त सभी प्राणियोंमें आनन्दातिशय जननद्वारा चित्तको**

झटिति द्रवित करनेवाला साक्षात् माधुर्य-गुणशाली, प्रतीत होता है। श्रृंगारके अभिव्यञ्जक शब्दार्थमय काव्यमें तो उपचारसे ही माधुर्य गुणका व्यवहार होता है।

नन्वेतावता माधुर्यातिरिक्तगुणयोरश्रव्यत्वमापततीत्यत आह—

**श्रव्यत्वं पुनरोजसोऽपि साधारणमिति ।**

द्रुतिजनकत्वं माधुर्य्य एव, श्रव्यत्वं सुशब्दतया श्रवणेच्छाविषयीभूतत्वं श्रवणानुद्वेजकत्वं दीर्घसमासाभावो वा, पुनः ओजसः—

'दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति' इति मम्मटलक्षितस्य दीप्तिजनकत्वरूपस्य गुणविशेषस्यापि साधारणं तद्वृत्त्यपि । इतरथा गुणत्वापायसम्भवात् ।

इदमुक्तम्भवति—'यो यश्शस्त्रं बिभर्ति' इत्यादिवक्ष्यमाणौजोगुणोदाहरणेऽपि श्रव्यत्वमस्त्येव । अतो माधुर्यलक्षणे परव्यावर्तकत्वेन तत्प्रवेशो नोचितः । तेन—

'श्रव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते' इत्यस्य माधुर्य्यलक्षणत्वं भामहाभिमतमपास्तम् । ओजःपदञ्च प्रसादस्याप्युपलक्षकम् ॥

**यद्यपि चित्तद्रुति-जनकत्व, माधुर्य गुणमात्रमें ही प्रतीत होता है, तथापि ओज प्रसाद गुण भी साधारणतया कर्णसुखद प्रतीत होनेसे श्रव्यत्व धर्मयुक्त होनेके कारण विदग्ध रसिकोंका उपादेय होता है, अन्यथा उनमें गुणत्वका ही अपाय हो जायगा।**

गुणानां शब्दार्थयोरौपचारिकीं वृत्तिं भङ्ग्या स्थापयति—

**शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् ॥**
**माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः ॥ ३१ ॥**

यतो विप्रलम्भशृङ्गारे, ततोऽपि करुणे, मनः, अधिकमुत्तरोत्तरम्, आर्द्रतां द्रुतिद्वेषादिजन्यकाठिन्यशून्यतामिति यावत्, याति प्राप्नोति, तस्मात्तत्र क्रमशो माधुर्यम्—

'आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम्' इति प्रकाशोक्तलक्षणं ( गुणः ) प्रकर्षवद् चिच्छित्तिविशेषकृदित्यर्थः ।

इत्थंच व्यङ्ग्यत्वेन व्यञ्जकयोश्शब्दार्थयोरपि गुणास्तिष्ठन्त्येवेति निष्पन्नम् ॥

**गुणोंको दूसरे ढङ्गसे परम्परया शब्दार्थमें स्थापित करते हैं—शृङ्गारेति। क्योंकि विप्रलम्भ शृङ्गाररसमें और उत्तरोत्तर उससे भी अधिक करुण रसमें चित्त, कठोरता रहित होकर झटिति द्रवित हो जाता है, इसलिये उनमें माधुर्यगुण, विच्छित्ति विशेषके उत्पादक होनेसे अधिक व्यक्त रूपमें प्रतीत होता है, और तद्व्यञ्जक शब्दार्थमें भी परम्परया माधुर्यादि गुण रहता है।**

तदेवाह—

**विप्रलम्भशृङ्गारकरुणयोस्तु माधुर्यमेव प्रकर्षवत्, सहृदयहृदयावर्जनातिशयनिमित्तत्वादिति।**

रसवृत्तित्वेनैव गुणानान्तत्त्वम्। प्रकाशे तु—

'करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम्' इति ताभ्यामपि शान्तेरसे माधुर्यप्रकर्षउक्तः।

सहृदयोंके चित्तोंको बहुत शीघ्र पिघलानेके कारण विप्रलम्भ शृङ्गार और करुणमें अतिशय चमत्कार जनक माधुर्य गुण प्रतीत होता है, काव्य-प्रकाशकारने तो इन दोनोंकी भी अपेक्षा शान्त रसमें ही अतिशय माधुर्य गुण माना है।

गुणप्रसङ्गादाह—

**रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः॥**
**तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम्॥ ३२॥**

काव्यवर्त्तिनश्शब्दार्थव्यङ्ग्याः, रौद्रादयो रौद्रवीराद्भुताख्या रसा दीप्त्या चेतस्समुज्ज्वलत्वेन लक्ष्यन्ते प्रतीयन्ते। तस्मात्तद्व्यक्तिहेतू दीप्ते रौद्रादीनां वा व्यञ्जननिमित्तभूतौ शब्दार्थौ आश्रित्य व्यङ्ग्यव्यञ्जकभावेनावलम्ब्य, ओजो (गुणः) व्यवस्थितमित्यर्थः॥

गुणोंके प्रसङ्गसे ओज गुणका वर्णन करते हैं—रौद्रेति। रौद्र-वीर और अद्भुत रस, शब्दार्थमय काव्यमें व्यङ्ग्य होते हुए दीप्त्याख्य चित्तसमुज्ज्वलतासे अधिक चमत्कृत होते हैं, इसलिये उज्ज्वलता या रौद्रादिरसोंकी अभिव्यक्तिमें निमित्तभूत शब्दार्थको भी आश्रय करके ओज गुण व्यवस्थित होता है।

सारं निर्दिशति वृत्तिकारः—

**रौद्रादयो हि रसाः परां दीप्तिमुज्ज्वलतां जनयन्तीति लक्षणया त एव दीप्तिरित्युच्यते।**

दीप्तिर्नाम ज्वलितत्वमिव चित्तस्य विस्तारात्मा वृत्तिविशेषः, तज्जनको गुण ओजस्तत्र दीप्तिपदम् 'आयुर्घृतम्' इतिवत् तत्कारणत्वाल्लाक्षणिकम्। दीप्त्याश्रया रौद्रादयो रसाः, तेष्वपि 'गृहा दारा' इतिवत् तात्स्थ्याल्लाक्षणिकमेव। एवकारस्त्वप्यर्थकः।

उज्ज्वलताख्य दीप्ति नामक चित्तविस्तारात्मक वृत्तिविशेषका जनक ओज गुणवान् रौद्रादि रस ही 'गृहा दारा इतिवत्' उपचारद्वारा दीप्ति पदसे व्यवहृत होता है।

तद्व्यञ्जकं शब्दमुपदिशति—

**तत्प्रकाशनपरः शब्दो दीर्घसमासरचनाऽलङ्कृतं वाक्यम् ।**

तदोजोगुणं दीर्घसमासया रचनयाऽलङ्कृतं वाक्यं व्यनक्तीति निष्कर्षः । समासदैर्घ्यमर्थौद्धत्यादेरुपलक्षणम् ॥

**उस ओज गुणको बहुत बड़ा समासात्मक संघटित वाक्य व्यक्त करता है ।**

तादृशं शब्दमुदाहरति । भीमसेनो याज्ञसेनीं क्रुद्धोऽभिधत्ते—

**'चञ्चद्भुजभ्रमितचण्डगदाऽभिघातसञ्चूर्णितोरुयुगलस्य सुयोधनस्य ॥**
**स्त्यानावबद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि! भीमः ॥'**

चञ्चता वेगवशादावर्तमानेन भुजेन भ्रमिता घूर्णिता चण्डा भीषणा या गदा, तस्या अभिघातेन सम्यक् चूर्णितं संक्षुण्णमूरुयुगलं जङ्घाद्वयं यस्य, तस्य सुयोधनस्य दुर्योधनस्य, स्त्यानं स्निग्धमवबद्धं संलग्नं, यद्घनं सान्द्रं, शोणितं रुधिरं, तेन शोणो रक्तः पाणिः करो यस्य, स भीमः ( शत्रुभीषणोऽहम् ) हे देवि ! तव कचान् वेणीकृतकेशान् , उत्तंसयिष्यति शेखरविशिष्टान् करिष्यतीत्यर्थः ।

तथा च 'स्त्यानं स्निग्धे' इति मेदिनी । 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे' इत्यमरश्च । इह 'भीमः' इत्यर्थान्तरसङ्क्रमितवाच्यध्वनिसङ्कीर्णो देवीतिसम्बोधनबोधितराजावरोधविरुद्धविविधधर्षणापराधस्मरणोद्दीपितक्रोधप्रधानरौद्ररसध्वनिः । तद्व्यञ्जकं तु दीर्घसमासादिविशिष्टवाक्यम् । वसन्ततिलकं छन्दः ॥

**ओज गुण द्योतक दीर्घ समासका उदाहरण बतलाते हैं—चञ्चदिति । भीमसेन क्रुद्ध होकर द्रौपदीसे कहता है—हे देवि ! घूमते हुए भुजदण्डसे घूर्णित प्रचण्ड गदाके अभिघातसे चूर्ण २ होकर विदीर्ण जंघावाले दुर्योधनके चिक्कण एवं संलग्न गाढ रुधिरों द्वारा रञ्जितहाथोंसे भीम तुम्हारे बालोंको सजायगा । यहाँ पूर्वोत्तरार्द्ध वाक्योंमें दीर्घतर ऊर्जस्वल शब्दसंघटित समासोंसे स्पष्ट ही ओज गुण व्यक्त होता है ।**

प्राप्तावसरं रौद्रादिव्यञ्जकमर्थमुपदिशति—

**तत्प्रकाशनपरश्चार्थोऽनपेक्षितदीर्घसमासरचनःप्रसन्नवाचकाभिधेयः ।**

न केवलं तादृशः शब्द एव, किन्तु अनपेक्षिता दीर्घसमासरचना यत्र, तादृशस्य, प्रसन्नस्य प्रसादगुणव्यञ्जकस्य, वाचकस्य, अभिधेयोऽर्थश्चापि, तस्यौजसो दीप्तेर्वा व्यञ्जक इत्यर्थः ॥

दीर्घ समासरचनाकी अपेक्षा रहित एवं प्रसाद गुण बोधक शब्दसे प्रतिपाद्य उद्धत अर्थ भी ओज गुण या रौद्रादिकी दीप्तिको व्यक्त करता है।

उदाहरति—

यथा—

क्रुद्धोऽश्वत्थामा वक्ति—

'यो यश्शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां,
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा॥
यो यस्तत्कर्मसाक्षी, चलति मयि रणे यश्च यश्च प्रतीपः,
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम्॥'

पाण्डवसम्बन्धिनीनां चमूनां सेनानां मध्ये, स्वभुजयोः (बलस्य) गुरुर्मदोऽभिमानो यस्य तादृशो यो यः शस्त्रं बिभर्त्ति धारयति। (तथा) पाञ्चालगोत्रे द्रुपदवंशे, यो यः शिशुः स्तनन्धयः, अधिकवयाः स्थविरश्च, गर्भशय्यां गर्भावस्थां गतः प्राप्तो वाऽस्ति। (तथा) यो यस्तस्य मृतद्रोणशिरश्चरणाभिमर्शलक्षणस्याप्राच्यनाम्नः कर्मणः, साक्षी द्रष्टा चास्ति। (तथा) मयि रणे चलति सति, यश्च यश्च प्रतीपः प्रतिकूलो भवति। तस्य तस्य, स्वयं जगतामन्तकस्यापि (का कथाऽन्येषाम्?) क्रोधेनान्धोऽहम् अन्तको नाशको भवामीत्यर्थः।

अत्रोद्धतस्यार्थस्य दीर्घसमासवाक्यवाच्यत्वाभावेऽप्योजोगुणव्यञ्जकत्वम्। स्रग्धराच्छन्दः॥

ओज गुण द्योतक उद्धत अर्थका उदाहरण बतलाते हैं—यथेति। क्रुद्ध होकर अश्वत्थामा कहता है—पाण्डवोंकी सेनाओंमें जो भी कोई अपने बाहुबलका घमण्ड करनेवाला शस्त्रधारण करता है, तथा द्रुपदवंशमें जो जो बाल बुड्ढे नौजवान या गर्भके बच्चे भी विद्यमान हैं, और जो जो मेरे पिता (द्रोण) के घृणित हत्याकाण्डके दर्शक हैं, या संग्रामार्थ मुझे उद्यत होनेपर जो जो मेरे प्रतिपक्षी होकर उपस्थित होते हैं, उन २ को एवं जगतके अन्तक स्वयं यमराजको भी क्रोधसे नष्ट करने वाला मैं तैयार हूं, यहाँ दीर्घ समासके नहीं रहनेपर भी उक्त उद्धत अर्थ ही ओज गुणका व्यञ्जक है।

तदाह—

इत्यादौ द्वयोरोजस्त्वम्।

पूर्वश्लोके समासदैर्घ्याच्छब्दस्य, इहत्वौद्धत्यादर्थस्य व्यञ्जकत्वेनौजोगुणविशिष्टत्वमित्यर्थः॥

पूर्व श्लोकमें दीर्घ समास होनेसे व्यञ्जक समस्त शब्द ही ओज गुणविशिष्ट है, और उत्तरश्लोकमें उद्धत अर्थ ही व्यञ्जक होनेसे ओज गुणविशिष्ट प्रतीत होता है।

प्रसङ्गात्प्रसादं निरूपयति—

समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति ॥
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ॥ ३३ ॥

काव्यस्य सर्वरसान् प्रति तु यत् समर्पकत्वं सकलरसव्यञ्जकत्वम्, स सर्वसाधारणी सर्वरसानुकूला क्रिया वृत्तिर्यस्य, तादृशः प्रसादो गुणो ज्ञेय इत्यन्वयः॥

सकल रसोंके प्रति काव्यमें जो स्फुटता (सरलता) पूर्वक अखिल रस व्यञ्जकता है, उसीको सर्व रसानुकूल वृत्तिवाला प्रसाद गुण समझना चाहिये।

विवृणोति—

प्रसादस्तु स्वच्छता शब्दार्थयोः। स च सर्वरससाधारणो गुणः सर्वरचनासाधारणश्चेति व्यङ्ग्यार्थापेक्षयैव मुख्यतया व्यवस्थितो मन्तव्यः।

इतिर्हेतौ। एवकारोऽप्यर्थकः। शब्दस्य स्वच्छता झटित्यर्थोपस्थापकता अर्थस्य तु झटित्युपस्थितिविषयता, ताभ्यां श्रोतुश्चित्तस्य सुतरां प्रसादनात्प्रसाद इत्यन्वर्था सञ्ज्ञा। अस्य च माधुर्यवदोजोवच्च न रसानां न च शब्दानामर्थानां वा प्रतिनियमोऽस्तीति सर्वसाधारणोऽयं प्रसादो गुणः। अतएवायं व्यङ्ग्यानां रसानामपेक्षयाऽपि प्राधान्येन व्यवस्थितो बोध्य इत्यर्थः।

गुणानां रसापेक्षयाऽपि मुख्यत्वमिति भट्टभामहमतेनेदमुच्यते। अर्वाञ्चस्तु—

'ये रसस्याङ्गिनो धर्माश्शौर्यादय इवात्मनः॥
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥'

इति लक्षयित्वा गुणानां रसवृत्तित्वेपि तदुपकारकत्वेनाङ्गत्वमेव न प्राधान्यमित्यातिष्ठन्ते॥

वृत्तिकार उसीको विशद करते हैं—प्रसाद इति। शब्दार्थोंकी स्वच्छता (स्फुटता) को ही प्रसाद गुण कहते हैं। यह प्रसाद गुण किसी रस, शब्द, या अर्थ विशेषकी—'माधुर्य-ओजवत्' अपेक्षा नहीं करके सभी रस या रचनाओंमें साधारणतया रहता है, इसलिये व्यङ्ग्य रसादिकी अपेक्षाभी प्रधान रूपसे यह समझा जाता है।

इत्थं गुणालङ्कारयोर्विभक्तो व्यवहारो यथा प्रागुक्तोद्भट—प्रतिभटमते समुपपन्नः, तथा दोषाणां नित्यानित्यत्वयोर्विभक्तो व्यवहारोऽपि तन्मत एवोपपद्यत इत्युद्भटमतमत्रादेयमित्याह—

**श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः ॥**
**ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः ॥ ३४ ॥**

श्रुतिदुष्टादय इति भावप्रधानो निर्देशः, दोषाणां धर्मरूपत्वात्। वृत्तिग्रन्थ—लोचनव्याख्ययोर्दर्शनेन 'दर्शिताः' इत्यत्र 'सूचिताः' इति पाठः साधीयान् प्रतिभाति।

श्रुतिदुष्टत्वप्रभृतयो येऽनित्या दोषाः सूचिता न तु विभज्य दर्शिताः, ते ध्वन्यात्मनि प्राधान्येन व्यङ्ग्ये शृङ्गारे रस एव नतु रौद्रादौ हेयाः परित्याज्या इति, उदाहृता अभियुक्तैरुक्ता इत्यर्थः ॥

श्रुतिदुष्टत्व प्रभृति जिन अनित्य दोषोंको सूचित किया है, उनको प्रधान रूपसे व्यङ्ग्य शृंगार रसात्मक ध्वनि काव्यमें ही त्याज्य समझना चाहिये। रौद्रादि रसोंमें तो वे दोष, दोषरूपमें नहीं गिने जानेसे त्याज्य नहीं होते, ऐसा अभियुक्तोंने कहा है।

विवृणोति—

**अनित्या दोषाश्च ये श्रुतिदुष्टादयः सूचिताः, तेऽपि न वाच्येऽर्थमात्रे न च व्यङ्ग्ये शृङ्गारव्यतिरेकिणि वा ध्वनेरनात्मभावे, किन्तर्हि, ध्वन्यात्मन्येव शृङ्गारेऽङ्गितया व्यङ्ग्ये ते हेया इत्युदाहृताः।**

श्रुतिदुष्टत्वं श्रवणोद्वेजकताऽवच्छेदकवर्णवत्त्वम्। आदिपदेन लोचनोक्तार्थदुष्टत्वादीनां सङ्ग्रहः। अनित्यत्वं तेषां काचित्कतया। वाच्यमात्रप्रतीतौ शृङ्गारस्य व्यङ्ग्यस्याङ्गत्वेन प्रतीतौ शृङ्गारातिरिक्तरसानां व्यङ्ग्यानामङ्गित्वेन प्रतीतौ च तेषामदुष्टत्वम्, केवलं शृंगारध्वनावेव दुष्टत्वमिति स्वरसः। आचार्यास्तु शृङ्गारवच्छान्ताद्भुतवीरध्वनावपि तेषां दुष्टत्वमेवाहुः।

वृत्तिकार उक्त कारिकार्थको स्फुट करते हैं—अनित्या इति। श्रुतिदुष्टत्वादि जिन दोषोंको अनित्य बतालाया है, वे भी वाच्यार्थमात्रमें या शृंगार-व्यतिरिक्त व्यङ्ग्यमें या ध्वनिभिन्नगुणीभूत व्यङ्ग्यात्मक शृंगारमें भी परित्याज्य नहीं होते, अपितु प्रधानरूपसे ध्वनिभूत शृङ्गारात्मक व्यङ्ग्य रसमें ही हेय होते हैं, अर्थात् शृङ्गार ध्वनिमें ही ये दोष त्याज्य होते हैं, अन्यत्र नहीं।

तेषां काचित्कताऽनभ्युपगमे दोषमाह—

**अन्यथा हि तेषामनित्यदोषतैव न स्यात्।**

त एवानित्यदोषाः, ये क्वचिद् दोषा भवन्ति, क्वचिन्नैव, यदि श्रुतिकटुत्वादीनां तथात्वं न स्यात्, तदाऽनित्यदोषताऽपि न स्यादिति भावः। एतत्सर्वं रसादीनामङ्गित्वे ध्वनित्वमङ्गीकुर्वतामेव मत उपपन्नमिति द्रष्टव्यम्।

यदि इनकी क्वाचित्कता नहीं मानी जाय, तो इनकी अनित्यता ही नहीं होगी, क्योंकि वे ही अनित्य दोष गिने जाते हैं, जो कहीं दोष रूपमें माने जाते हों और कहीं दोष रूपमें नहीं माने जाते हों।

उपसंहरति—

**एवमसंलक्ष्यक्रमोद्द्योतो ध्वनेरात्मा प्रदर्शितः सामान्येन ।**

एवमुक्तप्रकारेण, ध्वनेः, असंलक्ष्यक्रमोद्द्योतः आत्मा स्वरूपम्, सामान्येन विशेषेण, प्रदर्शितो वर्णित इत्यर्थः ।

इस तरह असंलक्ष्यक्रमव्यङ्ग्य ध्वनिका स्वरूप सामान्यरूपसे दर्शाया गया।

तेषां विशेषेणानुक्तेर्हेतुमाह—

**तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये ॥**
**तेषामानन्त्यमन्योन्यसम्बन्धपरिकल्पने ॥ ३५ ॥**

तस्याङ्गिनो रसादेः, अङ्गानामुपकारकाणामलङ्कारादीनां, ये प्रभेदा उपमाऽऽदयः, च तथा स्वगताः स्वीया ये प्रभेदा रसभावादयः सम्भोगविप्रलम्भादयश्च, तेषामन्योऽन्यं मिथः, सम्बन्धपरिकल्पने सङ्करसंसृष्टिसम्पादने कृते सति, आनन्त्यमनवधित्वं विद्यत इति ते विशेषेण न प्रदर्शिता इत्यभिप्रायः ॥

उसको विशेषरूपसे नहीं बतलानेमें युक्ति देते हैं—तस्येति। उस अङ्गीभूत रसादिके उपकारक अलंकारादियोंके जो उपमादि प्रभेद हैं, और जो स्वगत रसभावादि तथा संभोग-विप्रलम्भादि प्रभेद हैं—उन सबके परस्पर संकर संसृष्टिके प्रतिपादन करने पर अनन्त संख्या हो जायगी, इसलिये विशेषरूपसे उसका वर्णन नहीं किया गया है।

तदाह वृत्तिकारः—

**अङ्गितया व्यङ्ग्यो रसादिर्विवक्षितान्यपरवाच्यस्य ध्वनेरेक आत्मा य उक्तः, तस्याङ्गानां वाच्यवाचकानुपातिनामलङ्काराणां ये प्रभेदा निरवधयो, ये च स्वगतास्तस्याङ्गिनोऽर्थस्य रसभावतदाभासतत्प्रशमलक्षणा विभावानुभावव्यभिचारिप्रतिपादनसहिता अनन्ताः स्वाश्रयापेक्षया निस्सीमानो विशेषाः, तेषामन्योऽन्यसम्बन्धपरिकल्पने क्रियमाणे, कस्यचिदन्यतमस्यापि रसस्य प्रकाराः परिसङ्ख्यातुं न शक्यन्ते, किमुत सर्वेषाम् ।**

तत्प्रशमपदं तदुदयादीनामप्युपलक्षणम् । रसानां मध्य एकस्यापि परे रसभा-

वादिभिर्विभावादिभिरलङ्कारप्रकारैश्च प्रचुरैः सङ्करे संसृष्टौ च प्रकारा असङ्ख्येया एवेति तत्त्वम् ।

विवक्षितान्यपरवाच्य ध्वनिका प्रधानरूपसे जो व्यङ्ग्यरसादिरूप एक प्रकार बतलाया है, उसके उपकारक वाच्यगत उपमादि और वाचकगत अनुप्रासादि अलंकारों के जो निःसीम प्रभेद हैं, और अङ्गीभूत उस व्यङ्ग्यरसादिके जो विभाव, अनुभाव, संचारिभावोंके प्रतिपादन सहित स्वगत रस–भाव–तदाभास–तत्प्रशम–तदुदयादि स्वरूपोंके, अनन्त प्रभेद हैं, उन सबके परस्पर संकर और संसृष्टिके संकलन करने पर उनमें भी किसी एक के भी दूसरे रसभावादि एवं विभावादि तथा अलंकारोंके प्रचुर प्रकारोंसे संकर और संसृष्टिके प्रतिपादन करनेपर अपरिगणित प्रकार हो जाते हैं, जिनकी गणना भी नहीं की जा सकती, सबकी तो बात ही दूर रही ।

तदेव प्रकारानन्त्यमुपपादयति—

**तथा हि—शृङ्गारस्यैवाङ्गिनस्तावदाद्यौ द्वौ भेदौ, सम्भोगो विप्रलम्भश्च । सम्भोगस्य च परस्परप्रेमदर्शनसुरतविहरणादिलक्षणाः प्रकाराः । विप्रलम्भस्याप्यभिलाषेर्ष्याविरहप्रवासविप्रलम्भादयः । तेषां च प्रत्येकं विभावानुभावव्यभिचारिभेदाः । तेषां च देशकालाद्याश्रयावस्थाभेदा इति स्वगतभेदापेक्षयैव तस्यापरिमेयत्वम्, किंपुनरङ्गप्रभेदकल्पनया । ते हि प्रभेदाः प्रत्येकमङ्गिप्रभेदसम्बन्धपरिकल्पने क्रियमाणे सत्यानन्त्यमेवोपयान्ति ।**

प्रेम्णा दर्शनं प्रेमदर्शनम्, सुरतं चातुष्षष्टिकमालिङ्गनादि, विहरणमुद्यानसञ्चरणम् । अभिलाषः केवलः पूर्वरागः । ईर्ष्या मानमूलभूताऽक्षमा । विरह एकदेशस्थयोरप्येकतरानुरागगुरुजनलज्जापारवश्यदैवप्रतिबन्धकार्यान्तरादिहेतुकोऽसंयोगः । प्रवासो विदेशस्थितिः । प्रथमादिपदग्राह्या आलापजलक्रीडापानकप्रभृतयः । द्वितीयादिपदग्राह्यः करुणविप्रलम्भः । तदुक्तं दर्पणे—

'यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।

विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः ।' इति ।

केचित्तु शापहेतुकमपि विप्रलम्भं मन्यन्ते ।

यद्येकः शृङ्गाररसश्शुद्धस्वीयप्रकारैरेवैतावद्भिः सम्बद्धो विशेषेण परिसङ्ख्यातुं न शक्यते, तर्हि का कथा परैः सम्बद्धस्य तस्य, परेषां वा रसानामिति समासेनैव गणना विहितेति सारम् ।

उन्हीं अनन्त प्रकारोंका प्रतिपादन करते हैं—तथाहि इति । उनमें शृंगाररूप अङ्गीभूत रसके ही तावत् 'संभोग और विप्रलम्भ' ये प्रथम दो भेद हैं, संभोगके

परस्पर प्रेम दर्शन, ६४ प्रकारका आलिङ्गनादि सुरत और उद्यान विहरणादि रूप अनेक प्रभेद हैं। विप्रलम्भके भी अभिलाषाख्य पूर्वराग-ईर्ष्या-विरह-करुणविप्रलम्भादि प्रभेद हैं। उनमें भी प्रत्येकके विभाव-अनुभाव-संचारिभावाख्य प्रभेद हैं। उनके भी देशकालादि आश्रय अवस्थात्मक प्रभेद हैं। इस तरह स्वगत प्रभेदोंकी अपेक्षासे ही उसकी अपरिमेय संख्या हो जाती है, अङ्गोंके प्रभेद कल्पनाकी तो बात दूर ही रही। उन सब प्रभेदोंके प्रत्येक अङ्गी रसादिके प्रभेदोंके साथ संकर और संसृष्टिकी कल्पना करनेपर आनन्त्य हो जाता है, अर्थात् जब एक शृंगाररस का भी स्वकीय शुद्ध उक्त प्रकारोंसे सम्बन्ध करनेपर विशेष रूपसे परिगणन नहीं कर सकते, तब उसका दूसरोंसे सम्बद्ध होने पर या अन्य रसोंका परिगणन करना तो सर्वथा असंभावित है, इसलिये संक्षेपसे ही वर्णन किया है।

तदेवाह कारिकाकारः—

दिङ्मात्रं तूच्यते येन व्युत्पन्नानां सचेतसाम् ॥
बुद्धिरासादितालोका सर्वत्रैव भविष्यति ॥ ३६ ॥

इत्थं रसादिध्वनेर्भेदानामसङ्ख्यत्वे, तु पुनः, दिङ्मात्रम् उच्यते, अनया रीत्याऽसंलक्ष्यक्रमध्वनिर्भेदा ज्ञेयाः, इति दिशा प्रदर्शनं मार्गप्रदर्शनमिति यावत्। केवलं क्रियते। येन दिग्दर्शनमात्रेण व्युत्पन्नानां विशेषज्ञानां सचेतसां बुद्धिः सर्वत्रैव रसादिध्वनेरनिर्दिष्टेष्वपि प्रकारेषु, आसादितालोका प्राप्तप्रकाशा भविष्यतीत्यर्थः।

व्यासेन वक्तुमशक्यत्वे वा, सप्रतिभानां दिग्दर्शनादपि सकलतत्त्वावगमः सम्पत्तुमर्हतीति समासेनैवासंलक्ष्यक्रमध्वनिरुच्यत इत्याकूतम्।

उक्त बातको ही मूलकार बतलाते हैं—दिङ्मात्रेति। उक्तरीतिसे रसादिध्वनिके अनन्त भेदोंके होनेसे असंलक्ष्य-क्रम-व्यङ्ग्य-ध्वनिभेदोंका मार्ग प्रदर्शन मात्र किया जारहा है, जिससे विशेषज्ञ सहृदयोंकी बुद्धि रसादिध्वनिके अनिर्दिष्ट प्रकारोंमें भी प्रकाश प्राप्त कर लेगी, अर्थात् वृहद् रूपसे नहीं प्रतिपादन करनेपर भी प्रतिभाशाली व्यक्तियोंको दिग्दर्शनमात्रसे भी सभी तत्त्वोंका अवगम हो सकता है, इसलिये संक्षेपरूपसे ही असंलक्ष्य क्रम व्यङ्ग्य ध्वनिका वर्णन किया जाता है।

तदेवाचष्टे—

दिङ्मात्रकथनेन हि व्युत्पन्नानां सहृदयानामेकत्रापि रसभेदे कर्तव्येऽलङ्कारेऽङ्गाङ्गिभावपरिज्ञानादासादितालोका बुद्धिः सर्वत्रैव भविष्यति।

करणं विभज्यान्वाख्यानम्। अन्यद् व्यक्तम्।

वृत्तिकार उसीको संक्षिप्त करते हैं—दिङ्मात्रेति। दिग्दर्शन मात्रसे ही सरस चतुर विशेषज्ञोंको किसी एक रसके भी विशेषरूपसे अलंकारोंके साथ अङ्गाङ्गिभावका सम्यग् ज्ञान हो जानेसे सभी रसादिके प्रकारोंका जानना सरल हो जायगा।

दिशमेव दर्शयति—

तत्र।

दिङ्मात्रदर्शने कार्य्ये पूर्वमियदवगमनमावश्यकमिति शेषः।

**शृङ्गारस्याङ्गिनो यत्नादेकरूपानुबन्धनात् ॥**
**सर्वेष्वेव प्रभेदेषु नानुप्रासः प्रकाशकः ॥ ३७ ॥**

अङ्गिनः शृङ्गारस्य सर्वेष्वेव प्रभेदेषु, यत्नाद्यत्नतः क्रियमाणाद्, एकरूपस्य समानाकारस्य, अनुबन्धनात्सम्पादनाद्धेतोः, अनुप्रासः—'अनुप्रासः वर्णसाम्यं वैषम्येऽपि स्वरस्य यत्' इति लक्षितोऽर्थानुसन्धानविधुरः शब्दालङ्कारः न प्रकाशको नैव व्यञ्जक इत्यर्थः ॥

दिग्दर्शन मात्र कराते हैं—तत्रेति। दिग्दर्शन मात्र करते समय विशेषज्ञोंको निम्न बातों पर विशेष ध्यान देना चाहिये। प्रधान रूपसे प्रतीयमान शृङ्गाररसके साङ्गोपाङ्ग सभी प्रभेदोंमें अनुप्रास अलंकारकी विशेषयत्नसे समानरूपताके सम्पादन करनेकी ओर कविके ध्यान आकृष्ट हो जानेके कारण, उन (शृङ्गार भेदों) के प्रति उस (अनुप्रास) में व्यञ्जकता नहीं है।

विवृणोति—

**अङ्गिनो हि शृङ्गारस्य ये उक्ताः प्रभेदाः, तेषु सर्वेष्वेकप्रकारानुबन्धितया प्रबन्धेन प्रवृत्तोऽनुप्रासो न व्यञ्जकः।**

अयंभावः—शृङ्गारध्वनिं सुकुमारतरं त एवालङ्कारा उपस्कुर्वन्ति, येषां निबन्धने पृथग्यत्नो नापेक्ष्यते। अनुप्रासनिबन्धे तु समानस्वरूपकशब्दानुसरणात्मा यत्नोऽपरिहेय इति नायं तदलङ्करणक्षमः ॥

वृत्तिकार उक्ताशयको विशेष रूपसे स्फुट करते हैं—अङ्गिन इति। अङ्गीभूत अत्यन्त सुकुमार शृङ्गार ध्वनिके प्रभेदोंको वे ही अलंकार उपस्कृत (परिपुष्ट) करते हैं, जिनके विरचनमें विशेष प्रयास नहीं करना पड़ता। अनुप्रासके विरचनेमें तो समानरूप शब्दोंके अनुसन्धान करनेमें अधिक प्रयासका होना स्वाभाविक है, इसलिये शब्दोंके विन्यास करनेमें ही कविके सारे ध्यान आकृष्ट हो जानेसे यह अनुप्रास उस (शृङ्गार ध्वनि) को उपस्कृत करनेमें क्षम नहीं होता है।

'अङ्गिनः' इति निवेशस्य फलं प्रकटयति—

**अङ्गिन इत्यनेनाङ्गभूतस्य शृङ्गारस्यैकरूपानुबन्ध्यनुप्रासनिबन्धने कामचारमाह ।**

शृङ्गारस्य कारिकायामङ्गित्वेन विशेषणाद्ध्वनेरेवानुप्रासो न भासकः, तस्य गुणीभावे रसान्तरध्वनौ च कामचारः स्वाच्छन्द्यमित्यर्थः ॥

उक्त अङ्गीभूत शृङ्गार ध्वनिको ही अनुप्रास केवल उपरञ्जक नहीं होता, परन्तु रसान्तर ध्वनिके प्रति अङ्गभूत शृङ्गारमें तो समानरूपानुसारी अनुप्रास इच्छानुसार व्यञ्जक हो सकता है ।

तुल्यन्यायादाह—

**ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धनम् ॥**
**शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः ॥ ३८ ॥**

ध्वन्यात्मभूते शृङ्गारे शृङ्गारध्वनौ, तत्रापि विशेषतो विप्रलम्भे तद्ध्वनौ, यमकम्—

'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ॥ क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥'

इति दर्पणलक्षितमादिर्येषां ते तदादयः सभङ्गश्लेषचित्रभाषासमप्रभृतयः, तेषां निबन्धनं सन्निवेशनं कवेः शक्तौ प्रतिभायां सत्यामपि प्रमादित्वमनवधानं स्खलनमिति यावद्भवतीत्यर्थः ॥

उक्त तुल्ययुक्तिसे ध्वन्यात्मक शृंगारमें तथा उसमें भी विशेष कर विप्रलम्भात्मक शृंगारध्वनिमें यमक-सभङ्गश्लेषादिके प्रयोग करनेसे दोषोंको ढांकनेवाली प्रतिभा होने पर भी कविका स्खलन ( विशेष दोष ) समझा जाता है ।

तदाह—

**ध्वनेरात्मभूतः शृङ्गारस्तात्पर्येण वाच्यवाचकाभ्यां प्रकाश्यमानः, तस्मिन् यमकादीनां यमकप्रकाराणां निबन्धनं दुष्करशब्दभङ्गश्लेषादीनां शक्तावपि प्रमादित्वम् ।**

आदिशब्देन चित्रभाषासमप्रभृतीनां परिग्रहः । अन्यद् व्याख्यातमेव ॥

ध्वन्यात्मक प्रधानीभूत शृङ्गार, व्यञ्जना वृत्ति द्वारा वाच्य-वाचकोंसे व्यक्त होकर रमणीयताको प्राप्त करता है, उसको द्योतित करनेके लिये यमक-पद्मबन्ध-चित्रबन्ध-सभंगश्लेषादिके निवेश करनेसे दोषोंकी आच्छादक प्रतिभाके रहने पर भी कविका प्रमाद सूचित होता है ।

प्रमादित्वपदकृत्यमाह—

**'प्रमादित्वम्' इत्यनेनैतद्दर्श्यते—काकतालीयेन कदाचित्कस्यचिदेकस्य यमकादेर्निष्पत्तावपि, भूम्नाऽलङ्कारान्तरवद्रसाङ्गत्वेन निबन्धो न कर्तव्य इति ।**

काकतालीयेन काककृततालफलोपभोगवदकस्मात्, कदाचिन्नतु सर्वदा, कस्यचिदेकस्य यमकादेर्निष्पत्तौ सन्निवेशेऽपि, न क्षतिः, किन्त्वलङ्कारान्तरवद् रूपकादिरसोपकारकान्यालङ्कारवद् रसाङ्गत्वेन रसोपकाराभिप्रायेण, भूम्ना वाहुल्येत तस्य निवन्धो न कर्तव्य इत्यर्थः ।

काकतालीयपदसाधनमन्यत्रावलोकनीयम् । वाहुल्येन निवद्धो यमकादिः प्रधानीभूतश्‍ङ्गारं नोपकरोतीत्याशयः ॥

**प्रमादित्व कथनसे यह अभिप्राय सूचित होता है कि—काकतालीय न्यायसे कदाचित् कहीं किसी एक यमकादि अलंकारके निवेश करनेसे दोष नहीं होता, अपितु अन्य अलंकारोंकी तरह रसोपकारकतया इसका प्रचुरतर प्रयोग करना ही दोषाधायक होता है, अर्थात् अधिकतर प्रयुक्त ही यमकादि अलंकार, प्रधानीभूत श्‍ङ्गारका उपकारक नहीं होता ।**

कारिकाचतुर्थचरणकार्यमाह—

**'विप्रलम्भे विशेषतः' इत्यनेन विप्रलम्भे सौकुमार्यातिशयः ख्याप्यते । तस्मिन् द्योत्ये यमकादेरङ्गस्य निवन्धो नियमान्न कर्तव्य इति ।**

विप्रलम्भश्‍ङ्गारो हि सुकुमारतरस्तनीयांसमप्यन्यव्यासङ्गं न सहत इत्येकोऽपि यमकादिनिवन्धस्तद्ध्वनौ न कार्य इति भावः ।

**विप्रलम्भ श्‍ङ्गार, अत्यन्त सुकुमार होनेसे लेशमात्र भी अन्य व्यासङ्गको नहीं सहन करता, इसलिये उसके द्योतनार्थ यमकादि अलंकारका कभी भी प्रयोग नहीं करना चाहिये ।**

ननु कस्तर्हि श्‍ङ्गारादिध्वनावलङ्कारः ? इति पृच्छायामाह—

**अत्र युक्तिरभिधीयते ।**

रसादिध्वनावलङ्कारयोजनोपाय उच्यत इत्यर्थः ॥

**श्‍ङ्गारादि रसादि ध्वनिमें उपादेय अलंकारोंके योजनक्रमका निम्न उपाय वतलाते हैं ।**

**रसाक्षिप्ततया यस्य बन्धश्शक्यक्रियो भवेत् ॥**
**अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः ॥ ३६ ॥**

रसादिध्वनौ स एवालङ्कारो मत उपकारकः स्मृतः । योऽपृथग्यत्नेन निर्वर्त्यो नान्तरीयकतया रसबन्धानुकूलप्रयासेनैव निष्पाद्यो भवेत् । किञ्च यस्य बन्धसन्निवेशो रसाक्षिप्ततया रसैकतानतया शक्यक्रियः कर्तुं शक्यो भवेदित्यर्थः ॥

रसादि ध्वनिमें वही अलंकार उपकारक माना गया है, जो कि रसनिबन्धानुकूल प्रयाससे ही निष्पन्न होनेवाला हो, और जिसका सन्निवेश रसैकतानता (रसैकलीनता) से ही करने योग्य हो ।

तदाह—

निष्पत्तावाश्चर्यभूतोऽपि यस्यालङ्कारस्य रसाक्षिप्ततयैव बन्धः शक्यक्रियो भवेत्, सोऽस्मिन्नलक्ष्यक्रमव्यङ्ग्ये ध्वनावलङ्कारो मतः । तस्यैव रसाङ्गत्वं मुख्यमित्यर्थः ।

रसनिबन्धप्रवणधियाऽबुद्धिपूर्वकं कृतोऽलङ्कारबन्धः सम्पन्नोऽवधीरमानः 'कथमयं निष्पन्नः' इत्याश्चर्यमुद्भावयेद्यः, स एव रसादिध्वनावलङ्कारः, तस्यैव प्रधानं रसोपकारकत्वम्, नेतरेषाम् । अतएव संग्रहश्लोकेष्वनुपदं वक्ष्यति—'रसेऽङ्गत्वं तस्मादेषां न विद्यते' इति ।

रसबन्धानुकूलव्यापारेणैवानुषङ्गिकतयाऽकस्मान्निष्पन्नानामेव मुख्यमलङ्कारत्वम् । इतरेषान्तु तत्साम्याद्गौणमिति तात्पर्यम् ॥

रसनिष्पादनकी तल्लीनतासे ही अबुद्धि पूर्वक (बिना विशेष प्रयासके ही) आपसे आप स्वयं निष्पन्न होकर, जो अलंकार, मनन करने पर आश्चर्य जनक प्रतीयमान हो, वही इस असंलक्ष्यक्रमव्यङ्ग्यध्वनिमें मुख्य उपकारक समझा जाता है, अन्य नहीं, अर्थात् रसनिर्माणानुकूल व्यापारसे ही अनायास (आनुषङ्गिक) रूपसे निष्पन्न होनेवाले अलंकारोंमें ही उक्त रसादिके प्रति प्रधान अङ्गत्व होता है ।

अपृथग्यत्ननिर्वर्त्यमलङ्कारमुदाहरति—

**यथा—**

मानिनीमनुनयन्नायको ब्रवीति—

'कपोले पत्त्राली करतलनिरोधेन मृदिता,
निपीतो निश्वासैरयममृतहृद्योऽधररसः ॥

मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं,
प्रियो मन्युर्जातस्तव निरनुरोधे! न तु वयम् ॥'

हे निरनुरोधे! निरपेक्षे! तव कपोले गण्डे, पत्राली चन्दनपत्ररचना, करतलस्य निरोधेन विषादाद्वामहस्तमण्डलस्यावरोधेन मृदिता प्रोञ्छिता। तथा—अयं प्रत्यक्षीक्रियमाणः अमृतमिव हृद्यो मनोरमः, अधररसः, निश्श्वासैः खेदादायतोच्छ्वासैः, निपीतो निकामं पीतः। तथा—कण्ठे लग्नो गलाधिष्ठितः, वाष्पोऽश्रु मुहुःस्तनतटं तरलयत्यान्दोलयति। तेन तव मन्युः क्रोधः प्रियो जातोऽजनि, तु पुनर्वयं न जाता इत्यर्थः। तथा च 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यभिधानम्।

क्रोधानुरोधेनास्मत्यागस्त्वया क्रियते, नत्वस्मदनुरोधेन क्रोधत्याग इत्युपालम्भस्तात्पर्यविषयः।

अत्र वक्त्रपेक्षया मानस्य नायिकाप्रियत्वेन निष्पद्यमानो व्यतिरेकालङ्कारोऽपृथग्यत्ननिष्पन्नत्वाद्विप्रलम्भश्रृङ्गारध्वनिमुपस्करोतीति तस्य तदङ्गत्वम् ॥

अनायास निष्पन्न (सिद्ध) अलंकारका उदाहरण बतलाते हैं—यथेति। मानिनीसे अनुनय करता हुआ नायक कहता है—हे पराङ्मुखि! तुम्हारे कपोल पर लिखित चन्दनपत्र (मकराकृति) की रचना भी विषादके मारे वाम हस्ततल पर उस (कपोल) को रखनेसे प्रोञ्छित हो (धुल) रही है, तथा अमृत रससे सना हुआ अत्यन्त मधुर यह तुम्हारा अधररस निश्वास पवनसे सूख रहा है, और गले तक अविरल रूपसे बहता हुआ आंसू बार बार स्तनतटको तरलित कर रहा है, इससे यही प्रतीत होता है कि—क्रोध ही तुम्हारा प्रिय है, मैं तुम्हारा प्रिय नहीं हूँ, अर्थात् क्रोधके अनुरोधसे मुझे तू छोड़ रही है, पर मेरे अनुरोधसे क्रोधको नहीं छोड़ती। यहां नायककी अपेक्षा मान ही नायिका का अधिक प्रिय समझा गया है, अतः अनायास निष्पद्यमान व्यतिरेकालंकार विप्रलम्भश्रृङ्गारध्वनिको उपस्कृत (परिपुष्ट) करता हुआ उसका अङ्ग बन जाता है।

पर्यवसितमाह—

**रसाङ्गत्वे च तस्य लक्षणमक्षुण्णमपृथग्यत्नं निर्वर्त्येत इति।**

योऽलङ्कारः, अपृथग्यत्नं पृथक्प्रयासमन्तरेण निर्वर्त्यते निष्पाद्यते कविनेति शेषः। इतिहेतोस्तस्य रसाङ्गत्वे लक्षणमलङ्कारवृत्तिस्तदितरव्यावर्तको धर्मः, अक्षुण्णं व्यापकं सङ्गतमिति यावत्। यद्वा तस्यालङ्कारस्य रसाङ्गत्वे लक्षणम्, अक्षुण्णम्, यतः सोऽपृथग्यत्नं निर्वर्त्यते। यद्वा लक्षणमेवापृथग्यत्नं निर्वर्त्येत इत्यन्वयः॥

विशेष प्रयासके बिना ही जो अलंकार निष्पन्न हो जाता है, इसलिये उस ( अलंकार ) में रसाङ्गताका लक्षण अबाधित होकर स्पष्ट ही प्रतीत होता है ।

अथ यमकादीनां रसध्वनेरङ्गत्वाभावमुपपादयति—

**रसं बन्धुमध्यवसितस्य कवेर्योऽलङ्कारस्तां वासनामत्यूह्य यत्नान्तरमास्थितस्य निष्पद्यते, स न रसाङ्गमिति । यमके च प्रबन्धेन बुद्धिपूर्वकं क्रियमाणे नियमेनैव यत्नान्तरपरिग्रह आपपति शब्दविशेषान्वेषणरूपः ।**

रसनिबन्धाय कृताध्यवसायस्य कवेः, तां रससम्बन्धिनीं वासनां संस्कारश्रृङ्खलाम्, अत्यूह्यातिक्रम्य यत्नान्तरं समानशब्दान्वेषणादिलक्षणं रसानुपयोगिनमन्यं व्यापारम्, आस्थितस्य कृतवतस्तस्य, योऽलङ्कारो निष्पद्यते, स न रसाङ्गम्, रसप्रतिकूलव्यापारनिष्पन्नत्वात् । बुद्धिपूर्वकं यमकं निबध्नामीति ज्ञानपुरस्सरं प्रबन्धेन बाहुल्येन क्रियमाणे निबध्यमाने यमके तु, शब्दविशेषस्य समानाकारकासमानार्थकशब्दस्यान्वेषणरूपं यद् यत्नान्तरम्, तस्य परिग्रहः स्वीकारो नियमेनैव, आपतत्यापन्नो भवतीत्यर्थः ।

नहि प्राग्दर्शितव्यतिरेकवद् रसवासनयैव विपुलं यमकमप्यनायासेन कविना निबन्धुं शक्यम्, व्यापारान्तरसाध्यत्वात् । तस्माश्च रसाङ्गं यमकमिति सारम् ॥

**रसनिष्पत्तिमें लगे हुए कविके रस-सम्बन्धी भावनाको अतिक्रमण ( लांघ ) कर रसानुपयोगी समान शब्दानुसन्धानादि व्यापारसे जो अलंकार निष्पन्न होता है, वह रसाङ्ग नहीं हो सकता, क्योंकि वह रसप्रबन्धके प्रतिकूल व्यापारसे निष्पन्न हुआ है। अत्यन्त सावधान पूर्वक विशेष यत्नसे निबध्यमान यमक अलंकारमें अनिवार्य रूपसे समान शब्दविशेषोंका अन्वेषण करना पड़ता है, अर्थात् पूर्वोक्त व्यतिरेकवत् बिना यत्नविशेषके यमकालंकारको कवि निष्पन्न नहीं कर सकता, इसलिये उस ( यमक ) अलंकारको रसका अङ्ग नहीं माना गया है ।**

तुल्यन्यायेनाशङ्क्य समाधत्ते—

**अलङ्कारान्तरेष्वपि तत् तुल्यमिति चेत्, मैवम्, अलङ्कारान्तराणि हि निरूप्यमाणदुर्घटनान्यपि रससमाहितचेतसः प्रतिभानवतः कवेरहम्पूर्विकया परापतन्ति ।**

अन्येष्वप्यलङ्कारेषु निबन्धनीयेषु कश्चन भिन्नप्रयत्नोऽवश्यमपेक्ष्यते, अर्थविशेषान्वेषणस्वरूपः, अन्यथा रसादितो भिन्नानामुपमाऽऽदीनां निष्पत्तिरेव न स्यात् । एवञ्च यमके यथा प्रयत्नान्तरनिष्पाद्यत्वम्, तथैवान्यत्रापीति कथं तेषामपि रसाङ्ग-

त्वम् ? इति शङ्क्यते चेन्न, हि यतो रसैकतानमानसस्य सप्रतिभस्य कवेः रसे निबन्धनीये, निरूप्यमाणदुर्घटनान्यपि निष्पत्त्युत्तरं विचारे दुष्करत्वेन प्रतिभासमानान्यपि, अलङ्कारान्तराणि परेऽर्थालङ्काराः, अहम्पूर्विकया अहंपूर्वमहम्पूर्वमिति यस्यां क्रियायां तया नितान्तत्वरया, परापतन्त्युपतिष्ठन्तीत्यर्थः।

सप्रतिभस्य कवे रसानुकूलायासेनैवालङ्कारान्तराणि निष्पद्यन्त इति तेषां नैव यमकतुल्यत्वमिति सारम्॥

यमकवत् उपमादि अर्थालंकारोंमें भी अनिवार्य रूपसे अर्थानुसंधानरूप प्रयत्नविशेष करनेका सन्देह नहीं करना चाहिये, क्योंकि रसनिर्माणमें ही एकतानसे लगे हुए अत्यन्त प्रतिभाशाली कवियोंके प्रयासविशेषके विना ही अत्यन्त विस्मय कारक चमत्कारशाली अलंकारोंकी सबसे पहले आनेके लिये आपसमें एक होड़ सी लग जाती है, अर्थात् प्रतिभाशाली कविके रसानुकूल प्रयाससे ही अन्य अलंकार भी आपसे आप निष्पन्न हो जाते हैं, अतः उनमें यमककी तुलना नहीं दी जा सकती है।

स्वोक्तिं द्रढयितुमुदाहरति—

यथा कादम्बर्याम्—कादम्बरीदर्शनावसरे। यथा च मायारामादिशिरोदर्शनविह्वलायां सीतादेव्यां सेतौ।

कादम्बरीनाम्नि बाणस्य कथाकाव्ये चन्द्रापीडस्य कादम्बरीदर्शनकाले पूर्वार्धोपान्ते, सेतौ प्रवरसेनविरचितप्राकृतमयसेतुबन्धमहाकाव्य एकादशाश्वासके मेघनादेन मायया छिन्नस्य दर्शितस्य च रामादिशिरसो दर्शनेन विह्वलायाः सीतायाः 'अह तेहिं' इति५२श्लोकत आश्वासकान्तं यावद्वर्णिते विलापे च रसानुसन्धानेनैव प्रवृत्ते प्रबन्धे तदुपकारिणोऽलङ्कारा अनितरयत्ननिष्पन्नाः स्फुरन्तीत्यर्थः।

जैसे कादम्बरीके पूर्वार्द्धके उपान्त्यमें चन्द्रापीड़के कादम्बरी-दर्शनके अवसर पर, और प्राकृतमय सेतुबन्ध महाकाव्यके एकादश आश्वासमें मेघनाद द्वारा माया (इन्द्रजाल) कल्पित राम-मस्तकके छेदनको देखनेसे अत्यन्त विह्वल सीताके विलापके वर्णन प्रसङ्ग पर रसानुसन्धानसे ही प्रवृत्त कविके काव्य-प्रबन्धमें रसोपकारक अलंकार आपसे आप निष्पन्न होकर स्फुरायमान होते हुए दिखलाई पड़ रहे हैं।

उक्तं समर्थयति—

युक्तं चैतत्, यतो रसा वाच्यविशेषैरेवाक्षेप्तव्यास्तत्प्रतिपादकैश्च शब्दैः तत्प्रकाशिनो वाच्यविशेषा एव रूपकादयोऽलङ्काराः, तस्मान्न तेषां बहिरङ्गत्वं रसाभिव्यक्तौ। यमकदुष्करमार्गे तु तत् स्थितमेव।

एतदर्थालङ्काराणामहम्पूर्विकया परापतनं च युक्तमुचितम्, यतो वाच्यविशेषै-स्तत्प्रतिपादकैश्शब्दैरेव च रसा आदेप्तव्या व्यञ्जनीयाः रसप्रकाशनकारणानि रूप-काद्यर्थालङ्कारत्वाद्वाच्यार्थरूपा एवेति तेषां रसव्यञ्जने बहिरङ्गत्वमनुपयोगित्वं साक्षा-दनुपयोगित्वं वा नास्ति। प्रयत्नविशेषसाध्यत्वाद् दुष्करे यमके तु तद्बहिरङ्गत्वं स्थितमेव, नत्वपनेतुं कथञ्चन शक्यत इत्यर्थः॥

रसध्वनिमें अर्थालंकारोंका अहंपूर्विकापूर्वक एक बार ही टूट पड़ना उचित ही मालूम पड़ता है, क्योंकि वाच्यविशेषों एवं तत्प्रतिपादक शब्दविशेषोंसे ही रस अभिव्यङ्ग्य होते हैं, और रूपकादि अर्थालंकार वाच्यविशेषरूप होनेसे रसाभि-व्यक्ति जनक हैं, इसलिये रसव्यञ्जनमें उनकी बहिरङ्गता या अनुपयोगिता नहीं प्रतीत होती है। परन्तु प्रयत्नविशेष साध्य होनेसे अत्यन्त दुष्कर वाच्यभिन्न यमकादि अलंकारमें रसानुपयोगिता स्पष्ट ही प्रतीत होती है।

ननु शिशुपालवधे षष्ठसर्गे माघस्य, रघुवंशनवमसर्गे कालिदासस्य च बाहुल्येन यमकनिबन्धो दृश्यते, स किं रसध्वनिविधुर एवेत्याशङ्कां समादधाति—

यत्तु रसवन्ति कानिचिद् यमकादीनि दृश्यन्ते, तत्र रसादीनामङ्गता यमकादीनां त्वङ्गितैव।

रसादीनामङ्गत्वमप्राधान्यम्, यमकाद्यलङ्काणामेव तत्र प्राधान्यमित्यर्थः॥

जहां भी कहीं माघ आदि काव्यमें यमकादि अलंकार सरस दिखाई पड़ते हैं, वहां भी रसादि ध्वनि नहीं है, अपितु रसादिकी अप्रधानता ही है। चमत्कारजनक प्रधानता तो यमकादि अलंकारोंकी ही प्रतीत होती है। अतः वहां उक्त उपकार्यो-पकारकभावकी बात नहीं है।

विशेषमाह—

रसाभासे चाङ्गत्वमप्यविरुद्धम्।

रसाभासस्य तादृशसौकुमार्यविरहाद्यमकादय उपकारका इत्यर्थः॥

रसाभासमें तो रसकी तरह अत्यन्त सुकुमारता नहीं होती है, अतः उसमें यमकादिको अङ्ग माननेमें भी कोई क्षति नहीं है।

निगमयति—

अङ्गिता तु व्यङ्ग्ये रसे नाङ्गत्वम् पृथग्यत्ननिर्वर्त्यत्वाद् यमकादेः।

यमकादेः पृथग्यत्ननिर्वर्त्यत्वाद् व्यङ्ग्ये रसेऽङ्गिता नत्वङ्गत्वमित्यन्वयः॥

प्रधानरूपसे भासमान व्यङ्ग्य रसध्वनिमें भिन्न प्रयत्न साध्य होनेसे यम-

कादिको अङ्ग नहीं माना गया है। गुणीभूत व्यङ्ग्य रसादिमें तो यमकादि अलंकार ही प्रधानरूपसे व्यवहृत होता है।

उक्तानर्थान् वृत्तिकृत्त्रिभिः श्लोकैः सङ्गृह्णाति—

अस्यैवार्थस्य संग्रहश्लोकाः—

'रसवन्ति हि वस्तूनि सालङ्काराणि कानिचित्।
एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः॥
यमकादिनिबन्धे तु पृथग्यत्नोऽस्य जायते।
शक्तस्यापि, रसेऽङ्गत्वं तस्मादेषां न विद्यते॥
रसाभासाङ्गभावस्तु यमकादेर्न वार्यते।
ध्वन्यात्मभूते शृङ्गारे त्वङ्गता नोपपद्यते॥'

महाकवे रसवन्ति सालङ्काराणि च कानिचिद् वस्तूनि, एकेनैव प्रयत्नेन निर्वर्त्यन्ते। शक्तस्याप्यस्य यमकादिनिबन्धे तु यतः पृथग्यत्नो जायते, तस्मादेषां यमकादीनां रसेऽङ्गत्वं न विद्यते। यमकादे रसाभासाङ्गभावस्तु न वार्यते, ध्वन्यात्मभूते शृङ्गारे तु पुनरङ्गता नोपपद्यते यमकादेरित्यन्वयः।

उक्तार्थका संग्रह करते हैं—अस्यैवेति। महाकविके एक ही प्रयत्नसे रस-अलंकार सहित कितने ही वर्णनीय विषय निष्पन्न हो जाते हैं, परन्तु अत्यन्त प्रतिभाशाली कविको भी यमकादिकी रचना करनेमें विशेष यत्न करना पड़ता है, अतः उसके निर्माणमें कविके ध्यान बट जानेसे यमकादि रसका अङ्ग नहीं होता, एवं ध्वनिभूत शृङ्गारमें भी यमकादि अङ्ग नहीं है। परन्तु रसाभासके प्रति यमकादिको अङ्ग होनेमें कोई चति नहीं है।

केषां तर्ह्यलङ्काराणां रसाङ्गत्वम्? इत्याकाङ्क्षायां कारिकामवतारयति—

इदानीं ध्वन्यात्मभूतस्य शृङ्गारस्य व्यञ्जकोऽलङ्कारवर्ग आख्यायते—

ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः।
रूपकादिरलङ्कारवर्ग एति यथार्थताम्॥ ४०॥

शृङ्गारे ध्वन्यात्मभूते सति, समीक्ष्य वक्ष्यमाणां रसोपयोगित्वसमीक्षां विधाय, प्रबुद्धेन कविना विनिवेशितो निबद्धः, रूपकादिर्योऽलङ्कारवर्गः, यथार्थतां रसोपयोगितया वस्तुतोऽलङ्कारत्वं चारुताहेतुतामिति यावत्, यान्तीत्यर्थः॥

अब ध्वन्यात्मक शृङ्गारमें अङ्गभूत अलंकारोंका वर्णन करते हैं—इदानीमिति।

ध्वन्यात्मक श्रृङ्गारमें रसोपकारकत्वकी भावनासे प्रतिभासम्पन्न कवि द्वारा निबद्ध रूपकादि अलंकार वास्तवमें रसोपयोगी होकर सौन्दर्यको बढ़ाता है।

तदेव विवृणोति—

**अलङ्कारो हि बाह्यालङ्कारसाम्यादङ्गिनश्चारुत्वहेतुरुच्यते वाच्यालङ्कारवर्गश्च रूपकादिर्यावानुक्तो वक्ष्यते च कैश्चित्, अलङ्काराणामनन्तत्वात्, सर्वोऽपि यदि समीक्ष्य विनिवेश्यते, तदलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेरङ्गिनः सर्व एव चारुत्वहेतुर्निष्पद्यते।**

बाह्यालङ्कारो लौकिकालङ्कारः। उक्तो भामहादिभिः। वक्ष्यते च ग्रन्थकृद्भिरर्वाचीनैः। कविप्रतिभाऽऽनन्त्यादलङ्काराणामानन्त्यम्।

यथा कटककुण्डलादिरलङ्कारः समीक्ष्य सन्निवेशित एव शरीरस्य शोभां जनयन्नलङ्कारत्वं भजति, तथैव रूपकादी रसस्य। नहि करे धृतो नूपुरश्चरणे धृतो वलयश्च शरीरस्य शोभां जनयतीति भावः।

जैसे लौकिक कटक कुण्डलादि उचित रूपसे पहना जाकर शरीरीको भूषित करता है, वैसे ही अलंकार भी अङ्गीभूत रसादि ध्वनिकी रमणीयताका हेतु होता है, जितने भी रूपकादि वाच्य-अलंकार समूहको भामहप्रभृति कवियोंने कहा है, या कहेंगे, वे सभी अलंकार यथास्थानमें कविद्वारा निबद्ध होकर प्रधान असंलक्ष्य-क्रम-व्यङ्ग्य ध्वनिकी शोभाको बढ़ाते हैं, अर्थात् जैसे कटक कुण्डलादि भूषण यथास्थानमें पहने जानेसे ही शरीरकी शोभा बढ़ाता है, क्योंकि हाथमें नूपुर और पादमें वलयको पहननेसे शोभा नहीं होती, वैसे ही आवश्यकतानुसार समीक्षा करके यथास्थान प्रयुक्त अलंकार ही रसकी शोभा बढ़ाता है।

समीक्षामभिधत्ते—

**एषा चास्य विनिवेशने समीक्षा—**

**विवक्षा तत्परत्वेन नाङ्गित्वेन कथञ्चन।**
**काले च ग्रहणत्यागौ नातिनिर्वहणैषिता॥**
**निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्।**
**रूपकादेरलङ्कारवर्गस्याङ्गत्वसाधनम्॥ ४२॥**

तत्परत्वेन रसाद्यङ्गत्वेन, न तु स्वयमङ्गित्वेन विवक्षा। काल उचितावसरे ग्रहणमुपादानं त्यागश्च। अतिनिर्वहणैषिताऽत्यन्तनिर्वाहस्येच्छा न। निर्व्यूढो निर्वाहेऽपि

यत्नेन, अङ्गत्वेऽप्राधान्ये, प्रत्यवेक्षणं पर्यालोचनम्। इति सर्वं रूपकादेरलङ्कारवर्गस्य अङ्गत्वसाधनं रसाद्युपकारकत्वकारणमित्यर्थः ॥

अलंकारोंके निवेश करनेकी रीति बतलाते हैं—एषेति। १. रसके प्रति अङ्गरूप में ही अलंकारोंकी विवक्षा करना, २. अङ्गीरूपमें विवक्षा नहीं करना, ३. अवसर पर उसका ग्रहण और परित्याग करना, ४. आरम्भ कर अन्त तक उसको निभाने का प्रयास नहीं करना, ५. समाप्ति पर्यन्त उस अलंकारको रसपोषक बनानेका ध्यान रखना, इन पांच प्रकारोंकी समीक्षाओंको ही रसोंके प्रति रूपकादि अलंकारोंके अङ्गत्व साधक युक्ति कहते हैं।

अथ 'यमलङ्कारं तदङ्गतया विवक्षति नाङ्गित्वेन, यमवसरे गृह्णाति, यमवसरे त्यजति, यं नात्यन्तं निर्वोढुमिच्छति, यं यत्नादङ्गत्वेन, प्रत्यवेक्षते, स एवमुपनिबध्यमानो रसाभिव्यक्तिहेतु र्भवतीति विततं महावाक्यम्, इति लोचनोक्तमहावाक्यस्य प्रथमांशप्रतिपाद्यमुदाहर्तुमाह—

रसबन्धेष्वत्यादृतमनाः कविर्यमलङ्कारं तदङ्गतया विवक्षति (स) यथा।

तदङ्गतया रसाद्युपकारकत्वेन। विवक्षति विवक्षाविषयीकरोति।

रसनिष्पत्तिमें अत्यन्त व्यासक्त कवि, उसके पोषणार्थ जिस अलंकारको प्रयुक्त करना चाहता है, उसका उदाहरण देते हैं—

दुष्यन्तनृपो मधुपं वक्ति—

'चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं,
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकगतः ॥
करौ व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं,
वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती ॥'

हे मधुकर! वयं किङ्कर्तव्यमिति तत्त्वस्यान्वेषान्मार्गणाद्विवेचनादिति यावत्, हता नष्टा अभीष्टासिद्धेः, त्वं खलु निश्चितं पुनर्वा, कृतो धन्योऽभीष्टसिद्धेरसीति शेषः। यतोऽस्याः चलापाङ्गां लोलकटाक्षां, वेपथुमतीं सकम्पां, दृष्टिं बहुशोऽसकृत्, स्पृशसि। तथा रहस्यस्य गुप्तार्थस्य, आख्यायी वक्तेव, कर्णान्तिकं श्रवणसमीपं गतः प्राप्तः, मृदु कोमलं स्वनसि शब्दायसे। तथा करौ व्याधुन्वत्यास्त्वद्भीत्या विक्षिपन्त्याः कम्पयन्त्या वा, रतौ रतेर्वा सर्वस्वमधरं पिबसीत्यर्थः। शिखरिणीच्छन्दः।

'केयम्? मत्परिग्रहयोग्या नवा, तत्त्वेऽपि मय्यनुरक्ता न वा, अपरिचितायां च साहसं नोचितम्' इत्यादि बहु विवेचयतैव स्वमनोरथो व्यर्थीकृतः। त्वया पुनः साह-

-सिकेन मदुचितमुपभोगमाचरता धन्यत्वं लब्धमिति मदपेक्षया त्वमेवोत्कृष्ट इति व्यतिरेकोऽत्र स्फुटः, तदुक्तं चन्द्रालोके—'व्यतिरेको विशेषश्चेदुपमानोपमेययोः ॥' इति ॥

राजा दुष्यन्त भ्रमरको लक्ष्य कर कहते हैं—हे मधुप ! शकुन्तलाके रसको लूट कर वास्तवमें तुम ही कृतकृत्य हुए, मैं तो तत्त्वको ही ढूढनेमें लगे रहनेसे किंकर्तव्य विमूढ होकर बिल्कुल वञ्चित ही रहा, क्योंकि अत्यन्त चंचल कटाक्ष भरे कम्पयुक्त तिरछे भ्रूविक्षेपोंको अनेकों बार स्पर्श कर, एवं अत्यन्त गुप्त रहस्य वक्ताकी भांति कानके पास जाकर मधुर ध्वनि गूंजकर, तथा आक्रमणके भयसे चौतरफ हाथोंको चलाती हुई उसके रति·सर्वस्व अधररसका पान कर तू मानो मालोमाल हो गया, केवल मेरे जैसा अभागा ही ठगा सा रह गया। यहां 'यह मेरे परिग्रह योग्य है, या नहीं, एवं मुझमें अनुरक्त है, या नहीं' इत्यादि विचारनेमें ही मैंने अपना मनोरथ व्यर्थ कर दिया, किन्तु तुम तो साहस करके मेरे योग्य उपभोगका रस लूटकर कृतकृत्य (नेहाल) हो गये, इसलिये तूही मुझसे उत्कृष्ट है, इसतरह व्यतिरेकालंकार अनायासमें ही सिद्ध होकर शृङ्गाररसका पोषक हो गया है।

सङ्गमयति—

**अत्र हि भ्रमरस्वभावोक्तिरलङ्कारो रसानुगुणः।**

अत्रोक्तश्लोके भ्रमरस्वभावोक्तेः—'स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्' इति मम्मटलक्षितस्वभावोक्त्यलङ्कारो रसस्य शृङ्गारस्यानुगुण उत्कर्षाध्यायकत्वादङ्गभूत इत्यर्थः। वस्तुतस्तु भ्रमरासाधारणधर्मवर्णनाभावान्न स्वभावोक्तिः, किन्तु व्यतिरेक एवाङ्गिकचमत्कारभूमिरलङ्कारः। इत्थं च भ्रमरस्य स्वभावे उक्तिर्यस्येति बहुव्रीहिः। समुदितं पदं च व्यतिरेकपरमवगमनीयम् ॥

यत्त्विह रूपकमपि केचनोचिरे, तन्न कस्मिंश्चिदप्यंशे तादात्म्यारोपादर्शनात्। इह शृङ्गाररससन्निवेशव्यासक्तेन कविनाऽपृथग्यत्नेनैव निवेशितो व्यतिरेकः शृङ्गारं पुष्णन्नङ्गत्वं भजन्नलङ्कारतां वास्तविकीं श्रयतीति विभावनीयम् ॥

उक्त श्लोकमें भ्रमरकी स्वभावोक्ति नामक अलंकार ही शृङ्गाररसके उत्कर्षाधायक होनेसे अङ्गभूत प्रतीत होता है। वास्तवमें तो भ्रमरके नैसर्गिक धर्मके वर्णन नहीं होनेसे स्वभावोक्ति अलंकार नहीं है, अपितु पूर्वोक्त व्यतिरेकालंकार ही चमत्कृतिजनक प्रतीत होता है।

तद्द्वितीयांशं व्याचष्टे—

**नाङ्गित्वेनेति—प्राधान्येन।**

अङ्गित्वेनेत्यस्य प्राधान्येनेति विवृतिः। कथञ्चन प्राधान्येन न विवक्षा, किन्त्वलङ्कारस्य रसाङ्गत्वेनैवेत्यर्थः। प्राधान्येन विवक्षायान्तु गुणीभूतव्यङ्ग्यत्वं भवति॥

किन्तु रस ध्वनिमें कविको किसी भी प्रकार प्रधानरूपसे अलंकारकी विवक्षा नहीं करनी चाहिये, अपितु रसाङ्गरूपमें ही विवक्षा करना उचित है, प्रधानरूपसे अलंकारकी विवक्षा स्थलमें तो गुणीभूत व्यङ्ग्य हो जाता है।

तत्तृतीयांशमुदाहर्तुमाह—

**कदाचिद्रसादितात्पर्येण विवक्षितोऽप्यलंकारः कश्चिदङ्गित्वेन विवक्षितो दृश्यते।**

कश्चिदलङ्कारः कदाचित् पूर्वं, रसादितात्पर्येण रसाद्युपकारकत्वेन विवक्षितोऽपि, प्राधान्येन पश्चाद्विवक्षितो दृश्यत इत्यर्थः॥

कुछ अलंकार पहले रसादिके उपकारक रूपमें विवक्षित होकर भी पीछे प्रधानरूपसे ही कविद्वारा विवक्षित होता हुआ देखा जाता है।

**यथा—'चक्राभिघातप्रसभाज्ञयैव, चकार यो राहुवधूजनस्य।
आलिङ्गनोद्दामविलासवन्ध्यं, रतोत्सवं चुम्बनमात्रशेषम्॥'**

यो भगवान्, चक्रेण सुदर्शनेन, अभिघातो हननं चक्राभिघातः, तत्र प्रसभाज्ञाऽलङ्घनीयो नियोगस्तयैव नत्वन्यथा, राहोरतमोग्रहस्य यो वधूजनः, तस्य, रतोत्सवं निधुवनविनोदम्, आलिङ्गनमुद्दाममुत्कटं प्रधानं वा येषु तैर्विलासैर्वन्ध्यं शून्यम्, अतएव चुम्बनमात्रं शेषमवशिष्टं यस्मिंस्तादृशं चकारेत्यर्थः। राहोश्शिरश्चिच्छेदेति भावः॥ अलङ्कारस्याङ्गित्वान्न रसोपयोगित्वम्।

जैसे-जिस भगवान्ने सुदर्शन नामक चक्राभिघातके अनुल्लंघनीय शासनसे ही राहु-वधूजनके रतोत्सवको गाढ़ालिङ्गनविलासोंसे रहित करके केवल चुम्बन मात्र अवशिष्ट कर दिया, अर्थात् राहुके शिरको काट डाला।

अत्राह—

**अत्र हि पर्यायोक्तस्याङ्गित्वेन विवक्षा, रसादितात्पर्ये सत्यपि।**

अत्रास्मिन् पद्ये रसादितात्पर्ये सत्यपि रसस्य शृङ्गारवीरकरुणान्यतमस्य विष्णुविषयकरतिभावस्य विवक्षायां सत्यामपि, राहुवधूजननिधुवन-चुम्बनमात्रशेषीकरणोक्ते राहुशिरश्छेदपर्यवसायितया पर्यायोक्तालङ्कारस्यैवाङ्गित्वेन विवक्षेत्यर्थः।

यद्यपि रसादिप्रतीतिरप्यत्र भवत्येव किन्तु तेषां प्राधान्येनाविवक्षितत्वादङ्गता, पर्यायोक्तस्य त्वलङ्कारस्याङ्गिता चमत्काराधिक्यादिति सारम्।

केचित्तु रसादिमिहाविवक्षितमेव मन्वते, तदसमञ्जसम्, स्फुटमङ्गत्वेनावभासमानानां तेषां विवक्षाया अपलपितुमनर्हत्वात्।

उक्तपद्यमें शृंगार, वीर, करुण अन्यतम रस, या विष्णु विषयक रतिभावकी विवक्षा रहने पर भी राहुवधूजनके संभोगका चुम्बन मात्र अवशिष्टके कथनसे राहु-शिरश्छेदनका पर्यवसान होकर पर्यायोक्त अलंकार ही प्रधान रूपसे अधिक चमत्कार-जनक प्रतीत होता है, क्योंकि राहु-शिरश्छेदको सीधे नहीं कह कर दूसरे ढङ्गसे कहनेसे विशेष विच्छित्ति ( चमत्कार ) प्रतीत होती है।

तच्चतुर्थपञ्चमांशावुदाहर्तुमाह—

**अङ्गित्वेनाविवक्षितमपि यमवसरे गृह्णाति, नानवसरे।**

यमलङ्कारम्, अङ्गित्वेनाविवक्षितमपि, अवसरे रसाद्युपयोगोचितसमये गृह्णात्युपादत्ते, नत्वनवसरे, अनवसरे तं नोपादत्त इत्यर्थः।

एतेन 'काले च ग्रहणत्यागौ' इति प्रागुक्तं विवृतम्॥

प्रधान रूपसे अविवक्षित होने पर भी जिस अलंकारको रसके उपकारक रूपमें विवक्षित करके रसोपयोगोचित समयमें ही कवि ग्रहण करता है, अनवसरमें ग्रहण नहीं करता, उसको आगे बतलाते हैं।

तत्र काले ग्रहणमुदाहरति—

**अवसरे गृहीतिर्यथा—**

अलङ्कारस्येति शेषः। गृहीतिरुपादानम्॥

अवसर पर अलंकारके ग्रहण करनेका उदाहरण बतलाते हैं—यथेति।

अग्निमित्रो ब्रवीति—

'उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः॥
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं,
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम्॥'

उद्दामोत्कलिकामुत्कटोद्गतकुड्मलाम्, पक्षे समधिकोत्कण्ठाम्, विशेषेण पाण्डुररुचं पीतवर्णाम्, क्षणात्तस्मिन्नेवावसरे प्रारब्धा जृम्भा विकासः पक्षे मन्मथकृतोऽङ्गमर्दो मुखविकासो वा यया, ताम्, अविरलैर्निरन्तरैः, श्वसनोद्गमैर्वसन्तमारुतोल्लासैः, पक्षे श्वासोल्लासैः, आत्मन आयासमान्दोलनयत्नं पक्षे मन्मथेन सहिताम्, अन्यां देव्या धारिण्या भिन्नां नारीमिव। अद्य, इमां पुरोवर्तिनीम्, उद्यानस्योपवनस्य लतां

पश्यन्, अहम्, देव्या धारिण्या मुखं कोपेन विपाटलाऽतिरक्ता द्युति र्यस्य तादृशं ध्रुवमवश्यं करिष्यामीत्यर्थः।

तथा च 'कथितोत्कलिकोत्कण्ठा' 'जृम्भा विकासजृम्भणयोः' इति मेदिनी। "पिण्डीतको मरुवकः श्वसनः करहाटकः। शल्यश्च मदने' इत्यमरश्च॥

अग्निमित्रकी उक्ति है—उत्कट रूपसे निकली हुई कलियोंसे युक्त, पीली कान्ति वाली एवं तुरत ही विकसित होने वाली तथा लगातार वसन्त पवनसे आन्दोलित इस उपवन-लताको, अधिक उत्कण्ठा युक्त, पीली सी कान्ति वाली अङ्गराई लेती हुई तथा गरम सांससे हृदय स्थित खेदको व्यक्त करती हुई मदन पीढित एक अन्य नायिकाकी तरह देखता हुआ मैं अपनी प्रेयसी धारिणीको निश्चय ही कोपसे लाल २ मुखकान्ति वालीकी भाँति करूंगा।

उपादानोपयोगमाचष्टे—

**इत्यत्र श्लेषस्य।**

श्लेषस्य श्लेषानुप्राणितोपमाया भविष्यदीर्ष्याविप्रलम्भश्रृङ्गारस्यानुगुणत्वेनावसरे ग्रहणमित्यर्थः। पूर्णोपमाऽत्र रसमुपकरोत्येवेत्यवसरे रसस्य प्रमुखीभावदशायां तदुपादानमुचितमित्याशयः॥

यहां श्लेषसे अनुप्राणित उपमा अलंकारका भविष्यत्कालिक ईर्ष्याख्यविप्रलम्भ श्रृङ्गारके उत्कर्षाधायक होनेकी दृष्टिसे उक्त अवसर पर ग्रहण किया है।

काले त्यागमुदाहर्तुमाह—

**गृहीतमपि च यमवसरे त्यजति, तद्रसानुगुणतयाऽलङ्कारान्तरापेक्षया।**

उपात्तमप्यलङ्कारं यत्यजति, तद्रसानुगुण्यादन्यालङ्कारस्यापेक्षयेत्यर्थः। यदाऽन्यमलङ्कारं कविर्नितरां रसोपयोगिनं पश्यति, तदोपात्तमप्यलङ्कारं त्यजति रसोपयोगातिशयानाधानादित्याकूतम्॥

कवि जब अन्य अलंकारको ही अत्यन्त प्रकृत रसोपयोगी समझता है, तब प्रथम गृहीत अलंकारको भी रसके अनुपयोगी होनेसे छोड़ देता है।

उदाहरति—

**यथा—**

अशोकं विरही व्याहरति—

**रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणै-**
**स्त्वामायान्ति शिलीमुखाः स्मरधनुर्मुक्ताः सखे! मामपि॥**

कान्तापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः,
सर्वं तुल्यमशोक ! केवलमहं धात्रा सशोकः कृतः ॥

हे अशोक ! वञ्जुल ! त्वं नवपल्लवै रक्तो लोहितोऽसि, अहमपि श्लाघ्यैः प्रशंसनीयैः, प्रियाया गुणै रक्तोऽनुरक्तोऽस्मि । हे सखे ! स्मरधनुषो मदनचापात्, पक्षे पुष्पात् । मुक्ताः, शिलीमुखा वाणाः पक्षे भ्रमराः, त्वामायान्ति त्वदुपरि पतन्ति मामप्यायान्ति । यथा कान्तायाः पादतलेनाहतिस्ताडनं तव मुदे मोदजननाय भवति, तद्वत् कान्तापादतलाहतिर्ममापि मुदे भवतीति सर्वमावयोस्तुल्यमस्ति, केवलं धात्रा दुर्दैवेनाहं सशोकः कृतोऽस्मीत्यर्थः ।

तथाच 'रक्तोऽनुरक्ते नील्यादिरञ्जिते लोहिते त्रिषु' इति मेदिनी । 'भृङ्गवाणौ शिलीमुखौ' इत्यनेकार्थध्वनिमञ्जरी । 'वञ्जुलोऽशोके' इत्यमरः । 'पादाघातादशोको विकसति वकुलः सीधुगण्डूषदानात्' इति कविसमयश्च ॥

जैसे—विरही नायक अशोकको लक्ष्यकर कहता है—हे अशोक ! तुम भी नये २ पल्लवोंसे रक्त हो, और मैं भी प्रियाके प्रशंसनीय गुणोंसे अनुरक्त हूं, एवं तुम्हारे पास मदन-पुष्पोंसे मुक्त होकर भौंरे आते हैं, तो मेरे पास भी कामदेवसे मुक्त होकर वहुतसे बाण आते हैं, और ललनाका पादताडन जैसे तुम्हारे आनन्दके लिये होता है, वैसे ही प्रेयसीके पादका ताडन मेरे भी आनन्दके लिये होता है, इस तरह हम दोनोंके समान व्यवहार होने पर भी केवल दुर्दैवने मुझे सशोक बना दिया बश यही मेरा दुर्भाग्य है, अर्थात् मेरा तुझसे इतना ही केवल अन्तर है ।

सङ्गमयति—

**अत्र हि प्रबन्धप्रवृत्तोऽपि श्लेषो व्यतिरेकविवक्षया त्यज्यमानो रसविशेषं पुष्णाति ।**

अत्र श्लोके प्रबन्धप्रवृत्त आदिमचरणत्रयनिर्व्यूढोऽपि श्लेषश्चतुर्थचरणस्य व्यतिरेकस्य रसानुगुणतमस्यानुरोधेन त्यज्यमानो रसविशेषं विप्रलम्भशृङ्गारं पुष्णातीत्यर्थः । रक्तशिलीमुखशब्दयोश्शब्दश्लेषः शब्दस्य परिवृत्त्यसहत्वात्, कान्तापादतलाहतिरित्यत्र तु तदभावादर्थश्लेषः । रक्तत्वादिभिः साधर्म्ये प्रतिपादितेऽपि सशोकत्वेनात्मन उपमेयस्य न्यूनतायाः प्रतिपादनाद्व्यतिरेकः । भवति हि 'हनूमदाद्यैर्यशसा मया पुन, द्विषांहसै दूत्यपथः सितीकृतः' इत्याद्युदाहरणस्य 'न्यूनताऽथवा' इति लक्षणस्य च सद्भावादुपमेयस्य न्यूनतोक्तावपि व्यतिरेकालङ्कारः । 'सशोकश-

-च्छेदेन व्यतिरेकमानयतां शोकसहभूतानां निर्वेदचिन्ताऽऽदीनां व्यभिचारिणां विप्रलम्भपरिपोषकाणामवकाशो दत्तः' इति लोचनम् ।

उक्त श्लोकमें प्रथम तीन चरणों तक श्लेषालंकार निबद्ध होकर चतुर्थ चरणमें प्रस्तुत रसोत्कर्षाधायक व्यतिरेकके अनुरोधसे परित्यक्त होता हुआ सा भी विप्रलम्भ-शृङ्गारको ही पुष्ट करता है ।

उक्तश्लोके श्लेषव्यतिरेकयोः सङ्करं शङ्कते—

**नात्रालङ्कारद्वयसन्निपातः, किन्तर्हि ? अलङ्कारान्तरमेव श्लेषव्यतिरेकलक्षणं नरसिंहवदिति चेत् ।**

अत्र श्लोकेऽलङ्कारद्वयस्य स्वतन्त्रयोः श्लेषव्यतिरेकयोः, सन्निपातः समावेशो, नास्ति, किन्तु मनुष्यसिंहयोर्नरसिंहो यथा सङ्करस्तथैव तयोरङ्गाङ्गिभावेन सङ्कर इत्याकूतम् ॥

उक्त श्लोकमें श्लेष और व्यतिरेककी स्वतन्त्ररूपसे निरपेक्ष होकर उपस्थिति नहीं है, अपितु नरसिंहवत् अङ्गाङ्गिभावसे मिले जुले ही दोनोंका संकर अलंकार है, ऐसा सन्देह करना ठीक नहीं—

खण्डयति—

**न, तस्य प्रकारान्तरेण व्यवस्थापनात् ।**

तस्य श्लेषव्यतिरेकसङ्करस्य ॥

क्योंकि श्लेष-व्यतिरेकका संकर दूसरे ही ढङ्गसे निष्पन्न होता है ।

तदेव प्रकारान्तरं दर्शयति—

**यत्र हि श्लेषविषय एव शब्दे प्रकारान्तरेण व्यतिरेकप्रतीतिर्जायते, स तस्य विषयः ।**

यत्र श्लेषस्य विषये लक्ष्य एव शब्दे प्रकारान्तरेणोपकार्यत्वेन व्यतिरेकालङ्कारस्य प्रतीतिर्जनकतासम्बन्धेन जायते, स तस्य श्लेषव्यतिरेकसङ्करस्य विषयो लक्ष्यमित्यर्थः । उभयोरुपकार्योपकारकभावे सामानाधिकरण्ये च सङ्करः, न तु नैरपेक्ष्ये वैयधिकरण्ये चेति भावः ।

ननु शब्दार्थालङ्कारयोः कथं संकरः, तयोरङ्गाङ्गिभावासम्भवादिति चेत्, मैवम् अर्थानुसन्धानविरहिण एवानुप्रासादेश्शब्दालङ्कारस्यार्थालङ्कारेण सह साङ्कर्यस्यास्वीकारात् । श्लेषे तु स्फुटैवार्थापेक्षा ॥

उसीमें युक्ति दर्शाते हैं—यत्रेति। जहां श्लेषका लक्ष्यभूत शब्द ही उपकार्य रूपमें व्यतिरेकालंकारकी प्रतीतिका जनक हो, वहीं पर श्लेष-व्यतिरेकका संकर माना जाता है, अर्थात् दोनोंके उपकार्य-उपकारकभाव और एकविषयता रहने पर ही उक्त संकर होता है, परस्पर निरपेक्षता और भिन्न विषयता रहने पर नहीं होता है।

सङ्करोदाहरणमाह—

यथा—

'स हरिर्नाम्ना, देवः सहरिर्वरतुरगनिवहेन इत्यादौ।

स इन्द्रो नाम्ना हरिः, देवो भवान् पुनर्वरेण श्रेष्ठेन तुरगनिवहेनाश्वसमूहेन हरिभिः सहितः सहरिरिति कस्यचन चाटुपटो राजानं प्रत्युक्तिरियम्।

अत्र—

'हरिश्चन्द्रार्कवाताश्वशुकभेकयमादिषु कपौ सिंहे हरेऽजेंशौ शक्रे लोकान्तरे पुमान्॥'

इति मेदिनीकोशाद्धरिशब्दस्य शक्राश्वयोः शक्तौ बोधितायां सहरिशब्दे श्लेषः, स चेन्द्रापेक्षया राज्ञो वास्तविकहरिसम्बन्धवर्णनेनाधिक्यात् स्फुटं व्यतिरेकमुपस्करोतीत्युभयोरलङ्कारयोरेकः सहरिशब्द आस्पदमिति सङ्करः।

वस्तुतस्तु नात्र श्लेषः, प्रथमस्य हरिशब्दस्येन्द्रमात्रबोधकत्वाद् द्वितीयस्याश्वमात्रबोधकत्वाच्च। यद्यपि लोचने सह हरिः सहरिः। यदि वा सह हरिभिः सहरिः इत्यर्थद्वयं व्याख्यातं, किन्तु तत्स्फुटं न प्रतीयत इति 'अतिगाढगुणायाश्च नाब्जवद्भङ्गुरा गुणाः' इत्येवात्रोदाहरणीयम्॥

जैसे—कोई चाटुकार राजाकी प्रशंसा करता हुआ कहता है—हे राजन्! वह इन्द्र, केवल हरि नामसे ही 'स हरिः' ऐसा कहलाता है, किन्तु आप तो श्रेष्ठ तुरगोंसे युक्त होनेके कारण वास्तवमें 'सहरिः' कहलाने योग्य हैं, यहां हरिशब्द इन्द्र और अश्वका वाचक है, अतः 'सहरि' शब्दमें श्लेष है, और वह श्लेष इन्द्रकी अपेक्षा राजामें वास्तविक हरि (अश्व) युक्त होनेसे विशेषता होनेके कारण प्रतीयमान व्यतिरेकका पोषक है, तथा दोनोंका 'सहरि' शब्द ही आस्पद है, इसलिये दोनोंका अङ्गाङ्गिभाव होकर स्पष्ट ही संकर प्रतीत होता है।

'रक्तस्त्वम्' इत्यादिपद्ये तदन्यथाभावमाह—

अत्र ह्यन्य एव शब्दः श्लेषस्य विषयः, अन्यश्च व्यतिरेकस्य।

हिशब्दस्त्वर्थे। अत्रोक्तपद्ये तु, अन्यो रक्तेत्यादिः शब्द एव श्लेषस्य लक्ष्यम्, अन्योऽशोकसशोकादिशब्दश्चार्थद्वारा व्यतिरेकस्य लक्ष्यमिति वैयधिकरण्यान्न सङ्कर इत्यर्थः।

उक्त 'रक्तस्त्वम्'—इस पद्यमें तो रक्तादि शब्द श्लेषका विषय है, और अशोक—सशोक शब्द अर्थ द्वारा व्यतिरेकका विषय है, इसलिये दोनोंके भिन्न विषय होनेसे संकर नहीं हो सकता है।

ननु तदेकवाक्यरूपं तूभयोरधिकरणमिहाप्यस्त्येवेति न कथं सामानाधिकरण्यात्सङ्कर इत्याशङ्कामापत्तिदर्शनेन निराकरोति—

**यदि चैवंविधे विषयेऽलंकारान्तरत्वकल्पना क्रियेत, ततः संसृष्टेर्विषयापहार एव स्यात्।**

यदि च एवंविधे विषये वाक्यमात्रापेक्षया कल्पितसामानाधिकरण्ये स्थले, अलङ्कारान्तरत्वस्य साङ्कर्यस्य, कल्पना क्रियेत, तर्हि संसृष्टेरेकवाक्यस्थमियोनिरपेक्षानेकालङ्कारसमवायलक्षणायाः, विषयापहारो लक्ष्यलोप एव स्यादित्यर्थः।

एकवाक्यस्थत्वरूपं सामानाधिकरण्यन्तु संसृष्टावप्यस्त्येवेति तत्रापि सङ्कर एव स्यादिति भावः।

इदमत्र बोध्यम्—सङ्करवत्संसृष्टेरप्यलङ्कारान्तरत्वमेव, किन्तु सङ्करेऽलङ्कारयोर्मिथोऽपेक्षा, संसृष्टौ तु नैरपेक्ष्यम्। पूर्वत्र सामानाधिकरण्यं क्वचित्पदापेक्षमपि दृश्यते, उत्तरत्र तु सर्वत्र वाक्यापेक्षमेवेत्युभयोर्विभाग इदानीं वाक्यापेक्षसामानाधिकरण्येऽपि सङ्करस्वीकारे लुप्येत॥

यदि इस तरहकी भिन्न विषयता रहने पर भी वाक्यगत एकवाक्यता मानकर एकविषयता—सम्पादन द्वारा उक्त स्थलमें भी संकरालंकारकी ही कल्पनाकी जायगी तो, परस्पर निरपेक्ष होकर एकवाक्यमें रहनेवाली संसृष्टिका विषय ही लुप्त हो जायगा, क्योंकि वाक्यगत समानविषयताको लेकर संकरालंकार ही सब जगह व्याप्त हो जायगा।

पुनरशङ्कते—

**श्लेषमुखेनैवात्र व्यतिरेकस्यात्मलाभ इति नायं संसृष्टेर्विषय इतिचेत्।**

श्लेषपदमिह श्लेषोत्थापितोपमापरम्। पूर्वपक्षिणोऽयमाशयः—अलङ्कारद्वयस्योपकार्योपकारकभावे साङ्कर्यं सर्वसम्मतम्, अतः प्रागुक्तश्लोके व्यतिरेकस्तदैव स्वरूपप्रतिष्ठां लभते, यदा श्लेषमूलिकोपमाऽऽत्मानं प्रकाश्य भूमिकां रचयति। अन्यथा साम्येऽप्रतीते प्रतीयमानमपि केवलं वैषम्यं व्यतिरेकप्रकाशाय न प्रभवतीति श्लेषोपमाव्यतिरेकयोरनुग्राह्यानुग्राहकभावस्य स्फुटत्वान्न कथं सङ्करः? कथं वा संसृष्टेर्विषयापहारः? तस्याः सापेक्षत्वानपेक्षतयाऽत्र प्राप्तेरेवासम्भवात्॥

अलंकारद्वयके उपकार्योपकारक भाव होने पर संकर होता है, अतः उक्त स्थलमें श्लेष मूलक उपमाके विना व्यतिरेक अलंकार स्वरूपप्रतिष्ठाको ही नहीं प्राप्त कर सकता, क्योंकि उपमा गर्भ व्यतिरेक है, और उपमा उक्त श्लेषके विना भासित नहीं होती, इसलिये श्लेषोपमा और व्यतिरेकके अनुग्राह्य-अनुग्राहक भाव होनेसे स्पष्ट ही संकर प्रतीत होता है, संसृष्टिकी तो निरपेक्षता होनेसे विषयता ही नहीं है, यह कथन भी ठीक नहीं।

समाधत्ते—

न, व्यतिरेकस्य प्रकारान्तरेणापि दर्शनात्।

प्रकारान्तरेणापि साम्याभिधानं विनाऽपि वक्ष्यमाणश्लोके व्यतिरेकस्य दर्शनान्नेदं युक्तमित्यर्थः। यदि व्यतिरेके सर्वत्र वाच्यैवोपमाऽपेक्ष्येत; तदा त्वत्रापि श्लेषोपमाया अपेक्षणाद् व्यतिरेकस्य सङ्करो वक्तुमुचितः, किन्तु 'नो कल्पापाय' इत्यादिवक्ष्यमाणश्लोके वाच्यश्लेषोपमाया अभावेऽपि व्यतिरेकदर्शनादुभयोरङ्गाङ्गिभाव एवानिर्णीति, कुतस्स उच्यत इत्याकूतम्॥

क्योंकि साम्य कथनके विना भी वक्ष्यमाण श्लोकमें व्यतिरेक देखा जारहा है, इसलिये व्यतिरेकमें वाच्योपमाकी अपेक्षा नहीं होती, अर्थात् यदि व्यतिरेकमें सब जगह वाच्य श्लेषोपमाकी अपेक्षा होती, तो उक्तस्थलमें भी श्लेषोपमाकी अपेक्षा होनेसे व्यतिरेकका संकर कह सकते थे, लेकिन अग्रिम श्लोकमें वाच्योपमाके विना भी व्यतिरेक होनेसे उक्त दोनोंका अङ्गाङ्गिभाव ही निश्चित नहीं हो पाता, संकरकी तो बात ही दूर रही।

श्लेषोपमाव्यतिरिक्तव्यतिरेकमुदाहरति—

नो कल्पापायवायोरदयरयदलत्क्ष्माधरस्यापि शम्या,
गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहिता नो तमः कज्जलेन॥
प्राप्तोत्पत्तिः पतङ्गान्न पुनरुपगता मोषमुष्णत्विषो वो,
वर्तिः सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः॥

अदयो निर्दयो दारुण इति यावत्, यो रयो वेगः, तस्माद् दलन्तो विशीर्णतां व्रजन्तः क्ष्माधराः पर्वता यस्मात्तस्य कल्पापायवायोः प्रलयपवमानस्यापि या नो शम्या नैव निर्वापणीया, तथाऽहनि दिवा गाढमत्यन्तमुद्गीर्णा प्रकाशितोज्ज्वला श्रीः शोभा यया तादृशी, तथा या तम एव कृष्णत्वात्कज्जलं तेन न रहिता नो, किन्तु रहितैव, यद्वाऽहनि नराणां हितोपकारिणी, तमःकज्जलेन नो युक्ता, पतङ्गात्सूर्यात्प्राप्तोत्पत्तिर्यया सा,

तथा या मोषं निर्वाणं पुनर्नोपगता, सा निखिलानां द्वीपानां प्रकाशकत्वाद्दीपस्यान्यरूपा विलक्षणा वर्तिर्दशैव, उष्णत्विषः सूर्यस्य दीप्तिः प्रभा वो युष्मान् सुखयत्वित्यर्थः।

तथा च 'श्रीर्वेशरचना शोभा' इति मेदिनी। 'पतङ्गः पक्षिसूर्ययोः' 'समौ पतङ्गशलभौ' इत्यमरः। 'वर्तिर्दीपदशास्वपि' इति त्रिकाण्डशेषश्च॥

श्लेषोपमा-व्यतिरिक्त व्यतिरेकका उदाहरण देते हैं—नो इति। अत्यन्त दारुण वेगसे पर्वतोंको भी विशीर्ण करनेवाले प्रलयकालिक प्रभञ्जन (पवन) से भी नहीं बुझनेवाली तथा दिनमें भी अत्यन्त प्रकाशित होनेवाली एवं अन्धकार रूप कज्जलसे बिल्कुल रहित, सूर्यसे उत्पन्न होनेवाली और कभी भी नहीं बुझनेवाली वह कोई विलक्षण ही ब्रह्माण्ड दीपककी वत्ती रूप सूर्यकी दीप्ति तुमको सुख दे।

वक्तव्यमाह—

**अत्र हि साम्यप्रपञ्चप्रतिपादनं विनैव व्यतिरेको दर्शितः।**

साधारणी हि दीपशिखा स्वल्पेनापि वायुना शम्या, दिवा विच्छाया, कज्जलप्रसूः, पतङ्गाच्छलभाद् ध्वंसिनी शलभानां वा नाशिनी, नैकदा निर्वाणमनुभूतवती च। इयं पुनस्तद्विलक्षणेत्यस्या दीपशिखाया आधिक्यप्रदर्शनाद्व्यतिरेकोऽत्र साम्यस्य प्रपञ्चेन प्रतिपादनं श्लेषोत्थापितोपमायाः प्रबन्धेनाभिधानंविनैव यतो दर्शितोऽस्ति, तस्मान्न तयोः सङ्कर इत्यर्थः। तथा चोक्तमाचार्यैः—'एतदुक्तम्भवति—प्रतीयमानैवोपमा व्यतिरेकस्यानुग्राहिणी भवन्ती नाभिधानं कण्ठेनापेक्षते। तस्मान्न श्लेषोपमा व्यतिरेकस्यानुग्राहित्वेनोपात्ता' इति॥

उक्त स्थलमें साधारण दीपकलिका तो थोड़े भी पवनसे बुझ जाती है, तथा दिनमें प्रकाशित नहीं होती, एवं शलभोंको नाश करती और अनेकों बार बुझ जाती है, परन्तु यह तो उससे विलक्षण ही है, अतः इस दीपशिखामें आधिक्य प्रतीत होनेसे श्लेषोत्थापित वाच्योपमाके कथनके विना ही व्यतिरेकका प्रदर्शन किया गया है, इसलिये श्लेष-वाच्योपमा और व्यतिरेकका संकर यहां नहीं हो सकता, अर्थात् व्यङ्ग्यरूपसे प्रतीयमान उपमा ही व्यतिरेकका पोषक होती है, तदर्थ कण्ठ रवसे उसका अभिधान होना कोई आवश्यक नहीं है, अतः उक्तोपमा व्यतिरेककी अनुग्राहिका नहीं है।

पुनरशङ्कित्वा समाधत्ते—

**नात्र श्लेषमात्राच्चारुत्वप्रतीतिरस्तीति श्लेषस्य व्यतिरेकाङ्गत्वेनैव विवक्षितत्वम्, न स्वतोऽलङ्कारत्वेनेत्यपि न वाच्यम्, यत एवंविधे विषये साम्यमात्रादपि सुप्रतिपादिताच्चारुत्वं दृश्यत एव।**

अत्र 'रक्तस्त्वम्' इत्यादिपद्ये, यद्यपि श्लेपोपमा व्यतिरेकानुग्राहित्वेन नोपात्ता, तथापि तदधीनतयैवोपात्ता मन्तव्या, यतस्तया अत्र स्वातन्त्र्येण चारुत्वस्याजनकत्वात्पृथगलङ्कारत्वं नाङ्गीकर्तुं शक्यमतोऽनायत्या सङ्कर एव स्वीकर्तव्य इत्यपि न वाच्यम्, यस्मादेवंविधे व्यतिरेकप्रत्यायके विषये, श्लेषशून्यात्केवलसाम्यप्रतिपादनादपि चारुत्वं दृश्यत एवेत्यर्थः ।

तदैव श्लेपोपमाया व्यतिरेकाङ्गत्वमनायत्या कल्पयितुं शक्यम्, यदि तां विना व्यतिरेकः स्वरूपं प्रकाशयितुं न प्रभवेत्, तन्नास्ति यतः 'आक्रन्दाः' इत्यादिवक्ष्यमाणश्लोके श्लेपहीनेन साम्येनापि व्यतिरेकः प्रतिभासते, तस्मान्न तयोरङ्गाङ्गिभावः सुवच इति सारम् ॥

उक्तस्थलमें श्लेपोपमा उक्तरीतिसे यद्यपि व्यतिरेकका अनुग्राहक नहीं है, तथापि स्वतन्त्र होकर रमणीयताकी प्रतीति जनक नहीं होनेसे उसको पृथक् अलंकार नहीं मानकर, व्यतिरेकका ही अङ्ग स्वीकार करके संकरका आपादन करना ठीक नहीं, क्योंकि व्यतिरेकके प्रत्यायकोंके विषयमें श्लेप नहीं रहने पर भी केवल सादृश्यके प्रतिपादन मात्रसे ही चारुता देखी जाती है, अर्थात् श्लेपोपमाको तभी व्यतिरेकका अङ्ग मान सकते हैं, यदि उसके विना व्यतिरेक प्रकाशित नहीं होता, परन्तु अग्रिम उदाहरणमें श्लेपके विना भी साम्यमात्रके भानसे ही व्यतिरेक प्रतीत होता है, अतः इन (श्लेप और व्यतिरेक) में अङ्गाङ्गिभाव नहीं है ।

तदुदाहरणमाह—

यथा—

वियोगी पयोदं वक्ति—

आक्रन्दाः स्तनितैर्विलोचनजलान्यश्रान्तधाराऽम्बुभि-<br>
स्तद्विच्छेदभुवश्च शोकशिखिनस्तुल्यास्तडिद्विभ्रमैः ॥<br>
अन्तर्मे दयितामुखं तव शशी वृत्तिः समैवावयो—<br>
स्तत्किं मामनिशं सखे ? जलधर ? त्वं दग्धुमेवोद्यतः ॥' इत्यादौ ।

हे सखे ? जलधर ? यतो मे ममाक्रन्दास्तव स्तनितै गर्जितैस्तुल्याः, तथा मे विलोचनजलान्यश्रूणि तेऽश्रान्तधाराऽम्बुभिः सन्ततासारजलैस्तुल्यानि, तथा मे तद्विच्छेदभुवः, प्रियाविरहोत्पन्नाः, शोकशिखिनः शोकाग्नयस्तव तडिद्विभ्रमैर्विद्युद्विलासैस्तुल्याः, तथा मे ममान्तर्भावनाविपयीभूतमिति यावत् दयिताया मुखम्, तवान्तश्चावृतमण्डलः शशी विद्यत इत्यावयोर्मम तव च, वृत्तिर्व्यापारो यतः समा तुल्यैव,

तस्मादनिशं सन्ततं, मां दग्धुं विरहानलप्रज्वालनेन भस्मीकर्तुमेव त्वं किमुद्यतोऽसीत्यर्थः ।

इत्यादावुदाहरणे श्लेषमन्तरेणापि केवलेन मेघविरहिणोः साम्यप्रतिपादनेन मेघे दाहोद्यमस्य वर्णनादाधिक्येन व्यतिरेकः स्फुरतीति न व्यतिरेकस्य श्लेषावश्यकत्वमिति कुतः श्लेषस्य व्यतिरेकाङ्गतेत्यभिप्रायः । वस्तुतस्तु–'रक्तस्त्वम्' इत्यादावङ्गाङ्गिभावात् सङ्कर एवेति ध्येयम् ।

उदाहरण बतलाते हैं—यथेति । वियोगी व्यक्ति बादलसे कहता है—हे सखे ! जलधर ! मेरा क्रन्दन तुम्हारे गर्जनके तुल्य है, तथा अश्रुधारा मुशलाधार वर्षाके सदृश है, एवं प्रिया विरह जन्य शोकाग्नि चमकती हुई बिजली जैसी है, और हृदयके अन्तर्गत विराजमान दयिताका मुख, आवृत चन्द्रमण्डल जैसा है, इसतरह हम दोनोंके तुल्य व्यवहार होने पर भी हमेशा तुम मुझको ही विरहानल धधकाकर जलानेके लिये क्यों इतना उद्यत (उतारू) हो रहे हो, यहां श्लेपके बिना भी केवल मेघ और विरही पुरुषमें साम्यके प्रतिपादनसे ही मेघमें दाहोद्यम प्रयुक्त आधिक्यके भान द्वारा व्यतिरेक भासित होता है, अतः व्यतिरेकमें श्लेपकी अपेक्षा नहीं होनेसे श्लेप व्यतिरेकका अङ्ग नहीं है ।

'नातिनिर्वहणैषिता' इत्यंशमुदाहर्तुमाह—

रसनिर्वहणैकतानहृदयो यो यं च नात्यन्तं निर्वोढुमिच्छति ।

चकारोऽन्यान् समीक्षाप्रकारान् समुच्चिनोति । रसनिर्वहणे रसबन्धनिर्वाह एकतानं सर्वथा प्रवणं हृदयं यस्य तादृशो यः कविः, यमलङ्कारं नात्यन्तं निर्वोढुमिच्छति, प्रबन्धप्रवृत्तमपि नासमाप्ति निनीषति, स यथा रसमुपकुर्वन्वास्तविकालङ्कारत्वं भजतीत्यर्थः ॥

आरम्भसे लेकर समाप्ति पर्यन्त अविच्छिन्नरूपसे रस प्रवाहको प्रवाहित करनेमें ही एकतान मनसे लगे हुए कविप्रवर रसपोषणार्थ जिस अलंकारको आदिमें निर्माण कर अन्त तक निभानेका प्रयास नहीं करते हैं, वह अलंकार भी रसका उपकारक होता हुआ वास्तविक अलंकारत्वको प्राप्त करता है ।

उदाहरति—

यथा—'कोपात्कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं,
नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः ॥
भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं,
धन्यो हन्यत एव निह्नुतिपरः प्रेयान्रुदत्या हसन् ॥'

सायं कोमला मृद्वी लोला च बाहुलतिकैव पाशस्तेन दृढं कोपाद्बद्ध्वा, तथा वासनिकेतनं भोगवासं नीत्वा, सखीनां पुरोऽग्रे, भूयो नैवं करिष्यसीति कोपसमुद्वेगेन स्खलन्ती त्रुट्यन्ती कला मधुरा गीर्वाग् यस्यास्तया रुदत्या क्रन्दन्त्या, दयितया दुश्चेष्टितं प्रेयसो दुर्व्यवहारं दन्तनखक्षतादिलक्षितं सम्यगङ्गुल्यादिनिर्देशेन सूचयित्वा, धन्यः सौभाग्यशाली हसन्, तथा निह्नुतिपरो हसनेनापराधापलापपरायणः, प्रेयान् हन्यते ताड्यत एव, न तु सौख्यादिकृतोऽनुनयो मनागप्यनुरुध्यत इत्यर्थः।

सखीनां पुर इति—भवत्योऽनवरतं ब्रुवते नायमेवं करोतीति, तत्पश्यन्त्विदानीमिति भावः इत्यभिनवगुप्तपादाः॥

जैसे—अत्यन्त कोमल चञ्चल बाहुलतारूप पाशसे क्रोधके मारे अत्यन्त दृढतापूर्वक बान्धकर सन्ध्याके समय केलिभवनमें ले जाकर सखियोंके सामने 'फिर तो ऐसा नहीं करेगा ?' इसतरह कोपवेगसे गिरगिराती हुई प्रेयसीने प्रियके अन्य नायिकाकृत दन्त-नखक्षतादि दुर्व्यवहारको अङ्गुली आदिके संकेत ( इशारे ) से बतलाकर, अपने अपराधको हास्य द्वारा छिपानेका प्रयास करनेवाले प्रियनायकको बुरी तरह पीटा, नकि उस ( नायक ) के प्रेमादि कृत अनुनयकी थोड़ी भी परवाह ( अपेक्षा ) की।

वक्तव्यमाह—

अत्र हि रूपकमाक्षिप्तमनिर्व्यूढं च।

बाहुलतिकापाशेत्यनेन रूपकं प्रारब्धम्, नतु समाप्तिं यावन्नीतमित्यर्थः। तथासति सुतरामर्थासङ्गतिः स्यात्। तदुक्तं लोचने 'बाहुलतिकायाः पाशत्वेन रूपणं यदि निर्वाहयेत्, दयिता व्याधवधूः, वासगृहं कारागारपञ्जरादीति परमनौचित्यं स्यात्' इति॥

उक्त स्थलमें यदि दयितामें व्याध-वधूत्व और केलिभवनमें कारागार-पञ्जरादित्वके आरोपण द्वारा बाहुलतिकामें पाशबन्धनके आरोपणात्मक रूपकको कवि अन्त तक निभानेका प्रयत्न करता, तो शृङ्गार रस ही भग्न हो जाता।

'निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्' इत्यन्तिममंशमुदाहर्तुमाह—

परं रसपुष्टये निर्वोढुमिष्टमपि यं यत्नादङ्गत्वेन प्रत्यवेक्षते।

रसपोषकत्वाद्यं परिसमापयितुमिष्टमप्यलङ्कारं कविरङ्गत्वेन यत्नात्पर्यालोचयतीत्यर्थः। यथेति शेषः॥

रसपुष्टिके लिये पर्यवसान ( अन्त ) तक रखनेकी प्रबल इच्छा रहने पर भी जिस अलंकारको अङ्ग ( गौण ) रूपसे ही कवि अन्त तक निभानेकी चेष्टा करता है, उसका उदाहरण आगे बतलाते हैं।

उदाहरति—

यथा—

विरही यक्षो जायां सन्दिशति—

'श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं,
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ॥
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्,
हन्तैकस्थं क्वचिदपि न ते भीरु! सादृश्यमस्ति ॥'

हे भीरु! कातरे! श्यामासु प्रियङ्गुलतासु तेऽङ्गम्। चकिताया हरिण्याः प्रेक्षणे विलोकने ते दृष्टिपातं दृग्व्यापारम्, शशिनि चन्द्रे ते वक्त्रस्य छायां कान्तिम्, शिखिनां मयूराणां बर्हभारेषु पिच्छकलापेषु ते केशान्, तथा प्रतनुषु कृशासु नद्या मन्दाकिन्या वीचिषु ते भ्रुवोर्विलासान् विभ्रमान् यद्यपि उत्पश्याम्युत्प्रेक्षे, तथापि हन्त! कष्टम्, एकस्थमेकस्मिन् पदार्थे स्थितं ते सादृश्यं क्वचिदपि नास्तीत्यर्थः।

तथा च 'श्यामा तु महिलाह्वया॥ लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली' 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' इत्यमरः।

कथंचित्पृथक् सादृश्यावलोकनेन जीवनं दधानोऽपि क्वचिदेकत्र सर्वसादृश्यमालोकयितुं दोलायमानोऽहं तदनुपलभ्य न निर्वृणोमीति तात्पर्यम्। 'भीरु' इतिसम्बोधनस्य 'यो हि कातरहृदयो भवति, नासौ सर्वस्वमेकस्थं धारयतीति' भाव इत्याचार्यः। 'अनेनास्याः सौन्दर्यमनुपममिति व्यज्यते' इति मल्लिनाथः। छायाशब्दस्य क्लीवत्वाभावोपपत्तिस्तु प्रागुक्तैव॥

विरहसे पीड़ित होकर यक्ष अपनी प्रेयसीके पास संदेश भेजता हुआ कहता है—हे भीरु! यद्यपि मैं प्रियङ्गुलतामें तेरे सुकुमार अङ्गकी, चकित हरिणीके प्रेक्षण में (तेरे) दृग्व्यापारकी, चन्द्रमामें (तेरे) मुखकान्तिकी, तथा मोरके पिच्छकलापमें (तेरे) केशपाशकी और मन्दाकिनीकी मन्द लहरोंमें (तेरे) भ्रूविक्षेपोंकी उत्प्रेक्षा (संभावना) कर रहा हूं, तो भी अत्यन्त खेदकी बात है—कहीं भी एक वस्तुमें तुम्हारे सारे अङ्गोंका पूरा सादृश्य नहीं मिलता, अर्थात् अलग अलग वस्तुमें तुम्हारे एक एक अङ्गके सादृश्यको देखकर कथंचित् जीवन धारण करने पर भी सारे अङ्गोंके एकत्र सादृश्य नहीं मिलनेसे मुझे पूर्ण शान्ति नहीं मिलती, इससे नायिकाका अनुपम सौन्दर्य सूचित होता है।

वक्तव्यमाह—

**इत्यादौ स एवमुपनिबध्यमानोऽलङ्कारो रसाभिव्यक्तिहेतुः कवेर्भवति।**

श्लोकेऽस्मिन्नुत्प्रेक्षाऽलङ्कारस्य निर्वाहकं साम्यं यथा प्रारब्धं तथैव परिसमापितमपि विप्रलम्भश्रृङ्गाररसं पुष्णात्येवेति निर्व्यूढस्यापि साम्यस्य यत्नाद्रसोपकारत्वेन समीक्षणादङ्गत्वमित्याकूतम् ॥

उक्त श्लोकमें उत्प्रेक्षालंकारका निर्वाहक कवि-निवद्ध-सादृश्य, आदिसे अन्त तक भासित होता हुआ, विप्रलम्भ श्रृङ्गारको पुष्ट करता है, और कविने समाप्ति पर्यन्त उसको रसपोषक बनानेका पूरा प्रयास किया है, इसलिये यह ( उत्प्रेक्षा अलंकार ) रसका अंग है।

उक्तसमीक्षाप्रकारातिक्रमे दोषमाह—

**उक्तप्रकारातिक्रमे तु नियमेनैव रसभङ्गहेतुः सम्पद्यते।**

असमीक्ष्य विनिवेशितो ह्यलङ्कारः शरीरस्येव रसस्यापकर्षमेव जनयति, नतूत्कर्षमिति भावः ॥

बिना समीक्षाके अलंकारके सन्निवेश करनेसे रसका अपकर्ष ही होता है, उत्कर्ष नहीं होता।

नन्वसमीक्षितालङ्कारसन्निवेशं लक्ष्यं न सम्भवति, विरलमेव वा सम्भवतीत्याशङ्कायामाह—

**लक्ष्यं च तथाविधमपि महाकविप्रबन्धेषु दृश्यते बहुशः।**

महाकवीनामपि कदाचिदलङ्कारैकाभिनिवेशेन रसानुसन्धिविरमात् ॥ चकारः पुनरर्थकः ॥

महाकवियोंके भी प्रबन्धोंमें प्रायः करके इस तरहकी कमी ( अस्तव्यस्तरूपमें अलंकारोंका संनिवेश रूप त्रुटि ) देखी जाती है।

ननु तर्हि कथं न तद् विभज्य दर्शितमित्यत आह—

**तत्तु सूक्तिसहस्रद्योतितात्मनां महात्मनां दोषोद्घोषणमात्मन एव दूषणं भवतीति न विभज्य दर्शितम्।**

सूक्तिः सुभाषितं तासां सहस्रेण द्योतिताः प्रख्यापिता आत्मानो यैस्तेषां महात्मनां महीयसां कवीनां तत्तादृशविभागपूर्वकं दोषाणां स्खलितानामुद्घोषणं प्रख्यापनम् , आत्मन उद्घोषकस्यैव दूषणं दोषो भवतीति तथा नोक्तं तदित्यर्थः। महीयसां

स्वयशोविदितानां दोषप्रख्यापक एव लोकैर्दुष्टो मन्यत इति भिया तद्विवरणं विस्तरेण मया न कृतम्। तावता तत्र सम्भवत्येवेति न मन्तव्यमित्यभिप्रायः ॥

हजारों सुभाषितोंसे विश्व भरमें कीर्ति प्राप्त किये हुए उन महापुरुषोंके दोषोंके उद्घोषण (प्रचार) से उद्घोषक व्यक्तिकी ही निन्दा होती है, अर्थात् महान् पुरुषकी निन्दा करनेसे निन्दक व्यक्ति ही निन्दित होता है। इसलिये विश्लेषणके साथ उनके दोषोंका उद्घाटन करना मैं उचित नहीं समझता, एतावता यह नहीं समझना चाहिये कि त्रुटियां हो ही नहीं सकतीं।

ननु तेषां दोषलक्ष्याणामनुक्तानामज्ञानात् कथं निर्वाह इत्यत आह—

किन्तु रूपकादेरलङ्कारवर्गस्य येयं व्यञ्जकत्वे रसादिविषये (वि) लक्षणादिग् दर्शिता, तामनुसरन् स्वयं चान्यल्लक्षणमुत्प्रेक्षमाणो यद्यलक्ष्यक्रमपतितमनन्तरोक्तमेनं ध्वनेरात्मानमुपनिबध्नाति सुकविः समाहितचेताः, तदस्यात्मलाभो भवति महीयानिति ।

रूपकादेरलङ्कारवर्गस्य, रसादिविषये व्यञ्जकत्वे रसादिविषयकव्यञ्जनकारित्वविषये, इयमधुनैवोक्ताया लक्षणायाः समीक्षाया दिक् पद्धतिः, तामनुसरन्ननुशीलयन्, स्वयम् अन्यदनुक्तं चापि लक्षणं समीक्षाप्रकारम्, उत्प्रेक्षमाणो दर्शितया दिशोहमानः, समाहितचेताः सावधानः सुकविर्यदि अनन्तरमिदानीमेवोक्तम्, अलक्ष्यक्रमपतितमसंलक्ष्यक्रममेनं ध्वनेरात्मानं स्वरूपमुपनिबध्नाति, तत्तदाऽस्य कवेर्महीयानात्मलाभः कवित्वलाभो भवतीत्यर्थः ।

प्रत्युदाहरणदर्शनेऽप्युदाहरणमात्रपर्यालोचनेन स्वयं समीक्षाप्रकारान्तरतर्कणेन च रसादिध्वनिं रचयत एव कृतार्थतेति न तादृशी प्रत्युदाहरणप्रदर्शनापेक्षेति हृदयम् ।

इतिशब्दोऽसंलक्ष्यक्रमध्वनिनिरूपणसमाप्तिसूचकः । अत्राहुर्लोचनकाराः—'अन्यल्लक्षणमिति परीक्षाप्रकारमित्यर्थः । तद्यथाऽवसरे त्यक्तस्यापि पुनर्ग्रहणमित्यादि'।

यथा ममैव—

'शीतांशोरमृतच्छटा यदि कराः कस्मान्मनो मे भृशं,
संप्लुष्यन्त्य (थ) कालकूटपटली–संवाससन्दूषिताः ॥
किं प्राणान्न हरन्त्युत प्रियतमासञ्जल्पमन्त्राक्षरै–
रक्ष्यन्ते किमु मोहमेमि हहहा नो वेद्मि केयं गतिः ॥'

इत्यत्र हि रूपकसन्देहनिदर्शनास्त्यक्त्वा पुनरुपात्ता रसपरिपोषायेत्यलम्, इति ॥

किन्तु रूपकादि अलंकार समुदायके रसादिविषयक व्यञ्जन क्रमका मैंने जो समीक्षा-प्रकार बतलाया है, उसका परिशीलन करके अनुक्त समीक्षा-प्रकारको भी स्वयं ऊहापोह करते हुए प्रतिभाशाली कवि यदि सावधान पूर्वक पूर्वोक्त असंलक्ष्य क्रमव्यङ्ग्य ध्वनि स्वरूपका हृदयंगम कर निरूपण करेंगे, तो उनको अवश्य ही अत्यन्त प्रशंसनीय कवित्व शक्ति प्राप्त होगी।

इत्थमसंलक्ष्यक्रमध्वनिं निरूप्य सम्प्रति प्रतिपन्नावसरं विवक्षितान्यपरवाच्य-ध्वनिद्वितीयभेदं संलक्ष्यक्रमं निरूपयन् विभजते—

**क्रमेण प्रतिभात्यात्मा योऽस्यानुस्वानसन्निभः ॥**
**शब्दार्थशक्तिमूलत्वात् सोऽपि द्वेधा व्यवस्थितः ॥ ४२ ॥**

अस्य विवक्षितान्यपरवाच्यध्वनेः अनुस्वानसन्निभो घण्टादिशब्दानन्तरजाय-मानप्रतिशब्दसदृशः संलक्ष्यक्रम इति यावत्, य आत्मा स्वरूपप्रकार आभाति, सोऽपि शब्दार्थशक्तिमूलत्वाच्छब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति द्वेधा द्विप्रकारको व्यवस्थित इत्यर्थः ॥

उक्त रीतिसे असंलक्ष्य क्रमव्यङ्ग्य ध्वनिका निरूपण कर संलक्ष्य क्रमव्यङ्ग्य ध्वनिका निरूपण करते हैं—क्रमेणेति। विवक्षितान्यपरवाच्य ध्वनिका, घण्टा आदिसे उत्पन्न ध्वनिके बाद क्रमशः उत्पन्न प्रतिध्वनि (टनटनाहट) के सदृश जो संलक्ष्य क्रमव्यङ्ग्य ध्वनिका स्वरूप प्रकार है, वह शब्दशक्तिमूल और अर्थशक्तिमूलके भेदसे दो प्रकारका माना गया है।

तदाह वृत्तिकारः—

**अस्य विवक्षितान्यपरवाच्यस्य ध्वनेः स क्रमव्यङ्ग्यत्वादनुरणनप्रख्यो य आत्मा सोऽपि शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति द्विप्रकारः।**

यथा घण्टाशब्दस्य तदुत्तरं 'जायमानस्य तत्प्रतिशब्दस्य च' क्रमः सुलक्ष्यो भवति, तथैव वाच्यप्रतीत्यनन्तरं जायमानाया रसादिभिन्नव्यङ्ग्यप्रतीतेरित्युभयोः साम्य-मवगन्तव्यम्। अनुरणनप्रख्यः प्रतिशब्दसदृशः। उपलक्षणमिदं शब्दार्थशक्तिमूलस्य तृतीयभेदस्यापि। तथाच प्रकाशे—

'अनुस्वानाभसंलक्ष्य-क्रमव्यङ्ग्यस्थितिस्तु यः।
शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ॥'

इति विभज्य, 'शब्दार्थोभयभूरेकः' इत्येकविधत्वं च प्रतिपाद्य,

'अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा ।
तारकातरला श्यामा सानन्दं न करोति किम् ॥' इत्युदाहरणं दर्शितम् ।

वृत्तिकार उक्ताशयको स्फुट करते हैं—अस्येति । विवक्षितान्यपर वाच्यध्वनिका घण्टा आदिके अनुरणन सदृश वाच्यप्रतीतिके अनन्तर जायमान रसादिभिन्न व्यङ्ग्य प्रतीतिका जो क्रम लक्षित होता है, उसके शब्दशक्तिमूल अर्थशक्तिमूल और शब्दार्थोभयशक्तिमूलके भेदसे तीन प्रकार बतलाये गये हैं ।

ननु शब्दशक्तिरभिधैव, तया यत्र द्वितीयार्थस्य प्रतीतिर्भवति, स यदि शब्दशक्तिमूलध्वनेः प्रकार इदानीमुच्यते, तर्हि श्लेषालङ्कारो निरवकाशः स्यात्, श्लेषलक्ष्याणामप्येतेनध्वनिप्रकारेणाक्रान्तत्वात्, श्लेषेऽपि द्वितीयार्थस्याभिधयैव बोधनीयत्वादिति चेत्, न श्लेषध्वन्योरुच्यमानरीत्या विषयभेदस्य व्यवस्थानादिति सर्वं दर्शयन् शब्दशक्त्युद्भवध्वनिनिरूपिकां कारिकामवतारयति वृत्तिकारः ।

ननु शब्दशक्त्या यत्रार्थान्तरं प्रकाशते, स यदि ध्वनेः प्रकार उच्यते, तदिदानीं श्लेषस्य विषय एवापहृतः स्यात्, नापहृत इत्याह—

'आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते ॥
यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥ ४४ ॥

एवकारो भिन्नक्रमोऽलङ्काराद्वस्तु व्यवच्छिनत्ति । हि यस्माद् यस्मिन् काव्ये शब्देनानुक्तश्शब्दानभिहितः, अतएवाक्षिप्तो व्यक्तः, अलङ्कार एव नतु वस्त्वपि, शब्दशक्त्याऽभिधामूलव्यञ्जनया प्रकाशते, स शब्दशक्त्युद्भवो ध्वनिरित्यर्थ ॥

अभिधात्मक शब्द शक्तिसे जहां द्वितीय अर्थका बोध होता है, वही यदि शब्दशक्तिमूल ध्वनिका विषय कहा जाय, तो श्लेषमें भी अभिधासे ही द्वितीय अर्थके बोध होनेसे श्लेषभी उक्त ध्वनिसे ही गतार्थ हो जायगा, इस शंकाको दूर करनेकी भावनासे श्लेष और ध्वनिके विषयविभागको बतलाने लिये वृत्तिकार भूमिका रचते हैं—ननु इति । जिस काव्यमें शब्दसे अभिहित नहीं होकर अपितु अभिव्यक्त होकर केवल अलंकार मात्र ही अभिधामूल व्यञ्जनासे भासित होता है, उसे शब्दशक्त्युद्भव ध्वनि कहते हैं ।

तदाह—

यस्मादलङ्कारो न वस्तुमात्रम्, यस्मिन् काव्ये शब्दशक्त्या प्रकाशते, स एव शब्दशक्त्युद्भवो ध्वनिरित्यस्माकं विवक्षितः ।

हिशब्दस्य विवरणं यस्मादिति, एवशब्दस्य न वस्तुमात्रमिति । 'अस्माकं विवक्षितः, इत्यनेन परैश्शब्दशक्त्युद्भवो वस्तुध्वनिरपि स्वीक्रियते,

'पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ॥
उण्णअपओहरं पेक्खिऊण जइ वससि ता वससु ॥'
'पथिक ! नात्र स्रस्तरमस्ति मनाक्प्रस्तरस्थले ग्रामे ॥
उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस ॥' इतिच्छाया ॥

इत्युदाह्रियते चेति सूचितम् ॥

वृत्तिकार उक्त मौलिक सिद्धान्तको व्यक्त करते हैं—यस्मादिति । जिस काव्यमें (व्यङ्ग्य) वस्तु नहीं, अपितु (व्यङ्ग्य) अलंकारमात्र ही अभिधामूल व्यञ्जना वृत्तिसे व्यक्त होता है, ग्रन्थकार उसीको शब्दशक्त्युद्भव ध्वनि मानते हैं। एतावता अन्यमतोंसे शब्दशक्त्युद्भव वस्तु ध्वनिके होने पर भी स्वमतसे शब्दशक्त्युद्भव अलंकार ध्वनिमात्र ही अभिप्रेत है ।

श्लेषस्य विषयपृथग्भावं दर्शयति—

**वस्तुद्वये च शब्दशक्त्या प्रकाशमाने श्लेषः ।**

चस्त्वर्थे । वस्तुनोर्नत्वलङ्कारयोरुभयोरर्थयो र्यद्यभिधयैव बोधस्तदा श्लेषालङ्कार इत्यर्थः ।

अयमाशयः—संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥'

इति वाक्यपदीयोक्तैरभिधानियामकैरनेकार्थकस्य शब्दस्यैकस्मिन्नर्थेऽभिधायां नियमितायामपरस्यार्थस्य बोधनमभिधया दुर्घटमित्यभिधामूलव्यञ्जनया यत्रापरोऽर्थो बोध्यते, स शब्दशक्त्युद्भवध्वनिः, तत्र शब्दस्य परिवृत्त्यसहत्वात्तु शब्दशक्त्युद्भवत्वम् । यत्र पुनः संयोगादिविरहादनियताभ्यामभिधाभ्यामेवार्थद्वयं समशिरस्कं प्रत्याय्यते, स श्लेष इति श्लेषविषयस्य व्यञ्जनासम्बन्धवैधुर्यान्न ध्वनिनाऽऽक्रमणं सम्भवति ॥

अब श्लेष अलंकारका विषय बतलाते हैं—वस्तु इति । वस्तुद्वयमात्रका (अलंकारका नहीं) जहां अभिधासे ही बोध होता है, वहां श्लेष अलंकार माना जाता है, अर्थात् प्रकरणादि वश अनेकार्थक शब्दके किसी एक अर्थमें अभिधाके

नियन्त्रित होने पर, जहाँ अभिधामूल व्यञ्जनासे ही द्वितीय अर्थका बोध होता है, वहां शब्दशक्त्युद्भव ध्वनि मानी जाती है, और जहां प्रकरणादिके अभाव दशामें अनियन्त्रित अभिधाओंसे ही अर्थद्वयका समान शब्द वश बोध होता है, वहां श्लेषका विषय समझा जाता है, अतः श्लेषके विषयमें व्यञ्जनाका सम्बन्ध नहीं होनेसे, ध्वनिसे उस (श्लेष) का गतार्थ नहीं हो सकता, क्योंकि उक्त ध्वनिमें एक वाच्य और दूसरा व्यङ्ग्य होता है, पर श्लेषमें दोनों वाच्यार्थ ही होते हैं।

श्लेषेऽर्थद्वयस्य वाच्यतां दर्शयितुमुदाहरति—

यथा—'येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो,
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गाञ्च योऽधारयत् ॥
यस्याहुश्शशिमच्छिरोहर इति स्तुत्यं च नामामराः,
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः ॥'

सुभाषितावल्यामुद्धृतं चन्द्रककवेः पद्यमिदम्। अस्य विष्णुपक्षे—येन गृहीतकृष्णावतारेण, अनश्शकटं तद्रूपं रक्षो ध्वस्तं पातितम्, तथाऽभवेनाजन्मना पुराऽमृतपरिवेषणकाले, बलिं तदाख्यदैत्यं जयतीति बलिजित् तस्य कायो देहः स्त्रीकृतो मोहिनीरूपतां आपितः, तथा यः पुनरुद्वृत्तस्योद्धताचरणस्य भुजङ्गस्याघासुरस्य हन्ता, तथा नामरूपात्मकजगतो ब्रह्मणि लयस्य श्रवणाद्यो रवाणां शब्दानां लयो यत्र तादृशः, यद्वाऽरेरिदमारम्, आरं बलं सैन्यं यातीत्यारवलयः, तथाऽगं गोवर्धनगिरिं; कृष्णस्सन् करेण गां पृथ्वीं च वराहस्सन् दंष्ट्रया योऽधारयत्, तथा शशिनं मथ्नातीति शशिमद्राहुस्तस्य शिरसो हरश्छेदक इति यस्य स्तुत्यं प्रशस्यं नाम नामधेयममरा देवा आहुः, सोऽन्धकानां यादवानां क्षयकरो नाशकरो गृहनिर्मायको वा सर्वदश्चतुर्वर्गप्रदः स्वयं माधवो लक्ष्मीपतिस्त्वां पायादित्यर्थः।

शिवपक्षे तु—येन ध्वस्तमनोभवेन नाशितकामेन पुरा त्रिपुरासुरदाहावसरे बलिजित्कायो विष्णुदेहोऽस्त्रीकृतश्शरीकृतः, तथा य उद्वृत्ता उद्धता अतिवर्तुलीभूतावयवा भुजङ्गा एव हारा वलयानि च यस्य तादृशः, तथा गङ्गां शिरसा योऽधारयत्, तथा यस्य शिरः शशयस्त्यस्मिन्निति शशिमत्, तथा यस्य हर इति स्तुत्यं नामामरा आहुः, यद्वा शशिमच्छिरो यस्यासौ शशिमच्छिराः। स चासौ हर इति स्तुत्यं नामामरा आहुः। सोऽन्धकस्य तदाख्यासुरस्य क्षयकरः स्वयमुमाधवो गौरीपतिः सर्वदा त्वां पायादित्यर्थः।

तथाच 'अनः क्लीबं जले शोके मातृस्यन्दनयोरपि' इति विश्वः। 'भवः क्षेमेश-

संसारे सत्तायां प्रान्तिजन्मनोः' इति मेदिनी। 'क्षयो गेहे च कल्पान्ते ऽपचये रुजि' इति हैमः। 'धवः प्रियः पतिर्भर्ता' इत्यमरश्च।

अत्राभिधानियामकाभावादर्थद्वयस्य वाच्यत्वाच्छ्लेषो न तु ध्वनिः॥

श्लेषमें अर्थद्वयकी वाच्यता दिखलाते हैं—यथेति। कवि विष्णु और शिवसे श्लेष द्वारा राजाकी शुभकामना विषयक प्रार्थना करते हैं—विष्णु पक्षमें—कृष्णावतार लेकर जिसने शकट नामक राक्षसको ध्वस्त किया, तथा अजन्मा होते हुए भी अमृत परिवेषण कालमें बलिजित् वामन अवतार द्वारा मोहिनीरूप धारण कर दैत्योंको छला, एवं अत्यन्त उद्धत अघासुरको मार डाला, तथा नामरूपात्मक जगत्के लय स्थान होनेसे जो शब्दका लय स्थान है, तथा जिसने गोवर्द्धन और वराहरूप धारण कर पृथिवीका भार उठाया। एवं जिसके 'राहुशिरश्छेदक' नामको देवोंने अत्यन्त स्तुत्य बतलाया है, वह यादवोंका भी क्षयकारी लक्ष्मीपति चतुर्वर्गदाता भगवान् विष्णु आपकी रक्षा करे। शिवपक्षमें—कामको जलानेवाले जिस शंकरने त्रिपुरासुरके दाहावसरमें विष्णु शरीरको अस्त्र बनाया, तथा जिसने वलया जैसे भुजङ्गोंको ही हाथोंमें लपेटे हुए जटामें गङ्गाको धारण किया है, एवं जिसका मस्तक चन्द्रमा युक्त है, और जिसके 'हर' नामको देवोंने अत्यन्त स्तुत्य कहा है, वह, अन्धक नामक असुर ध्वंसकारी गौरीपति शंकर भगवान् सर्वदा आपकी रक्षा करे, यहां अभिधाका नियन्त्रण नहीं होनेसे उक्त दोनों अर्थोंमें श्लेष ही है, ध्वनि नहीं।

कारिकाघटकस्य 'आक्षिप्तः' इति पदस्य कृत्यं दर्शयति—

नन्वलङ्कारान्तरप्रतिभायामपि श्लेषव्यपदेशो भवतीति दर्शितं भट्टोद्भटेन, तत्पुनरपि शब्दशक्तिमूलो ध्वनिर्निरवकाश इत्याशङ्क्येदमुक्तम्—'आक्षिप्तः' इति।

प्रतिभा प्रतीतिः। यत्रैकस्मादन्योऽप्यलङ्कारात्माऽर्थः प्रतीयेत स श्लेष इत्युद्भटभट्टमतम्। एवञ्च (अत्रान्तरे च कुसुमसमययुगम्) इत्यादिवक्ष्यमाणशब्दशक्तिमूलध्वनेरुदाहरणेष्वप्युपमाऽलङ्काररूपस्यापरार्थस्य भानाच्छ्लेषेणैवाक्रान्तेषु शब्दशक्त्युद्भवध्वनेरनवकाशत्वमापाद्यमानं निराकर्तुं ध्वनिकारः पूर्वकारिकायामलङ्कारात्मनोऽपरार्थकस्य व्यङ्ग्यत्वरूपमाक्षिप्तत्वं विशेषणमुक्तवान्। तेनालङ्कारान्तरस्यापि वाच्यत्वे श्लेषः व्यङ्ग्यतायां तु ध्वनिरिति नानवकाशता ध्वनेरित्याकूतम्।

जहां एकसे अधिक दूसरा भी अलंकार रूप अर्थ प्रतीत होता है, वहां श्लेषका व्यवहार होता है, इस भट्ट उद्भटके मतसे वक्ष्यमाण शब्दशक्तिमूल ध्वनिके

उदाहरणमें भी उपमा—अलंकार रूप अपर अर्थके भान होनेसे शब्दशक्त्युद्भव ध्वनिको श्लेषसे गतार्थ होनेकी शंकाको दूर करनेके अभिप्रायसे ध्वनिकारने अलंकार रूप अपर अर्थको व्यङ्ग्यत्व सूचित करनेवाले 'आक्षिप्त' पदका प्रयोग किया है, उससे यह सिद्ध हुआ कि उक्त अलंकारकी वाच्यता होने पर श्लेष और व्यङ्ग्यता होने पर पूर्वोक्त ध्वनि मानी जायगी, अतः ध्वनिका अनवकाश नहीं हुआ।

तदेवाह समासेन—

**तदयमर्थः—अत्र शब्दशक्त्या साक्षादलङ्कारान्तरं वाच्यं सत् प्रतिभासते, स सर्वः श्लेषविषयः। यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालङ्कारान्तरं प्रकाशते, स ध्वनेर्विषयः।**

शब्दशक्त्याऽभिधया। ध्वनौ परम्परया शब्दशक्त्याऽलङ्कारप्रकाशनात् साक्षादिति। सामर्थ्याक्षिप्तं व्यञ्जनावृत्तिप्रत्यायितम्। इतरद्व्याख्यातमेव।

वृत्तिकार उसीको संक्षेप करते हैं—तदयमर्थ इति। जहां अभिधात्मक शब्दशक्तिसे साक्षात् ही अलंकारान्तर वाच्यरूपसे भासित होता है, वह सारा ही श्लेषका विषय समझा जाता है, परन्तु जहां अभिधामूल व्यञ्जनासे अभिव्यक्त होकर अलंकारान्तर, वाच्यव्यतिरिक्त व्यङ्ग्यरूपसे ही प्रकाशित होता है, वह उक्तध्वनिका विषय होता है।

अपरालङ्कारस्य वाच्यत्वे श्लेषमुदाहर्तुमाह—

**शब्दशक्त्या साक्षादलङ्कारान्तरप्रतिभा यथा—**

**'तस्या विनाऽपि हारेण निसर्गादेव हारिणौ॥**
**जनयामासतुः कस्य विस्मयं न पयोधरौ॥'**

हारं मुक्तामाल्यं विनाऽपि निसर्गात्स्वभावादेव, हारिणौ मनोहरौ, तस्याः पयोधरौ कुचौ, कस्य विस्मयमाश्चर्यं न जनयामासतुः, अपितु सर्वस्येत्यर्थः।

अत्र हारं विनाऽपि हारिणौ हारवन्ताविति विरोधः, मनोहराविति तत्परिहारे 'विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः' इति प्रकाशलक्षितो विरोधाभासोऽपि शब्दसाक्षाद्वाच्यः। शृङ्गारस्यव्यभिचारिभावश्च विस्मयः स्वशब्दसाक्षाद्वाच्य इति श्लेषस्यायं विषयो, न तु ध्वनेरिति बोध्यम्॥

अपर अलंकारके वाच्य विषयक श्लेषके उदाहरणार्थ अवतरण देते हुए शब्दशक्तिसे साक्षात् प्रतीयमान अलंकारान्तरका लक्ष्य बतलाते हैं—जैसे मुक्ताहारके

विना भी स्वभावसे ही अत्यन्त मनोहर उस नायिकाका स्तनद्वय किस व्यक्तिको चकित नहीं करता, अपितु सबको ही चकित करता है। यहां हारके विना भी हारवाला कहनेसे विरोध लगता है, परन्तु, 'हारिणौ' का हारवाला अर्थ नहीं करके मनोहर अर्थ कर देनेसे विरोध दूर होकर विरोधाभासमें परिणत हो जाता है, और उसको 'अपि' शब्द साक्षात् ही वाच्यरूपमें सूचित कर रहा है, इसलिये शृंगार-रसके स्वशब्द वाच्य विस्मयाख्य व्यभिचारी भावकी भांति श्लेषका ही यह विषय है, उक्त ध्वनिका विषय नहीं है।

तदाह—

**अत्र शृङ्गारव्यभिचारी विस्मयाख्यो भावः साक्षाद्विरोधालङ्कारश्च प्रतिभासत इति विरोधच्छायाऽनुग्राहिणः श्लेषस्यायं विषयः, न त्वनुस्वानोपमव्यङ्ग्यस्य ध्वनेः।**

विरोधच्छायाऽनुग्राहिणो विरोधानुप्राणकस्य। अनुस्वानोपमव्यङ्ग्यस्य शब्दशक्तिमूलसंलक्ष्यक्रमव्यङ्ग्यस्य। 'विस्मयाख्यो भाव इति दृष्टान्ताभिप्रायेणोपात्तम्। यथा विस्मयः शब्देन प्रतिभाति विस्मयइत्यनेन, तथा विरोधोऽपि प्रतिभात्यपीत्यनेन शब्देन' इत्याचार्याः॥

वृत्तिकार उसको विशद करते हैं—अत्रेति। उक्तस्थलमें शृंगारका व्यभिचारी विस्मयाख्य भाव जैसे साक्षात् स्व ( विस्मय ) शब्दसे अभिहित होता है, वैसे ही विरोधाभास अलंकार भी 'अपि' शब्दसे साक्षात् ही वाच्यवृत्त्या विदित होता है, इसलिये विरोधाभासके अनुग्राहक श्लेषका यह विषय है, शब्दशक्तिमूल उक्त संलक्ष्यक्रम व्यङ्ग्य ध्वनिका विषय नहीं।

ननु किं कोऽपि ध्वनिरिह नास्त्येवेत्याशङ्कायामाह—

**अलक्ष्यक्रमव्यङ्ग्यप्रतिभासस्य तु ध्वनेर्वाच्येन श्लेषेण विरोधेन वा व्यञ्जितस्य विषय एव।**

'तस्या विनाऽपि' इत्यादिश्लोको यद्यपि संलक्ष्यक्रमध्वनेर्न विषयः, किन्तु वाच्येन श्लेषानुप्राणितविरोधेन व्यञ्जनावृत्त्या प्रकाशितस्यासंलक्ष्यक्रमस्य शृङ्गाररसध्वनेर्विषयोऽस्त्येवेति नात्र सर्वथा ध्वन्यभावः। 'वा ग्रहणेन श्लेषविरोधसङ्करालङ्कारोऽयमिति दर्शयति। अनुग्रहयोगादेकतरत्यागग्रहणनिमित्ताभावो हि वाशब्देन सूच्यते' इति लोचनम्॥

उक्तश्लोकमें संलक्ष्यक्रमव्यङ्ग्यध्वनिकी विषयता नहीं रहने पर भी वाच्यभूत श्लेषानुगृहीत विरोधसे व्यञ्जनाद्वारा प्रकाशित असंलक्ष्यक्रम व्यङ्ग्यरूप शृङ्गार

रसध्वनिकी विषयता नियतरूपसे भासित होती है, अतः सर्वथा ध्वनिका अभाव नहीं है।

स्वकीयमुदाहरणान्तरमाह—

यथा ममैव—'श्लाघ्याशेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजित-
त्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः ॥
बिभ्राणां मुखमिन्दुरूपमखिलं चन्द्रात्मचक्षुर्दधत्,
स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात् ॥'

श्लाघ्या प्रशंसनीयाऽशेषा तनु र्यस्यास्ताम्, तथा सर्वेषामङ्गानां लीलाभिश्चेष्टाभिर्जितं त्रैलोक्यं यया ताम्, तयेन्दुरूपमखिलं मुखं बिभ्राणां दधतीम्, यां रुक्मिणीम्, शोभनं दर्शनं यस्यासौ सुदर्शनस्तादृशः करो हस्तो यस्य सः, करमात्रेण सुन्दरः, वस्तुतः सुदर्शनं तदाख्यचक्रं करे यस्य सः, एवं चरणारविन्दस्य ललितेन चेष्टाविशेषेणाक्रान्तो जितो लोको भुवनं येन सः, चरणमात्रेण लोकविजयी, वस्तुतो वामनावतारे चरणेनैव समस्तलोकाक्रमणकारी, एवं चन्द्रात्म चन्द्ररूपं चक्षुर्दधत्, चक्षुर्मात्रेण चन्द्रवान, वस्तुतश्चन्द्रनेत्रः, हरिः कृष्णः, स्वतनोः स्वशरीरादधिकामुत्कृष्टां स्थाने युक्तमपश्यत्, सा रुक्मिणी, वो युष्मानवताद्रक्षतादित्यर्थः।

इह 'लीलाविलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम्।
मोट्टायितं कुट्टमितं बिब्वोको ललितं तथा।
विहृतं चेति मन्तव्या दश स्त्रीणां स्वभावजाः ॥'

इति नाटकरत्नकोशात्स्त्रीमात्रवृत्तिव्यापारस्यापि ललितस्य भगवच्चरणारविन्दसम्बन्ध आरोपितो बोध्यः। तनुशब्दस्य च द्विरुपादानं रसमपकर्षति। सुदर्शनादिपदवृत्तिना श्लेषेणानुगृहीतो भगवदपेक्षया रुक्मिण्या आधिक्यवर्णनादुत्थापितो गम्यसाम्यसम्पादितो व्यतिरेकालङ्कारो वाच्यतयैव प्रतीयते इति न संलक्ष्यक्रमध्वनिः ॥

वाच्यभूत अलंकारका स्वरचित उदाहरण देते हैं—यथेति। जैसे-कवि, राजा को आशिष देता है—अत्यन्त प्रशंसनीय सर्वाङ्गसुन्दरी, एवं मुखनयनादि अवयवोंके अत्यन्त लावण्य छविछटासे तीनों लोकोंको जीतनेवाली तथा चन्द्ररूप सारे मुखमण्डलको धारण की हुई जिस रुक्मिणीको केवल सुन्दर हाथवाले या सुदर्शनचक्रधारी एवं केवल ललित चरण कमलसे इस भुवनको जीतनेवाले तथा चन्द्ररूप केवल चक्षुमात्रको धारण करनेवाले भगवान् कृष्णने अपने शरीरसे भी वास्तवमें अधिक उत्कृष्ट समझा, वह रुक्मिणी आपकी रक्षा करे।

तदाह—

अत्र वाच्यतयैव व्यतिरेकच्छायानुग्राही श्लेषः प्रतीयते ।

'सुदर्शनकरः' 'अधिकाम्' इति शब्दाभ्यां श्लेषव्यतिरेकयोः सङ्करो वाच्य एवेत्यर्थः ॥

यहां सुदर्शनादि पदवृत्ति श्लेषकी महिमासे भगवान् कृष्णकी अपेक्षा रुक्मिणी के आधिक्यके प्रतिपादन द्वारा गम्यमान सादृश्य पूर्वक व्यतिरेकालंकार 'अधिक' आदि पदसे वाच्यरूपमें ही प्रतीत होता है, अर्थात् 'सुदर्शनकर' और 'अधिक' शब्दोंके प्रयोगसे श्लेप-व्यतिरेकका संकर वाच्यरूपसे ही प्रतीत होता है, अतः संलक्ष्यक्रम व्यङ्ग्यध्वनि नहीं है ।

पुनरुदाहरति—

यथा च—'भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥'

नायिकाऽवस्थां नायकं बोधयितुं सामान्यतो वर्षावर्णनपरा सख्या उक्तिरियम् । जलदो मेघ एव भीषणतया भुजगः सर्पस्तस्माज्जातं विषं सलिलमेव विषं गरलम्, वियोगिनीनाम्, भ्रमिं शिरोभ्रमणं चेतोविकारविशेषं वा, अरतिं विषयानभिलापमानन्दाभावं वा, अलसहृदयतां मानसौदास्यम्, प्रलयं बाह्येन्द्रियव्यापारवैधुर्यम्, मूर्च्छां बाह्यान्तरेन्द्रियव्यापाराराहित्यम्, तमस्तमोगुणोद्रेकेणान्ध्यम्, शरीरस्य सादं कार्श्यं पीडां वा, मरणं जीवननिर्गमारम्भं च वा प्रसह्य हठात् कुरुते करोतीत्यर्थः ।

तथा च 'विषं च गरले तोये' इति मेदिनी । 'जीवस्योद्गमनारम्भो मरणं परिकीर्तितम्' इति प्रदीपश्च । इह 'यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ॥ अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥' इति श्रुतबोधोक्तार्यालक्षणस्य अतिचरणमेकमात्राधिक्येनासमन्वये 'अत्रानुक्तं गाथा' इति पिङ्गलच्छन्दस्सूत्रानुशासनाद्गाथाच्छन्दः ।

जलद एव भुजग इति रूपकस्य विषपदश्लेषः साधक इति श्लेषानुप्राणितं रूपकमलङ्कारो वाच्यतयैव प्रतीयत इत्यग्रेऽनुपदं वक्ष्यति ॥

वाच्यभूत अलंकारका दूसरा उदाहरण देते हैं—यथेति । एक सखी नायकके प्रति वर्षा वर्णनद्वारा नायिकाकी दयनीय अवस्थाको सूचित करती है—जलदरूप विषैले सर्पसे वृष्टिवमन द्वारा निकला हुआ जल रूप गरल, विरहिणी नायिकाको चक्कर या चित्त विकार तथा विषयानभिलाप एवं मानसिक उदासीनता, बाह्येन्द्रिय व्यापार शून्यता, तथा मूर्च्छा, स्तब्धता, एवं तमोगुणके बाहुल्य जन्य अन्धेरापन और शरीरकी कृशता या पीड़ा देकर मार रहा है, यहां जलदमें भुजङ्ग-

त्वके आरोप द्वारा प्रतीयमान रूपकालंकारका, विषपदवृत्ति अर्थश्लेष ही साधक हो रहा है, इसलिये श्लेषानुगृहीत रूपकालंकार वाच्यरूपसे ही प्रतीत होता है।

पुनरुदाहरति—

'चमहिअमाणसकञ्चण-णिम्महिअपरिमला जस्स।
अखण्डिअदाणपसारा बाहुप्पलिहा व्विअ गइन्दा॥'
'(खण्डित) मानसकाञ्चनपङ्कजनिर्मथितपरिमला यस्य।
अखण्डितदानप्रसरा बाहुपरिघा एव गजेन्द्राः॥' इतिच्छाया।

कश्चन चाटुकारो राजानं वर्णयति। अस्फुटार्थाऽस्फुटच्छाया चेयं गाथा प्रकोष्ठस्थच्छायां कल्पयित्वा कथञ्चिद्व्याख्यायते—खण्डितानां त्रोटितानां मानसस्य तदाख्यसरसः काञ्चनपङ्कजानां निर्मथितो विजृम्भितः परिमलो विमर्दोत्थातिमनोहरगन्धो येषु तादृशाः, पक्षे खण्डितानि निराशीकृतत्वेन विहतानि शत्रूणां मानसानि हृदयान्येव सुसारतया काञ्चनपङ्कजानि, तैर्निर्मथितः प्ररूढः परिमलः प्रतापप्रकर्षो येषां तादृशाः, न खण्डितो न विच्छिन्नो दानस्य मदजलस्य पक्षे वितरणस्य प्रसरः प्रवाहः पक्षे प्रवृत्तिर्येषु तादृशाः, यस्य राज्ञो बाहवो दृढत्वात् परिघा लोहलगुडा इव बाहुपरिघा एव गजेन्द्रा भान्तीत्यर्थः। तथाच 'मानसं सरसि स्वान्ते' 'दानं गजमदे त्यागे' इति मेदिनी।

अत्रापि बाहुपरिघा एव गजेन्द्रा इति रूपकं मानसादिशब्दनिष्ठश्लेषः प्रसाधयतीत्युभयोर्वाच्ययोः सङ्करो न तु शब्दशक्तिमूलध्वनिः॥

उदाहरणान्तर बतलाते हैं—मानसेति। कोई चाटुकार राजाकी प्रशंसा (बड़ाई) करता है-जिस राजाके प्रचण्ड भुजदण्ड, अत्यन्त दृढ़ लोह घनकी भांति अत्यन्त दृढतासे सुवर्ण कमलके समान सारभूत शत्रुओंके मानसोंको मथ कर उपार्जित उज्ज्वल प्रताप तथा निरवच्छिन्न धन वितरण व्यापारसे शोभते हुए, मानस सरोवर स्थित हेम कमलोंके निर्मन्थन जनित सुगन्धोंसे वासित एवं निरन्तर स्रवित मदजल युक्त मतवाले हाथी जैसे मालूम पड़ते हैं।

यहां बाहुपरिघमें गजेन्द्रके आरोप द्वारा प्रतीयमान रूपकका मानसादि शब्द निष्ठ श्लेष अलंकार उपकारक होकर वाच्यरूपसे ही प्रतीत होता है, इसलिये उक्त दोनों (रूपक-श्लेष) वाच्य अलंकारोंका संकर ही है, शब्दशक्तिमूल उक्त ध्वनिका विषय नहीं है।

तदाह—

अत्र रूपकच्छायाऽनुग्राही श्लेषो वाच्यतयैवावभासते।

अत्रानयोरनन्तरश्लोकयोः॥

उक्ताशयको ही वृत्तिकार स्फुट करते हैं—अत्रेति। अनन्तर पूर्वमें कथित दोनों श्लोकोंमें रूपक ध्वनिका उपकारक श्लेष अलंकार वाच्यरूपसे ही प्रतीत होता है।

कारिकाघटकैवकारस्याक्षिप्तशब्देन सहार्थिकान्वयस्य फलन्दर्शयति—

**स चाक्षिप्तोऽलङ्कारो यत्र पुनः शब्दान्तरेणाभिहितस्वरूपः, तत्र शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यध्वनिव्यवहारः (नैव, किन्तु) तत्र वक्रोक्त्यादिवाच्यालङ्कारव्यवहार एव।**

अकोष्ठस्थः पाठोऽर्थानुरोधेन कल्पितः। चकारोऽप्यर्थको भिन्नक्रमः। स आक्षिप्तो व्यक्तोऽप्यलङ्काररूपोऽर्थो यत्र 'दृष्ट्या केशव!' इत्यादिषु वक्ष्यमाणलक्ष्येषु, पुनश्शब्दान्तरेणान्येन लेशादिशब्देन अभिहितस्वरूपो नियन्त्रिताया अभिधायाः प्रत्युज्जीवनेन वाच्यतां नीतो भवति तत्र व्यङ्ग्यस्य वाच्यायमानत्वेनाचारुत्वान्न शब्दशक्त्युद्भवसंलक्ष्यक्रमध्वनेर्व्यपदेशः, किन्तु तत्र गुणीभूतव्यङ्ग्यत्वाद् वक्रोक्तेरन्येषां वाऽलङ्काराणामेव व्यपदेश इत्यर्थः।

पद्यघटकेनैकेनापि पदेनाभिधीयमानोऽर्थोऽक्लिष्टं व्यङ्ग्यत्वं कथं भजेत्। तत्त्वे च कथं ध्वनिव्यवहार इति सारम्॥

परन्तु व्यञ्जनासे अभिव्यक्त होता हुआ भी वह अलंकार रूप अर्थ जहां किसी दूसरे शब्द द्वारा नियन्त्रित अभिधाके पुनरुज्जीवनसे वाच्य रूपमें ही भासित होने लगता है, वहां उक्त व्यङ्ग्यके भी वाच्यकी तरह ही हो जानेसे रमणीयता नहीं रहती, अतः शब्द शक्ति-उद्भव संलक्ष्य क्रमव्यङ्ग्य ध्वनिका व्यवहार नहीं होता, अपितु गुणीभूत व्यङ्ग्य होनेसे वक्रोक्ति या अन्य अलंकारोंका ही मुख्य व्यपदेश होता है, अर्थात् वाक्य घटक किसी एक भी पदसे अभिहित होने पर वह व्यङ्ग्य अलंकार वाच्य बन जाता है, अतः ऐसे स्थलमें ध्वनिका व्यवहार नहीं होता है।

तदुदाहरति—

**यथा—'दृष्ट्या केशव! गोपरागहृतया किञ्चिन्न दृष्टं मया,**
**तेनैव स्खलिताऽस्मि नाथ! पतितां किं नाम नालम्बसे॥**
**एकस्त्वं विषमेषुखिन्नमनसां सर्वाबलानां गति-**
**र्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम्॥'**

हे केशव! गवां परागैः खुरोद्भूतधूलिभि र्हृतया तिरोहितया दृष्ट्या मया किञ्चिन्न दृष्टं निम्नमुन्नतं वा नावलोकितम्, पक्षे गोपे बल्लवे त्वयि रागः प्रेमा तेन हृतयाऽऽ-

यत्तीकृतया दृष्ट्या किञ्चित्कर्तव्यमकर्तव्यं वा मया न दृष्टं नालोचितम्, गोपेति सम्बोधनं वा, तेनैव हेतुना स्खलिता मार्गात् पक्षे सच्चारित्र्याद् भ्रष्टाऽस्मि। हे नाथ! ऐश्वर्यशालिन् पक्षे स्वामिन्! पतितां मां किन्नाम कुतः खलु नालम्बसे, हस्तेन न गृह्णासि? पक्षे पतितां पतित्वं कुतो नाश्रयसि?' विषमेषूच्चावचस्थलेषु गमनासामर्थ्यात् खिन्नमनसां क्लान्तचित्तानां सर्वेषामबलानां बलहीनजनानाम्, एकस्त्वं गतिश्शरणमसि, पक्षे विषमेषोः कन्दर्पात् खिन्नमनसां सर्वासामबलानामङ्गनानामेकस्त्वं गतिश्शरणमसि, एवं सलेशं ससूचनं सच्छलमिति यावत्, गोप्या गोष्ठे व्रजे गदित उक्तो हरिर्वो युष्मांश्चिरमवताद्रक्षतादित्यर्थः।

'तथा च—अल्पीभावार्थकाक्लिशधातोर्घञि लेश इति सूचनार्थम् 'अल्पीभावनं हि सूचनमेव' इति लोचनदर्शनात्।

अत्रोभयार्थकानामपि गोपरागादिशब्दानामभिधायां पूर्वप्रकरणेन गोधूल्यादिष्वर्थेष्वेव नियन्त्रितायां द्वितीयार्थस्य यद्यपि मूलतो व्यङ्ग्यत्वचमत्कारातिशयाभ्यां ध्वनेः सम्भावना, तथाऽपि पश्चात्सलेशशब्दोपादानेन नियन्त्रितपूर्वद्वितीयार्थाभिधायामपि प्रत्युज्जीवितायां तदर्थबोधोऽप्यभिधालभ्य एवेत्युभयोरर्थयोर्वाच्यत्वेन वाच्यश्लेषस्यैवायमीदृशोऽन्यश्च विषयः, नतु शब्दशक्तिमूलध्वनेरिति बोध्यम्॥

कृष्णके प्रति गोपीकी उक्तिके वर्णन द्वारा कवि राजाको आशीर्वाद देता है—यथेति। जैसे–हेकेशव! गौओंके खुरों द्वारा उत्थित धूलियोंसे आखोंके ढक जानेसे मैं ऊंची नीची भूमिको नहीं देख सकी, इसीलिये रास्तेमें गिर पड़ी हूं, हे नाथ! समर्थ होते हुए भी आप गिरी हुई मुझको क्यों नहीं उठाते, ऊबड़ खाबड़ भूमिमें चलनेकी सामर्थ्य नहीं होनेसे अत्यन्त दुःखी होनेवाली सारी अवलाओंके केवल आपही शरण हैं, इसतरह गोपी द्वारा गोष्ठीमें ही छल द्वारा स्वाभिप्रायोंसे विदित किये गये कृष्ण भगवान् आपकी रक्षा करें। यहाँपर 'हे केशव! गोपरूप तुझमें ही अत्यन्त अनुरागसे आकृष्ट होकर मैं बिल्कुल ही अपने कर्तव्या-कर्तव्य विचारको भूल गयी, इसीलिये अपने पातिव्रत्य व्रतसे भी भ्रष्ट हो चुकी हूँ, अत एव हे स्वामिन्! आप ही मेरे पति होवें, पञ्चवाण (कामदेव) से अत्यन्त सताई जाती हुई सारी अवलाओंके भी आप ही शरण हैं'—इस प्रतीयमान व्यङ्ग्यार्थको 'सलेश' पद ने छलसे अत्यन्त स्पष्ट रूपमें सूचित कर वाच्य जैसा बना दिया, इसलिये उस (व्यङ्ग्यार्थ) में रमणीयता नहीं रही।

उक्त स्थलमें द्व्यर्थक गोपरागादि शब्दोंकी अभिधाओंके, पहले प्रकरणवश गोधूलि आदि अर्थोंमें नियन्त्रित होनेसे उक्त अपर अर्थके व्यङ्ग्यत्वकी संभावना

होने पर भी पीछे सश्लेष शब्दोपादानसे द्वितीय अर्थ बोधक अभिधाके पुनरुज्जीवन द्वारा तदर्थका भी बोध उसी ( अभिधा ) से हो जाता है, अतः दोनों अर्थोंमें वाच्यश्लेषकी ही विषयता है, शब्दशक्तिमूल ध्वनिकी विषयता नहीं है।

तदाह—

एवंजातीयकः सर्व एव भवतु कामं वाच्यश्लेषस्य विषयः ।

स्पष्टम् ॥

वृत्तिकार उक्ताशयको संक्षिप्त करते है—एवमिति। इसतरहका सभी उदाहरण वाच्यश्लेषका ही विषय हो सकता है।

इत्थं विप्रतिपत्तिनिरासाय श्लेषविषयं पृथक् प्रदर्श्य ध्वनेरपि विषयं प्रदर्शयति—

यत्र तु सामर्थ्याक्षिप्तं सदलङ्कारान्तरं शब्दशक्त्या प्रकाशते, स सर्व एव ध्वनेर्विषयः ।

प्राग् व्याख्यातम्। अनेकार्थस्य शब्दस्य संयोगादिभिरेकस्मिन्नर्थेऽभिधायां नियमितायां द्वितीयार्थस्याभिधामूलव्यञ्जनयैव बोध्यते शब्दशक्तिमूलस्य संलक्ष्य-क्रमध्वनेर्विषयः तदर्थस्याभिधामूलव्यञ्जनागम्यत्वात् केवलाभिधायाः प्रतिरुद्धत्वा-दित्यभिसन्धिः ॥

परन्तु जहां अनेकार्थक शब्दके प्रकरणादि द्वारा एक अर्थमें ही अभिधाके नियन्त्रित हो जाने पर द्वितीय अलंकारादि अर्थका अभिधामूल व्यञ्जना द्वारा ही बोध होता है, वहां शब्दशक्त्युद्भव संलक्ष्य क्रमव्यङ्ग्य ध्वनिका ही विषय होता है। क्योंकि उस ( अलंकारादि ) व्यङ्ग्यार्थके अभिधामूल व्यञ्जनासे ही प्रतीत होनेसे केवल अभिधाका प्रतिरोध हो जाता है।

इत्थं विप्रतिपन्नं मूकीकृत्य शब्दशक्तिमूलध्वनिमुदाहरति—

यथा—'अत्रान्तरे कुसुमसमययुगमुपसंहरन्नजृम्भत ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः'।

हर्षचरितद्वितीयोच्छ्वासस्थं गद्यमिदम्। अत्रान्तर एतन्मध्ये, कुसुमानां पुष्पा-णां समययुगं मधुमाधवात्मकमासद्वयम्, उपसंहरन् समापयन्, पक्षे कौ कोर्वा सुमानां समयो यत्र तादृशं, यद्वा कुसुमसमयसदृशं युगं सत्यादियुगम्, उपसंहरन् नाशयन्, धवलानि स्वच्छान्यट्टानि हर्म्यपृष्ठानि गृहान्तराणि वा येन स धवलाट्टः, तादृशश्चासौ फुल्लमल्लिकानां हासो विकासो यत्र सः, पक्षे फुल्लमल्लिकावद्धवलोऽट्टोऽत्यर्थो हासो यस्य तादृशः, ग्रीष्माभिधानो ग्रीष्मनामा, पक्षे ग्रीष्मेणोष्मणोपलक्षितमभक्तानामसुराणां

वा कृते ऽभिधानं यस्य सः, महद्द्राघीयान् कालो ग्रीष्मर्तुः । पक्षे महाकालः शिवः । अजृम्भतोदलसदित्यर्थः ।

तथा 'गोत्राः कुः पृथिवी' इत्यमरः । 'अट्टं भक्ते चतुष्के ना क्षौमेऽत्यर्थे गृहान्तरे' 'ग्रीष्म ऊष्मर्तुभेदयोः' 'युगो हलरथाद्यङ्गे न द्वयोस्तु कृतादिषु । युग्मे हस्त चतुष्केऽपि वृद्धिनामौषधेऽपि च ॥' इति मेदिनी ।

इह ऋतुवर्णनप्रकरणेन ग्रीष्मपक्षीयार्थे ऽभिधायां नियमितायां शिवपक्षीयार्थस्य शिवग्रीष्मयोरुपमानोपमेयभावव्यञ्जनेनोपमायाश्च प्रतीतिरभिधामूलव्यञ्जनयैवेति ध्वनेरुदाहरणमिदम् । ग्रीष्मपक्षे फुल्लमल्लिकेत्यादौ बहुव्रीहिकर्मधारयगर्भो व्यधिकरणबहुव्रीहिः । शिवपक्षे फुल्लमल्लिकेव धवलाट्टहासो यस्येति विग्रहाश्रयणे 'जलदभुजगजम्' इत्यादिवद्ध्वनित्वं स्यात् । अत्रत्या बहवो मतभेदा लोचनेनालोचनीयाः ॥

अब शब्दशक्तिमूल ध्वनिका उदाहरण बतलाते हैं—यथेति । इसी बीचमें पुष्प समयरूप वसन्त ऋतुको समाप्त करते हुए, अत्यन्त सफेद अटारीके समान उज्ज्वल मल्लिका पुष्पोंके विकाससे शोभायमान तथा दिनको बड़ा करनेवाला ग्रीष्मकाल उल्लसित हुआ । एवं 'इतनेमें वसन्त जैसे सुखद सत्ययुगादिको नष्ट करते हुए, विकसित मल्लिका कुसुमवत् अट्टहास करनेवाले एवं राक्षसोंके लिये अत्यन्त विकराल रुद्रावतार धारण करनेवाले महाकाल भगवान् शङ्कर अत्यन्त उल्लसित हुए' यह व्यङ्ग्यार्थ है । यहां पर ऋतु वर्णन प्रसङ्गसे प्रकरण द्वारा ग्रीष्मपक्षीय अर्थमें अभिधाके नियन्त्रित हो जानेसे शिवपक्षीय अर्थ तथा हर-ग्रीष्मके उपमानोपमेय भाव व्यञ्जन द्वारा उपमाकी प्रतीति अभिधामूल व्यञ्जनासे ही होती है, इसलिये यह शब्द शक्त्युद्भव ध्वनिका विषय है ।

पुनरुदाहरति—

यथा च—'उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः ॥
पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम् ॥'

उन्नतो गगनोच्छ्रितः, पक्षे यौवनवशोत्थितः, प्रकर्षेणोल्लसन्ती निस्सरन्ती धारा जलप्रपातो यस्मात्सः, पक्षे प्रकर्षेणोल्लसन् शोभमानो हारो मुक्तामाला यत्र तादृशः, कालागुरु अगुरुनामा सुगन्धिधूपद्रव्यविशेषः तदिव मलीमसः, श्यामः, पक्षे तेनोपलिप्तेन मलीमसः, पयोधरभरो मेघातिशयः पक्षे स्तनोत्कर्षः, तन्व्या अभिलाषिणं कं न चक्रे, अपितु सर्वानेव चक्र इत्यर्थः ।

तथाच 'कालागुर्वगुरु स्यात्तु, इत्यमरः । 'स्तनमेघौ पयोधरौ' इत्यनेकार्थध्वनि-

मञ्जरी। 'धारा सैन्याग्रिमस्कन्धे तुरङ्गगतिपञ्चके॥ घटादिच्छिद्रसन्तत्योः प्रपाते स्याद्द्रवस्य च॥' 'हारो मुक्तावलौ युधि' इति मेदिनी च।

अत्रापि वर्षावर्णनप्रकरणेन मेघपक्षीयार्थेऽभिधानियमनात्स्तनपक्षीयोऽर्थो मेघस्तनयोरौपम्यं च व्यज्येत एवेति ध्वनिः॥

उदाहरणान्तर बतलाते हैं—यथा चेति। आकाशमें फैलकर मुशलाधार बरसने वाले मेघकी, कालागरु जैसी काली घटा, किस युवकको कामिनी विषयक अभिलाष नहीं उत्पन्न करती, अपितु सबको ही करती है। एवं जवानीके कारण अत्यन्त उन्नत और लुठते हुए मुक्ताहारसे उल्लसित तथा कालागरु प्रभृति सुगन्धित चन्दनादि द्रवसे उपलिप्त विशाल कुचद्वय किस व्यक्तिको रमणी विषयक उत्कण्ठाको नहीं उत्पन्न करता, अपितु सबको ही करता है। यहां पर वर्षाके वर्णन प्रसङ्गसे मेघ पक्षीय अर्थमें ही अभिधाके नियन्त्रित हो जानेसे स्तन पक्षीय अर्थ तथा मेघ-स्तनका उपमानोपमेय भाव अभिधामूल व्यञ्जनासे ही प्रतीत होता है।

पुनरुदाहरति—

यथा वा—'दत्तानन्दाः प्रजानां समुचितसमयाक्लिष्टसृष्टैः पयोभिः,
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः॥
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो,
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु॥'

मयूरकवेः सूर्यशतकघटकं पद्यमिदम्। समुचिते वर्षादौ पक्षे प्रातरादौ, अक्लिष्टमक्लेशं सृष्टैर्मुक्तैः पयोभिर्जलैः, पक्षे दुग्धैः, प्रजानां जनानां पक्षे सन्ततीनां, दत्तानन्दाः कल्पितप्रमोदाः, तथा पूर्वाह्णे दिशि दिशि प्रकाशार्थं पक्षे शष्पचरणार्थं, विप्रकीर्णा विक्षिप्ताः प्रसृता इति यावत्, पुनः, अह्नि दिने विरमत्यवसानं गच्छति सति, संहारभाजः समाक्षिप्ता ध्वस्ताः, पक्षे एकत्र स्थापिताः, तथा दीर्घस्य दुस्सहत्वादायतस्य जननादिदुःखस्य प्रभव उत्पादको यो भवः संसारस्तत्सम्बन्धि तस्माद्वा यद्भयम्, तदेव दुस्तरत्वादुदन्वान् समुद्रः, तस्योत्तार उत्तरणं पारगमनमिति यावत्, तत्र नावो नौकारूपाः, दीप्तांशोः सूर्यस्य गावः किरणाः पक्षे धेनवः, पावनानां पवित्राणां वो युष्माकमपरिमितामपरिच्छिन्नां प्रीतिमानन्दं परमत्यन्तमुत्पादयन्तु जनयन्त्वित्यर्थः।

तथा च 'प्रजा स्यात् सन्ततौ जने' 'उदन्वानुदधिः सिन्धुः' इत्यमरः। 'पयः स्था-

त्क्षीरनीरयोः' इति मेदिनी । 'दिग्दृष्टिदीधितिस्वर्गवज्रवाग्वाणवारिषु ॥ भूमौ पशौ च गोशब्दः' इति क्षपणकश्च ।

अत्रापि किरणपक्षीयोऽर्थः प्राकरणिकत्वाद्वाच्यः, धेनुपक्षीयोऽर्थः, वाच्यव्यङ्ग्यार्थयोः समन्वयसम्पादनाय कल्पितं गाव इव गाव इत्यौपम्यं च व्यज्येते एवेति ध्वनिरेव ॥

तीसरा उदाहरण बतलाते हैं—यथा वेति। वर्षा आदि ऋतुओंमें उचित अवसर पर विना प्रयासके ही जल वृष्टि द्वारा प्रजाओंको आनन्दित करनेवाली एवं सवेरे ही प्रत्येक दिशामें प्रकाशार्थ फैलने वाली तथा दिन बीतते ही अस्त होनेवाली और जन्म मरणादि भयंकर क्लेश-जनक दुस्तर संसारार्णवसे पार उतारनेवाली नौकेकी भांति सूर्यकी रश्मियां अत्यन्त पवित्र आप लोगोंको अपार आनन्द देवें। एवं 'प्रातः काल आदि समुचित समय पर अनायास ही दुग्धोंको स्रवित कर सन्ततिको तृप्त करनेवाली तथा सवेरे ही हरे २ घास चरनेवास्ते भिन्न २ दिशाओंमें विचरनेवाली एवं शाम होते ही एकत्रित होकर घरको वापस लौटनेवाली और अत्यन्त दुःसह जनन मरणादि दुःख जनक अपार भवार्णवसे पार करनेवाली, नौका जैसी गौएं परम पवित्र आप लोगोंको अपरिमित आनन्द प्रदान करें' यह व्यङ्ग्यार्थ है। यहां भी प्रकरण वश किरण पक्षीय अर्थ वाच्य रूपसे प्रतीत होता है और धेनु पक्षीय अर्थ तथा किरण-गौका उपमा-उपमेय भाव व्यङ्ग्य रूपमें ही अभिधामूल व्यञ्जना द्वारा अभिव्यञ्जित होता है, इसलिये यह भी उक्त ध्वनिका ही विषय समझना चाहिए।

तदाह—

एषूदाहरणेषु शब्दशक्त्या प्रकाशमाने सत्यप्राकरणिकेऽर्थान्तरे, वाक्यस्यासम्बद्धार्थाभिधायित्वं मा प्रसाङ्क्षीदिति प्राकरणिकाप्राकरणिकार्थयोरुपमानोपमेयभावः कल्पयितव्यः सामर्थ्यादित्यर्थाक्षिप्तोऽयं श्लेषो न शब्दोपारूढ इति विभिन्न एव श्लेषादनुस्वानोपमव्यङ्ग्यस्य ध्वनेर्विषयः।

एषु 'अत्रान्तरे' इत्यतः 'दत्तानन्दाः' इत्यन्तेषु त्रिषूदाहरणेषु पूर्वं 'संयोगो विप्रयोगश्च' इत्याद्युक्तेः प्रकरणेन प्रस्तुतेऽर्थेऽभिधाया नियमनात्प्रस्तुतेऽर्थेऽभिधया बोधिते, पश्चाच्छब्दशक्त्याऽभिधामूलव्यञ्जनयाऽप्रस्तुते द्वितीयार्थेऽपि बोध्यमाने सति, प्रस्तुताप्रस्तुततयोर्वाच्यव्यङ्ग्ययोरर्थयोर्यदि मिथः सम्बन्धो न स्यात्, तदाऽनन्वितार्थबोधकत्वरूपदोषो वाक्यस्यापतेत्, अतस्तयोरुपमानोपमेयभावः सम्बन्धः सम्बन्धान्तरायोग्यतायां कल्पयितव्यो व्यञ्जनया बोधनीयो भवति, तथा व्यङ्ग्यो-

ऽप्रस्तुतत्वादुपमानम्, वाच्यस्तु प्रस्तुतत्वादुपमेय इति द्वितीयार्थस्य वाच्यत्वाभावान्न शब्दोपारूढः, किन्तु च्छायारूप एव श्लेष इति नायं श्लेषस्य विषयः, अपितु शब्दशक्तिमूलध्वनेरिति श्लेषध्वन्योर्विषयविभागः स्फुट एवेत्यर्थः। 'उपमानोपमेयभाव इति—तेनोपमारूपेण व्यतिरेचननिह्नवादयो व्यापारमात्ररूपा एवास्वादप्रतीतेः प्रधानं विश्रान्तिस्थानं, नतूपमेयादीति सर्वत्रालङ्कारध्वनौ मन्तव्यम्' इति लोचनम् ॥

उक्त तीनों उदाहरणोंमें प्रकरणादि वश प्रस्तुत अर्थोंको अभिधाओंके द्वारा बोधित होनेके बाद अभिधामूल व्यञ्जनासे अप्रस्तुत अर्थोंकी प्रतीति होने पर भी दोनोंमें अनन्वय जनित वाक्यार्थ गत अनुपपत्तिको दूर करनेके लिये व्यञ्जना द्वारा उपमानोपमेय भावकी कल्पना होती है, अतः द्वितीय अर्थके व्यङ्ग्य होनेसे श्लेष अलंकारका मुख्य रूपसे व्यवहार न होकर अभिधामूल व्यञ्जनासे अभिव्यक्त होनेवाले औपम्य और व्यङ्ग्य भूत श्लेषको संलक्ष्य क्रमव्यङ्ग्य ध्वनिका ही उदाहरण समझना चाहिये।

अलङ्काराणामपीमं ध्वनिं दर्शयति—

अन्येऽपि चालङ्काराः शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्यं ध्वनौ सम्भवन्त्येव।

न केवलमुपमैवेति भावः ॥

उक्त उपमाके अतिरिक्त दूसरे भी अलंकार संलक्ष्य क्रमव्यङ्ग्य ध्वनिमें व्यङ्ग्य रूपसे भासित हो सकते हैं।

तत्रादौ विरोधाभासध्वनिमुदाहरति—

तथाहि—विरोधोऽपि शब्दशक्तिमूलानुस्वानरूपो दृश्यत एव। यथा—स्थाण्वीश्वराख्यजनपदवर्णने भट्टबाणस्य—

कादम्बरीकर्तु र्बाणभट्टस्य हर्षचरिते तृतीयोच्छ्वासे स्थाण्वीश्वरनाम्नः कुरुपरपर्यायश्रीकण्ठदेशोपदेशस्य वर्णने गद्यमिदम्।

उनमें सबसे पहले विरोधाभास अलंकार ध्वनिका उदाहरण बतलाते हैं—तथाहि इति। बाणभट्ट कविने शब्दशक्तिमूल संलक्ष्य क्रमव्यङ्ग्य ध्वनि रूपमें विरोधाभासको स्थाण्वीश्वर नामक जनपदके वर्णन प्रसङ्गमें निम्न प्रकार सूचित किया है—

'यत्र च मत्तमातङ्गगामिन्यः शीलवत्यश्च, गौर्यो विभवरताश्च श्यामाः पद्मरागिण्यश्च, धवलद्विजशुचिवदना मदिराऽऽमोदिश्वसनाश्च,

**चन्द्रकान्तवपुषः शिरीषकोमलाङ्ग्यश्च, अभुजङ्गगम्याः कञ्चुकिन्यश्च, पृथुकलत्रश्रियो दरिद्रमध्यकलिताश्च; लावण्यवत्यो मधुरभाषिण्यश्च; अप्रमत्ताः प्रसन्नोज्ज्वलरागाश्च, अकौतुकाः प्रौढाश्च प्रमदाः।'**

यत्र स्थाण्वीश्वरजनपदे 'प्रमदाः कामिन्य ईदृश्यः सन्तीति सर्वत्र सम्बन्धः। मत्तान् क्षीवान् मातङ्गाञ्छ्वपचान् गन्तुमुपरमयितुं शीलं यासां ताः, शीलं सद्वृत्तं सदाचार इति यावत् तद्वत्यश्चेति विरोधः, मत्तगजवद्गामिन्य इति परिहारः। गौर्यः पार्वत्यः, विगतो विभिन्नो वा भवश्शिवो यस्मात्तस्मिन् विभवे शिवभिन्ने रताः, यद्वा विगतं भवे भवाद्वा रतं यासां ता इति विरोधः, गौरवर्णा धने रता इति परिहारः। श्यामाः कृष्णवर्णाः क्षपा वा, पद्मस्य राग इव रागो लौहित्यं, तद्वत्यः पद्मस्य रागं दधाना वेति विरोधः, षोडशवार्षिक्यः शीतकालादावुष्णत्वादिगुणवत्यो वा, पद्मरागमणिभाजः पद्मप्रेमभाजो वेति परिहारः। धवलद्विजानां शुद्धब्राह्मणानामिव शुचि पवित्रं वदनं यासां ताः, मदिरावन्मदिरया वा आमोदि सुगन्धि श्वसनं निश्श्वासो यासां यद्वाऽऽमोदी श्वसनो मुखमारुतो यासां ता इति विरोधः, धवलैःश्वेतै द्विजै र्दन्तै श्शुचि स्वच्छं वदनं यासां ता इति परिहारः। चन्द्रकान्तस्य मणे र्वपुर्यासां ताः, शिरीषपुष्पवत् कोमलाङ्ग्य इति विरोधः, चन्द्रवत्कान्तं कमनीयं वपु र्यासां ता इति परिहारः। अभुजङ्गेन सर्पभिन्नेन गम्या उपभोग्या भुजङ्गेन सर्पेणागम्या वा, कञ्चुकिन्यः सर्पिण्य इति विरोधः, विटेनागम्या कूर्पासकवत्य इति परिहारः। पृथोस्तदाख्यस्य राज्ञःकलत्रस्य दाराणां श्रीरिव श्रीर्यासां ताः, यद्वा पृथोः कलत्रभूताः श्रियः, दरिद्राणां दुर्विधानां मध्ये कलिताः सङ्ख्याता इति विरोधः पृथ्वी गुरु र्यद्वा पृथोर्गुरोः कलत्रस्य श्रोणेः श्रीश्शोभा यासां ताः, दरिद्रेण क्षीणेन मध्येनावलग्नेन कलिता युक्ता इति परिहारः। लवणानां भावो लावण्यं तद्वत्यः, मधुरं मिष्टं भाषितुं शीलं यासां ता इति विरोधः, लावण्यं प्रागलक्षितं कान्तिविशेषं दधाना इति परिहारः। न प्रकर्षेण मत्ताः, प्रसन्नः स्फीत उज्ज्वलो दीप्यमानो रागो मदो यासां ता इति विरोधः, अनवहिताः सावधाना इति यावत्, प्रसन्न उज्ज्वलो रागः प्रेमा यासां ता इति परिहारः। अकौतुका अजातविवाहा अवैवाहिककङ्कणा वा, प्रकर्षेणोढाः परिणीता इति विरोधः, नास्ति कौतुकमभिलाषः पूर्णकामतया यासां ताः, प्रौढाः प्रगल्भाः पतिमात्रविषयककेलिकलाकलापकोविदाश्चेति विरोधस्य परिहारः। तथाच—'मातङ्गश्श्वपचे गजे' 'कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः॥ तथा परम्परायातमङ्गले च कुतूहले। विवाहसूत्र—गीतादिभोगयोरपि न द्वयोः' 'द्विजःस्याद्ब्राह्मणक्षत्रवैश्यद-

न्ताण्डजेषु ना' इति मेदिनी। 'शीलं स्वभावे सद्वृत्ते' 'श्वसनः स्पर्शनो वायुः' इत्यमरः 'भुजङ्गो भुजगे षिड्गे' इति त्रिकाण्डशेषः। 'कञ्चुकं वारबाणो ना' 'निर्मोकः कञ्चुकोऽस्त्रियाम्' इति केशवः। 'चामीकराभं शुक्लं च गौरमाहु र्मनीषिणः॥ असञ्जातरजाः कन्या गौरी गौरी च पार्वती' इति शाश्वतः। 'श्यामा षोडशवार्षिकी' इत्यभिधानम्। 'रजनी वसतिः श्यामा' इति हैमः। 'कूपोदकं वटच्छाया श्यामा स्त्री चेष्टकागृहम्। शीतकाले भवेदुष्णमुष्णकाले च शीतलम्' इति चाणक्यशतकम्। 'कलत्रं श्रोणिभार्ययोः' इति विश्वश्च। इत्थमत्र प्रतीयमानोऽपि श्लेषानुप्राणितो विरोधाभासो वाच्य इति नैव वक्तुं शक्यम्, विरोधाभासवाचकस्याप्यादेरभावादर्थद्वयस्यावाच्यत्वाच्च॥

जिस स्थाण्वीश्वरमें कामिनी स्त्रियां अत्यन्त उन्मत्त चाण्डाल आदि नीचजनोंके साथ रमण करती हुई भी सच्चारित्र्यवाली हैं, एवं पार्वती होकर भी शिव भिन्न व्यक्तिमें रमण करने वाली या शिवमें नहीं रमनेवाली हैं, कृष्णवर्ण वाली होती हुई भी रक्त कमल जैसी भाती हैं, विशुद्ध ब्राह्मणकी भांति पवित्र मुखवाली होकर भी मदिरासे वासित दुर्गन्ध श्वास छोड़ रही हैं, चन्द्रकान्तमणि जैसा ठोस (दृढ) शरीरवाली होती हुई भी शिरीष पुष्पवत् कोमलाङ्गी हैं, सर्पके उपभोग योग्य नहीं होनेपर भी सर्पिणी हैं, पृथुराजकी स्त्री जैसी लक्ष्मीवती होकर भी अत्यन्त गरीबनी गिनी जाती हैं, क्षाररस वाली होती हुई भी मधुरभाषिणी हैं, प्रमदा नहीं होती हुई भी प्रकृष्टमद वाली हैं, अविवाहिता होकर भी विवाहिता हैं, इस तरह आपाततः प्रतीयमान विरोध अलंकार, क्रमशः 'मत्त मतङ्गजगामिनी' 'गौरवर्ण' 'घनसें रत' 'पद्मरागमणियुक्त' 'अत्यन्त स्वच्छ दांतोंसे विशद मुख कान्ति' 'चन्द्रवत् कमनीय शरीर वाली' 'धूर्त लम्पटोंसे अगम्य' 'कूर्पास युक्त' 'पतली कमरवाली 'अत्यन्त लावण्यवती' 'विशुद्ध प्रेम वाली' 'कुतूहलरहित' और 'प्रगल्भा' इन अर्थोंकी व्यञ्जनाद्वारा अभिव्यक्ति होनेसे विरोधाभासमें परिणत होकर विशेष चमत्कारजनक प्रतीत होता है।

तदाह—

अत्र हि वाच्यो विरोधस्तच्छायाऽनुग्राही वा श्लेषोऽयमिति न शक्यं वदितुम्, साक्षाच्छब्देन विरोधालङ्कारस्याप्रकाशितत्वात्।

अपिशब्दो विरोधशब्दश्च विरोधाभासमभिधत्ते। द्वयोरर्थयोर्वाच्यतायां श्लेषो वाच्यः। प्रकृतेऽप्यादिशब्दाभावादर्थद्वयस्य वाच्यत्वविरहाच्च न विरोधो नवा श्लेषो वाच्यः, किन्तु व्यङ्ग्य एवेति ध्वनेरेवोदाहरणमिदमिति सारम्॥

वृत्तिकार उक्ताशयको ही अभिव्यक्त करते हैं—अत्रेति। यहां पर विरोध या विरोधाभासका पोषक, श्लेषादि अलंकार वाच्यरूपसे प्रतीत नहीं होता, अपितु

व्यङ्ग्य रूपसे ही प्रतीत होता है, क्योंकि विरोधादि द्योतक अपि आदि शब्द नहीं हैं, और उक्त अर्थद्वयकी वाच्यरूपसे प्रतीति नहीं होती है, इसलिये ध्वनिका ही यह उदाहरण समझना चाहिये।

वाच्यं विरोधं श्लेषं च दर्शयति—

**यत्र हि साक्षाच्छब्दावेदितो विरोधालङ्कारः, तत्र हि श्लिष्टोक्तौ वाच्यालङ्कारस्य विरोधस्य श्लेषस्य वा विषयत्वम्।**

यत्र यस्यां श्लिष्टोक्तौ श्लेषवति काव्ये, शब्देन साक्षादावेदितोऽभिहितो विरोधाभासोऽलङ्कारः, तत्र काव्ये वाच्यस्य श्लेषविरोधयोः सङ्करस्य विषयतेत्यर्थः। वाशब्दः पूर्ववत्साङ्कर्यसूचकः।

वाच्यभूत विरोध और श्लेष अलंकारका उदाहरण बतलाते हैं—यत्रेति। जिस श्लिष्ट काव्यमें साक्षात् ही शब्दों द्वारा स्पष्टरूपसे विरोध और श्लेष प्रतिपादित किया रहता है, उसमें वाच्यरूप विरोध और श्लेषके संकरकी विषयता समझी जाती है।

उदाहरति—

**यथा हर्षचरिते—'समवाय इव विरोधिनां पदार्थानाम्। तथाहि—'सन्निहितबालान्धकारा भास्वन्मूर्तिश्च, इत्यादौ।**

हर्षचरितप्रथमोच्छ्वासे दधीचानुचरेण विकुक्षिणा सावित्रीम्प्रत्युक्तं गायत्रीवर्णनमिदम्। विरोधिनां मिथो विरुद्धानां पदार्थानां वस्तूनां समवाय एकत्र स्थितिरिवेयम्। तथाहि—सन्निहितः समीपस्थो बालो नवीनोऽन्धकारस्तमो यस्याः सा च पुनर्भास्वतः सूर्यस्य मूर्त्तिरिति विरोधः, सन्निहिता बालाः कचा एव नीलत्वादन्धकारा यस्याः, तथा भास्वती कान्तिमती मूर्त्तिर्यस्याः सेति परिहारः।

तथाहि 'बालोऽर्भेऽश्वेभपुच्छयोः॥ शिशौ ह्रीवेरकचयोः, इति हैमः॥ अत्र यद्यपि, अपिशब्दो नास्ति, किन्तु पूर्ववाच्यघटकविरोधशब्देनैव विरोधालङ्कारः साक्षाद्बोधित इति विरोधाभासस्तदुपकारी श्लेषश्च वाच्यः। वस्तुतः श्लेषस्यात्र न वाच्यत्वम्, तथापि विरोधानुरोधेन वाच्यत्वव्यपदेशः॥

जैसे हर्षचरितमें दधीचके अनुचर विकुक्षिने सावित्रीके प्रति, गायत्रीके विषयमें कहा है—यह गायत्री एकत्र सम्मिलित परस्पर विरोधी पदार्थोंकी तरह अत्यन्त आश्चर्य एवं कुतूहल जनक प्रतीत होती है, जैसे मालूम पड़ता है 'मानो अत्यन्त निविड नवीन अन्धकारके समीप देदीप्यमान सूर्यकी ज्योति चमक रही हो' इस तरह यद्यपि विरोध प्रतीत होता है, तथापि 'सन्निहित घोर अन्धकारकी तरह काले २ कचोंके रहने पर भी यह अत्यन्त चमकीली कान्तिवाली है' इस अर्थकी

प्रतीतिसे उक्त विरोध दूर होकर विरोधाभासमें परिणत हो जाता है। यहाँ यद्यपि विरोध आदिका प्रकाशक 'अपि' आदि शब्द नहीं है, तथापि निकट पूर्वमें उपात्त 'विरोध' शब्दसे ही विरोधालंकार स्फुटरूपसे बोधित होता है, इसलिये विरोधाभास और श्लेष दोनों वाच्य रूपसे ही प्रतीत होते हैं।

नन्विहापि मत्तमातङ्गेत्यादावपि चकारोऽपिशब्दवत्पुनःपुनरुच्चारितः समुच्चयाबोधको विरोधाभिधायकोऽस्त्येवेति कथं व्यङ्ग्यत्वमित्यरुचेः स्वीयं तदुदाहरणमाह—

यथा वा ममैव—'सर्वैकशरणमक्षयमधीशमीशं धियां हरिं कृष्णम् ॥
चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम् ॥'

सर्वेषामेकस्य शरणं गृहम्, अक्षयं क्षयो गृहं तद्भिन्नमिति विरोधः, सर्वेषां चराचराणामेकं प्रधानं शरणं रक्षकम्, अविनाशिनमिति परिहारः। न धियां बुद्धीनामीशोऽधिपतिरधीशस्तम्, धियामीशमिति विरोधः, अधीशमधिपतिमिति परिहारः। हरिं हरितवर्णं कृष्णं श्याममिति विरोधः, विष्णुं, कृष्णाख्यमिति परिहारः। चतुरः क्रियाकुशल आत्मा यस्य, तं निष्क्रियं क्रियाशून्यमिति विरोधः, चत्वारः कृष्णबलभद्रप्रद्युम्नानिरुद्धाख्या मूर्तिव्यूहरूपा आत्मानो यस्य तमिति परिहारः। अराणि रथाङ्गावयवाः सन्त्यस्मिन्नित्यरि चक्रम्, तस्य मथनं नाशकम्, चक्रस्य धरं धारकमिति विरोधः, अरीणां शत्रूणां मथनमिति परिहारः। नमत नमस्कुरुतेत्यर्थः।

तथा च 'शरणं गृहरक्षित्रोः' इति विश्वः। 'क्षयौ निलयकल्पान्तौ क्षयोऽपचयरोगयोः।' 'अरमङ्गे रथाङ्गस्य' इति शाश्वतः। 'शात्रवः प्रत्यवस्थाता प्रत्यनीकोऽभियात्यरी' इति हैमः। 'दक्षे तु चतुरपेशलपटवः' 'एके मुख्यान्यकेवलाः' इत्यमरः।

अत्र वाचकविरहात्संलक्ष्यक्रमव्यङ्ग्यो विरोधाभासः श्लेषोत्थापितः॥

अब संलक्ष्य क्रमव्यङ्ग्य ध्वनिरूप विरोधाभासका स्वरचित उदाहरण बतलाते हैं—यथा वेति। जो सबमें एकका गृह हैं और गृह नहीं भी हैं, तथा जो बुद्धि रहित हैं और बुद्धिमान् भी हैं, एवं जो हरे हैं और काले भी हैं, तथा जो क्रिया कुशल भी हैं और क्रिया शून्य भी हैं, एवं जो चक्र नाशक हैं और चक्रधारी भी हैं, ऐसे भगवान्‌को आप लोग नमस्कार करें, इस तरह प्रतीयमान विरोध, क्रमशः 'सभी चराचरोंके एक प्रधान रक्षक और अविनाशी एवं अधिपति बलभद्र-कृष्ण-प्रद्युम्न-अनिरुद्ध इन चारोंके मूर्ति स्वरूप सुदर्शन चक्रधारी शत्रुनाशक भगवान् कृष्णको तुमलोग प्रणाम करो' इन अर्थोंके व्यञ्जना द्वारा प्रकट होनेसे विरोधा-

-भासमें परिणत हो जाता है, अतः उक्तार्थके वाचक शब्दोंके न होनेसे श्लेष द्वारा परिपोषित होने वाला यह विरोधाभास, संलक्ष्य क्रमव्यङ्ग्य ध्वनिका उदाहरण है।

तदाह—

अत्र हि शब्दशक्तिमूलानुस्वानरूपो विरोधः स्फुटमेव प्रतीयते।

शब्दशक्तिमूलत्वं शब्दस्य परिवर्तनासहत्वात् प्रतीयते व्यज्यते ॥

उक्त स्थलमें उक्त शब्दोंके परिवर्तन कर देने पर उक्तार्थका बोध नहीं होता है, अतः संलक्ष्य क्रमव्यङ्ग्य ध्वनिरूप विरोधाभास श्लेषसे उत्थापित होकर शब्दशक्तिमूल व्यञ्जना द्वारा ही अभिव्यक्त होता है।

व्यतिरेकालङ्कारं शब्दशक्त्या व्यज्यमानमुदाहरति—

एवंविधो व्यतिरेकोऽपि दृश्यते—

एवंविधःशब्दशक्तिमूलव्यङ्ग्यः ॥

खं येऽत्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनो,
ये पुष्णन्ति सरोरुहश्रियमपि क्षिप्ताब्जभासश्च ये ॥
ये मूर्धस्ववभासिनः क्षितिभृतां ये चामराणां शिरां-
स्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाश्श्रिये सन्तु वः ॥'

ये लूनतमस उन्मूलितान्धकाराः पादाः किरणाः. खमाकाशम्, अतिशयेनोज्ज्वलयन्ति भासयन्ति। ये वा ये च पादाश्चरणाः नखैर्नखरैरुद्भासिनः खस्य नोद्भासिनश्च। ये किरणाः सरोरुहाणां कमलानां श्रियं शोभामपि पुष्णन्ति वर्धयन्ति। ये चरणाः पुनः क्षिप्ता आहृता निन्दिता वाऽब्जानां कमलानां भासः श्रियो यैस्तादृशाः। ये किरणाः क्षितिभृतां पर्वतानां राज्ञां वा मूर्धसु शिखरेषु मस्तकेषु वा, अवभासिनो दीपनशीलाः सन्ति। ये चरणाः पुनरमराणां देवानां चामराणां वा शिरांसि, आक्रामन्त्यधिष्ठानेन व्याप्नुवन्ति। त उभयेऽपि द्विविधा अपि, दिनपतेः सूर्यस्य पादाः किरणाश्चरणाश्च वो युष्माकं श्रियै सम्पत्तिजननाय सन्तु प्रभवन्त्वित्यर्थः।

तथा च 'पादा बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते ॥ चरणे च मयूखे च' इति-मेदिनी ॥

अत्र तमोनाशनपुरस्सराकाशभासन-सरोरुहश्रीपोषण-पर्वतशिखरोल्लसनादि-व्यापारविशिष्टसूर्यकिरणानामुपमेयानामाकाशानुद्भासन-सरोरुहशोभाऽऽहरणपूजनीयाम-

रविसरशिखरारोहणादि–हीनधर्मयोगि–सूर्यचरणरूपोपमानापेक्षयाऽऽधिक्यं शब्दानभिधेयं प्रतीयत इति शब्दशक्तिमूलव्यतिरेकध्वनिः ॥

अब शब्द शक्तिमूल व्यञ्जनासे व्यज्यमान व्यतिरेकका उदाहरण बतलाते हैं—एवं विध इति। जो सूर्यकी किरणें घोर अन्धकारको नाश कर नभस्तलको अत्यन्त प्रकाशित करती हैं, एवं कमलोंकी शोभाको बढ़ाती हैं, तथा पर्वतोंके शिखरों पर या राजाओंके मस्तक पर देदीप्यमान होती हैं, किन्तु जो सूर्यके चरण केवल नखोंसे ही भासित होते हैं, या नभको नहीं प्रकाशित करते, एवं कमलोंकी शोभाको भी नष्ट करनेवाले हैं, तथा पूज्य देवोंके मस्तकोंके ऊपर भी चढ़कर रहनेवाले हैं, वे दोनों ही ( सूर्यकी किरण तथा चरण ) आपके सुख सम्पदाओंको उत्पन्न करें। यहां पर अन्धकार विध्वंसनपूर्वक आकाश–भासन, कमल शोभा–वर्द्धन, पर्वत शिखरोल्लासन आदि उत्कृष्ट व्यापारोंसे युक्त उपमेयभूत सूर्य किरणों में, आकाशके अनुद्भासन, कमलके शोभाहरण, पूज्यदेवगणके मस्तकारोहणादि निकृष्ट व्यापारवाले सूर्य चरणोंकी अपेक्षा शब्द द्वारा अप्रतिपाद्यमान अधिकता व्यक्त होती है, इसलिये शब्दशक्ति सहकृत व्यञ्जनामूलक व्यतिरेक ध्वनि गम्यमान होती है।

उपसंहरति—

**एवमन्येऽपि शब्दशक्तिमूलानुस्वानरूपव्यङ्ग्यध्वनिप्रकाराः सम्भवन्ति, ते सहृदयैः स्वयमनुसर्तव्याः। इह तु ग्रन्थविस्तरभयान्न तत्प्रपञ्चः कृतः।**

प्रपञ्चो विस्तरः अन्यत्स्फुटम् ॥

वृत्तिकार अब शब्द शक्त्युद्भव ध्वनिका उपसंहार करते हैं—एवमिति। इसी तरह दूसरे भी शब्द शक्तिमूलक संलक्ष्य क्रमव्यङ्ग्य ध्वनिके प्रकार हो सकते हैं, विद्वज्जन उन सबका ऊहापोह स्वयं करलें, ग्रन्थ विस्तरके भयसे यहां पर उनका अधिक प्रपञ्च नहीं किया गया है।

इत्थं शब्दशक्त्युद्भवध्वनिं निरूप्यार्थशक्त्युद्भवध्वनिं निरूपयति—

**'अर्थशक्त्युद्भवस्त्वन्यो यत्रार्थः सम्प्रकाशते ॥**
**यस्तात्पर्येण वस्त्वन्यद् व्यनक्त्युक्तिं विना स्वतः ॥४५॥**

यत्र यस्मिन् काव्ये, अर्थःशब्दाभिधाबलेन स्वयं पूर्वं सम्यक् प्रकाशते बोधविषयो भवति, पश्चाद्योऽर्थः स्वत उक्तिं वाचकशब्दप्रयोगं विनाऽभिधां विनैवेति यावत्, तात्पर्येण व्यञ्जनया, अन्यद् वाच्याद्भिन्नं व्यङ्ग्यं वस्त्वर्थम्, व्यनक्ति बोधयति, स शब्दशक्तिमूलध्वनेरन्योऽर्थशक्त्युद्भवो ध्वनिरित्यर्थः ॥

अब अर्थ शक्त्युद्भव ध्वनिका निरूपण करते हैं—अर्थेति। जिस काव्यमें अभिधाके बलसे जो अर्थ पहले स्वयं अच्छी तरह प्रकाशित हो कर पश्चात् अभिधाके बिना ही व्यञ्जनासे वाच्य भिन्न व्यङ्ग्य अर्थको अभिव्यञ्जित करता है, उसको शब्दशक्त्युद्भव ध्वनिसे भिन्न अर्थ शक्त्युद्भव ध्वनि कहते हैं

तदाह वृत्तिकारः—

यत्रार्थः स्वसामर्थ्यादर्थान्तरमभिव्यनक्ति शब्दव्यापारं विनैव, सोऽर्थशक्त्युद्भवो नामानुस्वानोपमव्यङ्ग्यो ध्वनिः।

अस्यापि पूर्ववत्संलक्ष्यक्रमत्वं शब्दपरिवृत्तिसहत्वाच्चार्थशक्त्युद्भवत्वं च॥

वृत्तिकार उक्तार्थको स्फुट करते हैं—यत्रेति। जिस काव्यमें वाच्यार्थ, अभिधाके बिना ही व्यञ्जनावृत्तिसे अर्थान्तरको अभिव्यक्त करता है, उसे अर्थशक्त्युद्भव संलक्ष्यक्रम व्यङ्ग्य ध्वनि कहते हैं।

उदाहरति—

यथाः—'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी॥
लीलाकमलपत्राणि गणयामास पार्वती॥'

कुमारसम्भवषष्ठसर्गस्थं पद्यमिदम्। देवर्षावङ्गिरसि, एवं वादिनि पूर्वोक्तं वदति सति, पितु हिंमाचलस्य पार्श्वे स्थितेति शेषः, पार्वती, अधोमुखी विवाहवृत्तश्रवणलज्जया नम्रवदना लीलाकमलस्य हस्तस्थसरोजस्य पत्राणि दलानि गणयामास भावगोपनाय सङ्ख्यावित्यर्थः। अत्र शब्दव्यापारं विनैव नतवदनायाः पार्वत्या लीलाकमलदलसङ्ख्यानरूपोऽर्थो लज्जारूपं व्यभिचारिभावं व्यनक्तीत्यर्थशक्त्युद्भवध्वनिः॥

उदाहरण बतलाते हैं—एवं वादिनीति। जैसे नारदमुनिके द्वारा शिवजीके साथ अपना विवाह होनेकी बात सुनकर पिता हिमालयके निकट विराजमान पार्वतीजी निज विवाह सम्बन्धी वार्तालाप श्रवणसे लज्जाके मारे शिर झुकाकर क्रीडाके लिये हाथमें स्थापित कमल पत्रोंको, लज्जाभावको छिपानेकी भावनासे गिनने लगी। यहां अभिधाके बिना ही लज्जासे मुखको नीचेकी हुई पार्वतीके लीला कमलपत्रोंके परिगणनसे लज्जा रूप व्यभिचारी भाव अभिव्यक्त होता है, अतः यह अर्थशक्त्युद्भव ध्वनिका उदाहरण है।

तदाह—

अत्र हि लीलाकमलपत्रगणनमुपसर्जनीकृतस्वरूपं शब्दव्यापारं विनैवार्थान्तरं व्यभिचारिभावलक्षणं प्रकाशयति।

वाच्यार्थस्योपसर्जनीभावादेवात्र ध्वनिः ।

अयमाशयः—'एवं वादिनि' इत्यादिश्लोकाद्वाच्यार्थे प्रतीते, विवाहवार्ताश्रवण-समये गौर्या वदननमनं लीलाकमलदलसङ्ख्यानञ्च तद्वाच्यार्थवस्तुप्रकरणादिसाहाय्येन स्वोपपादकं व्रीडं गमयतीति वाच्यव्यङ्ग्यप्रतीत्योः क्रमस्य लक्ष्यत्वम् ॥

उक्त स्थलमें क्रीड़ा कमलके पत्रोंका परिगणन, अपने स्वरूपको बिल्कुल गौण बनाकर अभिधाके बिना ही व्यभिचारिभावात्मक लज्जारूप अर्थान्तरको प्रकाशित करता है। यहां पर 'एवं वादिनि'—इस श्लोकसे वाच्यार्थकी प्रतीतिके बाद अपने विवाह सम्बन्धी वार्तालाप श्रवणके समयमें गौरीका मुख-नमन और लीला कमलदलका परिगणन, प्रकरणादिवश निजरूप (मुख नमनादि) के उपपादक लज्जा-भावको अभिव्यञ्जित करता है, अतः वाच्य और व्यङ्ग्यकी प्रतीतिमें स्फुटरूपसे ही क्रम संलक्षित होता है।

अस्यासंलक्ष्यक्रमव्यङ्ग्यलक्ष्यत्वमाशङ्क्य, समाधत्ते—

न चायमलक्ष्यक्रमव्यङ्ग्यस्यैव (ध्वनेः) विषयः, यतो यत्र साक्षाच्छब्दनिवेदितेभ्यो विभावानुभावव्यभिचारिभ्यो रसादीनां प्रतीतिः, स तस्य केवलस्य मार्गः ।

अलक्ष्यक्रमव्यङ्ग्यस्यैव विषयोऽयमिति न वाच्यम्, यस्माद्यत्र विभावादिभ्यः साक्षाच्छब्दै र्बोधितेभ्यो रसादीनां प्रतीतिर्भवति, स केवलस्य कृत्स्नस्य तस्यासंलक्ष्यक्रमध्वनेर्मार्गो विषय इत्यर्थः। असंलक्ष्यक्रमध्वनिस्तत्र भवति, यत्र वाच्यार्थबोधाव्यवधानेन विभावादिप्रतीतिरूपसामग्रीसमवधानेन रसादीनां प्रतिपत्तिर्जायते। प्रकृते तु पद्मपत्रसङ्ख्यानं मुखनमनं चान्यथाऽपि बालिकानां सम्भवतीति वाच्यार्थेन झटित्येव लज्जात्मको व्यङ्ग्यार्थो न बोधयितुं शक्यः, किन्तु विवाहवृत्तान्तप्रस्तावात्मकप्रकरणपर्यालोचनानन्तरं क्रमेणेति लक्ष्यक्रमतैवेत्याशयः।

ननु व्यभिचारिणामभिधेयत्वं क्वचिदपि न भवतीति प्रागुक्तम्, इदानीं पुनस्तेषां शब्दसाक्षान्निवेदितत्वमुच्यत इति पूर्वापरकथनविरोध आपद्यत इति चेत्, न, अत्र शब्दसाक्षान्निवेदितत्वस्य वाच्यार्थप्रतीत्यव्यवहितप्रतीतिविषयत्वमात्रपरत्वात्, तत्त्वस्य च तादृशव्यङ्ग्यप्रतीतिविषयत्वेऽप्यनिरासात् ॥

उक्त श्लोकका विषय असंलक्ष्य क्रम व्यङ्ग्य ध्वनिका उदाहरण नहीं हो सकता, क्योंकि शब्दोंके द्वारा साक्षात् प्रतिपादित विभावादिसे जहां रसादिकी प्रतीति होती है, वहां सारा ही असंलक्ष्य क्रमव्यङ्ग्य ध्वनिका विषय समझा जाता है, अर्थात्

जहां वाच्यार्थबोधके अव्यवहित उत्तरकालमें ही विभावादि सामग्रीके सहारे रसादिकी प्रतीति होती है, वहां असंलक्ष्य क्रमव्यङ्ग्य ध्वनि मानी जाती है, प्रकृतिमें तो कन्याओंका कमलपत्रोंको गिनना और मुखको नीचा करना खेल कूदमें यों भी हो सकता है, अतः वाच्यार्थके साथ तुरत ही लज्जात्मक व्यङ्ग्यार्थका बोध नहीं हो पाता, अपितु विवाह वृत्तान्तके प्रस्तावात्मक प्रकरणकी पर्यालोचनाके बाद ही क्रमशः बोध होता है, इसलिये यह संलक्ष्य क्रमव्यङ्ग्य ध्वनिका ही विषय है।

उदाहरणदर्शनेनोक्तं द्रढयति—

**यथा कुमारसम्भवे मधुप्रसङ्गे वसन्तपुष्पाभरणं वहन्त्या देव्या आगमनादिवर्णनं मनोभवशरसन्धानपर्य्यन्तम्, शम्भोश्च परिवृत्तधैर्यस्य चेष्टाविशेषवर्णनादि, साक्षाच्छब्दनिवेदितम्।**

कुमारसम्भवे तृतीयसर्गे वसन्तप्रारम्भे—

'निर्वाणभूयिष्ठमथास्य वीर्यं, सन्धुक्षयन्तीव वपुर्गुणेन।
अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या॥'
'प्रतिग्रहीतुं प्रणयिप्रियत्वात् त्रिलोचनस्तामुपचक्रमे च।
सम्मोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम्॥'
'हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि॥' इत्यादौ।

यथाऽऽलम्बनोद्दीपनविभावानामुमा-वसन्तप्रसङ्ग-मनोभवशरसन्धान-शिवकृतोमामुखावलोकनप्रभृतीनां शब्दाभिधेयत्वेन स्थायिभावस्य रतेर्व्यभिचारिणामौत्सुक्यहर्षावेगचापल्यप्रभृतीनां च झटित्येवालक्ष्यक्रमत्वेन व्यज्यमानता, न तथाऽत्र, अत्र हि वाच्यार्थप्रतीत्युत्तरं विलम्बेन लज्जाया व्यभिचारिभावस्य प्रतीतिः, तदुत्तरं रतेरिति महान् विलम्बोऽलक्ष्यक्रमतां बाधत इति सारम्॥

उक्तार्थको उदाहरण द्वारा पुष्ट करते हैं—यथेति। जैसे कुमारसंभवमें वसन्तप्रसङ्ग पर वासन्तिक पुष्पोंका आभूषण पहन कर पार्वतीके शिवनिकट आगमनसे लेकर कामदेवके शर सन्धान पर्यन्त और पार्वतीके सौन्दर्यसे मुग्ध होकर धैर्यरहित महादेवके चेष्टाविशेषोंका साक्षात् शब्दोंसे ही प्रतिपादन किया गया है—जैसे—डरके मारे नष्ट प्राय होनेवाले कामदेवके बलको अपने शरीरके अलौकिक सौन्दर्यसे बढ़ानेवाली पार्वतीको, विजया और मालिनी नामक दो सखियोंके साथ कामदेवने देखा।

शङ्कर भगवान्ने, भक्तवत्सल होनेके कारण पार्वतीसे ही दी हुई उस पद्माक्ष-

मालाको स्वीकार किया और इधर कामदेवने भी संम्मोहन नामक बाणको अपने धनुष पर चढ़ाया।

भगवान् शंकर भी चन्द्रके उदय होनेसे उछलते हुए समुद्रकी तरह कुछ अधीरसे होकर बिम्बफल के समान अत्यन्त लाल अधरसे उल्लसित पार्वतीके मुखको तीनों नयनोंसे निहार कर देखने लगे।

इन स्थलोंमें जैसे उमारूप आलम्बनविभाव, एवं वसन्त प्रसङ्ग, कामदेवका शरसन्धान, शिवकृत उमामुखावलोकन प्रभृति उद्दीपन विभावोंके अभिधा द्वारा प्रतिपादित होनेके अव्यवहित उत्तरक्षणमें ही रति रूप स्थायिभाव तथा औत्सुक्य, हर्ष, आवेग, चापल्य प्रभृति व्यभिचारि भावकी असंलक्ष्य क्रमसे अभिव्यक्ति होती है, वैसे यहाँ पर ( एवं वादिनि—इस स्थलमें ) नहीं होती है, अपि तु वाच्यार्थकी प्रतीतिके बाद कुछ विलम्बसे लज्जारूप व्यभिचारी भावकी प्रतीति होती है, उसके बाद रतिकी प्रतीति होती है, इसतरह महान् विलम्बकाल, असंलक्ष्य-क्रमत्वको बाधकर संलक्ष्यत्वक्रमत्वको ही व्यवस्थित करता है।

तदाह—

इह तु सामर्थ्याक्षिप्तव्यभिचारिमुखेन रसप्रतीतिः।

इह 'एवंवादिनि' इति श्लोके तु व्यज्यमानेन लज्जाऽऽख्यव्यभिचारिभावेन व्यवहिता रसस्य रतेश्शृङ्गारस्य चास्वाद इति नासंलक्ष्यक्रमत्वं, किन्तु लक्ष्यक्रमतैवेत्याशयः॥

वृत्तिकार उक्ताशयको संक्षेपसे बतलाते हैं—इहेति। 'एवं वादिनि' इस श्लोकमें व्यञ्जनाद्वारा व्यज्यमान लज्जाख्य व्यभिचारी भावसे व्यवहित होकर रति एवं शृंगार रसका आस्वादन होता है, इसलिये असंलक्ष्यक्रमत्व न होकर संलक्ष्यक्रमत्व ही होता है।

इसलिये यह ( एवं वादिनि- ) श्लोक, अर्थशक्त्युद्भव संलक्ष्य क्रम व्यङ्ग्य नामक ध्वनि प्रकारका ही उदाहरण है।

निगमयति—

तस्मादयमन्यो ध्वनेः प्रकारः।

अन्यः संलक्ष्यक्रमव्यङ्ग्यः॥

वृत्तिकार उसका उपसंहार करते हैं—तस्मादिति। इसलिये यह दूसरा ही संलक्ष्य क्रमव्यङ्ग्य नामक ध्वनिका प्रकार है।

कारिकायाम् 'उक्तिं विना' इत्युक्तेः फलं दर्शयितुमुपक्रमते—

यत्र च शब्दव्यापारसहायोऽर्थोऽर्थान्तरस्य व्यञ्जकत्वेनोपादीयते, स नास्य ध्वनेर्विषयः।

उपादीयतेऽभिधीयते। यत्र 'सङ्केतकालमनसम्' इत्यादौ लीलाकमलनिमीलनादिरूपो वाच्यार्थ आकूतशब्दव्यापारस्याभिधायाः साहाय्येनार्थान्तरमागमनयोग्यसायंसमयरूपं व्यङ्ग्यमर्थं प्रत्याययति, सोऽस्यार्थशक्त्युद्भवसंलक्ष्यक्रमव्यङ्ग्यस्य न विषयः। तत्रापि सामग्रीसङ्घटनायामसंलक्ष्यक्रमव्यङ्ग्यप्रभेदत्वं न वार्यते, तस्य प्रकारान्तरेण व्यवस्थापवादित्यभिसन्धिः॥

परन्तु जहां पर उक्त वाच्यार्थ किसी दूसरे शब्दकी अभिधा वृत्तिके सहारे ही व्यङ्ग्यार्थको अभिव्यक्त करता है, वहां पर वह (व्यङ्ग्यार्थ) इस अर्थशक्त्युद्भव संलक्ष्य क्रमव्यङ्ग्य ध्वनिका विषय नहीं समझा जाता है।

उदाहरति—

यथा—'सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥'

विदग्धया चतुरया पुंश्चल्या, सङ्केतकाले मनो यस्य तादृशं सम्मेलनसमयं जिज्ञासुं विटं षिङ्गमुपपतिं ज्ञात्वेङ्गितैरनुमाय, हसद्भ्यामीषद्विकसद्भ्यां नेत्राभ्यामर्पितं दत्तमाकूतमभिप्रायसूचकमिङ्गितं यथा भवति तथा लीलापद्मं निमीलितं सङ्कोचितमित्यर्थः। तथा च 'विटोऽद्रौ लवणे षिङ्गे' इति मेदिनी। 'स्यादाकूतमभिप्रायः' इत्यभिधानञ्च। केचित् पुनर्हसदित्यादि विटविशेषणं मन्यन्ते। अपरे हस्ते नेत्रार्पिताकूतमिति पाठं व्याहरन्ति।

अत्र कमलनिमीलनरूपवाच्यार्थेन यद्यपि सायंसन्ध्यालक्षणः सङ्केतकालो व्यज्यत इति ध्वनेः सम्भावनाऽस्ति, किन्त्वाकूतशब्देन सोऽर्थोऽभिहित इति न ध्वनिः, अपितु गुणीभूतव्यङ्ग्य एव। नन्वाकूतशब्दस्याद्यचरणत्रयस्य वा तदर्थेऽभिधाऽभावादिदानीमपि कथं न ध्वनिरिति चेत्, न, अभिधाविरहात्तदर्थस्याभिधेयीकरणाभावेऽप्याकूतशब्देनार्थान्तरस्य व्यञ्जकोऽत्रशब्दोऽस्तीतिसूचनाद्वाराऽर्थान्तरेऽभिधेयायमानताऽऽधानात्।

जसे किसी चतुर नायिकाने संभोगके लिये समागम योग्य संकेतकालको जाननेकी इच्छावाले जार पुरुषके भाव (आशय) को जानकर किञ्चित् प्रफुल्ल आँखोंके इशारेसे अभिप्रायको सूचित करती हुई लीला कमलको संकुचित कर दिया।

यहां पर लीलाकमलका निमीलन रूप वाच्यार्थ आकूत शब्दकी अभिधाके सहारेसे ही समागम योग्य सायंकालरूप व्यङ्ग्यार्थका अभिव्यक्त करता है, अर्थात् कमल संकोचनद्वारा यद्यपि संध्यारूप संकेतकालकी अभिव्यक्तिसे उक्त ध्वनिकी संभावना है,

तथापि आकूत शब्दसे ही वह व्यङ्ग्यार्थ अभिहित हो जाता है, इसलिये ध्वनि न होकर गुणीभूत व्यङ्ग्यका ही यह उदाहरण है।

तदाह—

अत्र लीलाकमलनिमीलनस्य व्यञ्जकत्वमुक्त्यैव निवेदितम्।

अतो नार्थशक्तिमूलो ध्वनिरिति शेषः॥

वृत्तिकार उसीको संक्षेपमें बतलाते हैं—अत्रेति। अर्थात् लीलाकमल-निमीलनके सन्ध्यारूप संकेत समयाभिव्यञ्जकत्वको आकूत शब्दने ही उक्ताभिप्राय सूचनद्वारा अन्यथासिद्ध (व्यर्थ) कर दिया, इसलिये यह अर्थशक्तिमूलक उक्त ध्वनि नहीं है।

तदाह ध्वनिकारोऽपि—

तथा च—

शब्दार्थशक्त्या वाऽऽक्षिप्तो व्यङ्ग्योऽर्थः कविना पुनः॥
यत्राविष्क्रियते स्वोक्त्या साऽन्यैवालंकृति ध्वनेः॥ ४६॥

शब्दश्चार्थश्च शब्दार्थौ, शब्दार्थौ च शब्दार्थौ च शब्दार्थाः, तेषां शक्तिरभिधामूला स्वतन्त्रा च व्यञ्जना तयाऽऽक्षिप्तो बोधितोऽर्थो यत्र कविना पुनः स्वोक्त्या तद्वाक्यघटकपदान्तरेण, आविष्क्रियते प्रकाश्यते, सा ध्वनेरन्या वाच्यत्वादतिरिक्ता, अलंकृतिरलङ्कार एव, नतु ध्वनिरित्यर्थः।

यत्र वाक्ये बहुभिः पदैरर्थो व्यज्यते, किन्त्वेकेन केनापि पदेन पुनरत्र वाच्याभिन्नो ऽप्यर्थोऽस्तीति सूच्यते चेत्, तर्हि न तत्र संलक्ष्यक्रमोऽसंलक्ष्यक्रमो वा ध्वनिः, व्यङ्ग्यार्थस्य स्फुटीभावेन निरावरणीकृतकामिनीकुचकलशवच्चमत्कारकत्वविरहात्, अपि तु तत्र श्लेषादिरलङ्कार एव भवतीति सारम्॥

ध्वनिकार भी उक्ताशयको निबद्ध करते हैं—शब्दार्थेति। जहां पर अभिधामूल एवं स्वतन्त्र व्यञ्जनासे अभिव्यञ्जित होनेवाला व्यङ्ग्यार्थ तद्व्यञ्जक वाक्यवर्त्ति किसी पदके द्वारा स्फुटरूपसे प्रकाशित हो जाता है, वहां व्यङ्ग्यके वाच्यकी तरह प्रतीयमान होनेसे अलंकारका ही व्यवहार होता है, ध्वनिका व्यवहार नहीं होता, अर्थात् जिस काव्यमें अनेकों पदोंसे व्यञ्जनाद्वारा जो अर्थ अभिव्यक्त होता है, उस अर्थको यदि कोई एक पद अभिधा द्वारा ही स्पष्टता पूर्वक बतला देता है, वहां पर व्यङ्ग्यार्थके स्फुट हो जानेसे अनाच्छादित कामिनी कुच कलशवत् चमत्कारिता नहीं रहती, इसलिये संलक्ष्य या असंलक्ष्य क्रमव्यङ्ग्य ध्वनिका व्यवहार न होकर श्लेषादि अलंकारका ही व्यवहार होता है।

तद्व्याचष्टे वृत्तिकृत्—

शब्दशक्त्याऽर्थशक्त्या शब्दार्थशक्त्या वाऽऽक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनर्यत्र स्वोक्त्या प्रकाशीक्रियते, सोऽस्मादनुस्वानोपमव्यङ्ग्याद् ध्वनेरन्य एवालङ्कारः। अलक्ष्यक्रमव्यङ्ग्यस्य वा ध्वनेः सति सम्भवे, स तादृगन्योऽलङ्कारः।

एतेन पूर्वोक्तशब्दशक्त्युद्भवध्वनेस्तृतीयोऽपि प्रकारः साधितः॥

जहां शब्दशक्ति एवं अर्थशक्ति तथा शब्दार्थोभयशक्तिमूल व्यञ्जनासे अभिव्यक्त होनेवाला व्यङ्ग्यार्थ किसी पदसे अभिधाद्वारा ही स्फुट हो जाता है, वहां संलक्ष्य या असंलक्ष्य क्रमव्यङ्ग्य ध्वनिका व्यवहार नहीं होता, अपितु उन दोनोंसे भिन्न यथा संभव अलंकारका ही व्यवहार होता है।

तत्र शब्दशक्त्या व्यङ्ग्यस्य पदान्तरेण प्रकाशनात्संलक्ष्यक्रमध्वनेरभावमुदाहरति—

तत्र शब्दशक्त्या यथा—

'वत्से! मा गा विषादं श्वसनमुरुजवं सन्त्यजोर्ध्वप्रवृत्तं,
कम्पः को वा गुरुस्ते किमिह बलभिदा जृम्भितेनात्र याहि।
प्रत्याख्यानं सुराणामिति भयशमनच्छद्मना कारयित्वा,
यस्मै लक्ष्मीमदाद्वः स दहतु दुरितं मन्थमूढां पयोधिः॥'

हे वत्से! पुत्रि! विषादं खेदं पक्षे विषमत्तीति विषादस्तं शिवं, मा गा न प्राप्नुहि पक्षे न वृणु, ऊर्ध्वप्रवृत्तमुच्चैर्जातम्, उरुजवं बहुवेगं, श्वसनं श्वासं सम्यक् त्यज, पक्षे उरुजवं श्वसनं वायुम्, ऊर्ध्वप्रवृत्तं 'प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः' इत्यादिदर्शनादग्निं सन्त्यज, गुरुर्महान् कम्पो वेपथुर्वा ते कः? कुतो भवति? पक्षे कं जलं पातीति कम्पो वरुणः को ब्रह्मा वा ते गुरुः पूज्यस्तेन तावपि न वृणु, बलभिदाऽऽयासकारितया बलहानिकारिणा जृम्भितेन जृम्भया गात्रसम्मर्दनेन च, इह किम्? न किमपि प्रयोजनम्, पक्षे जृम्भितेन परमैश्वर्यशोभितेन बलभिदा शक्रेणेह किम्? अत्र निर्भये स्थाने, पक्षे विष्णौ, याहि, इत्येवं भयस्य शमनच्छद्मना निवारणव्याजेन, सुराणां शिवप्रभृतिदेवानां प्रत्याख्यानं निराकरणं मन्थमूढां मन्दरान्दोलनजलधितरङ्गभङ्गपर्याकुलितां लक्ष्मीं कारयित्वा, पयोधिः समुद्रो यस्मै तामदाद्ददौ, स विष्णुर्वो युष्माकं दुरितं पापं दहत्वित्यर्थः।

अत्र विषादादिशब्दैः व्यंज्यमानोऽपि शिवादिरूपोऽपरार्थश्छद्मशब्दं प्रयुञ्जानेन कविना प्रकाशित इति न ध्वनिः । विषादादिशब्दानां परिवर्तनं च कर्तुमशक्यमिति शब्दशक्तिमूलत्वसम्भावना । कमित्यन्ययं जलवाचीति कम्पशब्दः सिध्यति । विषभक्षकत्वाच्छिवस्य, प्रचण्डवेगत्वाद्वायोः, ऊर्ध्वप्रवृत्तत्वादग्नेः, गुरुत्वाद्वरुणविरिञ्च्योः, बलभेदकत्वादिन्द्रस्य च त्याज्यत्वं दोषविशेषानुक्तेर्विष्णोश्चात्याज्यत्वं च व्यज्यते ॥ ४० ॥

अब शब्दशक्तिमूल व्यञ्जनासे व्यङ्ग्य होने योग्य अर्थके पदान्तरसे प्रकाशन स्थलमें संलक्ष्य क्रमव्यङ्ग्य ध्वनिका अभाव बतलाते हैं—यथेति । कवि लक्ष्मीके प्रति समुद्रकी उक्तिके वर्णनद्वारा विष्णुकी प्रशंसा करता है, जैसे—हे पुत्री ! तुम खेद न करो एवं अत्यन्त वेगके साथ दीर्घ सांस भी न छोड़ो, तुम इतनी क्यों कांप रही हो, शक्तिको नष्ट करनेवाली इतनी अङ्गराई लेनेसे क्या लाभ ? तुम इस निर्भय स्थानमें जाओ, इस तरह कह कर समुद्रने जिसके शरणमें मन्दराचलके मन्थनसे डरी हुई लक्ष्मीको दे दिया, वह विष्णु भगवान् तुम्हारे पापराशिको जलावे, यह वाच्यार्थ है । 'हे वत्से ! लक्ष्मि ! विषभक्षक शिवको तुम नहीं वरण करो, एवं वायु तथा अग्निको भी नहीं वरण करो, और वरुण तथा ब्रह्मा तो तुम्हारे पूज्य ही हैं, अतः उन दोनोंको भी न वरो, परम ऐश्वर्यशाली इन्द्रसे तुम्हें प्रयोजन ही क्या है, अतएव सर्वश्रेष्ठ विष्णुको ही वरण करो, इस तरह व्यञ्जनावृत्तिसे भयको दूर करनेके बहाने से अन्य देवोंके वरणका निषेध करवाकर समुद्रने मन्दराचलके मन्थनसे घबड़ाई हुई लक्ष्मीको जिसके अधीन कर दिया, वह विष्णु तुम्हारे सारे पापको दग्ध करे ।' यह व्यङ्ग्यार्थ सूचित होता है ।

यहां पर विषाद आदि शब्दोंसे व्यञ्जित होने वाले शिव आदि व्यङ्ग्यार्थको छद्म शब्दने ही अत्यन्त स्फुट कर दिया है, अतः ध्वनि न होकर गुणीभूत व्यङ्ग्य ही का यह उदाहरण है ।

अर्थशक्त्या व्यङ्ग्यस्य गुणीभावमुदाहरति—

अर्थशक्त्या यथा—

अम्बा शेतेऽत्र वृद्धा परिणतवयसामग्रणीरत्र तातो-
निश्शेषागारकर्मश्रमशिथिलतनुः कुम्भदासी तथाऽत्र ।
अस्मिन् पापाऽहमेका कतिपयदिवसप्रोषितप्राणनाथा,
पान्थायेत्थं तरुण्या कथितमवसरव्याहृतिव्याजपूर्वम् ॥

हे पान्थ ! अत्रास्मिन् गृहे वृद्धा जरती, अम्बा माता शेते, अत्र परिणतवयसां-

वृद्धानामग्रणीर्वर्षीयांस्तातः पिता शेते, तथाऽत्र निश्शेषैरखिलैरगारकर्मभिर्गृह-कार्यैरिन्धनाहरणादिभिर्यः श्रम आयासस्तेन शिथिला तनु र्यस्याः सा, कुम्भदासी जलहारिणी चेटी शेते, अस्मिन् गृहे च कतिपयदिवसैः प्रोषितः परदेशं गतः प्राणनाथो यस्याः सा, अतएव पापाऽपुण्यात्माऽहं शये, इत्थम्, अवसरव्याहृतिव्याजपूर्वं तत्स-मागमप्रसरे क्षिपुरस्सरं पान्थाय पथिकाय तरुण्या स्वैरिण्या युवत्या कथितमित्यर्थः।

अत्राम्बावार्द्धक्यादयोऽर्थाः समागमसंनिधानसौकर्यमुखेन यां तदीयसम्भोगेच्छां व्यञ्जन्ति, सा व्याजशब्देन स्फुटीकृतेति नार्थशक्त्युद्भवव्यङ्ग्यो ध्वनिः। तदभावे च ध्वनिः स्यादेव, एवं पूर्वत्रापि बोध्यम्।

पित्रोर्वार्द्धक्येन दास्याश्श्रमशिथिलाङ्गत्वेन गृहान्तरशयनेन च रहस्यविहारस्य सौकर्यमुद्भेदायोग्यता च, ततस्तदाचरणसमीहा, प्रोषितपतिकत्वेनात्मन उत्कटा विजिहीर्षा पान्थस्य भीत्यसम्भावना च, दास्याः कुम्भसम्बन्धेन परचरितानभिज्ञत्वं च सूच्यते।

अब अर्थशक्तिमूल व्यञ्जनासे व्यञ्जित होनेवाले व्यङ्ग्यका गौणत्व बतलाते हैं—कोई चतुर कामुकी पथिकसे कहती है—हे पान्थ! इस घरमें वृद्धा माता अलग ही सोती है, और इस घरमें अत्यन्त वृद्ध पिताजी सोते हैं, तथा सारे गृह कार्यभारोंसे थककर अत्यन्त शिथिल शरीरवाली दासी दूसरे घरमें गाढ निद्रामें सोई हुई पड़ी रहती है, कितने ही दिनोंसे प्राणनाथसे बिछुड़ी हुई अभागिन मैं ही अकेली इस घरमें सोती हूं, इस तरह युवती नायिकाने पान्थके साथ बात-चीतके बहानेसे संभोगावसरको सूचित किया है।

यहां पर अम्बा आदिका वार्द्धक्यादि अर्थ, समागमके सौकर्य प्रतिपादन द्वारा नायिकाकी जिस संभोगाभिलाषाको व्यक्त करता है, उसको व्याज शब्दने ही स्फुट कर दिया, इसलिये यह अर्थशक्त्युद्भव ध्वनि न होकर गुणीभूत व्यङ्ग्य ही है।

उभयशक्त्या व्यङ्ग्यस्य गुणीभावमुदाहरति—

**उभयशक्त्या यथा—'दृष्ट्या केशव! गोपरागहृतया' इत्यादौ।**

श्लोकोऽयं प्रागेव विवृतो वर्णितव्यङ्ग्यगुणीभावश्च। तत्र गोपरागादिशब्दानां परिवर्तनाक्षमत्वेन दृष्टमित्यादिशब्दानां तत्क्षमतया चोभयशक्तिमूलध्वनेः सम्भावना लेशशब्देन निराकृतेति सङ्क्षेपः।

अब शब्दार्थोभय शक्तिमूल व्यञ्जनासे व्यङ्ग्य होनेके योग्य अर्थका गौणत्व बतलाते हैं—हे केशव! पृथिवीकी धूलि पड़ जानेसे आँखें बन्द हो गई इसीलिये

-में नहीं देख सकी, या आपमें अधिक अनुराग होनेसे मैं अत्यन्त कामान्ध होकर कुछभी नहीं सोच विचार कर सकी, इस तरह पूर्वोक्त व्यङ्ग्यार्थको लेश शब्दने ही स्फुट कर दिया, अतः शब्दार्थोभय शक्त्युद्भव ध्वनिकी संभावना नहीं रही।

अर्थशक्त्युद्भवध्वनिमुदाहर्तुमर्थभेदं दर्शयति—

**प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः ।**
**अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः ॥२७॥**

प्रौढोक्तिमात्रनिष्पन्नशरीरः स्वतः सम्भवी चेति द्विविधोऽर्थोऽपि अन्यस्य व्यङ्ग्यस्य वस्तुनोऽर्थस्य दीपको व्यञ्जक इत्यर्थः । केचित्तु—'योऽर्थान्तरस्य दीपको व्यञ्जकोऽर्थ उक्तः, सोऽपि द्विविधः, न केवलमनुस्वानोपमो द्विविधः, यावत्तद्भेदो यो द्वितीयः, सोऽपि व्यञ्जकार्थद्वैविध्यद्वारेण द्विविध इत्यपिशब्दस्यार्थः' इत्याहुः ॥

अब अर्थशक्त्युद्भव ध्वनिका उदाहरण बतलानेके लिये पहले अर्थका भेद बतलाते हैं—प्रौढोक्तीति। कविकी प्रतिभा वश निष्पन्न (कविके दिमागकी उपज) या कवि निबद्ध व्यक्तिकी प्रतिभा वश निष्पन्न (केवल काल्पनिक) और स्वतः सम्भवी, इस तरह दो प्रकारका अर्थ व्यङ्ग्यार्थका व्यञ्जक होता है।

तदनुसारेण विवृणोति वृत्तिकृत्—

**अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्ये ध्वनौ यो व्यञ्जकोऽर्थ उक्तः, तस्यापि द्वौ प्रकारौ । कवेः कविनिबद्धस्य वा वक्तुः प्रौढोक्तिमात्रनिष्पन्नशरीर एकः, स्वतः सम्भवी च द्वितीयः ।**

प्रौढोक्तिमात्रनिष्पन्नशरीरः कवेः कविकल्पितस्य वक्तुर्वा 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति न्यायात्कल्पनिकमणित्यैव, न तु वस्तुस्थित्याऽपि, सम्पन्नाकारः, स्वतः सम्भवी योग्यतया लोकेऽपि सम्भवनाविषयः, न तु काल्पनिक-भणितिमात्रेण निष्पन्नशरीर इति द्विविधः, वस्तुत प्रथमप्रकारस्य द्वैविध्यात्त्रिवि-धोऽर्थो व्यञ्जक इत्यर्थः ।

त्रिविधोऽप्यसौ वस्तुरूपोऽलङ्काररूपश्चार्थो वस्तुनोऽलङ्कारस्य च व्यञ्जक इति द्वादशधाऽर्थशक्त्युद्भवध्वनिरन्यत्र दर्शितः । तथाहि—कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्य-वस्तुध्वनिः १, तादृशवस्तुव्यङ्ग्यालङ्कारध्वनिः २, तादृशालङ्कारव्यङ्ग्यवस्तुध्वनिः ३, तादृशालङ्कारव्यङ्ग्यालङ्कारध्वनिः ४, एवं कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्य-ङ्ग्यवस्तुध्वनिः ५, तादृशवस्तुव्यङ्ग्यालङ्कारध्वनिः ६, तादृशालङ्कारव्यङ्ग्यवस्तुध्वनिः

९, तादृशवस्तुव्यङ्ग्यालङ्कारध्वनिः १०, तादृशालङ्कारव्यङ्ग्यवस्तुध्वनिः ११, तादृशालङ्कारव्यङ्ग्यालङ्कारध्वनिः १२, इति तत्र प्रथमस्य द्वितीयस्य पञ्चमस्य षष्ठ स्याष्टमस्य नवमस्य दशमस्य च प्रकारस्योदाहरणानि मूले दर्शयिष्यन्ते, परेषां प्रकाराणां प्रकाशप्रभृतौ दर्शितानि—तृतीयस्य प्रकाशे यथा—

'गाढालिंगणरहसुज्जुअम्मि दइए लहुं समोसरइ ।
माणं-सिणीण माणो पीलणभीअ व्व हिअआहिं ॥'
'गाढालिङ्गनरभसोद्यते दयिते लघु समपसरति ।
मनस्विन्या मानः पीड़नभीत इव हृदयात् ॥' इतिच्छाया ।

चतुर्थस्य यथा प्रतापरुद्रीये—'काकतीयविभोः कीर्ति-पुण्डरीके विजृम्भिते ।
धत्ते मधुकरक्रीडां तमालश्यामलं नभः ॥'

सप्तमस्य यथा दर्पणे—'मल्लिकामुकुले चण्डि ! भाति गुञ्जन् मधुव्रतः ॥
प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव ॥'

अष्टमस्य यथा प्रकाशे—'महिलासहस्सभरिए तुह हिअए सुहअ ! सा अमाअन्ती ।
अणुदिणमणण्णकम्मा अङ्गं तणुअं वि तणुएइ ॥'
'महिलासहस्रभरिते तव हृदये सुभग ! साऽमान्ती ।
अनुदिनमनन्यकर्मा अङ्गं तन्वपि तनयति ॥' इतिच्छाया ।

एकादशस्य यथा दर्पणे—आपतन्तममुं दूरादूरीकृतपराक्रमः ।
बलोऽवलोकयामास मातङ्गमिव केसरी ॥'

द्वादशस्य यथा रसगङ्गाधरे—'उदितं मण्डलमिन्दो रुदितं सद्यो वियोगिवृन्देन ॥
मुदितं च सकलललना-चूडामणिशासनेन मदनेन ॥' इति ।

यत्तु जगन्नाथेन—'कवितदुम्भितप्रौढोक्ति ववतृप्रौढोक्तिनिष्पन्नयो र्न पृथग्भावेन गणनोचिता, उम्भितोम्भितादेरपि भेदान्तरप्रयोजकताऽऽपत्तेः' इत्युक्तम्, तन्न, वृद्धोक्तिविषयाच्छिशूक्तिविषय इव, कव्युक्तिविषयात्तन्निबद्धोक्तिविषयोऽधिकतररागप्रकटकत्वेनाधिकचमत्कारीति द्वयो र्भेदस्य स्फुटत्वात् । अन्यथा कविनिबद्धभणितिनिष्पन्नः कविभणितिनिष्पन्न एवेति स्वतस्सम्भवित्वं प्रौढोक्तिनिष्पन्नत्वं चेति द्वैरूप्यमेव विदध्यात् । इतः परं च प्रणिधानप्रतीतिकतया चमत्कारस्य स्थगनान्न कविनिबद्धनिबद्धवक्त्रादेः पृथग्गणनमित्युद्द्योतादौ स्पष्टं द्रष्टव्यम् ॥

वृत्तिकार उक्तार्थको ही विशद करते हैं—अर्थेति । अर्थशक्त्युद्भव संलक्ष्य क्रमव्यङ्ग्य ध्वनिका व्यञ्जक अर्थ दो प्रकारका है—एक कवि या कवि निबद्ध वक्ताकी

कल्पनासे कल्पित, (केवल बनावटी) और दूसरा स्वतः संभवी, (वास्तविक व्यावहारिक), वास्तवमें तो प्रथमके दो प्रकार होनेसे उक्त तीन प्रकारका अर्थ, व्यङ्ग्यार्थका व्यञ्जक होता है और उक्त तीनों प्रकारका अर्थ, वस्तु और अलंकारके भेदसे दो प्रकारका होकर व्यङ्ग्य वस्तु और व्यङ्ग्य अलंकारके व्यञ्जक होनेसे अर्थशक्त्युद्भव ध्वनि १२ प्रकारकी होती है।

प्रथमं प्रकारमुदाहर्तुमाह—

कविप्रौढोक्तिमात्रनिष्पन्नशरीरो यथा—

'सज्जेहि सुरहिमासो ण दाव अप्पेइ जुअइजणलक्खमुहे ।
अहिणवसहआरमुहे णवपल्लवपत्तले अणङ्गस्स सरे ॥'

'सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान् ।
अभिनवसहकारमुखान् नवपल्लवपत्रलाननङ्गस्य शरान् ॥' इतिच्छाया ॥

सुरभिमासो वसन्तमासः, युवतिजनो लक्ष्यं लक्षणीयतया दर्शनीयं मुखमग्रभागो येषां तान्, नवपल्लवाः किसलया एव पत्राणि पक्षास्तानि लान्ति गृह्णन्ति ये, तान्, तथा अभिनवो नवमुकुलितः सहकारोऽतिसौरभ्यात् मुखमादि येषां तान्, अनङ्गस्य कामस्य, शरान् बाणान्, सज्जयति निर्माति प्रसाधयति वा, न केवलं तावदर्पयति कामाय ददातीत्यर्थः ।

इह चेतनो वसन्तः शरनिर्माता, अनङ्गो धन्वीत्यादिवस्तुरूपोऽर्थः कविप्रौढोक्तिमात्रेण केवलं सिद्धः प्रतीतं मन्मथोन्मादकदायकत्वं वस्तु वसन्तस्य क्रमेण व्यनक्तीति संलक्ष्यक्रमार्थशक्त्युद्भवकविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यवस्तुध्वनिः । किन्तु सुरभिमासादीनां कविप्रौढोक्तिविषयीकरणादेव व्यञ्जकत्वम् । अन्यथा वसन्तकालिकसहकारकिसलयप्रफुल्लोद्गमस्य वस्तुमात्रस्य तत्र स्यात् । स्कन्धकं छन्दः ॥

द्वितीयभेदस्योदाहरणान्यग्रे 'वाणं रमइ' इत्यादीनि दर्शयिष्यन्ते । तृतीयचतुर्थभेदयोस्तु प्रागेव मया दर्शितम् ॥

इनमें सबसे पहले कविप्रौढोक्ति सिद्ध वस्तुसे व्यङ्ग्य वस्तु रूप अर्थशक्त्युद्भव संलक्ष्य क्रमव्यङ्ग्य ध्वनिका उदाहरण बतलाते हैं—अर्थात् । जैसे वसन्त समय युवति जनकी ओर लक्ष्य करके नवीन पल्लवोंकी पंखुरी रूप पंखोंसे युक्त अत्यन्त सौरभमय नूतन आम्र मञ्जरी रूप काम बाणोंको तैयार करता है, पर केवल छोड़नेके लिये कामदेवको नहीं देता ।

यहां पर 'अचेतन वसन्त बाण बनानेवाला है और काम धनुर्धारी है' इत्यादि

वस्तु-रूप अर्थ कविकी कल्पनामात्रसे निष्पन्न होकर क्रमशः ( बादमें ) वसन्त ऋतुमें कामवासना जनित पीड़ा वर्द्धकत्व रूप वस्तुको व्यक्त करता है।

पञ्चमं भेदमुदाहरति—

कविनिबद्धवक्तृप्रौढोक्तिमात्रनिष्पन्नशरीरो यथा-'शिखरिणि'इत्यादौ।

पूर्वमेव व्याख्यातोऽयं श्लोकः। अत्र कविनिबद्धस्य कामिनो वक्तुः प्रौढोक्त्या निष्पन्नस्य शुकशावककृतनायिकाऽधरलोहितविम्बफलदंशनस्य वस्तुनो वस्तुव्यञ्जकत्वेन द्वितीयभेदोदाहरणत्वम्। अन्यथा शुकशिशुर्लोहितं विम्बफलं दशतीत्येतावन्मात्रस्य व्यञ्जकत्वं न स्यात्॥

कवि-निबद्ध वक्ताकी प्रौढोक्ति वश निष्पन्न अर्थसे अभिव्यञ्जित ध्वनिका उदाहरण बतलाते हैं—कविनिबद्धेति। कामुक नायक अनुनयके साथ नायिकासे कहता है-हे सुमुखि ! अत्यन्त भाग्यवान् शुकशावकने किस पहाड़ पर कितने दिनों तक कौनसा तीव्र तप किया, जिससे तेरे अधर जैसे लाल सुस्वादु मीठे बिम्ब फलको बड़ी चावसे चखरहा है, अर्थात् 'अतिशय पुण्यशाली व्यक्ति ही तेरे अधर रसका पान कर सकता है' यह व्यङ्ग्यार्थ है।

यहां पर कवि निबद्ध कामी वक्ताकी प्रौढोक्ति वश निष्पन्न शुक शावक कृत, नायिका अधरवत् लोहित बिम्ब फलका आस्वादन रूप वस्तु उक्त व्यङ्ग्यात्मक वस्तुको अभिव्यक्त करती है, अतः इसको अर्थशक्त्युद्भव ध्वनिके द्वितीय भेदका उदाहरण समझना चाहिये।

पुनरुदाहरति तमेव प्रकारम्—

यथा वा—

कश्चिद्विटो नवयौवनां व्याहरति—

'साअरविइण्णजोव्वणहत्थालम्बं समुण्णमन्तेहिं।
अब्भुट्ठाणं विअ मम्महस्स दिण्णं थणेहिं।

'सादरवितीर्णयौवनहस्तालम्बं समुन्नमद्भ्याम्।
अभ्युत्थानमिव मन्मथस्य दत्तं तव स्तनाभ्याम्॥' इतिच्छाया।

अयि बाले! सादरं ससत्कारं वितीर्णस्य दत्तस्य यौवनेनेति शेषः, यौवनहस्तस्य तारुण्यकरस्य, आलम्बमवलम्बनं कृत्वा, तद् यथा भवति तथा वा, समुन्नमद्भ्यां समुत्तिष्ठद्भ्याम्, तव स्तनाभ्यां कर्तृभ्याम्, मन्मथस्य कामस्याभ्युत्थानमिव दत्तमित्यर्थः।

यौवनोन्नम्यमानाभ्यां तव स्तनाभ्यां कामः सम्भावित इति भावः। झटिति स्वयमुत्थातुमशक्नुवन्नन्योऽप्यनुचरकरमवलम्ब्योत्थितः सन् समागच्छते गुरवे प्रभवे चाऽभ्युत्थानं ददातीति समुदाचार इति प्रधानीभूताभ्यामपि स्वयमुत्थातुमशक्नुवद्भ्यां तव कुचाभ्यां यौवनलक्षणानुचरहस्तावलम्बनं विधाय प्रभवे प्रधानतमाय कामायाभ्युत्थानमिव दत्तमिति समासोक्त्युत्प्रेक्षयोः सङ्करः।

ददातेर्योगेऽपि मन्मथस्येति सम्बन्धसामान्यविवक्षायां षष्ठी, रजकस्य वस्त्रं ददातीतिवत्परस्परयोरपत्यनुत्पत्तिविभावनाच्चतुर्थ्यभावो वा।

अत्रापि यौवनेन स्तनावुन्नमिताविति साधारणार्थस्य न व्यङ्ग्यकत्वम्, अपि तूक्तस्य कविकल्पितकामुकप्रौढोक्तिनिष्पन्नस्यैवेति वस्तुनोऽसम्भवितया प्रौढोक्तिमात्रनिष्पन्नशरीरत्वमिति च विवेचनीयम्।

षष्ठभेदस्योदाहरणं 'लावण्यपूरपरिपूरितदिङ्मुखेऽस्मिन्' इत्यादिना मूले दर्शयिष्यते, सप्तमाष्टमभेदयोस्तु मयैव दर्शितम्।

उसीका दूसरा उदाहरण बतलाते हैं—यथावेति। कोई लम्पट पुरुष नवयौवनासे कहता है—हे बाले! यौवनद्वारा आदरके साथ आगे बढ़ाये गये तारुण्यरूप हाथके सहारे उठते हुए तुम्हारे दोनों उन्नत स्तन झुककर आगन्तुक कामदेवका मानो स्वागत कर रहे हों, अर्थात् जवानीसे उन्नत होकर तुम्हारे स्तनों द्वारा कामदेव सत्कृत हुआ, याने तुम अत्यन्त रतिसंभोगके योग्य हो, यह आशय व्यञ्जनासे व्यक्त होता है, जैसे कोई प्रधान व्यक्ति शीघ्र स्वयं उठनेमें यदि समर्थ न होता है, तो अनुचरका हस्तावलम्बन कर उठता हुआ सा होकर आगन्तुक महानुभावोंका स्वागत करता है, वैसे ही रमणीयतया अङ्गोंमें प्रधान होते हुए भी स्वयं उठनेमें असमर्थ तुम्हारे कुच यौवनरूपी हस्तके सहारे उठकर आदरणीय कामदेवका मानो स्वागत जैसे कर रहे हों, यहां पर भी कवि कल्पित कामुक व्यक्तिकी प्रौढ़ोक्तिवश निष्पन्न होकर उक्त वाच्यार्थ तादृश व्यङ्ग्यार्थको व्यक्त करता है।

इदानीं नवमं भेदमुदाहर्तुमाह—

**स्वतः सम्भवी, य औचित्येन बहिरपि सम्भाव्यमानसद्भावो, न केवलं भणितिवशेनैवाभिनिष्पन्नशरीरः।**

स्पष्टम्। उदाहरति—

**यथोदाहृतम्—'एवं वादिनि' इत्यादौ।**

इदमपि पद्यं प्राग् विवृतमेव। अत्र स्वतस्सम्भविना मुखनमनादिवस्तुना तादृशं वस्तु व्यज्यते।

स्वतः संभवी उसको कहते हैं, जो कि केवल कवि कल्पना कल्पित बिल्कुल बनावटी ही न हो, अपि तु लोकव्यवहारमें भी प्रचलित होकर प्रसिद्ध हो। जैसे 'एवं वादिनि'—इत्यादि श्लोकमें दिखला चुके हैं, अर्थात् स्वतः सम्भवी मुखनमनादि वस्तुसे पार्वतीकी लज्जारूप व्यभिचारी भाव व्यक्त होता है।

उदाहरणान्तरमपि दर्शयति—

'सिहिपिच्छकण्णपूरा जाआ वाहस्स गव्विरी भमइ।
मुत्ताफलरइअपसाहणाणं मज्झे सवत्तीणम् ॥'
'शिखिपिच्छकर्णपूरा जाया व्याधस्य गर्विणी भ्रमति।
मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम् ॥' इतिच्छाया।

शिखिपिच्छस्य बर्हस्य शिखिपिच्छमेव वा कर्णपूरः कर्णाभरणं यस्याः सा, व्याधस्य मृगयो जाया वधूः, मुक्ताफलै मौक्तिकै रचितानि विन्यस्तानि प्रसाधनान्यलङ्करणानि यासां, तादृशीनां सपत्नीनां मध्ये गर्विणी साभिमाना भ्रमति सञ्चरतीत्यर्थः।

अत्र स्वतस्सम्भविगर्विव्याधवधू-तादृशसपत्नीजनमध्य—भ्रमणलक्षणं वस्तु सपत्नीनां दिवसेषु पत्युः सम्भोगैकलग्नमनस्त्वाभावाद्धस्तिनोऽपि हन्तुं क्षमतां द्वारीकृत्य तासां दौर्भाग्यातिशयं, स्वस्य वासरेषु तु साम्प्रतं तस्य निरन्तरस्मरसमरपरायणस्य क्षामतयाऽलब्धभूयोऽवकाशतया वा सुहिंसान् गृहपर्यन्तचरान् वा मयूरानेव मारयितुं समर्थतामन्तरा विधाय स्वसौभाग्यप्रकर्षं च वस्तु व्यनक्तीति स्वतस्सम्भविवस्तुव्यञ्जकवस्तुलक्षणोऽर्थशक्त्युद्भवध्वनिप्रकारः।

'गर्वश्च बाल्याविवेकादिनाऽपि भवतीति नात्र स्वोक्तिसद्भावः शङ्क्यः' इति लोचनम्।

दूसरा उदाहरण बतलाते हैं—शिखिपिच्छेति। केवल मोरकी पिच्छ कानमें पहनकर व्याधकी वधू बहुमूल्यक मौक्ति भूषणोंसे अलंकृत सपत्नियों (सौतों) के बीचमें गर्वसे इठलाती हुई विचर रही है।

यहां पर मौक्तिकोंसे अलंकृत सपत्नी जनोंके मध्यमें गर्विली व्याध वधूका भ्रमण रूप स्वतःसंभवी वस्तु है, जो कि—सपत्नियोंकी बारी (संभोग दिन) में उन (सपत्नियों) के बदसूरतसे संभोग करनेमें पति रूप व्याधका मन नहीं लगकर हाथी जैसे बड़े २ जानवरोंको ही मारनेमें लगे रहनेसे उन स्त्रियोंके पास मौक्तिक भूषणोंके होने पर भी रति संभोगसे वञ्चित होनेके कारण उनके अतिशय दौर्भाग्यको और अपनी बारीमें तो अत्यन्त निज सौन्दर्यसे आकृष्ट होकर लगातार रति विलासमें ही पतिके रमे रहनेसे अवकाश नहीं होनेके कारण गृहके

आसपास विचरते हुए मयूरोंको ही मारकर उनके द्वारा विना प्रयाससे प्राप्त पिच्छोंके आभूषणोंसे अलंकृत होनेसे उसके सौभाग्यातिशयको व्यक्त करती है, इसलिये उक्त स्वतः संभवी वस्तुसे व्यज्यमान उक्त वस्तु रूप व्यङ्ग्य अर्थशक्त्युद्भव ध्वनिका ही एक प्रकार है।

इत्थं वस्तुध्वनिं निरूप्यालङ्कारध्वनिं निरूपयति—

'अर्थशक्तेरलङ्कारो यत्राप्यन्यः प्रतीयते ॥
अनुस्वानोपमव्यङ्ग्यः स प्रकारोऽपरो ध्वनेः ॥४८॥

अपिशब्दोऽत्र भिन्नक्रमः। यत्र, अन्यो वाच्यालङ्काराद्भिन्नो व्यङ्ग्य इति यावद् अलङ्कारोऽपि न पुनर्वस्तुमात्रम्, अर्थशक्तेरर्थनिष्ठव्यञ्जनासामर्थ्यात्, प्रकाशते प्रतीतिविषयो भवति, सोऽनुस्वानोपमव्यङ्ग्यो ध्वनेरपरो वस्तुध्वनेरतिरिक्तोऽलङ्कारध्वनिर्नाम प्रकारो भवतीत्यर्थः॥

उक्त रीतिसे वस्तु ध्वनिका निरूपणकर अलंकार ध्वनिका निरूपण करते हैं— अर्थेति। जिस काव्यमें वाच्य भूत अलंकारसे भिन्न व्यङ्ग्यरूप अलंकार भी (न कि केवल वस्तु ही) अर्थ निष्ठ व्यञ्जनासे प्रतीत होता है, वह वस्तुध्वनिसे अतिरिक्त संलक्ष्य क्रमव्यङ्ग्यात्मक अर्थशक्त्युद्भव अलंकार ध्वनि नामक प्रकार होता है।

तदाह वृत्तिकारः—

वाच्यालङ्कारव्यतिरिक्तो यत्रान्योऽलङ्कारोऽर्थसामर्थ्यात् प्रतीयमानोऽवभासते, सोऽर्थशक्त्युद्भवो नामानुस्वानरूपव्यङ्ग्योऽन्यो ध्वनिः।

यथा कविप्रौढोक्तिसिद्धादित्रिविधवस्तुना वस्तुनि व्यङ्ग्ये, त्रिविधो ध्वनिः, तथैवालङ्कारेऽपि व्यङ्ग्ये स त्रिविध इति भावः॥

जहां पर वाच्यरूप अलंकारसे भिन्न व्यङ्ग्यात्मक अलंकार अर्थनिष्ठ व्यञ्जना द्वारा अभिव्यक्त होता है, उसको अर्थशक्त्युद्भव संलक्ष्य क्रमव्यङ्ग्य अलंकार ध्वनि कहते हैं, अर्थात् जैसे कवि प्रौढोक्ति सिद्ध आदि त्रिविध वस्तुओंद्वारा अभिव्यञ्जित त्रिविध वस्तु ध्वनि होती है, वैसे ही तादृश त्रिविध अलंकारों द्वारा अभिव्यञ्जित त्रिविध अलंकार ध्वनि भी समझनी चाहिये।

कारिकाऽन्तरमवतारयति—

तस्य प्रविरलविषयत्वमाशङ्क्येदमुच्यते—

तस्यालङ्कारध्वनेः। शब्दशक्तिमूल उदाहृतपूर्वश्लेषाद्यलङ्कारध्वनिस्तु सम्भवति न पुनरर्थशक्तिमूलोऽलङ्कारध्वनिरपीत्याशङ्कितुराशयः॥

पूर्व प्रदर्शित रीतिसे शब्द शक्तिमूल श्लेषादि अलंकार ध्वनिके संभव होने पर भी अर्थ शक्तिमूल अलंकार ध्वनि प्रायः नहीं हो सकती है, इस शंकाको अग्रिम कारिका द्वारा दूर करते हैं—

रूपकादिरलङ्कारवर्गो यो वाच्यतां श्रितः।
स सर्वो गम्यमानत्वं बिभ्रद्‌ भूम्ना प्रदर्शितः ॥४६॥

यो रूपकादिरर्थालङ्कारवर्गो वाच्यतां श्रितोऽभिधेयीभूतः, सर्वोऽखिलः सोऽलङ्कारवर्गो गम्यमानत्वं व्यङ्ग्यत्वं बिभ्रद्‌धानो भूम्ना बाहुल्येन भट्टोद्भटादिभिरपि प्रदर्शित इत्यर्थः।

तेनालङ्कारध्वने नैव अविरलविषयत्वं सम्भवतीति भावः॥

जो रूपकादि अलंकार समूह वाच्य रूपसे प्रसिद्ध हैं, उन सबका ही भट्ट उद्भट प्रभृति कवियोंने अधिक स्थल पर व्यङ्ग्यरूपमें प्रतिपादन किया है, इसलिये अर्थशक्तिमूल अलंकार ध्वनिकी अविरल विषयता नहीं है।

तदाह वृत्तिकृत्—

अन्यत्र वाच्यत्वेन प्रसिद्धो यो रूपकादिरलङ्कारः, सोऽन्यत्र प्रतीयमानतया बाहुल्येन प्रदर्शितस्तत्र भवद्भिर्भट्टोद्भटादिभिः।

तत्रभवद्भिः पूज्यैः, 'अत्रभवत्तत्रभवच्छब्दौ पूज्यार्थौ' इत्यभियुक्तोक्तेः॥

कतिपुचन वाच्यालङ्कारेषु प्रतीयमानेषु परोऽलङ्कारविशेषोऽपि प्रतीयत इत्यङ्गीकुर्वद्भिरुद्भटादिभिरप्यर्थशक्त्याऽलङ्कारो व्यज्यत इति स्वीकृतमेव केवलं कण्ठतो नोक्तम्, वाच्यव्यतिरिक्तस्यालङ्कारस्य तत्र व्यञ्जनां विना प्रतीतिपदवीमवतरीतुमनर्हत्वादिति तात्पर्यम्॥

कहीं पर वाच्यरूपसे व्यवहृत रूपकादि अलंकार वर्गको ही अन्य स्थलोंमें वाच्यभूत अलंकारान्तरके प्रति अधिकतर व्यङ्ग्यरूपमें अर्थशक्तिमूल व्यञ्जना द्वारा भट्ट प्रभृति प्रमुख कवियोंने प्रतिपादन किया है।

तदुपपादयति—

तथा च—ससन्देहादिषूपमारूपकातिशयोक्तीनां प्रकाशमानत्वं प्रदर्शितमित्यलङ्कारान्तरस्यालङ्कारान्तरे व्यङ्ग्यत्वं न यत्नप्रतिपाद्यम्।

अयमाशयः—'सादृश्यमूला भासमानविरोधका समबला नानाकोटयवगाहिनी धी रमणीया ससन्देहालङ्कृतिः' इति जगन्नाथेन लक्षितस्य ससन्देहालङ्कारस्य—

'मरकतमणिमेदिनीधरो वा तरुणतरस्तरुरेष वा तमालः ।
रघुपतिमवलोक्य तत्र दूरादृषिनिकरैरिति संशयः प्रपेदे ॥'

इत्युदाहरणे यथा रघुपतिधर्मिक—मरकतमयपर्वतत्वतरुणतमालतरुत्वप्रकारकसंशयस्याभिधीयमानतया ससन्देहालङ्कारो वाच्यो भासते, तथैव पर्यन्ते रघुपतेर्मरकतपर्वततमालतरुभ्यां सादृश्यस्य प्रत्ययादुपमा, तादात्म्यारोपाद्रूपकम्, तादात्म्याध्यवसानादतिशयोक्ति र्वा भासते । तदुक्तमप्पयदीक्षितैः—

उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदान् ।
रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ॥

भामहभट्टैश्च—'सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते ॥
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना ॥ इति ।

ते च तत्र प्रतीयमाना उपमादयोऽलङ्कारा वाचकाभावान्न वाच्या इति वक्तुं शक्या इत्युद्भटमतेऽपि तेऽनायत्या व्यङ्ग्या एव स्वीकरणीया इति निष्प्रत्यूहोऽलङ्कारध्वनिः सिद्धः ॥

उक्ताशयका ही उपपादन करते हैं—तथा चेति। जैसे भगवान् रामचन्द्रको दूरसे ही आते देखकर ऋषि लोग संदेह करने लगे कि—क्या यह मरकतमणिमय कोई हरा पहाड़ है ? या एक विशाल तमालका वृक्ष है ? इस तरह रामचन्द्रमें मरकतमणिमय पर्वतत्व एवं तरुण तमाल तरुत्व रूप विरुद्ध धर्म विषयक संदेह शब्द द्वारा ही प्रतिपाद्य है, अतः संदेहालंकार वाच्य रूपसे ही प्रतीत होता है, वैसे ही राममें उक्त पर्वत एवं तमाल वृक्षके सादृश्यसे उपमा, एवं तादात्म्यके आरोपसे रूपक, और तादात्म्यके अध्यवसायसे अतिशयोक्ति अलंकार व्यङ्ग्य रूपसे भासित होते हैं, इसलिये एक वाच्यरूप अलंकारके प्रति दूसरे अलंकारका व्यङ्ग्यत्व सिद्ध करनेके लिये अधिक क्लिष्ट कल्पना करनेकी आवश्यकता नहीं होती है ।

ननु यदि प्राचीनैरेवेदमुक्तम्, तर्हि कोऽत्र भवतो यत्नः ? इत्याशङ्कयाह—

इत्येतत्पुनरुच्यत एव—

**अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते ।**
**तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वने र्मतः ॥५०॥**

अपिर्भिन्नक्रमः । यत्र काव्ये, अलङ्कारान्तरस्य वाच्यातिरिक्तालङ्कारस्य व्यङ्ग्यस्येति यावत्, प्रतीतौ सत्यामपि, वाच्यस्यार्थस्य तत्परत्वं व्यङ्ग्योपकारकत्वं व्यङ्ग्या-

पेक्षयाऽप्रधानत्वं वा न भासते, असौ ध्वनेरनुस्वानोपमव्यङ्ग्यस्य मार्गो न मतः, किन्तु गुणीभूतव्यङ्ग्यस्यैवेत्यर्थः ॥

परन्तु जिस काव्यमें वाच्य व्यतिरिक्त व्यङ्ग्यरूप अलंकारकी प्रतीति होने पर भी वाच्यार्थ व्यङ्ग्यका उपकारक या व्यङ्ग्यकी अपेक्षा अप्रधान रूपसे भासित नहीं होता, वह संलक्ष्य क्रमव्यङ्ग्य ध्वनिका विषय नहीं समझा जाता है, अपितु गुणीभूत व्यङ्ग्य काव्यका ही विषय माना जाता है।

तदेव व्याचष्टे—

**अलङ्कारान्तरस्य रूपकादेरलङ्कारस्य प्रतीतौ सत्यामपि, यत्र वाच्यस्य व्यङ्ग्यप्रतिपादनौन्मुख्येन चारुत्वं न प्रकाशते, नासौ ध्वनेर्मार्गः।**

नह्यलङ्कारव्यञ्जनमात्रेणालङ्कारध्वनि व्यपदेष्टुं शक्यः, अपितु व्यङ्ग्यापेक्षया तस्याधिकविच्छित्तिशालित्वेनेति तदभावे कथं ध्वनिव्यपदेश इति भावः।

रूपकादि अलंकारकी व्यञ्जना द्वारा प्रतीति होनेसे ही अलंकार ध्वनिका व्यवहार नहीं होता, अपितु वाच्यकी अपेक्षा व्यङ्ग्यभूत अलंकारमें अधिक चमत्कारिता रहने पर ही उक्त ध्वनिका व्यवहार होता है, अतः उसके अभावमें ध्वनिका व्यपदेश नहीं होगा।

तदुपपादयति—

**तथा च—दीपकादावलङ्कारे उपमाया गम्यमानत्वेऽपि, तत्परत्वेन चारुत्वस्याव्यवस्थानान्न ध्वनिव्यपदेशः।**

आदिशब्देन तुल्ययोगिताऽपह्नुतिरूपकस्मरणप्रभृतीनां परिग्रहः। दीपकालङ्कारे वाच्ये प्रस्तुताप्रस्तुतयोरर्थयोरेकधर्माभिसम्बन्धितया भाने सादृश्य एव पर्यवसानाद्व्यङ्ग्यत्वेन भासमानाया अप्युपमायाश्चारुत्वानाश्रयत्वेन नैव ध्वनिव्यपदेशप्रयोजकत्वमित्यभिसन्धिः॥

उक्त अभिप्रायको ही उदाहरण द्वारा स्फुट करते हैं—तथा चेति। वाच्यरूपसे भासमान दीपकालंकारमें प्रस्तुत अप्रस्तुत दोनोंका एक धर्मके साथ सम्बन्धीरूपमें भान होता है, अतः सा[illegible]दृश्यभान द्वारा व्यङ्ग्यरूपसे गौणतया प्रतीयमान उपमामें रमणीयताकी प्रतीति [illegible] नहीं होनेसे ध्वनिका व्यपदेश (व्यवहार) नहीं होता है।

उदाहरति—

यथा—'चन्दमऊएहिं [illegible]सा णलिनी कमलेहिं कुसुमगुच्छेहिं लआ।
हंसेहिं सरअसोहा कव्वकहा सज्जनेहिं करइ गरुई॥'

'चन्द्रमयूखैर्निशा, नलिनी कमलैः कुसुमगुच्छै र्लता ।
हंसैः शारदशोभा, काव्यकथा सज्जनैः क्रियते गुर्वी ॥' इतिच्छाया ।

चन्द्रस्य मयूखैः किरणैर्निशा रात्रिः, कमलैर्नलिनी पद्मिनी, कुसुमानां गुच्छैः स्तवकैर्लता, हंसैः शारदी शरदृतुसम्बन्धिनी शोभा, सज्जनैः सहृदयैः सत्पुरुषैर्वा, काव्यकथा गुर्वी श्रेष्ठा शोभना भास्वती सेव्या वा क्रियत इत्यर्थः ।

अत्राप्रस्तुतानां चन्द्रमयूखप्रमुखानां प्रस्तुतानां सज्जनानाञ्च कर्तृत्वेन, अप्रस्तुतानां निशाऽऽदीनां प्रस्तुतायाः काव्यकथायाश्च कर्मत्वेन गुरुकरणैकधर्माभिसम्बन्धाद्दीपके भासमाने, चन्द्रमयूखादीनां सज्जनैः सह, निशाप्रभृतीनां काव्यकथया च साकं कमपि सम्बन्धं विना वाक्यप्रतीतिरसम्बद्धविषयैव स्यादिति 'गावो वः पावनानाम्' इत्यादिवद् यथा चन्द्रमयूखादिभिर्निशादिस्तथा सज्जनैः काव्यकथा गुर्वी क्रियत इत्युपमानोपमेयभावः कल्प्यत इति व्यङ्ग्योपमाया वाच्योपस्कारकत्वेनाङ्गत्वान्न ध्वनिव्यपदेशः । लोचने तु—'आसतां तावत्काव्यस्य केचन सूक्ष्मा विशेषाः, सज्जनैर्विना काव्यमित्येप शब्दोऽपि ध्वंसते । तेषु सत्स्वास्ते सुभगं काव्यं काव्यशब्दव्यपदेशभागपि शब्दसन्दर्भमात्रं तथातथा तैः क्रियते, यथायथाऽऽदरणीयतां प्रतिपद्यत इति दीपकस्यैव प्राधान्यं, नोपमायाः' इत्युक्तम् ।

चन्द्रमयूखैर्निशाया भास्वरत्वसेव्यत्वादेः, कमलै र्नलिन्याः शोभापरिमलादेः कुसुमगुच्छैर्लताया अभिगम्यत्वमनोरमत्वादेः, हंसैश्शारदशोभायाः श्रुतिसुखदत्वरमणीयत्वादेः, सज्जनैः काव्यकथायास्तेषां सर्वेषामेव धर्म्माणामाधानमेव गुरुकरणं बोध्यम् ॥

जैसे—चन्द्रिकासे रात, एवं कमलोंसे पद्मिनी, तथा पुष्पोंके गुच्छोंसे लता, हंसोंसे शरद ऋतु और सज्जनोंसे काव्यकथा अत्यन्त रमणीय प्रतीत होती हैं ।

यहांपर अप्रस्तुत चन्द्रकिरण आदिका और प्रस्तुत सज्जन व्यक्तिका कर्ताके रूपसे एवं निशा आदि अप्रस्तुतका तथा काव्य कथा रूप प्रस्तुतका कर्मरूपसे रमणीयताके आपादन रूप एक धर्मके साथ सम्बन्ध बोधक दीपकालंकारके वाच्यरूपसे भान होने पर भी चन्द्र किरणादिका सज्जनके साथ तथा निशा प्रभृतिका काव्य कथाके साथ सम्बन्धके विना वाच्यार्थ संलग्न नहीं होता है, अतः जैसे चन्द्रिका आदिसे निशा प्रभृति रमणीय होती है, वैसे ही सज्जन विद्वानोंसे काव्य कथा रमणीय बन जाती है, इसतरह व्यञ्जना द्वारा उपमानोपमेयभाव, व्यङ्ग्यरूप होते हुए भी उक्त वाच्यार्थका पोषक रूपसे ही प्रतीत होता है, इसलिये उक्त व्यङ्ग्यकी प्रधानता न होनेसे ध्वनिका व्यवहार नहीं होता ।

फलितमाह—

**तस्मात्तत्र वाच्यालङ्कारमुखेनैव काव्यव्यपदेशो न्याय्यः ।**

तत्र 'चन्दमऊएहिं' इत्यादौ चित्रकाव्यपदेश एवोचित इति केचित् ।

वस्तुतस्तु व्यङ्ग्योपमाया गुणीभावाद् गुणीभूतव्यङ्ग्यतैव युक्ता ॥

**इसलिये उक्त स्थल ( चन्द्रमयूखैः- ) में वाच्यभूत दीपकादि अलंकार द्वारा ही प्रधान रूपसे काव्यका व्यवहार होना समुचित मालूम पड़ता है ।**

इत्थं ध्वनेः प्रत्युदाहरणं प्रदर्श्योक्तभेदानामुदाहरणानि दर्शयितुमाह—

**यत्र तु व्यङ्ग्यपरत्वेनैव वाच्यस्य व्यवस्थानम् , तत्र व्यङ्ग्यमुखेनैव व्यपदेशो युक्तः ।**

वाच्यार्थस्य व्यङ्ग्योपस्कारकत्वे तु ध्वनिरेव भवतीति सारम् ।

**परन्तु जिस काव्यमें वाच्यार्थ ही व्यङ्ग्यका पोषक होकर अप्रधान रूपसे प्रतीत होता है, वहां पर व्यङ्ग्यकी प्रधानता होनेसे ध्वनिका ही व्यवहार होता है ।**

अष्टमं भेदमुदाहरति—

*यथा—*

कश्चना चाटुकारो राजानं वक्ति—

**'प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्या—**
**न्निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि ॥**
**सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात—**
**स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥'**

हे राजन् ! त्वयि आयाते उपगते सति, प्राप्ता श्रीर्येन तादृश एष पुनरपि मयि तमनुभूतपूर्वं मन्थखेदं मन्दरगिरिपीडनं कस्माद् विदध्यात् कुर्यात् , अनलसमनस आलस्यशून्यहृदयस्यास्य पूर्वां प्राचीनां निद्रामपि नैव सम्भावयामि तर्कयामि, सकलानां द्वीपानां नाथैरधिपैरनुयातोऽनुसृतश्चायं भूयः किमिति सेतुं बध्नाति, इत्येवं वितर्कान् सङ्कल्पान् सन्देहान् वा दधतो धारयत इव पयोधेः समुद्रस्य कम्प आभातीत्यर्थः।

अत्र ससंन्देहोत्प्रेक्षयोः सङ्करो वाच्यः, ततश्च भगवत्तादात्म्यमस्य भूभृतोऽवगम्यत इति रूपकालङ्कारध्वनिः कविनिबद्धवक्तृप्रौढोक्तिसिद्धालङ्कारव्यङ्ग्यः ।

यद्यपि राज्ञोऽस्य प्राप्तश्रीकत्वेन लक्ष्मीप्राप्तये समुद्रं मथितवतः, आलस्यशून्यमनस्त्वेन समुद्रे शेषशयने निद्रितासोः, सर्वद्वीपेश्वरानुगम्यमानत्वेन रावणं विजेतुं

सेतुं वद्धवतश्च विष्णोरपेक्षयाऽऽधिक्यप्रदर्शनाद्व्यतिरेकोऽपि प्रतीयते, तथाऽपि न तत्र वैचित्र्यम्, साम्प्रतं विष्णावप्याधिक्यप्रयोजकधर्मत्रयस्य सद्भावात्।

'न च सन्देहोत्प्रेक्षाऽनुपपत्तिवलाद्रूपकस्याक्षेपः, येन वाच्यालङ्कारोपस्कारकत्वं व्यङ्ग्यस्य भवेत्, यो यः सम्प्राप्तलक्ष्मीको निर्व्याजविजिगीषाऽऽक्रान्तः, स स मां मथ्नीयादित्याद्यर्थसम्भावनात्। न च 'पुनरपीति' 'पूर्वामिति' 'भूय इति' च शब्दैरयमाकृष्टोऽर्थः, पुनरर्थस्य भूयोऽर्थस्य कर्तृभेदेऽपि समुद्रैक्यमात्रेणाप्युपपत्तेः। यथा—पृथ्वी पूर्वं कार्त्तवीर्येण जिता पुनरपि जामदग्न्येनेति। पूर्वा च निद्रा राजपुत्राद्यवस्थायामपीति सिद्धं रूपकध्वनिरेवायमिति, शब्दव्यापारं विनैवार्थसौन्दर्यवलाद्रूपणप्रतिपत्तेः' इति लोचनमपीह द्रश्यम्।

जैसे कोई चाटुकार राजाकी प्रशंसा करता है-प्राप्तश्रीरिति। हे राजन्! आते ही आपके शौर्य-वीर्य-पराक्रमोंसे चकित होकर समुद्र विचार करने लगा कि-जव विष्णुको मैंने अपनी कन्या लक्ष्मीको देही दिया है तव फिर क्यों वे मुझको मन्दरसे मथना चाहते हैं, और अभी इन (विष्णु) में निद्रा और आलस्य भी नहीं दिखाई पड़ते हैं, अतः मेरे अन्दर शयन करनेकी भी कोई सम्भावना नहीं है, एवं द्वीप द्वीपान्तरों के राजाओंसे परिवृत होकर फिरसे क्यों सेतु वान्धना चाहते हैं, इसतरह अनेकों तर्क वितर्क करते हुए समुद्रको मानो कम्प हो रहा हो, एसा मालूम पड़ता है।

यहां पर उक्त रीतिसे सन्देह और उत्प्रेक्षाका संकरालंकार वाच्यरूपसे प्रतीत होता है, और उसीसे प्रस्तुत राजामें भगवानका तादात्म्य भान होनेसे रूपकालंकार ध्वनित होता है, इसलिये कवि-निवद्धवक्ताकी प्रौढोक्ति वश निष्पन्न उक्त संकरालंकार व्यङ्ग्य रूपक ध्वनिका विषय है।

स्वीयमुदाहरणान्तरमाह—

**यथा वा ममैव—**

कान्तः कामिनीं कथयति—

'लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्,
स्मेरेऽधुना तव मुखे तरलायताक्षि!।
क्षोभं यदेति न मनागपि तेन मन्ये,
सुव्यक्तमेव जलराशिरयं पयोधिः॥'

तरले चञ्चले आयते दीर्घे चाक्षिणी यस्यास्तत्सम्बुद्धौ हे तरलायताक्षि! अधुना रोषकालुष्यापगमोत्तरं, लावण्यं सौन्दर्यं कान्तिः प्रभा ताभ्यां परिपूरितानि पूर्णी-

कृतानि धवलितानि वा दिशां मुखानि येन, तस्मिंस्तव मुखे स्मेरे ईषद्विहसिते सति यन्मनागीषदपि, क्षोभमुत्तरलतरङ्गत्वं मदनाहितचपलत्वं च नैति न प्राप्नोति, तेनायं पयोधिः समुद्रः सुव्यक्तमतिस्फुटम्, जलानां वारीणां राशिः, किञ्च जलस्य डलयोरैक्यस्मरणाद्भावप्रधाननिर्देशस्वीकरणाच्च जाड्यस्य राशिरेवास्तीति मन्य उत्प्रेक्ष इत्यर्थः। इह वाच्यः श्लेषानुप्राणितोत्प्रेक्षाऽलङ्कारः, ततश्चातन्द्रचन्द्रदर्शनेन समुद्रस्य क्षोभे प्रसिद्धेऽपि यदयं स्मितशालित्वन्मुखदर्शनेन न क्षुभित इत्ययं जडतमं मन्य इत्येतावता त्वन्मुखं चन्द्र इति रूपकालङ्कारो ध्वन्यते॥

केचित्पुनरत्र—

'ज्योत्स्नापूरप्रसरधवले सैकतेऽस्मिन् सरय्वा,
वादद्यूतं सुचिरमभवत् सिद्धयूनोः कयोश्चित्।
एकोऽवादीत्प्रथमनिहतं केशिनं कंसमन्यः,
स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम्॥'

इत्युदाहरन्ति। तन्न विचाररमणीयम्, भवतेत्यनेन त्वं वासुदेव इति रूपकस्य प्रसह्य स्फुटीकरणात्॥

उक्त अलंकार ध्वनिका ही उदाहरणान्तर बतलाते हैं—लावण्येति। युवक कामिनी से कहता है—हे चञ्चलाक्षि! अपने सौन्दर्यच्छविसे दिगन्तको ही परिपूर्ण करनेवाली तुम्हारे मुखरूप चन्द्रमाके मुस्कुराने पर भी जो यह समुद्र थोड़ा भी नहीं उछलता या यह पुरुष कामवासनासे अधीर नहीं होता, इससे यही मालूम पड़ता है, कि मानो वास्तवमें यह समुद्र जल (जड़) राशि ही है, और यह युवक जडतासे भरा हुआ बिल्कुल जड ही है।

यहां पर श्लेषसे परिपोषित होकर उत्प्रेक्षा अलंकार वाच्य रूपसे प्रतीत होता है और उदित चन्द्रदर्शनसे अचेतन समुद्र भी जब उत्तरलित हो जाता है, तब मनुष्य होकर भी मुस्कुराते हुए तुम्हारे मुख दर्शनसे जो यह व्यक्ति क्षुभित नहीं होता, इससे मालूम पड़ता है, कि यह वास्तवमें जड ही है, एतावता तुम्हारा मुख चन्द्रमा है, इस तरह रूपकालंकार ध्वनित होता है।

तदाह—

**इत्येवंविधे विषयेऽनुरणनरूपकाश्रयेण काव्यचारुत्वव्यवस्थानाद्रूपकध्वनिरिति व्यपदेशो न्याय्यः।**

स्पष्टम्।

इन पूर्वोक्त उदाहरणोंमें संलक्ष्य क्रमव्यङ्ग्यात्मक रूपकालंकारके आश्रयणसे ही काव्यकी रमणीयता प्रतीत होती है, इसलिये रूपकध्वनिका ही व्यवहार होना युक्ति संगत मालूम पड़ता है।

उपमाध्वनिमुदाहरति—

उपमाध्वनिर्यथा—

'वीराणं रमइ घुसिणरुणम्मि ण तहा पिआथणुच्छङ्गे।
दिट्ठी रिउगअकुम्भत्थलम्मि जह वहलसिन्दूरे॥'

'वीराणां रमते घुसृणारुणे न तथा प्रियास्तनोत्सङ्गे।
दृष्टी रिपुगजकुम्भस्थले यथा वहलसिन्दूरे॥' इति च्छाया।'

वीराणां दृष्टिस्तथा घुसृणैः कुङ्कुमैररुणे शोणे प्रियायाः स्तनोत्सङ्गे कुचतटे न रमते नानन्दमनुभवति, यथा वहलमत्यर्थं सिन्दूरं यत्र तादृशे रिपोर्गजानां कुम्भस्थले रमते वीरस्वभावत्वादित्यर्थः।

तथा च—'कुङ्कुमम्॥ जागुडं दीपनं घस्रं सौरभं घुसृणं च तत्' इति त्रिकाण्डशेषः।

अत्र व्यतिरेको वाच्यः, तेन प्रियास्तनतट-रिपुगजकुम्भस्थलयोरुपमा ध्वन्यते। ननु व्यतिरेकव्यज्यमानाया उपमाया दीपकादितुल्यन्यायात्कथं प्राधान्यमिति चेत्, अत्राहुराचार्याः—'तत्र तु येयं ध्वन्यमानोपमा प्रियाकुचकुड्मलाभ्यां सकलजनत्रासकरेष्वपि शात्रवेषु मत्सरोद्यतेषु गजकुम्भस्थलेष्विष्टा, तद्दर्शेन रतिमयानामिव वहुमान इति सैव वीरताऽतिशयचमत्कारं विधत्त इत्युपमायाः प्राधान्यम्' इति। केचित्तु—'इत एवाग्रे स्वीयमुदाहरणान्तरं दर्शयति' इत्याचक्षते॥

उपमा ध्वनिका उदाहरण बतलाते हैं—उपमेति। अत्यन्त अधिक सिन्दूरोंसे रङ्गे हुए शत्रु सम्बन्धी हाथियोंके कुम्भस्थलको देखनेमें वीरोंका मन जितना रमता है, उतना कुंकुमसे लिपे हुए अत्यन्त रमणीय प्रेयसीके कुच तटोंको देखनेमें नहीं रमता। यहां पर व्यतिरेकालंकार वाच्यरूपसे प्रतीत होता है, और उसीसे प्रियाके स्तनतट और रिपुगजके कुम्भस्थलका परस्परमें उपमान उपमेय भाव ध्वनित होकर प्रधानरूपसे चमत्कारजनक प्रतीत होता है।

उदाहरणान्तरं दर्शयति—

यथा वा ममैव विषमबाणलीलायामसुरपराक्रमे कामदेवस्य—

विषमवाणलीलाऽख्ये ग्रन्थे, असुराणां पराक्रमे विजृम्भमाणे सति, कामदेवस्य

विक्रमकौशलं यथा वर्णितमित्यर्थः। यद्वा कामदेवस्यासुरपराक्रमे स्मरकर्तृकेऽसुरपराभव इत्यर्थः। तत्र कन्दर्पस्य त्रैलोक्यविजयो वर्णितः—

**उदाहरणान्तर बतलाते हैं—**यथा वेति। **जैसे कि निजरचित विषमबाण लीलामें चौतरफ असुरोंके पराक्रम बढ़ जानेपर उनको वशमें करनेके लिये कामदेवके पराक्रम कौशलका वर्णन किया है:—**

तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम्,
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेन ॥'

'तत्तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम्।
विम्बाधरे प्रियाणां निवेशितं कुसुमवाणेन ॥' इतिच्छाया।

श्रीसहोदररत्नस्य कौस्तुभमणेराहरण आदाने एकरसमेकतानं तत्परमिति यावत्, तेषामसुराणां हृदयं मनो यदासीत्, तत् कुसुमवाणेन कामेन प्रियाणां स्वदयितानां विम्वफलतुल्येऽधरे निवेशितमासञ्जितमित्यर्थः।

अत्र वाच्यातिशयोक्त्या कौस्तुभमणिप्रियाविम्वाधरयोरुपमा ध्वन्यते, वस्तुतः कौस्तुभमणितुल्यो बिम्बाधर इति पार्यन्तिकप्रतीतेः। अतएव न रूपकध्वनिस्तत्रोपमानस्यारोप्यमाणत्वेनावास्तविकत्वात् ॥

**अत्यन्त लाल कौस्तुभमणिको लेनेके लिये एकतानसे लगे हुए उन असुरोंका जो मन अत्यन्त तन्मय हो गया था, उसको कामदेवने उधर (कौस्तुभमणि) से खींचकर अपनी २ प्रेयसीके विम्बफल सदृश अत्यन्त रमणीय लाल अधर (रसपान) के लिये लालायित कर दिया। यहां पर वाच्यभूत अतिशयोक्ति द्वारा कौस्तुभमणि तथा प्रियाके अधर बिम्बमें उपमान उपमेय भाव ध्वनित होता है, अर्थात् कौस्तुभमणि तुल्य प्रियाके अधरकी प्रतीति होती है।**

आक्षेपध्वनिमुदाहरति—

**आक्षेपध्वनिर्यथा—**

**'स वक्तुमखिलाञ्छक्तो हयग्रीवाश्रितान्गुणान्।
योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः ॥'**

स हयग्रीवं तदाख्यमसुरमाश्रितान् अखिलानशेषान्, गुणान् वक्तुं वर्णयितुं शक्तः समर्थः स्यात्। यः, अम्बुकुम्भैर्जलघटैः, महोदधेर्महासागरस्य, परिच्छेदमियत्तां, ज्ञातुं शक्तो भवेदित्यर्थः। यथा अम्बुकुम्भैर्महोदधेः परिमाणं ज्ञातुमशक्यम्, तथा हयग्रीवगुणा वर्णयितुमशक्या इति वाच्ययाऽतिशयोक्त्या निदर्शनया वा हयग्रीवगुणानां कथनशक्यत्वनिषेधादाक्षेपालङ्कारो ध्वन्यते।

रुय्यकस्तु—निषेधस्यैवात्र व्यज्यमानत्वम्, नतु निषेधाभासस्य, महोदधेरम्भः कुम्भपरिच्छेदशक्तिनिदर्शनेन हयग्रीवगुणानां वक्तुमशक्यत्व एव तात्पर्यम्। तन्निमित्तक एवात्र चमत्कारो न निषेधाभासहेतुक इति नाक्षेपधीरत्र कार्य्या। किन्तु—

'गणिकासु विधेयो न विश्वासो वल्लभ! त्वया।

किं किं न कुर्वतेऽत्यर्थमिमा धनपरायणाः॥' इत्युदाहरणीयमित्यवोचत्॥

आक्षेप अलंकार ध्वनिका उदाहरण बतलाते हैं—आक्षेपेति। जो व्यक्ति पानीके घड़ेसे समुद्रका माप कर सकनेमें समर्थ होगा, वही हयग्रीवके सारे गुणोंका वर्णन कर सकता है, अर्थात् जैसे घटसे समुद्रकी इयत्ताका ज्ञान होना असम्भव है, वैसे ही हयग्रीवके सारे गुणोंका वर्णन करना भी असम्भव है, इस वाच्यभूत अतिशयोक्तिसे हयग्रीव गुणोंके अशक्य कथन द्वारा आक्षेप अलंकार ध्वनित होता है।

तदाह—

अत्रातिशयोक्त्या हयग्रीवगुणानामवर्णनीयताप्रतिपादनरूपस्यासाधारण-तद्विशेषप्रतिपादनपरस्याक्षेपस्य प्रकाशनम्। ४

अतिशयोक्तिश्चात्रासम्बन्धेऽपि सम्बन्धरूपा, तया हयग्रीवगुणानामवर्णनीयताऽऽख्यानात्मनोऽद्वितीयवैलक्षण्यस्य सूचनकर्त्तुराक्षेपालङ्कारस्यात्र ध्वननं विधीयत-इति सारम्॥

वृत्तिकार उक्ताशयको ही स्फुट करते हैं—अत्रेति। उक्त स्थल (स वक्तुम्-) में अतिशयोक्तिसे हयग्रीव गुणोंके अवर्णनीयत्व प्रतिपादन द्वारा अद्वितीय वैलक्षण्यको सूचित करनेवाला आक्षेपालंकार ध्वनित होता है।

अथार्थान्तरन्यासध्वनिं निरूपयन् प्रसङ्गादनुक्तपूर्वं शब्दशक्तिमूलं तद्भेदमपीहैव दर्शयति—

अर्थान्तरन्यासध्वनिः शब्दशक्तिमूलानुरणनरूपव्यङ्ग्योऽर्थशक्तिमूलानुरणनरूपव्यङ्ग्यश्च सम्भवति।

उपमाऽऽदिध्वनिवदर्थान्तरन्यासध्वनेरपि द्वैविध्यं नासम्भवीति भावः॥

उपमादिध्वनिके समान अर्थान्तरन्यास ध्वनिके भी दो भेद हैं 'शब्दशक्तिमूल संलक्ष्यक्रम व्यङ्ग्यध्वनि' और 'अर्थशक्तिमूल संलक्ष्यक्रम व्यङ्ग्य ध्वनि'।

शब्दशक्तिमूलार्थान्तरन्यासध्वनिमादावुदाहरति—

तत्राद्यस्योदाहरणम्—

'देव्वाएत्तम्मि फले किं कीरइ एत्तिअं पुणा भणिमो।

कङ्किल्लपल्लवाः पल्लवाणं अण्णाणं ण सरिच्छा॥'

'दैवायत्ते फले किं क्रियतामेतावत्पुनर्भणामः ।
रक्ताशोकपल्लवाः पल्लवानामन्येषां न सदृक्षाः ॥' इतिच्छाया ।

फले दैवायत्ते भाग्याधीनेऽस्माभिः किं क्रियतां नः किमपि कर्तुं शक्यम्, पुनः किन्तु, रक्ताशोकस्य वञ्जुलस्य पल्लवाः अन्येषां चूतादिपल्लवानां न सदृक्षा न तुल्या अपितु ततो विशिष्टाः, एतावदियन्मात्रं भणामः कथयाम इत्यर्थः ।

अत्र 'लाभे सस्ये शराद्यग्रे व्युष्टौ च फलके गलम्' इति शाश्वतस्य 'व्युष्टिः फले समृद्धौ च' इत्यमरस्य चानुशिष्टेः फलशब्दस्यानेकार्थशक्तत्वे निर्णीते, तरुसस्यरूपं समर्थनीयं विशेषमर्थम्, लोकोत्तरविक्रमविजिगीषातदुपायशालिनोऽपि समृद्धिलक्षणं फलं दैवायत्तं कदाचिन्न सम्पद्येत, तत्र किं विधेयम् इत्याकारकः सामान्यात्माऽर्थोऽभिधामूलव्यञ्जनागम्यः समर्थयतीत्यभिधामूलार्थान्तरन्यासध्वनिः फलशब्दस्य परिवर्तनासहत्वाच्च शब्दशक्तिमूलता ।

इनमें प्रथमका उदाहरण बतलाते हैं—दैवेति । दैवाधीन फलके विषयमें हम लोग कर ही क्या सकते हैं ? अर्थात् यद्यपि उस विषयमें अपना कोई भी वश नहीं चलता, तथापि इतना कह देना आवश्यक मालूम पड़ता है, कि रक्त अशोकके अत्यन्त कोमल पल्लव आम्रादि पल्लवके सदृश नहीं हैं, अपि तु अत्यन्त ही कोमल होनेके कारण उनसे कुछ विलक्षण ( निराले ) ही हैं ।

यहां पर अतुल्य ( बेजोर ) पराक्रम, प्रभुता आदि उपायोंके करने पर भी आपको समृद्धि रूप फल नहीं हो पाता है, इस विषयमें दैवाधीन होनेके कारण लोगोंका कुछ वश नहीं चलता इस तरहका समृद्धि लक्षण फलसामान्यरूप अर्थ अभिधामूल व्यञ्जना द्वारा ध्वनित होकर वृक्षका सस्यरूप फलविशेषके न होनेका समर्थन करता है, इसलिये यह शब्दशक्तिमूल अर्थान्तरन्यास ध्वनि हुई ।

ननु समस्तेन वाक्येनात्राप्रस्तुतप्रशंसैव प्राधान्येन व्यज्यत इति कथमर्थान्तरन्यासध्वनिः ? तस्य व्यङ्ग्यत्वेऽपि प्राधान्यायोगादित्याशङ्कायामाह—

**पदप्रकाशश्चायं ध्वनिरिति वाक्यार्थान्तरतात्पर्येऽपि सति न विरोधः ।**

पदात्प्रकाशो यस्येति बहुव्रीहिः । तृतीयोद्द्योते हि ध्वनेः पद–वाक्यप्रकाशत्वेन भेदो निरूपयिष्यते । तथा चात्राप्रस्तुतप्रशंसाया वाक्यप्रकाशत्वसत्त्वेऽप्यर्थान्तरन्यासस्य पदात्प्राधान्येन प्रकाशात्तद्ध्वनिव्यपदेशे न काचन क्षतिरिति तात्पर्यम् 'प्रकाशक' इति पाठस्त्वसङ्गतः ।

यद्यपि उक्त स्थलमें सम्पूर्ण वाक्यसे अप्रस्तुतप्रशंसा ही प्रधानरूपसे ध्वनित होती है, तथापि उक्त अर्थान्तरन्यास, पदसे ही प्रकाशित ( ध्वनित ) होता है,

इसलिये वाक्य और पदके परस्परमें विभिन्न विषय होनेसे उक्त अर्थान्तरन्यास ध्वनिके व्यपदेश होनेमें कोई आपत्ति नहीं आती है।

अर्थशक्तिमूलार्थान्तरन्यासध्वनिमुदाहरति—

द्वितीयस्योदाहरणं यथा—

पूर्वं खण्डिता पुनरनुनीताऽप्यसूयाशवलाशया नायिका दयितं वदति—

'हिअअट्ठाविअमण्णुं अवरुण्णमुहं हि मं पसाअन्त।
अवरद्धस्स वि ण हु दे वहुजाणअ! रोसिउं सक्कम्॥'

'हृदयस्थापितमन्युमपरोषमुखीमपि मां प्रसादयन्!।
अपराद्धस्यापि न खलु ते बहुज्ञ! रोषितुं शक्यम्॥' इति च्छाया।

हे बहुज्ञ! नानाविधानुनयानां पराशयस्य वा विज्ञ! हृदये स्थापितो निगूहितो मन्युः क्रोधो यया ताम्, तथाऽपगतो रोषो यस्मात्तादृशं मुखं यस्यास्तथाविधामपि मां यतस्त्वं प्रसादयन्नसि, यद्वा प्रसादयन्नित्यन्तं सम्बोधनम्, अतोऽपराद्धस्य कृतागसोऽपि ते तवोपरीति शेषः, खलु निश्चयेन मया रोषितुं कोपितुं न शक्यमित्यर्थः।

तथा च 'मन्युश्शोके क्रतौ क्रुधि' इति विश्वः।

इहापि कृतागसोऽपि बहुज्ञस्य तवोपरि क्रोधः कर्तुमशक्य इति विशेषं तादृशानामपि बहुज्ञानामुपरि क्रोधः कर्तुमशक्य इति व्यञ्जनागम्यमर्थसामान्यं समर्थयतीत्यर्थशक्तिमूलोऽर्थान्तरन्यासध्वनिः। शब्दानां परिवर्तनसहत्वाच्चार्थशक्तिमूलत्वम्।

अब अर्थशक्तिमूल अर्थान्तरन्यास ध्वनिका विषय बतलाते हैं—हृदयेति। पूर्वमें नायकके अपराधसे कुपित होकर भी अत्यन्त चतुराईसे उस (नायक) के द्वारा मनायी जानेपर सन्तुष्ट होकर भी ईर्ष्या कलुषित चित्तगत दुःखको मिटानेके लिये नायिका नायकसे पूर्वोत्पन्न कोपका अभाव व्यक्त करती है—हे बहुज्ञ! प्रसन्न करनेकी अनेकों कलाओंको जानने वाले प्रिय! अन्दरसे क्रोधके मारे जलती रहनेपर भी बाहरसे केवल दिखावाके लिये ही मुख पर प्रसन्नता धारणकी हुई मुझको तुम अत्यन्त विलक्षण अनुनय द्वारा प्रसन्न करनेवाला दिखाई देते हो, इसलिये अपराधी होते हुए भी तुम्हारे ऊपर क्रोध करनेमें मैं असमर्थ हो रही हूँ।

यहां पर 'अपराधी होते हुए भी अनुनयादिमें पूर्ण कलाकौशलको जानने वाले अत्यन्त चतुर व्यक्तियोंपर क्रोध नहीं हो पाता' यह सामान्य अर्थ, अर्थशक्तिमूल व्यञ्जनाद्वारा ध्वनित होकर 'अपराधी होते हुए भी नायिकाको मनानेमें पूर्णकलाको जानने वाले तुम्हारे जैसे व्यक्ति पर मैं क्रोध नहीं कर सकती' इस विशेष अर्थका

समर्थन करता है, अतः इसको अर्थशक्तिमूल अर्थान्तरन्यास ध्वनिका उदाहरण समझना चाहिये।

तदाह—

अत्र हि वाच्यविशेषेण सापराधस्यापि बहुज्ञस्य कोपः कर्तुमशक्य इति समर्थकमर्थसामान्यमन्वितमन्यत्तात्पर्येण प्रकाशते।

अन्वितं समर्थकतया वाच्यसम्बद्धम्। अन्यद्वाच्यातिरिक्तम्। तात्पर्येण व्यञ्जनया॥

वृत्तिकार उक्ताशयको संक्षेपसे स्फुट करते हैं—अत्रेति। उक्तस्थलमें 'अपराधी होनेपर भी उक्त चतुर बहुज्ञोंके ऊपर क्रोध करना असंभव है' यह सामान्य अर्थ, समर्थक होनेके कारण वाच्यार्थसे सम्बद्ध होकर भी वाच्यातिरिक्तरूपमें ही अर्थशक्तिमूल व्यञ्जना द्वारा अभिव्यञ्जित होकर 'अपराधी होनेपर भी तुम्हारे जैसे चतुर व्यक्ति पर क्रोध करना असंभव है' इस विशेष अर्थका समर्थन करता है, इसलिये यह अर्थशक्तिमूल अर्थान्तरन्यास ध्वनि हुई।

व्यतिरेकध्वनेरपि द्वैविध्यं प्रदर्श्योदाहरति—

व्यतिरेकध्वनिरप्युभयरूपः सम्भवति। तत्राद्यस्योदाहरणं प्राक् प्रदर्शितमेव।

उभयरूपश्शब्दशक्तिमूलोऽर्थशक्तिमूलश्च। अपिनाऽर्थान्तरन्यासादि परिगृह्यते। आद्यस्य शब्दशक्तिमूलस्य। प्राक् 'खं येऽत्युज्ज्वलयन्ति' इत्यादिना॥

इसी तरह व्यतिरेक ध्वनि भी दो प्रकारकी होती है—'शब्दशक्तिमूल व्यतिरेक ध्वनि' और 'अर्थशक्तिमूल व्यतिरेक ध्वनि' उनमें प्रथमका उदाहरण ( खं येऽत्युज्ज्वलयन्ति ) पृ० १७५ में बतला चुके हैं।

अर्थशक्तिमूलव्यतिरेकध्वनिमुदाहरति—

द्वितीयस्योदाहरणं यथा—

निर्विण्णो दरिद्रो दातृतरः कश्चन वदति—

'जाएज्ज वणुद्देसे खुज्ज व्विअ पाअवो (अ) घडिअवत्तो।
मा माणुसम्मि लोए ताएक्करसो दरिद्दो अ॥'

'जायेय वनोद्देशे कुब्ज इव पादपोऽघटितपत्रः॥
मा मानुषे लोके त्यागैकरसो दरिद्रश्च॥' इतिच्छाया।

वनोद्देशे काननप्रान्ते ( यत्र बहुवृक्षसङ्घाते कोऽपि न पश्येत् ) कुब्ज इव गडुल इव (येन स्तम्भादावप्युपयोगो न स्यात्) अघटितपत्रोऽसंलग्नदलः। (येन च्छायाऽपि न स्याद् दूरे फलपुष्पाशा, किन्तु तथाऽपि कदाचिदाङ्गारिकस्याङ्गारबाहुल्याय,

घूकादीनां निवासाय चोपयोगः स्यात्) पादपो वृक्षो जायेय भवेयम्, (किन्तु) मानुषे लोके (सुलभार्थिजने) मर्त्यभुवने, त्यागैकरसोऽतिदानशीलो दरिद्रश्च मा जनिषि मा भूवमित्यर्थः।

तथा च—'स्यादेडे वधिरः कुब्जे गडुलः' इत्यमरः।

इह दानशीलस्य निर्धनस्य जन्म—निन्दा, निष्पत्रकुब्जपादपजन्मप्रशंसा च वाच्या, 'विषं भुङ्क्ष्व, मा चास्य गृहे भुङ्थाः' इत्यादिवत् तादृशपादप-पुरुषयोरौपम्यज्ञानपुरस्सरं तादृशपादपापेक्षयाऽपि तादृशपुरुषस्य जन्मनोऽपकर्षेण शोचनीयतायामाधिक्यं व्यञ्जनया प्रत्याययतीत्यर्थशक्तिमूलो व्यतिरेकध्वनिः। अत्र 'वाच्यालङ्कारो न कश्चित्' इति लोचनम्। तेनायं ध्वनेः षष्ठः प्रकार इति बोध्यम्॥

अब द्वितीयका उदाहरण आगे बतलाते हैं—जायेयेति। कोई अत्यन्त दानशील दरिद्र व्यक्ति दुःखी होकर बोलता है—किसी भी जंगलके एक भागमें शाखा (डाल) पत्तोंसे रहित कुब्ज पेड़ होकर मैं जन्म लूं तो यही अच्छा हो, किन्तु मर्त्यलोकमें (जहां कि माङ्गने वाले अनायास ही मिलते रहते हैं) अत्यन्त दानशील निर्धन मनुष्य होकर जन्म न लूं।

यहां पर दानशील निर्धनव्यक्तिके जन्मकी निन्दा और पत्र, शाखा रहित कुब्ज (टेढे) वृक्षके जन्म ग्रहणकी प्रशंसारूप अर्थ वाच्यरूपसे भासित होता है और विष खाना अच्छा है, लेकिन इस व्यक्तिके घरमें खाना अच्छा नहीं, इसी तरह उक्त पादप और पुरुषमें सादृश्य ज्ञानपूर्वक तादृश वृक्षकी अपेक्षा तादृश उक्त पुरुषके अधम जन्मकी ही अधिक शोचनीय दशा व्यञ्जनासे ध्वनित होती है, इसलिये यह अर्थ शक्तिमूलक व्यतिरेक ध्वनि हुई।

तदाह—

अत्र हि त्यागैकरसस्य दरिद्रस्य जन्मानभिनन्दनम् (अ) घटितपत्रकुब्जपादपजन्माभिनन्दनं च साक्षाच्छब्दवाच्यम्। तथाविधादपि पादपात्तादृशस्य पुंस उपमानोपमेयत्वप्रतीतिपूर्वकं शोच्यतायामाधिक्यं तात्पर्येण प्रकाशयति।

विवृतम्।

वृत्तिकार उसीको स्पष्ट करते हैं—अत्रेति। उक्त स्थलमें अत्यन्त दानशील दरिद्र व्यक्तिके जन्मकी निन्दा और पत्र शाखा रहित वक्र वृक्षके जन्मकी प्रशंसा साक्षात् शब्द द्वारा वाच्यरूपसे जानी जाती है और उक्त पादपसे भी तादृश पुरुषके जन्मकी

उपमान उपमेय भावका ज्ञानपूर्वक अधिक चिन्तनीयदशा व्यञ्जना द्वारा अभिव्यञ्जित होती है।

उत्प्रेक्षाध्वनिमुदाहरति—

उत्प्रेक्षाध्वनिर्यथा—

'चन्दनासक्तभुजगनिश्श्वासानिलमूर्च्छितः।
मूर्च्छयत्येष पथिकान् मधौ मलयमारुतः॥'

चन्दने श्रीखण्ड आसक्तानां संलग्नानां भुजगानां सर्पाणां निश्श्वासानिलैश्श्वासव्रातैर्मूर्च्छितो वर्धित एष मलयानिलो दक्षिणपवनः, मधौ वसन्ते, पथिकानध्वनीनान् ( वियोगिनः ) मूर्च्छयति सम्मोहयतीत्यर्थः।

मूर्च्छनं मोहनं वर्धनं च 'मूर्च्छा मोहसमुच्छ्राययोः' इति धातुपाठात्।

इह वसन्ते मलयानिलस्य पथिकमूर्च्छकत्वं वस्तुतो मदनकदनविधायित्वेनैव सम्भवदत्र चन्दनतरुलग्नसर्पनिश्श्वासव्रातवर्द्धितत्वेन सम्भावितमिवादिशब्दश्चोत्प्रेक्षावाचको नोक्त इत्यखिलवाक्यार्थव्यङ्ग्योत्प्रेक्षाऽलङ्कारध्वनिः। विषसंसर्गमन्तरेण हि मलयानिलस्य मूर्च्छाजनकत्वमसम्भवीति स तादृशसंसर्गवत्त्वेनोत्प्रेक्षितः। 'भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना' इति दर्पणोक्तेरुपमेयस्य मूर्च्छाजनकत्वहेतोश्चन्दनासक्तभुजगनिश्श्वासानिलमूर्च्छितत्वरूपोपमानात्मना सम्भावनेति हेतूत्प्रेक्षाऽत्र व्यज्यत इति बोध्यम्॥

उत्प्रेक्षा अलंकार ध्वनिका उदाहरण बतलाते हैं—चन्दनेति। चन्दन वृक्ष पर बैठे हुए अत्यन्त विषैले सर्पोंके फूत्कार भरे निश्वास पवनोंसे वृद्धि पाकर यह मलय पवन वसन्त ऋतुमें पथिकोंको मूर्च्छित कर रहा है।

यहां पर चन्दन वृक्षस्थित विषैले सर्पोंके श्वास पवन जनित सम्पर्कसे ही विषाक्त होकर मानो बढ़ा हुआ दक्षिण पवन मदन मथन जनित पीड़ाके द्वारा विधुरित पथिकोंको मूर्च्छित कर रहा है, इस तरह सम्भावना की गई है, परन्तु उत्प्रेक्षा वाचक इवादि शब्दोंके नहीं होनेसे सम्पूर्ण वाक्यार्थ द्वारा उक्त उत्प्रेक्षा अलंकार व्यङ्ग्यरूपसे ध्वनित होता है, क्योंकि विषसंसर्गके विना मलय पवन मूर्च्छाजनक नहीं होता है, अतः विष सम्पर्कसे ही ऐसा हो रहा है, यह उत्प्रेक्षा (संभावना) की गई है।

तदाह—

अत्र हि मधौ मलयमारुतस्य पथिकमूर्च्छाकारित्वं मन्मथोन्माथदा-

यित्वेनैव, तत्तु चन्दनासक्तभुजगनिश्वासानिलमूर्च्छितत्वेनोत्प्रेक्षितमित्युत्प्रेक्षा साक्षादनुक्ताऽपि वाक्यार्थसामर्थ्यादनुरणनरूपा लक्ष्यते ।

लक्ष्यते प्रतीयते ।

वृत्तिकार उसीको स्फुट करते हैं—अत्रेति । उक्त स्थलमें वसन्त समयका मलय पवन मदनके उन्मन्थन (पीडन) द्वारा ही पथिकोंको मूर्च्छित करता है, यह वस्तुस्थिति है, परन्तु चन्दन वृक्षमें लिपटे हुए सर्पोंके विषैले श्वास-पवनोंसे वृद्धि पाकर ही मानो उक्त पवन पथिकोंको मूर्च्छित कर रहा है, ऐसी उत्प्रेक्षा कविने की है, और वह उत्प्रेक्षा इवादि शब्दोंसे साक्षात् अभिहित नहीं होती हुई भी वाक्यार्थमूलक व्यञ्जना द्वारा ही संलक्ष्य क्रमव्यङ्ग्य रूपसे ध्वनित होती है ।

अत्रोत्प्रेक्षाऽभावमाशङ्क्य समाधत्ते—

नचैवंविधे विषये इवादिशब्दप्रयोगमन्तरेणासम्बद्धतैवेति शक्यं वक्तुम्, गमकत्वादन्यत्रापि तदप्रयोगे तदर्थावगतिदर्शनात् ।

एवंविध उत्प्रेक्षाऽऽस्पदत्वेन सम्भाव्यमाने विषये, उत्प्रेक्षावाचकानाम् 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः । उत्प्रेक्षावाचकाश्शब्दा इवशब्दोऽपि तादृशः ॥' इति परिगणितानामिवादिशब्दानां प्रयोगमन्तरेण विना, असम्बद्धतैवोत्प्रेक्षाया असङ्गतिरेव स्यादिति च नैव वक्तुं शक्यम्, गमकत्वात्प्रमाणसद्भावात्, अन्यत्रैतदुदाहरणातिरिक्तस्थलेष्वपि, तदप्रयोग इवादिशब्दानुच्चारणे, तदर्थस्योत्प्रेक्षालक्षणव्यङ्ग्यार्थस्यावगते र्बोधस्य दर्शनादनुव्यवसायविषयत्वादित्यर्थः ।

उत्प्रेक्षायां साध्य उपमेयस्योपमानात्मनाऽध्यवसाय एव मूलम्, नत्विवादिशब्दप्रयोगः, यत इवाद्यप्रयोगेऽपि वक्ष्यमाणोदाहरणयोरुत्प्रेक्षाप्रतीतेः प्रामाणिकत्वम्, तत्प्रयोगेऽपि 'असत्पुरुषसेवेव दृष्टिर्विफलतां गता' इत्यादौ तदभाव इति भावः ।

इदमिहाकलनीयम्—उत्प्रेक्षणसद्भावः सर्वत्रापेक्ष्यते, तत्सत्त्व इवादिशब्दसत्त्वे च वाच्या, इवादिशब्दाभावेऽप्युत्प्रेक्षणीयार्थमन्तरेण वाच्यार्थबोधानिर्वाहे प्रतीयमाना, इवादिशब्दाभावे वाच्यार्थबोधोत्तरं प्रकरणादिपर्यालोचनया प्रतीतिपथमवतरदुत्प्रेक्षण दधाना व्यङ्ग्योत्प्रेक्षा इति त्रैविध्यं तस्याः । तत्र 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः' इत्याद्यायाः, 'तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम् ॥ हाराय गुणिने स्थानं न दत्तमिति लज्जया ॥' इत्यादि मध्यमायाः, इदमग्रिमं च पद्यद्वयं चरमाया स्तस्या उदाहरणम् ॥

उक्त स्थलमें 'मन्ये, शङ्के, ध्रुवं, प्रायः, नूनं, इव' इत्यादि शब्दोंके विना उत्प्रेक्षा-

का कथन बिल्कुल असंगत ही होगा, ऐसा नहीं कहना चाहिये, क्योंकि दूसरे भी स्थानोंमें इवादि 'प्रयोगके बिना भी उत्प्रेक्षाका ध्वनन प्रामाणिकरूपसे माना गया है।

क्वान्यत्रेवादिशब्दाप्रयोगेऽप्युत्प्रेक्षाप्रतीतिः ? इत्याकाङ्क्षायामुदाहरति—

यथा—

मानिनीमनुनयन्नायको ब्रूते—

'ईसाकलुसस्स वि तुह मुहस्स णं एस पुण्णिमाचन्दो ।।
अज्ज सरिसत्तणं पाविऊण अङ्गे विअ ण माइ ।।'
'ईर्ष्याकलुषस्यापि तव मुखस्य नन्वेष पूर्णिमाचन्द्रः ।।
अद्य सदृशत्वं प्राप्याङ्ग एव न माति ।।' इतिच्छाया ।

अयि मनस्विनि ! एष दृश्यमानः, पूर्णिमाचन्द्रो राकासुधाकरः ईर्ष्यया मद्विषयकया सपत्नीविषयकया वाऽक्षमया, कलुषस्य शोणिमाविलस्य अपि, ( का कथा प्रसन्नस्य ) तवमुखस्य, सदृशत्वं साम्यम् , अद्येदानीम् ( नत्वन्यदा कदाचित् ) प्राप्य लब्ध्वा ननु निश्चितम् । अङ्गे स्वावयवे न मात्येव, अपि तु दश दिशः प्रकाशैः पूरयतीवेत्यर्थः ।

अन्योऽप्यलभ्यं लब्ध्वाऽत्यर्थ मुदितोऽङ्गे न मातीति प्रसिद्धिः । इहाद्यशब्दस्येदानीम्मात्रमर्थः, दिवाचन्द्रस्य प्रकाशायोगात् । दश दिशः पूरयतीवेत्युत्प्रेक्षा चेवादिशब्दाभावात्प्राधान्येन व्यज्यते ॥

जैसे—नायकके अपराधसे रूठी हुई मानिनीको मनाता हुआ नायक कह रहा है—अयि मानिनी ! देखो, यह सामने दृश्यमान पूर्णिमाका पूर्णचन्द्र मद्विषयक ईर्ष्यासे कुछ कलुषित होकर मलिनताको प्राप्त हुए तुम्हारे मुखका भी सादृश्य प्राप्त कर मानो अपने अङ्गोंमें आनन्दके मारे फूला नहीं समाकर दशों दिशाओंको प्रकाशसे भर रहा हो ऐसा मालूम पड़ता है, लोकमें भी यह बात देखी जाती है कि कोई भी व्यक्ति अलभ्य वस्तुका लाभकर आनन्दके मारे अङ्गोंमें नहीं समाता है। यहांपर इवादिके बिना भी उक्त रीतिसे उत्प्रेक्षालंकार प्रधानरूपसे ध्वनित होता है।

ननूत्प्रेक्षावाचकोऽत्र वितर्कोपस्थापको ननु शब्द एवास्तीति सा कथं व्यङ्ग्या स्यादित्यरुचेरुदाहरणान्तरमाह—

यथा वा—

'त्रासाकुलः परिपतन् परितो निकेतान् ,
पुम्भि र्न कैश्चिदपि धन्विभिरन्वबन्धि ।
तस्थौ तथाऽपि न मृगः क्वचिदङ्गनाना-
माकर्णपूर्णनयनेषुहतेक्षणश्रीः ।।'

शिशुपालवधपञ्चमसर्गस्थं पद्यमिदम् । त्रासेन लोकदर्शनजनितभयेनाकुलः, निकेतान् सेनानिवेशान् परितः परिपतन् धावन्, मृगो हरिणः, (यद्यपि) कैश्चिदपि धन्विभिः कार्मुकधरैः, पुम्भिः पुरुषैः, नान्ववन्धि नान्वधावि नानुसृत इति यावत्। तथाऽप्यङ्गनानामवरोधजनानाम्, आकर्णपूर्णैः आश्रवणमाकृष्टा ये नयनान्येव चपलत्वादिषवो बाणास्तैर्हृता क्षिप्ता ईक्षणयोर्नेत्रयोः श्रीश्शोभा यस्य, स इव, क्वचिन्न तस्थावित्यर्थः ।

अत्रोत्प्रेक्षावाचकाभावेऽपि मृगेऽसतोऽङ्गनानयनेषुहृतेक्षणश्रीकत्वस्य स्थित्यभावहेतुतया सम्भावनाद्यथोत्प्रेक्षा व्यज्यते तथा चन्दनेत्यादिश्लोकेऽपि । 'प्रतियोगिपदादन्यद् यदन्यत् कारकादपि' इत्यभियुक्तोक्तेरङ्गनानां पदार्थैकदेशेऽपि हननक्रियायामन्वयः ॥

उत्प्रेक्षालंकार ध्वनिका ही उदाहरणान्तर बतलाते हैं—त्रासेति । सैनिक लोगोंके दर्शनसे भयके मारे घबड़ाकर शिविरोंके चौतरफसे भागता हुआ हरिण यद्यपि किन्हीं भी धनुर्धारी पुरुषोंसे नहीं खदेरा (पीछा किया) गया, तथापि उन सुन्दरियोंके कर्ण पर्यन्त फैली हुई विशाल आंखोंके तिरछे कटाक्ष बाणोंसे अपनी आंखोंकी विहत शोभाके कारण मानो पराजित होकर लज्जाके मारे कहीं भी नहीं ठहर सका । यहां पर उत्प्रेक्षा वाचक इवादिके विना भी कामिनी कटाक्ष बाणोंके आघातसे मृगनयन की नष्ट-शोभाको ही उसके नहीं ठहरनेका कारण संभावित कर उत्प्रेक्षा अलंकार ध्वनित होता है ।

नन्वनयोरपि श्लोकयोरुत्प्रेक्षा माऽस्तु, तथा च दृष्टान्तासिद्धेः कथं प्रकृते सेत्याशङ्कायामाह—

**शब्दार्थव्यवहारे च प्रसिद्धिरेव प्रमाणम् ।**

शब्दार्थस्य व्यवहारे बोधे तु, प्रसिद्धिरेव प्रमाणमित्यर्थः । तथा चात्रोत्प्रेक्षाप्रतीतेरानुभविकत्वादनायत्या तत्कल्पनमिति न दृष्टान्तासिद्धिरिति तात्पर्यम् ॥

उपर्युक्त दोनों उदाहरणोंमें उत्प्रेक्षाऽभावका संदेह नहीं करना चाहिये, क्योंकि शब्दार्थके व्यवहार होनेमें कवि-जगतकी अनादि परम्परा प्रसिद्धि ही मुख्य कारण मानी जाती है, इसलिये उक्त स्थलोंमें सहृदयोंके अनुभव सिद्ध व्यङ्ग्यभूत उत्प्रेक्षालंकारका अपलाप नहीं किया जा सकता है ।

श्लेषध्वनिमुदाहरति—

**श्लेषध्वनिर्यथा—**

माघो द्वारकां वर्णयति—

'रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्तीः॥
यस्यामसेवन्त नमद्वलीकाः, समं वधूभिर्वलभीर्युवानः॥'

यस्यां द्वारकायाम्, रम्या रमणीया इति हेतोः पताका ध्वजान् पक्षे प्रसिद्धीः। सौभाग्यानि वा प्राप्तवतीः, विविक्ता विजनाः पक्षे विमला इति हेतो रागं सुरताभिलाषं वर्धयन्तीः, नमन्ति नम्राणि वलीकानि नीध्राणि यासु ताः, पक्षे नमन्त्यो वल्यस्त्रिवलयो मध्यमरेखा यासां ताः, वलभीर्गोपानसीः वधूभिः समं सार्वं युवानोऽसेवन्तेत्यर्थः।

तथाच 'पताका वैजयन्त्यां च सौभाग्येऽर्कध्वजेऽपि च॥' इति हेतौ प्रकरणे प्रकारादिसमाप्तिषु॥' इति विश्वः। 'विविक्तौ पूतविजनौ' 'वलीकनीध्रे पटलप्रान्ते' 'गोपानसी तु वलभी' इत्यमरः। 'वली मध्यमरेखोर्मिजीर्णत्वग्गृहदारुषु' इति वैजयन्ती च।

अत्र युवानो वधूभिः सह वलभीरसेवन्तेति पूर्वं सहोक्त्यात्मकवाक्यार्थः प्रतीयते, ततो वध्व इव वलभ्य इत्यौपम्यम्, चरमं तन्निर्वाहकतया व्यञ्जनावलेन प्रधानतमोऽर्थश्लेष इति श्लेषध्वनिः। सममिति सहार्थको निपातः, ततस्तुल्यार्थप्रतीतिरपि श्लेषवलादेवेति श्लेषस्य समाप्तेऽभिधाकृत्ये प्रतीयमानत्वेन शब्दानभिधेयस्य सुन्दराभिधेयव्यञ्जितस्य पार्यन्तिकास्वादभूमे ध्वन्यमानत्वम्। तदेतदभिहितमाचार्यैः— सममिति सहेत्यर्थः। ननु समशब्दात्तुल्यार्थेऽपि प्रतीतिः, सत्यम्, साऽपि श्लेषवलात्। श्लेषश्च नाभिधावृत्तेराक्षिप्तः, अपि त्वर्थसौन्दर्यवलादेवेति सर्वथा ध्वन्यमान एव श्लेषः। अतएव वध्व इव वलभ्य इत्यभिदधताऽपि वृत्तिकृतोपमा ध्वनिरिति नोक्तम्। श्लेषस्यैवात्र मूलत्वात्।' इत्यादि।

अब श्लेष ध्वनिका उदाहरण बतलाते हैं-रम्या इति। माघ कवि द्वारका पुरीका वर्णन करते हैं—जिस द्वारका पुरीमें युवकजन (नौजवान) नव युवतियोंके साथ वलभियों (महलके ऊपरके निजी कमरे) में रमण करते हुए आनन्द लूटते हैं, अब उन वलभियों और युवतियोंकी श्लेष द्वारा विशेषता बतलाते हैं, क्योंकि वे (वलभियां) अत्यन्त रमणीय हैं, इसीलिये पताका वाली हैं एवं वे (युवतियां) अत्यन्त सुन्दरी हैं अत एव ख्याति या सौभाग्यको प्राप्त कर चुकी हैं और वे (वलभियां) एकान्त (जनशून्य) स्थान हैं, एवं वे (युवतियां) अत्यन्त निर्मल हैं, इसलिये सुरताभिलापको बढ़ाने वाली हैं एवं वे (वलभियां) झुके हुए पटल प्रान्त (छाजन)से सुशोभित हैं, तथा वे (युवतियां) उदरस्थ त्रिवलीसे अत्यन्त मनोहर मालूम पड़ती हैं।

तदाह वृत्तिकारः—

**अत्र वधूभिः सह वलभीरसेवन्तेति वाक्यार्थप्रतीतेरनन्तरं, वध्व इव-वलभ्य इति श्लेषप्रतीतिरशब्दाऽप्यर्थसामर्थ्यान्मुख्यत्वेन विवर्तते।**

अविद्यमानो जनकश्शब्दो यस्याः साऽशब्दा शब्दाजन्येत्यर्थः। मुख्यत्वेन विवर्तते प्राधान्येनोत्पद्यते, कारणविषमसत्ताककार्यस्य वेदान्तिनये विवर्तत्वेन प्रसिद्धेः। अशब्देत्यनेनात्र श्लेषस्य तार्किकमतेऽनुमितिलभ्यत्वं मीमांसकमते श्रुतार्थापत्तिगम्यत्वं च न सम्भवतीति सूच्यते, उभयत्र शब्दापेक्षणात्।

नन्वेवंरीत्या सर्वत्रोपमास्थलेषु श्लेषध्वनिः सम्भवेदिति चेत्, मैवम्, 'सकलकलं पुरमेतज्जातं परितः सुधांशुबिम्बमिव' इत्यादौ शब्दश्लेषस्य, 'कमलमिव मुखं मनोज्ञमेतत्' इत्यादौ चार्थश्लेषस्य वाच्यत्वात्। श्लेषस्यात्रौपम्यनिर्वाहकत्वेऽपि प्राधान्यं चिन्तनीयम्, वृत्ति-विवृतिकृदुक्तदिशा रुय्यकानुमतपथेन वा कथञ्चनावसेयम्॥

**यहां पर पताका, विविक्त और नमद्वलीक इन तीन शब्दोंसे श्लेष द्वारा क्रमशः प्रसिद्धि, निर्मल और त्रिवलि रूप अर्थान्तरका बोध होकर विशेष चमत्कृति उत्पन्न होती है, इसलिये वधूकी तरह यह वलभी है, इस औपम्यका निर्वाहक श्लेषालंकार ध्वनित होता है।**

यथासङ्ख्यध्वनिमुदाहरति—

**यथासङ्ख्यध्वनिर्यथा—**

वसन्तं वर्णयति—

**'अङ्कुरितः पल्लवितः कोरकितः पुष्पितश्च सहकारः।**
**अङ्कुरितः पल्लवितः कोरकितः पुष्पितश्च हृदि मदनः॥'**

यथा यथा वहिः सहकारोऽतिसौरभ आम्रः, अङ्कुरितो जाताङ्कुरः, पल्लवितः सपल्लवः, कोरकित उद्भूतकुड्मलः, पुष्पितः कुसुमितः स्फुटितमञ्जरीकश्चाभूत्, तथा तथा यूनां हृदि मदनोऽपि क्रमेणाङ्कुरित ईषदुद्भूतः पल्लवितो लब्धकिञ्चिदुच्छ्रयः, कोरकितो मनोरथाभिनिविष्टः पुष्पितः समासादितविकासश्चाभवदित्यर्थः।

इह वसन्तवर्णने प्रस्तुतयो मदनसहकारयोरङ्कुरणाद्येकधर्मयोगितया तुल्ययोगिता, उभयोरङ्कुरणादीनां यौगपद्येन समुच्चयश्चालङ्कारो वाच्यः प्रतीयते। पश्चान्निष्पन्ने वाच्यार्थबोधे येनैव क्रमेण सहकारीयाङ्कुरणादीनामुपर्युपादानम्, तेनैव क्रमेण कामीयानामपि तेषामध उक्तिरिति पर्यालोचनायाम्—'उद्दिष्टानामर्थानां क्रमेणानुनिर्देशो यथा-

सङ्ख्यम्' इतिरुय्यकलक्षितो यथासङ्ख्यालङ्कारो वैयञ्जनिकप्रतीतिदेहल्यां पदं प्रमुखतया निदधातीति यथासङ्ख्यध्वनिः ॥

यथासंख्यालंकार ध्वनिका उदाहरण बतलाते हैं—अङ्कुरित इति। कवि वसन्तका वर्णन करता है-ज्यों ज्यों बाह्य जगत्में आम्रतरु मंजरी आनेके समयमें क्रमशः पहले कुछ प्रस्फुटित हुआ बादमें पल्लवित हुआ तदनन्तर मुकुलित हुआ बादमें मञ्जरियोंसे लद गया, उसी क्रमसे ( त्यों त्यों ) युवकोंके हृदयमें मदन विकार भी पहले कुछ उद्बुद्ध हुआ बादमें उससे कुछ अधिक होकर जानने योग्य हुआ, तदनन्तर अभिलापका विषय होने लगा बादमें पूर्ण विकासको प्राप्त हुआ, यहां पर वसन्तके वर्णन प्रसङ्गमें प्रस्तुत मदन और सहकारका अङ्कुरणादि समान धर्मके साथ सम्बन्ध होनेसे तुल्ययोगिता और उक्त दोनोंके अंकुरणादिका एक साथ ही ज्ञान होनेसे समुच्चयालंकार वाच्यरूपसे प्रतीत होता है। बादमें वाच्यार्थबोधमें जिसी क्रमसे उक्त धर्मादिका ऊपरमें उत्तरोत्तर उपादान हो उसी क्रमसे नीचे भी समझने से यथासंख्य अलंकार ध्वनित होता है।

तदाह—

अत्र हि यथोद्देशे यच्चारुत्वमनुरणनरूपं मदनविशेषणभूताङ्कुरितादिशब्दगतं, तन्मदनसहकारयोस्तुल्ययोगितासमुच्चयलक्षणाद्वाच्यादतिरिच्यमानमालक्ष्यते ।

उद्देश उच्चारणम् 'दिशिरुच्चारणक्रियः' इति महाभाष्यकारोक्तेः। अनूद्देशः पश्चात्तेनैव क्रमेणोच्चारणम्। अतिरिच्यमानं भिद्यमानम्। आलक्ष्यते प्रतीयते व्यञ्जनयेति शेषः ॥

उक्त स्थलमें जो ही क्रम प्रथम उच्चरित सहकार सम्बन्धी अंकुरादिगत है, वही क्रम पश्चात् उच्चरित मदन सम्बन्धी अङ्कुरादिगत भी प्रतीत होता है, इसलिये वह क्रम मदन और सहकारका समुच्चय और तुल्ययोगितारूप वाच्यार्थके अतिरिक्त ही व्यङ्ग्य नामक पदार्थ व्यञ्जनासे अभिव्यक्त होने वाला समझा जा रहा है।

उपसंहरति—

एवमन्येऽप्यलङ्कारा यथायोगं योजनीयाः ।

एवमनयैव रीत्या, अन्येऽत्रानुदाहृताः सर्वेऽप्यलङ्काराः, यथायोगं क्वचिद्वस्तुनो व्यञ्जकत्वं क्वचन चालङ्कारस्येत्युपायमौचित्यं युक्तिं वाऽनतिक्रम्य योजनीया ध्वन्यमानतयेति शेषः ।

नहि परिगणितानामेवालङ्काराणां ध्वन्यमानतेति परोक्तं युक्तम्, दर्शितदिशा सर्वेषामपि तत्सम्भवादित्यभिसन्धिः ।

अलङ्कारान्तरध्वन्युदाहरणानि लोचनेन समुन्मीलितानीति विशेषस्ततोऽवसेयः। इह तूदाहरणमात्रमुपादीयते। तथाहि दीपकध्वनिर्यथा—

'मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा॥
वज्रमिन्द्रकरविप्रसृतं वा स्वस्ति तेऽस्तु लतया सह वृक्ष!॥'

अप्रस्तुतप्रशंसाध्वनिर्यथा—

'ढुण्ढुल्लन्तो मरिहिसि कण्टअकलिआइँ केअइवणाइं।
मालइकुसुमसरिच्छं भमर! भमन्तो न पाविहिसि॥'

अपह्नुतिध्वनिर्यथा भट्टेन्दुराजस्य—

'यः कालागुरुपत्रभङ्गरचनावासैकसारायते,
गौराङ्गीकुचकुम्भभूरिसुभगाभोगे सुधाधामनि।
विच्छेदानलदीपितोत्कवनिताचेतोऽधिवासोत्सवं,
सन्तापं विनिनीषुरेष विनतैरङ्गैर्नताङ्गि! स्मरः॥'

अत्रैव ससन्देह-प्रतिवस्तूपमा-हेतु-सहोक्त्यु-पमेयोपमाध्वनिरपि विभावनीयः। अतिशयोक्तिध्वनिर्यथाऽभिनवगुप्तस्य—

'केलीकन्दलितस्य विभ्रममधोर्धुर्यं वपुस्ते दृशौ,
भङ्गीभङ्गुरकामकार्मुकमिदं भ्रूनर्मकर्मक्रमः।
आपातेऽपि विकारकारणमहो वक्त्राम्बुजन्मासवः,
सत्यं सुन्दरि! वेधसस्त्रिजगतीसारस्त्वमेकाकृतिः॥'

इहैव विभावना-तुल्ययोगिताध्वनिरपि द्रष्टव्यः॥

**एवं उक्तरीतिसे ही अनुदाहृत अलंकारोंको भी यथोचित सोच विचार कर काव्य वाक्योंमें प्रयुक्त करना चाहिये, जैसे कि दीधितिमें उदाहरण बताये गये हैं।**

प्राचीनैरुक्तानामेवालङ्काराणां ध्वनित्वं स्थापयद्भिर्भवद्भिः किमधिकं लब्धमित्याशङ्कायां कारिकामवतारयति—

**एवमलङ्कारध्वनिमार्गं व्युत्पाद्य तस्य प्रयोजनवत्तां ख्यापयितुमिदमुच्यते—**

व्युत्पादनं विशेषतो ज्ञापनम्। प्रयोजनं फलम्।

**प्राचीन कवियों द्वारा कथित अलंकारोंके ही ध्वनित्व स्थापन करनेमें कोई विशेष लाभ नहीं मालूम पड़ता है, इसलिये अलंकार ध्वनिके विशेष व्युत्पादनके बाद उसका प्रयोजन बतलाते हैं:—**

'शरीरीकरणं येषां वाच्यत्वे न व्यवस्थितम् ।
तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गताङ्गताः ॥५१॥

येषामलङ्काराणां वाच्यत्वे वाच्यतादशायाम्, शरीरीकरणं कटककुण्डलादिस्थानीयतयाऽशरीराणां शरीरतापर्यन्तसम्पादनम्, न व्यवस्थितं किन्तु दुर्घटम्, अस्तीति शेषः, तेऽलङ्कारा ध्वनेः काव्यस्य ध्वननव्यापारस्य वाऽङ्गतां व्यङ्ग्यतां गताः परामुत्कृष्टतमां छायां शोभाश्रयात्मरूपतां यान्तीत्यर्थः।

प्राचीनोक्तानामप्यलङ्काराणां ध्वन्यमानतायां विच्छित्तिविशेषजनकत्वमानुभविकमिति नाप्रयोजनको ध्वन्युपदेश इति भावः॥

**जो अलंकार वाच्यतादशामें रह कर कटक कुण्डलादि स्थानापन्न होनेके कारण शरीरत्व रूपको भी प्राप्त करनेमें समर्थ नहीं हो पाता, वही अलंकार ध्वन्यात्मक काव्यकी व्यङ्ग्यत्व दशामें पहुंच कर अत्यन्त उत्कृष्ट शोभास्पद काव्यात्मताको प्राप्त कर लेता है, अर्थात् उक्त अलंकारोंके प्राचीनों द्वारा वाच्यरूपसे प्रतिपादित होनेपर भी ध्वनिरूपमें परिणत होनेपर सहृदयों द्वारा उनमें अनुभूयमान चमत्कृति विशेष जनकताका अपलाप नहीं किया जा सकता है, अतः अलंकार ध्वनिका निरूपण निरर्थक नहीं है।**

ननु ध्वनेरङ्गत्वमलङ्काराणां यद्युपकारकत्वाद्वाच्यत्वेन व्यञ्जकत्वादभिमतम् तर्हि शोभाऽतिरेकविरह इति कथं सप्रयोजनत्वमित्यत आह—

**ध्वन्यङ्गता चोभाभ्यां प्रकाराभ्यां व्यञ्जकत्वेन व्यङ्ग्यत्वेन च। तत्रेह प्रकरणाद्व्यङ्ग्यत्वेनेत्यवगन्तव्यम्।**

अयमाशयः—वाच्यानामलङ्काराणां ध्वनेरुपकारकत्वरूपमङ्गत्वं व्यञ्जकतया, व्यङ्ग्यानान्तु तेषां स्वयमलङ्कार्याणा ध्वनेरङ्गत्वं तदात्मतयैव, इत्थं द्विधाऽङ्गत्वसम्भावनायामिह व्यङ्ग्यानामलङ्काराणां तादात्म्येन ध्वन्यङ्गत्वम्प्रकरणावधारितमतो न छायाऽपकर्षेण प्रयोजनवैधुर्य्यम्। अलङ्काराणां व्यङ्ग्यत्वेऽपि तादात्म्यं न वास्तविकम् 'काव्यस्यात्मा स एवार्थः' इत्यनेन रसादीनामेव तत्त्वेन व्यवस्थापितत्वात्। किन्तु शिशुक्रीडायां यथा कस्मिंश्चिद्राजत्वमवास्तविकमप्यारोपितं किञ्चिदन्यापेक्षया महत्त्वं तावदादधाति, तथैवेहाप्यारोपितमात्मत्वं वाच्यालङ्कारापेक्षयोत्कर्षमावहति। तेषान्तु कटककुण्डलादीनामिव शरीररूपताऽपि स्वतो दुर्घटैव, दूरे पुनरात्मतासम्भावना॥

**उक्त अलंकार व्यञ्जक और व्यङ्ग्य इन दो प्रकारोंसे ध्वनिके अङ्ग होते हैं, उनमें वाच्यभूत अलंकार व्यञ्जकरूपसे ही ध्वनिके उपकारक होनेसे अङ्ग गिने जाते हैं,**

किन्तु व्यङ्ग्यात्मक अलंकार तो स्वयं अलंकार्य हो जाते हैं, अतः वे ध्वनिके साथ तादात्म्य प्राप्त कर ध्वन्यात्मक होनेसे ही ध्वनिके अङ्ग कहे जाते हैं, प्रकृतमें तो अन्तिम प्रकारका ही विशद विवेचन किया गया है, अतः उक्त प्रयोजनका बाध नहीं हुआ ।

नन्वेवं पुनर्दीपकादावुपमाया व्यङ्ग्यत्वेन ध्वन्यङ्गत्वमापततीत्याशङ्कायामाह—

**व्यङ्ग्यत्वेऽप्यलङ्काराणां प्राधान्यविवक्षायामेव सत्यां, ध्वनावन्तःपातः । इतरथा तु गुणीभूतव्यङ्ग्यत्वं प्रतिपादयिष्यते ।**

इतरथाऽप्राधान्यविवक्षया । प्रतिपादयिष्यते 'प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः' इत्यादिना तृतीयोद्द्योते । तेन दीपकादावुपमाया व्यङ्ग्यत्वेऽप्यप्राधान्यविवक्षया न ध्वन्यात्मत्वमित्यवसेयम् ॥

प्रधानरूपसे व्यज्यमान अलंकार ही उक्त अलंकार ध्वनिके अन्दर गृहीत होते है, और अप्रधान रूपसे व्यज्यमान अलंकार तो गुणीभूत व्यङ्ग्यके अन्दर ही गृहीत होते हैं, इसलिये दीपकादि वाच्यभूत अलंकारमें उपमादिका अप्रधान रूपसे ही व्यङ्ग्यरूपमें भान होनेके कारण ध्वनिमें ग्रहण नहीं होता है ।

अलङ्काराणां व्यङ्ग्यत्वे प्राधान्येन विवक्षितत्वे चापि प्रकारद्वयमुपदिशंस्तत्प्रकारद्वयस्य ध्वन्यात्मताव्यवस्थापकं कारिकायुगमवतारयति वृत्तिकारः—

**अङ्गित्वेन व्यङ्ग्यतायामप्यलङ्काराणां द्वयी गतिः, कदाचिद्वस्तुमात्रेण व्यज्यन्ते, कदाचिदलङ्कारेण । तत्र—**

गतिरवस्था, वस्तुव्यङ्ग्यताऽलङ्कारव्यङ्ग्यता चेति । तत्र गतिद्वये । 'प्राप्तश्रीरेप' इत्यादौ वस्तुना प्राधान्येन रूपकालङ्कारो व्यज्यते, 'काकतीयचिभोः' इत्यादौ च निदर्शनाऽलङ्कारेणाधिकालङ्कारो व्यज्यत इति वस्त्वलङ्काररूपव्यञ्जकभेदेनालङ्कारध्वनेरपि भेदः, उभयव्यङ्ग्यत्वेऽप्यलङ्काराणां ध्वनिरूपता चेति भावः ॥

प्रधान रूपसे प्रतीयमान व्यङ्ग्यरूप अलंकारोंके दो भेद हैं—'वस्तु व्यङ्ग्य अलंकार' और 'अलंकार व्यङ्ग्य अलंकार' । उनमें—

**व्यज्यते वस्तुमात्रेण यदाऽलङ्कृतयस्तदा ॥**

**ध्रुवं ध्वन्यङ्गता तासाम् ,**

अत्र हेतुः—निर्दिश्यत इति शेषः ।

**काव्यवृत्तेस्तदाश्रयात् ॥ ५२ ॥**

यदा वस्तुमात्रेण नतु सालङ्कारेणापि, अलङ्कृतयोऽलङ्कारा व्यज्यन्ते, तदा व्यङ्ग्यत्वकाले तासामलङ्कृतीनां ध्रुवं नियमेन, ध्वन्यङ्गता ध्वनिरूपता वाच्यवस्त्वपेक्षयाऽलङ्कारत्वेनैवातिशायितया ध्वनित्वनिर्वाहकतेति यावत्, भवतीति शेषः। कुत इति चेत् ?—काव्यस्य कविव्यापारस्य वृत्तेः प्रवृत्तेः स व्यङ्ग्योऽर्थ आश्रय उद्देश्यतयाऽऽलम्बनं यस्याः सा तदाश्रया, तस्या भावस्तदाश्रयत्वम्, तदुद्देश्यकत्वम्, तस्मादित्यर्थः।

इह तदाश्रयादिति भावप्रधानो निर्देशः। यद्वाऽऽश्रयणमाश्रयस्तस्मादित्याश्रयते र्भावेऽच्प्रत्ययः। कारिकाचतुर्थचरणस्य हेतूपस्थापकतां बोधयितुं मध्ये 'अत्र हेतुः' इत्येतावान् वृत्तिग्रन्थो निक्षिप्तः। व्यङ्ग्यार्थबुबोधयिषयैव कवे रचनाऽऽत्मकव्यापारस्य प्रवृत्तत्वादलङ्काराणां वाच्यवाचकावधिकोत्कर्षेण व्यङ्ग्यतायामवश्यं ध्वन्यात्मत्वम्। यागप्रवृत्त्युद्देश्यस्वर्गवत्काव्यप्रवृत्त्युद्देश्यप्रतीतिविषयव्यङ्ग्यस्य प्राधान्यम्। तदर्थाप्रकाशकत्वे शब्दार्थयोः सहृदयाह्लादजनकत्वविरहात्काव्यत्वमेव न सम्भवतीति भावः॥

जब केवल वस्तुमात्रसे अलंकार अभिव्यञ्जित होते हैं, तब वे अलंकार वाच्यभूत वस्तुकी अपेक्षा नियतरूपसे अधिक चमत्कारजनक होनेके कारण ध्वनिपदसे व्यवहृत होते हैं, क्योंकि व्यङ्ग्यार्थको अभिव्यक्त करनेके अभिप्रायसे ही काव्यरचनामें कवियोंकी प्रवृत्ति होती है, अर्थात् व्यङ्ग्यार्थ बोधन द्वारा ही सहृदयोंको आह्लादित करनेसे कविका उद्देश्य सिद्ध होता है, अन्यथा कविता करना ही व्यर्थ हो जायगा।

तदाह—

**यस्मात्तत्र तथाविधव्यङ्ग्यालङ्कारपरत्वेनैव काव्यं प्रवृत्तम्। अन्यथा तु तद्वाक्यमात्रमेव स्यात्।**

अन्यथा व्यङ्ग्यतात्पर्यकत्वाभावे। देवदत्तो ग्रामं गच्छतीत्यादिवद्वाक्यमात्रं, नतु काव्यं स्यात् तस्य तत्परत्वेनैव व्यवस्थापितत्वात्॥

वृत्तिकार उसीको संक्षेपमें स्फुट करते हैं—यस्मादिति। क्योंकि उपर्युक्त काव्यमें वाच्यवस्तुकी अपेक्षा व्यङ्ग्यार्थ रूप अलंकार विषयक बोधको मुख्यरूपसे प्रकट करनेके तात्पर्यसे ही काव्यका निर्माण हुआ है। अन्यथा यदि व्यङ्ग्य बोधमें मुख्य तात्पर्य न हो तो वह, काव्य ही नहीं हो सकेगा, अपितु साधारण वाक्य जैसा हो जायगा।

अलङ्काराणां वस्तुव्यङ्ग्यतायां ध्वनिरूपतां व्यवस्थाप्यालङ्कारव्यङ्ग्यतायामपि व्यवस्थापयति—

तासामेवालङ्कृतीनाम्—

'अलङ्कारान्तरव्यङ्ग्यभावे,

पुनः—

ध्वन्यङ्गता भवेत् ॥

चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते ॥५३॥

तेषामेवालङ्काराणां पुनः अलङ्कारान्तरव्यङ्ग्यभावेऽन्यैर्व्यङ्ग्यभिन्नैरलङ्कारैर्व्यङ्ग्यत्वे, चारुत्वस्य विच्छित्तिजनकत्वसमनियतसौन्दर्यस्य, उत्कर्षत आधिक्याद् यदि व्यङ्ग्यानामलङ्काराणां प्राधान्यं, लक्ष्यते प्रतीयते, तदा ध्वन्यङ्गता ध्वनिव्यवहारप्रयोजकता भवेदित्यर्थः।

व्यङ्ग्यालङ्कारप्राधान्याभावे वाच्यालङ्काराणामेव प्राधान्यमिति गुणीभूतव्यङ्ग्यतैव काव्यस्येति बोध्यम् ॥

उक्तरीतिसे वस्तुव्यङ्ग्य अलंकारका ध्वनिरूप स्थापित कर अब अलंकार व्यङ्ग्य अलंकारका ध्वनिरूप स्थापित करते हैं—अलंकारेति। व्यङ्ग्य भिन्न वाच्यात्मक अलंकारोंसे अभिव्यञ्जित होनेवाले व्यङ्ग्य रूप अलंकार यदि सहृदयोंको प्रधान रूपसे अधिक चमत्कारजनक प्रतीत होते हों, तो वे भी ध्वनिपदसे ही व्यवहृत होते हैं, परन्तु प्रधानरूपसे व्यङ्ग्यभूत अलंकारोंके बोध नहीं होनेपर वाच्यात्मक अलंकार विषयक बोधकी ही प्रधानता होनेसे गुणीभूतव्यङ्ग्य काव्यका ही व्यवहार होता है।

उक्तप्राधान्यव्यवस्थां द्रढयति—

उक्तं ह्येतत्—'चारुत्वोत्कर्षनिबन्धना वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा' इति।

प्रागेवेदं विवृतम् ॥

क्योंकि अधिक रमणीयताकी प्रतीतिके अनुसार ही वाच्य-व्यङ्ग्योंमें प्राधान्याप्राधान्यकी विवक्षा की जाती है।

ननु वस्तुव्यङ्ग्यालङ्कारध्वनेरुदाहरणं मूले कुतो न दर्शितमित्यत आह—

वस्तुमात्रव्यङ्ग्यत्वे चालङ्काराणामनन्तरोपदर्शितेभ्य एवोदाहरणेभ्यो विषय उन्नेयः।

अनन्तरोपदर्शितेभ्यः 'प्राप्तश्रीरेष' इत्यादिभ्य एव, विषय उन्नेय उदाहरणमूहनीयम्। तच्च दर्शितमेव प्राक्। चकारोऽलङ्कारव्यङ्ग्यालङ्कारध्वनेरपि संग्राहकः ॥

उक्त वस्तु मात्र व्यङ्ग्य अलंकार ध्वनिका-पूर्व दर्शित-'प्राप्तश्रीरेष'-इत्यादिसे वस्तु व्यङ्ग्य रूपक ध्वनि आदि उदाहरण समझना चाहिये, एवं अलंकार व्यङ्ग्य अलंकार ध्वनिका-'कावतीयविभो-' इत्यादिसे निदर्शना व्यङ्ग्य अधिकालंकार ध्वनि आदि उदाहरण समझना चाहिये।

समासेनोपसंहरति—

**तदेवमर्थमात्रेणालङ्कारविशेषरूपेण वाऽर्थेन, अर्थान्तरस्यालङ्कारस्य वा प्रकाशने, चारुत्वोत्कर्षनिबन्धने सति प्राधान्ये, अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यो ध्वनिरवगन्तव्यः।**

तथा च कवि-तन्निबद्धवक्तृप्रौढोक्तिसिद्ध—स्वतस्सम्भविवस्त्वलङ्कारव्यङ्ग्यवस्त्वलङ्काररूपत्वेनार्थशक्त्युद्भवस्संलक्ष्यक्रमव्यङ्ग्यो ध्वनि र्द्वादशविधो बोध्य इति भावः।

अब संक्षेपसे सबका उपसंहार करते हैं—तदेवमिति। पूर्वोक्त रीतिसे कवि-प्रौढोक्तिसिद्ध एवं कवि-निबद्ध वक्तृ प्रौढोक्ति सिद्ध तथा स्वतः सम्भवीरूप तीन प्रकारकी वस्तुओं और उक्त तीन प्रकारके अलंकारोंसे व्यज्यमान व्यङ्ग्य वस्तुओं और व्यङ्ग्य अलंकारोंके भेदसे प्रधानतया अत्यन्त रमणीयताका जनक अर्थशक्त्युद्भव संलक्ष्य क्रमव्यङ्ग्य ध्वनि १२ प्रकारकी होती है।

अथ ध्वनिगुणीभूतव्यङ्ग्यपार्थक्यप्रदर्शनकारिकां कारिकामवतारयति।

**एवं ध्वनेः प्रभेदान् प्रतिपाद्य तदाभासविवेकं कर्तुमुच्यते—**

ध्वनिप्रभेदपरिगणनमग्रे करिष्यते। तदाभासो ध्वन्याभासो गुणीभूतव्यङ्ग्यमिति यावत्। विवेको विभागः पृथग्भावार्थकघञन्तरौधादिकविचेर्विवेकशब्दस्य निष्पन्नत्वात्॥

उक्त रीतिसे ध्वनिकाव्यका निर्वचन कर अब ध्वन्याभास रूप गुणीभूत व्यङ्ग्य काव्यका निर्वचन करते हैं।

**यत्र प्रतीयमानोऽर्थः प्रक्लिष्टत्वेन भासते।**
**वाच्यस्याङ्गतया वाऽपि नास्यासौ गोचरो ध्वनेः॥५४॥**

यत्र यस्मिन् काव्ये, प्रतीयमानो व्यङ्ग्योऽर्थः प्रक्लिष्टत्वेन गूढतयाऽस्वच्छत्वेनेति यावत्, भासते प्रतीयते, वाच्यस्यार्थस्याङ्गतयोपकारकत्वेनापि वा भासते, असौ काव्यविशेषोऽस्य संलक्ष्यक्रमस्य ध्वने र्न गोचरो न विषयः, किन्तु गुणीभूतव्यङ्ग्यत्वेनैव व्यपदेश्य इत्यर्थः। व्यङ्ग्यस्य स्फुटतायां चमत्कारातिशयकारित्वेन प्रधानतायां च ध्वनिः, अन्यथा गुणीभूतव्यङ्ग्यमेवेति सारम्॥

जिस काव्यमें प्रतीयमान व्यङ्ग्यार्थ अत्यन्त गूढ़ रूपसे भासित होता है, या वाच्यार्थके पोषक रूपसे ही भासित होता है, वह (काव्य) संलक्ष्य क्रमव्यङ्ग्य ध्वनिमें नहीं व्यवहृत होकर गुणीभूत व्यङ्ग्य काव्यमें ही व्यवहृत होता है, क्योंकि व्यङ्ग्यार्थके स्फुट रूपसे मुख्यतया अतिशय चमत्कार जनक होने पर ही ध्वनिका व्यवहार होता है, अन्यथा नहीं।

तदेव विभक्तिभङ्ग्याऽऽह—

द्विविधोऽपि प्रतीयमानः स्फुटोऽस्फुटश्च। तत्र य एव स्फुटः शब्दशक्त्याऽर्थशक्त्या वा प्रकाशते, स एव ध्वनेर्मार्गो नेतरः। स्फुटोऽपि योऽभिधेयस्याङ्गत्वेन प्रतीयमानोऽवभासते, सोऽस्यानुरणनरूपव्यङ्ग्यस्य ध्वनेरगोचरः।

अपिः प्रथमो ह्यर्थकः। इतरोऽस्फुटव्यङ्ग्यः।

अस्फुटव्यङ्ग्यस्त्वनतिचमत्करणात्, स्फुटव्यङ्ग्योऽपि वाच्याङ्गभूतव्यङ्ग्यो व्यङ्ग्याप्राधान्यान्न ध्वने र्विषयः, किन्तु स्फुटप्रधानव्यङ्ग्य एवेति सारम्॥

उक्त प्रयीयमान व्यङ्ग्यार्थ स्फुट और अस्फुट (गूढ़) के भेदसे दो प्रकारके हैं, उनमें जो शब्दशक्तिमूल तथा अर्थशक्तिमूल व्यञ्जना द्वारा स्फुट रूपसे प्रकाशित होता है, वही ध्वनिपदसे व्यवहृत होता है, दूसरा नहीं, किन्तु स्फुट रूपसे भासमान होने पर भी जो वाच्यार्थके ही उपकारक रूपसे प्रतीत होता है, वह इस संलक्ष्य क्रमव्यङ्ग्य ध्वनिका विषय नहीं होता, अर्थात् स्फुट तथा प्रधान व्यङ्ग्य ही ध्वनिका विषय समझा जाता है।

ध्वनेरविषयं वाच्याङ्गव्यङ्ग्यरूपं गुणीभूतव्यङ्ग्यमुदाहरति—

**यथा—**

मुग्धा पितृष्वसारं व्याहरति—

कमलाअरा णँ मलिआ हंसा उड्डाविआ ण अ पिउच्छा!।
केण वि गामतडाए अब्भं उत्ताणअं फलिहम्॥

'कमलाकरा न मलिता हंसा उड्डायिता नच पितृष्वसः!
केनापि ग्रामतडागेऽभ्रमुत्तानितं क्षिप्तम्॥' इतिच्छाया।

अयि पितृष्वसः! कमलाकराः पद्मनिकरा न मलिताः खण्डिताः, हंसा नोड्डायिता उत्पातिताः, (तडागेऽभ्रप्रवेशने तदावश्यकत्वात्) केनाप्यतिकुशलेन जनेन ग्रामस्य तडागे सरसि, उत्तानितमुद्वर्त्तितम्, अभ्रं मेघः, निक्षिप्तं प्रवेशितमित्यर्थः। गाथासप्तशतीघटकं पद्यमिदम्।

अत्र मुग्धाकर्तृकं मेघप्रतिबिम्बदर्शनं व्यङ्ग्यमपि वाच्यस्याङ्गमिति न ध्वनेर्विषयः। तथाहि—तडागजलेऽधो मेघस्य प्रतिच्छायां दृष्ट्वा केनापि तत्र प्रवेशितं मेघमेव मन्वानाया मुग्धतमायाः कस्याश्चित् पितृष्वसारं प्रत्युक्तिरियं तदैव वाच्यार्थसङ्गतिं भजति, यदा जलधरप्रतिबिम्बदर्शनं तस्या आगूर्यत इति व्यङ्ग्यस्य तस्य वाच्योपपादकत्वात्तदङ्गत्वम् ॥

अब वाच्यका अङ्गरूप गुणीभूत व्यङ्ग्यका उदाहरण बतलाते हैं—यथेति। मुग्धा नायिका अपनी बूआसे कहती है—हे पितृष्वसः ! इस सरोवरमें कमलसमूह भी नहीं खण्डित हुआ और हंस भी उड़ा कर नहीं भगाये गये, इसलिये मालूम पड़ता है, कि किसी अत्यन्त चतुर व्यक्तिने ही इस सरोवरमें उत्तान कर मेघको धीमेसे रख दिया है।

यहां पर 'मुग्धाने वास्तवमें जलमें मेघकी परछाँही देखी' इस व्यङ्ग्यार्थके प्रतीत होने पर भी उक्त वाच्यकी अपेक्षा गौण रूपसे ही वह (व्यङ्ग्यार्थ) भासित होता है, क्योंकि तड़ाग जलके अधस्तल पर पड़ती हुई मेघकी परछांहीको देखकर किसी व्यक्ति द्वारा स्थापित किए हुए साक्षात् बादलको ही समझनेवाली मुग्धा (भोली) नायिकाका कथन ही अत्यन्त रमणीय मालूम पड़ता है, अर्थात् मेघके प्रतिबिम्ब दर्शनात्मक व्यङ्ग्यार्थको छिपा देनेसे ही मुग्धाके अतिशय मुग्धापनकी प्रतीति द्वारा उक्त वाच्यार्थ अधिक चमत्कार जनक हो जाता है, अतः उक्त व्यङ्ग्य तादृश वाच्यके उपपादक होनेसे गुणीभूत व्यङ्ग्य काव्यसे ही व्यवहृत होता है।

तदाह—

**अत्र हि प्रतीयमानस्य मुग्धवध्वा जलधरप्रतिबिम्बदर्शनस्य वाच्याङ्गत्वमेव।**

तेन न ध्वनिः, किन्तु गुणीभूतव्यङ्ग्यमेवेति शेषः। 'वाच्येनैव हि विस्मयविभावरूपेण मुग्धिमातिशयः प्रतीयत इति वाच्यादेव चारुत्वसम्पत्। वाच्यन्तु स्वात्मोपपत्तयेऽर्थान्तरं स्वोपस्कारवाञ्छया व्यनक्ति' इति लोचनमपि द्रष्टव्यम् ॥

वृत्तिकार उसीका सार बतलाते हैं—अत्रेति। उक्तस्थलमें व्यङ्ग्यरूपसे प्रतीयमान—'मुग्धाकर्तृक मेघ प्रतिबिम्बदर्शन' उक्त वाच्यार्थके पोषक होनेसे ध्वनि पदसे व्यवहृत न होकर गुणीभूत व्यङ्ग्य काव्यका ही विषय समझा जाता है, क्योंकि उक्त वाच्यार्थ बोधसे ही चकित होनेवाली मुग्धाका अतिशय मुग्धापन जनित चारुता प्रतीत होती है।

गुणीभूतव्यङ्ग्यस्योदाहरणान्तरं दिदर्शयिषुः सामान्यव्यवस्थामाह—

**एवंविधे विषयेऽन्यत्रापि यत्र व्यङ्ग्यापेक्षया वाच्यस्य चारुत्वोत्कर्ष-**

प्रतीत्या प्राधान्यमवसीयते, तत्र व्यङ्ग्यस्याङ्गत्वेन प्रतीतेर्ध्वनेरविषयत्वम्।

एवंविधे गुणीभूतव्यङ्ग्ये। अन्यत्र 'वाणीर' इत्यादौ। नह्यस्मिन्नेवोदाहरणे, किन्त्वन्यत्रापीदृशस्थलेषु न ध्वनिरिति भावः॥

**इसी तरह दूसरे भी गुणीभूत व्यङ्ग्य स्थलोंमें यदि व्यङ्ग्यकी अपेक्षा वाच्य ही मुख्यरूपसे अधिक रमणीयताका प्रतिपादक हो, तो वहां भी गुणीभूत व्यङ्ग्य काव्य ही समझना चाहिये।**

उदाहरणान्तरमाह—

**यथा—**

कविस्तत्कालसन्निहितः कश्चन साक्षी वा स्वैरिणीचरितं परामृशति—

**'वाणीरकुडङ्गोड्डीण-सउणि-कोलाहलं-सुणन्तीए।**
**घरकम्मवावडाए वहुए सीअन्ति अङ्गाइं॥'**

वानीरकुञ्जोड्डीनशकुनिकोलाहलं श्रृण्वत्याः।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥' इति च्छाया।

वानीरकुञ्जाद्वेतसलतामण्डपाद्, उड्डीनानामुत्पतितानां, शकुनीनां पक्षिणां कोलाहलं कलकलं श्रृण्वत्या आकर्णयन्त्याः, तथा गृहकर्मसु व्यापृतायाः कृतव्यापारायाः संलग्नाया इति यावत्, वध्वा वनिताया अङ्गान्यवयवाः, सीदन्त्यवसादं व्रजन्त्याकुलीभवन्तीति यावदित्यर्थः। जघनविपुलाच्छन्दः।

तथा च 'अथ वेतसे। रथाभ्रपुष्पविदुरशीतवानीरवञ्जुलाः' 'निकुञ्जकुञ्जौ वा क्लीबे लताऽऽदिपिहितोदरे' 'कोलाहलः कलकलः' इत्यमरः।

अत्र 'दत्तसङ्केतः कान्तः कुञ्जं प्रविष्टः' इति व्यङ्ग्यापेक्षया शकुनिशब्दश्रवणसमकालमेव सकलाङ्गावसादसन्तन्यमानतारूपं वाच्यमेव सुन्दरमिति प्रदीपकृतः। शरीरावसादरूपवाच्यमेवानुभावभूतमौत्सुक्यावेगसंवलितानुरागोद्रेककृतमदनपारतन्त्र्यबोधकम्, व्यङ्ग्यन्तु तन्मुखप्रेक्षीत्युद्योतकारः। तेनासुन्दरव्यङ्ग्यत्वेनैवास्य गुणीभूतव्यङ्ग्यत्वम्। लोचने पुनः—'अत्र दत्तसङ्केतचौर्यकामुकरतसमुचितस्थानप्राप्तिर्ध्वन्यमाना वाच्यमेवोपस्कुरुते। तथाहि—गृहकर्मव्यापृताया इत्यन्यपराया अपि, वध्वा इति सातिशयलज्जापारतन्त्र्यबद्धाया अपि, अङ्गानीत्येकमपि न तादृगङ्गं यद् गाम्भीर्यावहित्थवशेन संवरीतुं पारितम्, सीदन्तीत्यास्तां गृहकर्मसम्पादनं स्वात्मानमपि धर्तुं न प्रभवतीति, गृहकर्मयोगेन स्फुटं तथा लक्ष्यमाणानीत्यस्मादेव वाच्यात्सा-

तिशयमदनपरवशताप्रतीतेश्चारुत्वसम्पत्तिः' इत्यनेनास्य वाच्याङ्गव्यङ्ग्यत्वेन गुणीभूतव्यङ्ग्यत्वमुक्तम् ।

तत्र विचार्यते-वाच्यसिद्ध्यङ्गव्यङ्ग्ये व्यङ्ग्यस्य नाचारुत्वं, किन्तु वाच्याङ्गत्वेन गुणीभाव इह त्वचारुत्वमपीति मम्मटानुसारिसिद्धान्तसरणिरेव साधीयसी प्रतिभाति । अत एव काव्यप्रकाशदर्पणे-'एतच्च वाच्यसिद्ध्यङ्गताऽऽदेरपवादभूतत्वाद्भिन्नम् । तेषु हि व्यङ्ग्यस्यापि चारुत्वं सम्भवति' इति विश्वनाथोऽपि निरणयत् ।

जैसे कोई व्यक्ति कुलटाके चरित्रका चित्रण करता है—वानीरेति । गृह समीपस्थ बेतसलताकी झाड़ीसे सहसा (एकाएक) झुण्डके झुण्ड पक्षियोंके उड़ पड़नेसे उत्पन्न कलकल शब्दको सुनकर गृहकार्यमें संलग्न कामुकी युवतीके सारे अङ्ग कामवासनासे उद्दीपित होकर सीदित होने (कड़कने) लगे । यहां पर 'रतिसंभोगार्थ कृत सङ्केतित कामुक पुरुष लताकुञ्जमें आगया' इस व्यङ्ग्यकी अपेक्षा 'पक्षियोंके शब्द सुनते ही आवश्यक गृहकार्यमें लगी रहनेपर भी अतिशय मदन संचारजनित रतिवासनासे पीड़ित होकर वह युवती अपने तकको भी नहीं सम्हाल सकी, गृहकार्यका सम्पादन तो दूर ही रहा ।' यह वाच्यार्थ ही चतुर रसिकोंको अधिक रुचिकर लगता है, इसलिये इसको भी ध्वनिका विषय न समझकर गुणीभूत व्यङ्ग्य काव्यका ही विषय समझना चाहिये ।

ईदृशानां तर्हि का गतिरित्यत्राह—

**एवंविधो हि विषयः प्रायेण गुणीभूतव्यङ्ग्यस्योदाहरणत्वेन निर्दिश्यते ।**

प्रायेणेत्यविवक्षितव्यङ्ग्यव्यवच्छेदाभिप्रायेण भणितम् ॥

इसी प्रकार वाच्यसिद्ध्यङ्ग व्यङ्ग्यादि सारे ही अप्रधान विषय प्रायः करके गुणीभूत व्यङ्ग्य काव्यके अन्दर ही संगृहीत हो जाते हैं ।

व्यङ्ग्यस्य पूर्वं गुणीभावेऽपि क्वचित्पश्चात्प्राधान्ये ध्वनेरेव विषय इत्युपदिशति—

**यत्र तु प्रकरणादिप्रतिपत्त्या निर्धारितविशेषो वाच्योऽर्थः पुनः प्रतीयमानाङ्गत्वेनैवावभासते, सोऽस्यैवानुरणनरूपव्यङ्ग्यस्य ध्वनेर्मार्गः ।**

अयं भावः—शब्दाः कामधेनव इति ततो वाच्यविशेषावधारणं पुरुषः प्रकरण-लिङ्ग-शब्दान्तरसान्निध्य-संयोग-विप्रयोग-साहचर्यप्रभृतीनामर्थनिर्णायकानां ज्ञानस्य बलेनैव कर्तुं शक्नोति । प्रकरणादि च वाच्यातिरिक्तमेव प्रायेणोपलभ्यते । ततश्च व्यङ्ग्येन प्रकरणादिना स्वज्ञानद्वारा वाच्यावधारणं सम्पाद्यत इति व्यङ्ग्यस्य यद्यपि वाच्याङ्गत्वम्, किन्तु यत्र तथा प्रकरणादिज्ञानेन निर्णीतो वाच्योऽर्थः प्रधानीभूतस्य

व्यङ्ग्यान्तरस्य पुनरुपस्कारकत्वेनाङ्गतां दधान एव प्रतीयते, तत्र पर्यन्ते व्यङ्ग्यार्थस्यैव प्राधान्यमिति ध्वनेरेव विषयता न गुणीभूतव्यङ्ग्यस्य ॥

**परन्तु जिस काव्यमें पहले व्यङ्ग्यार्थके गौण होने पर भी प्रकरणादिकी पर्यालोचनाके पश्चात् निर्णीत होकर वाच्यार्थ ही प्रधानीभूत व्यङ्ग्यके उपपादकके रूपसे प्रतीत होता है, उस काव्यको संलक्ष्यक्रम व्यङ्ग्य ध्वनिका ही विषय समझना चाहिये।**

उदाहरति—

**यथा—**

अविनीतकामुकेन सह क्रीडन्तीं नायिकां बहिरश्रुतवलयध्वनिः सखी प्रतिबोधयति—

'उच्चिणसु पडिअ कुसुमं मा धुण सेहालिअं हलिअसुह्ने !।
अह दे विसमविरावो ससुरेण सुओ वलअसद्दो ॥'

'उच्चिनु पतितानि कुसुमानि मा धुनीः शेफालिकां हालिकस्नुषे !
एष ते विषमविरावः श्वशुरेण श्रुतो वलयशब्दः ॥' इति च्छाया ॥

हे हालिकस्नुषे! हलवाहपुत्रवधु! क्रियाकौशलानभिज्ञे! पतितानि वृक्षाद्भूतल इति शेषः, कुसुमानि शेफालिकायाः पुष्पाणि, उच्चिनु संगृहाण, शेफालिकां श्वेतनिर्गुण्डीलतां मा धुनीर्न कम्पय, पुष्पाणि पातयितुमिति शेषः, यतः, विषम उत्कटो विरावो ध्वनिर्यत्र तादृश एष मयाऽपि श्रावणप्रत्यक्षविषयीक्रियमाणः, ते वलयानां कङ्कणानां, शब्दः, श्वशुरेण श्रुत इत्यर्थः।

तथाच—'शेफालिका तु सुवहा निर्गुण्डी' इत्यमरः।

अत्र 'धृष्टेन केनापि कान्तेनान्तः स्वैरं समुद्धतं क्रीडन्त्या नायिकाया मणितशिञ्जितादि तारं बहिःस्थितैव श्रुत्वा रहस्यभङ्गाद्बिभ्यती वचनचतुरा सहचरी तां तथा प्रतिबोधयति, यथा सा ततो निवर्तेत, रहस्योद्भेदश्चापि न भवेत्' इत्येव व्यज्यमानं प्रकरणम् 'तव श्वशुरस्य शेफालिकालतायां महानादर इति तदाकर्षणकम्पनादिभिरसौ भृशं कुप्येदत एवं न विधेयम्' इति प्रतीयमानं समर्थनं च ज्ञानद्वारा वाच्यार्थमुपकरोतीति व्यङ्ग्यस्य पूर्वं वाच्याङ्गत्वम्, किन्तु पश्चाच्छेफालिकानिर्धूननस्याप्रस्तुतत्वात्तदुक्तेस्तन्निषेधतात्पर्यकत्वाभावे, नायिकारहस्यगोपनतात्पर्यकत्वे च गृहीते, निषेधात्मनो वाच्यार्थस्य तादृशविहारनिषेधरूपप्रधानव्यङ्ग्यपोषकत्वमेवेत्यसौ पर्यवसाने संलक्ष्यक्रमव्यङ्ग्यध्वनेरेव विषयोऽवधार्यते ॥

उसका उदाहरण बतलाते हैं—यथेति। उद्धत कामुकके साथ रति क्रीड़ा करती हुई नायिकाके बलयोंकी ध्वनिको बाहरसे ही सुनती हुई सखी उसको चेताती है—हे हलवाहकी पुत्रवधू! स्वयं गिरकर भूमि पर पड़े हुए शेफालिका पुष्पोंको चुन लो, किन्तु उसकी टेहुनियोंको पुष्प गिरानेके लिये न डुलाओ अन्यथा (वरना) अच्छा न होगा, क्योंकि मुझसे भी सुने गये तुम्हारे कङ्कणोंके अत्यन्त उत्कट शब्द (टनटनाहट) को तुम्हारे श्वशुरने भी सुन लिया है।

यहां पर अत्यन्त धृष्ट कामुकके साथ औद्धत्यपूर्वक यथेच्छ (मनमानी) रति क्रीड़ामें आसक्त युवतीके वलयोंकी ध्वनिको बाहरसे ही सुनकर रहस्य भङ्गके भयसे चतुर सहचरी उसको इस ढङ्गसे समझाती है, जिससे वह (कामुकी) उक्त रति क्रीड़ासे निवृत्त भी हो जाय और रहस्य भी न खुले इस अभिप्रायसे 'तुम्हारा श्वशुर शेफालिका फूलके वृक्षमें अत्यन्त अधिक प्रेम रखता है, उसे हिलानेसे वह बहुत असन्तुष्ट हो जायगा, इसलिये न हिलाओ' यह प्रतीयमान व्यङ्ग्य यद्यपि पहले उक्त वाच्यका ही पोषक प्रतीत होता है, तथापि बादमें विचार करने पर अप्रासङ्गिक शेफालिकाके कम्पनके निषेधमें तात्पर्य नहीं है, अपितु नायिकाके रहस्य गोपनमें ही तात्पर्य है, यह निश्चय होने पर उक्त निषेधात्मक वाच्य, तादृश उद्धत रति क्रीड़ाके निषेध रूप व्यङ्ग्यार्थका ही पोषक हो जाता है, अतः पर्यवसानमें संलक्ष्यक्रम व्यङ्ग्य ध्वनिका ही विषय प्रतीत होता है।

तदाह—

अत्र ह्यविनयपतिना सह रममाणा सखी बहिश्श्रुतवलयकलकलया सख्या प्रतिबोध्यते। एतदपेक्षणीयं वाच्यार्थप्रतिपत्तये। प्रतिपन्ने च वाच्यार्थे तस्याविनयप्रच्छादनतात्पर्येणाभिधीयमानत्वात् पुनर्व्यङ्ग्याङ्गत्वमेवेत्यस्मिन्ननुरणनरूपव्यङ्ग्यध्वनावन्तर्भावः।

अविद्यमानो विनय आर्जवं यस्यासावविनयो धृष्ट उद्धत इति यावत्। प्रतिपत्तिर्ज्ञानम्। अविनयस्यौद्धत्यस्य प्रच्छादनमपह्नवः॥

उक्त स्थलमें 'उद्धत नायकके साथ रमती हुई नायिकाको बाहरसे ही कङ्कणकी ध्वनि सुनकर सखी सचेत कर रही है'—यह व्यङ्ग्यभूत प्रकरण, वाच्यकी स्फुटताके लिये पहले अपेक्षित होनेपर भी बादमें वाच्यार्थके स्फुटरूपसे ज्ञात हो जाने पर उस उद्धत केलिक्रीड़ाको छिपानेके अभिप्रायसे ही उक्त वाच्य प्रतिपादित किया गया है, अतः वही व्यङ्ग्यका पोषक हो जाता है, इसलिये संलक्ष्यक्रम व्यङ्ग्य ध्वनिमें ही इसका अन्तर्भाव होता है।

अविवक्षितवाच्यध्वन्यविषयव्यवच्छेदप्रदर्शनकारिकां कारिकामवतारयति—

**एवं विवक्षितवाच्यस्य ध्वनेस्तदाभासविवेके प्रस्तुते सत्यविवक्षितवाच्यस्यापि तं कर्तुमाह—**

'प्रस्तुतइति हेतौ सप्तमी । तदाभासविवेकप्रस्तावलक्षणात्प्रसङ्गादिति यावत् । कस्य तदाभास इत्यपेक्षायामाह–विवक्षितवाच्यस्येति । स्पष्टे तु व्याख्याने प्रस्तुत इत्यसङ्गतम् । परिसमाप्तौ हि विवक्षिताभिधेयस्य तदाभासविवेकः । नत्वधुना प्रस्तुत ……मनुबध्नाति ।' इत्याचार्यवचनमिहत्यमनावर्जकम् , संयोगसमवायसम्बन्धवैधुर्येण 'निमित्तात्कर्मयोगे' इत्यनेन वार्तिकेन हेतौ सप्तम्या दुर्घटत्वात् , विवक्षितवाच्यस्य ध्वनेस्तदाभासाद्विवेके ( विभागे ) प्रस्तुते (सम्पन्ने ) सतीत्याद्यर्थेऽपि प्रस्तुत इत्यस्य सङ्गतत्वात् , 'यस्य च भावेन भावलक्षणम्' इत्यनेन सूत्रेण सप्तम्याः सुलभत्वाच्च ॥

वाच्यार्थके विवक्षित होनेके कारण विवक्षित वाच्यध्वनिके गुणीभूत व्यङ्ग्यरूप ध्वन्याभासके विचारके प्रसङ्गसे अविवक्षित वाच्यध्वनिके आभासका विचार प्रस्तुत करते हैं:—

**'अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः ।**
**शब्दस्य, स च न ज्ञेयः सूरिभिर्विषयो ध्वनेः ॥ ५५ ॥**

अव्युत्पत्तेरनैपुण्यादनुप्रासादिनिबन्धनैकरसिकत्वादिति यावत् , वाऽथवाऽशक्तेर्वृत्तपरिपूरणसामर्थ्यविरहाद्धेतोः, स्खलद्गतेर्बाधितार्थस्य लक्षणागुणवृत्तिमात्रप्रयोज्यबोधजनकस्येति यावत्, शब्दस्य यो निबन्धो यः प्रयोगः स च ध्वनेरविवक्षितवाच्यस्य विषयः सूरिभिर्न ज्ञेय इत्यर्थः ।

अयमाशयः—

अनुप्रासप्रवणतया कवेर्लाक्षणिकशब्दप्रयोगो यथा—

'प्रेङ्खत्प्रेमप्रबन्ध–प्रचुर–परिचयप्रौढसीमन्तिनीनां,
चित्ताऽऽकाशावकाशे विहरति सततं यः स सौभाग्यभूमिः ॥'

इह प्रेङ्खदिति लाक्षणिकः, चित्तमाकाश इति गौणः शब्दप्रयोगो यः, स ध्वनेर्न विषयः । एवं वृत्तपरिपूरणसामर्थ्यविरहेण यथा—

'विषमकाण्टकुटुम्बकसञ्चयप्रवर ! वारिनिधौ पतता त्वया ॥
जलतरङ्गविघूर्णितभाजने, विचलितात्मनि कुड्यमये कृता ॥'

अत्र प्रथमचरणश्चन्द्रमस्युपचरितो वृत्तपूरणमात्रप्रयोजन इत्ययमपि ध्वनेर्न विषयः। कारिकाघटमश्चकारः प्रथमोद्द्योतोक्तवदनुभवतिलावण्यादिलाक्षणिकशब्दान् सङ्गृह्णाति॥

व्युत्पत्तिकी कमीके कारण अनुप्रासादि तुकबन्दीके निर्माणमें ही अधिक स्नेह होनेसे या पद्यात्मक वृत्तोंको परिपूर्ण करनेकी सामर्थ्य नहीं होनेसे बाधितार्थक शब्दोंका लक्षणा आदि गौणीवृत्तिके सहारे जो बोध जननार्थ प्रयोग किया जाता है, वह उक्त अविवक्षितवाच्य ध्वनिका विषय नहीं माना जाता। जैसे—प्रेङ्खत्प्रेम-प्रबन्ध—' इत्यादि पद्यमें केवल अनुप्रासकी दृष्टिसे ही 'प्रेङ्खत्' इस लाक्षणिक शब्दका प्रयोग किया गया है, इसलिये यह उक्त ध्वनिका विषय नहीं होकर ध्वन्याभासमें गिना जाता है। 'विषमकाण्ड'—इत्यादि पद्यमें प्रथमचरण छन्दमात्रकी परिपूर्तिके लिये ही चन्द्रमामें उपचरित हुआ है, अतः यह भी ध्वनिका विषय नहीं है। कारिकास्थ चकारसे पूर्वोक्त लावण्यादि शब्दोंका संग्रह समझना चाहिये।

आभासाद्विवेके प्रक्रम्यमाणे ध्वनेरपि स्वरूपनिर्देश आवश्यक इति पुनर्ध्वनिस्वरूप-प्रदर्शिकां कारिकामवतारयति कारिकाऽर्थोपस्कारकार्थोपस्थापकपदोपन्यासेन वृत्तिकारः—

यतश्च—

'सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम् ॥
यद्व्यङ्ग्यस्याङ्गिभूतस्य, तत्पूर्णं ध्वनिलक्षणम् ॥ ५६ ॥

अङ्गिभूतस्य प्रधानस्य, व्यङ्ग्यस्य, सर्वेषु विवक्षितान्यपरवाच्या-विवक्षितवाच्यप्रभृतिषु प्रभेदेषु प्रकारेषु, यत् स्फुटत्वेनाक्लिष्टत्वेनैव ( नतु गौणत्वगूढत्वाभ्याम् ) अवभासनं ज्ञानं ज्ञापनं वा, तत्, पूर्णं समस्तमखण्डमिति यावत्, ध्वनेर्लक्षणं प्रमाणं प्रत्यायकं वा यतोऽस्त्यतो न गौणलाक्षणिकाद्याभासेषु ध्वनित्वम् ॥

अब ध्वनिके वास्तविक सारभूत स्वरूपका संक्षेपमें उपसंहार करते हुए द्वितीय उद्योत समाप्त करते हैं—सर्वेष्विति। प्रधानरूपसे भासमान व्यङ्ग्यार्थोंके सारे ही विवक्षितान्यपरवाच्यादि-प्रभेदोंमें, जिस व्यङ्ग्यार्थका स्फुटरूपसे ही भान होता है, ( नकि गौण या अत्यन्त गूढरूपसे ) वही वास्तवमें ध्वनिका अखण्ड असाधारण लक्षण है, अतः गौण—लाक्षणिक आदिमें ध्वनित्व नहीं है।

तदाह—

तच्च, उदाहृतविषयमेव।

इति राजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके
द्वितीय उद्द्योतः ॥

---

तद् ध्वनिलक्षणं च, उदाहृताः 'स्निग्धश्यामलकान्ति' इत्याद्यारभ्य प्रदर्शिता विषया लक्ष्याणि यस्य, तादृशमेव, नतु तत्तदाभासविषयमप्यस्तीति शेष इत्यर्थः ॥

आलोके विषमे क्षामे लोचने च पुरातने ।
स्वैरं मे चरतश्शश्वत् स्खलनं क्षम्यतां बुधैः ॥

इति मैथिलश्रोत्रियपण्डित-श्रीबदरीनाथशर्मनिर्मितायां
ध्वन्यालोकदीधितौ द्वितीय उद्द्योतः ॥

---

उस उक्त ध्वनिका लक्षण 'स्निग्धश्यामल'-इत्यादि उदाहरणोंमें दिखा ही चुके हैं।
द्वितीय उद्द्योत समाप्त ।

---

## अथ तृतीय उद्द्योतः ।

विलसत्सागरोत्सङ्ग-सङ्गिगङ्गाविडम्बिनीम् ॥
क्रीडन्तीं केशवक्रोडे राधामाधारये धिया ॥

विनेयबुद्धिवैशद्याय प्रकारान्तरेण पुनर्ध्वनिनिरूपणमारभमाणोऽतीतोद्द्योतद्वय-सङ्गतिं दर्शयन् वृत्तिकारः कारिकामवतारयति—

**एवं व्यङ्ग्यमुखेनैव ध्वनेः प्रदर्शिते सप्रभेदे स्वरूपे पुनर्व्यञ्जकमुखेन तत् प्रकाश्यते—**

तच्छब्दो ध्वनिस्वरूपं परामृशति । अविवक्षितवाच्यत्व-विवक्षितान्यपरवाच्यत्वादिव्यङ्ग्यधर्मभेदभिन्ना ध्वनेः प्रकाराः प्रथममुद्द्योतयुगलेन प्रतिपादिताः, इदानीं पुनर्व्यञ्जकभेदभिन्नास्ते 'स्थूणाऽभिखनन' न्यायेन प्रतिपाद्यन्त इत्याशयः ।

तेन न पिष्टपेषणाशङ्का, नवाऽनवधेयवचनताप्रसक्तिर्वक्तुरिति बोध्यम् ।

अविवक्षितवाच्यत्व एवं विवक्षितान्यपरवाच्यत्वादि अनेक व्यङ्ग्यधर्मोंके भेदसे ध्वनिके स्वरूप तथा विभिन्न प्रकारोंका प्रथम दो उद्योतमें प्रतिपादन कर,अब अनेक व्यञ्जकोंके भेदसे ध्वनिके स्वरूप एवं प्रकारोंका निरूपण करते हैं।

**'अविवक्षितवाच्यस्य पदवाक्यप्रकाशता ॥**
**तदन्यस्यानुरणन-रूपव्यङ्ग्यस्य च ध्वनेः ॥ ५७ ॥**

अविवक्षितवाच्यस्य = अर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्येति द्विभेदस्य लक्षणामूलध्वनेः, पदवाक्यप्रकाशता = प्रत्येकं पदाद् वाक्याच्च प्रकाशः प्रतीतिर्यस्य तत्त्वं भवतीत्यर्थः ।

इत्थं च ध्वने र्भेदत्रयं द्विशाखतया षोढाऽवगन्तव्यम् । न च ध्वनेः पदप्रकाशताया असम्भवः, इहैवोद्द्योते—'पदानां स्मारकत्वेऽपि पदमात्रावभासिनः' इत्यादिना तद्व्यवस्थाया वक्ष्यमाणत्वात् ॥

अर्थान्तर संक्रमित वाच्य एवं अत्यन्त तिरस्कृत वाच्यके भेदसे दो प्रकारकी जो उक्त लक्षणामूल अविवक्षितवाच्य ध्वनि है, वह पद और वाक्यसे प्रकाशित होनेके कारण फिर दो प्रकारकी होती है, तथा विवक्षितान्यपरवाच्य ध्वनिका जो संलक्ष्य क्रम व्यङ्ग्य ध्वनिरूप प्रकार है, वह भी पद और वाक्यसे प्रकाशित होनेके कारण दो प्रकारकी होती है इस तरह उक्त तीनों ध्वनि छे प्रकारकी सिद्ध हुई ।

क्रमश उदाहर्तुमाह—

**अविवक्षितवाच्यस्यात्यन्ततिरस्कृतवाच्ये प्रभेदे पदप्रकाशता यथा महर्षेर्व्यासस्य—**

महाभारते ।

**'सप्तैताः समिधः श्रियः' ।**

'धृतिः क्षमा दया शौचं कारुण्यं वागनिष्ठुरा ।
मित्राणां चानभिद्रोहः' ॥ इत्यवशिष्टं चरणत्रयम् ।

धैर्य्यादयः सुहृदनभिद्रोहान्ताः सप्त श्रियः सम्पदः समिध उद्दीपिका इत्यर्थः । शुष्केन्धनानि वह्निमिव धृत्यादीनि समृद्धिं दीपयन्तीत्यौपम्यपर्यवसानेऽपि पुरस्ताद्धृत्यादिषु समित्तादात्म्यस्य बाधितत्वेन 'आयुर्घृतम्' इत्यत्र घृतशब्दवत् समिच्छब्दस्योद्दीपकत्वं लक्षयतोऽन्यवैलक्षण्येन तत्करत्वस्य व्यञ्जकत्वम् । इन्धनात्मनो वाच्यस्य सर्वथाऽविवक्षा, व्यञ्जने च समिदतिरिक्तपदानपेक्षा चेति पदादेकस्मादेव व्यङ्ग्यस्य प्रतीतिरिह व्यक्तैव ।

उनमें पदप्रकाश्य अत्यन्त तिरस्कृत वाच्यात्मक अविवक्षित वाच्य ध्वनिका उदाहरण बतलाते हैं—अविवक्षितेति । जैसे महाभारतमें व्यासजीने कहा है—'धैर्य, क्षमा, दया, पवित्रता, करुणा, मधुर वचन और मित्रोंका अद्रोह ये सात गुण, सम्पदाओंके लिये समिधा हैं, अर्थात् उद्दीपक ( वर्द्धक ) हैं ।

यहां पर 'जैसे शुष्क इन्धन अग्निके उद्दीपक होते हैं, वैसे ही धैर्यादि भी समृद्धिके उद्दीपक हैं' इस तरह पर्यवसानमें औपम्यके बोध होनेपर भी पहले

धैर्यादि गुणोंमें समिधाके तादात्म्यका बाध होनेसे 'आयुर्घृतं' में आयुवर्द्धकमें आयु पदकी तरह समिध शब्द उद्दीपक अर्थमें लाक्षणिक होता हुआ अनन्य साध्य समृद्धिके प्रति धैर्यादिके विलक्षण साधनत्वका व्यञ्जक होता है और इन्धनरूप वाच्यार्थ के सर्वथा त्याग होनेसे एवं समिध भिन्न पदकी अपेक्षा नहीं होनेसे पदैकप्रकाश्य उक्त व्यङ्ग्यकी स्पष्ट प्रतीति होती है।

पुनरुदाहरति—

यथा वा कालिदासस्य—

मेघदूते-मेघं प्रति यक्षस्योक्तिः।

'कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायाम्'

'न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः' इति पद्यस्य तुरीयश्चरणः।

हे मेघ! त्वयि सन्नद्धे समुन्नते सति विरहेण विधुरां विकलां जायां क उपेक्षेत? न कोऽपीत्यर्थः।

समुन्नतस्य मेघस्य नितरां मन्मथोन्माथदायकत्वमिति तात्पर्यम्।

इह 'सन्नद्धो वर्मितः सज्जो दंशितः' इत्यमरोक्तेः सन्नाहो युद्धोद्यमश्चेतनमात्रधर्म इत्यचेतने मेघे बाधित इति सन्नद्धपदं केवलं वाच्यनैरपेक्ष्येणौन्नत्यं लक्षयन्निष्कारुणिकत्वाप्रतिकार्यत्वादि व्यनक्ति।

दूसरा उदाहरण बतलाते हैं—यथा वेति। कालिदास रचित मेघदूतमें मेघको लक्ष्य कर यक्ष कहता है-हे मेघ! बिल्कुल सन्नद्ध होकर (काली घटा धारण कर) तुझे उपस्थित होने पर किसकी सामर्थ्य है, जो विरह पीड़ित कामिनीकी उपेक्षा कर सके अर्थात् कोई भी उपेक्षा नहीं कर सकता, क्योंकि मेरे जैसा दूसरा भी एसा कोई व्यक्ति नहीं होगा, जो कि इस तरहकी परतन्त्रताके निगड बन्धन (बेड़ी) में बंधा (जकड़ा) हो। यहां पर युद्ध करनेके लिये उद्यत होकर कवच धारणका अचेतन मेघमें नहीं हो सकता, अतः सन्नद्ध पद उक्त स्वार्थको बिल्कुल छोड़कर कार्य उन्नत अर्थको लक्षित करते हुए 'असाध्य प्रतीकार'को व्यक्त करता है।

पुनरुदाहरति—

यथा वा तस्यैव—

कालिदासस्यैव।

'किमिव हि मधुराणां मण्डनं नाकृतीनाम्'

अभिज्ञानशाकुन्तल आश्रमवृक्षान् सिञ्चन्तीं शकुन्तलां पश्यतो दुष्यन्तस्योक्तिरियम्। 'सरसिजमनुविद्धं शैवलेनापि रम्यं, मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति॥

यदा वस्तुमात्रेण नतु सालङ्कारेणापि, अलङ्कृतयोऽलङ्कारा व्यज्यन्ते, तदा व्यङ्ग्यत्वकाले तासामलङ्कृतीनां ध्रुवं नियमेन, ध्वन्यङ्गता ध्वनिरूपता वाच्यवस्त्वपेक्षयाऽलङ्कारत्वेनैवातिशायितया ध्वनित्वनिर्वाहकतेति यावत्, भवतीति शेषः। कुत इति चेत्?–काव्यस्य कविव्यापारस्य वृत्तेः प्रवृत्तेः स व्यङ्ग्योऽर्थ आश्रय उद्देश्यतयाऽऽलम्बनं यस्याः सा तदाश्रया, तस्या भावस्तदाश्रयत्वम्, तदुद्देश्यकत्वम्, तस्मादित्यर्थः।

इह तदाश्रयादिति भावप्रधानो निर्देशः। यद्वाऽऽश्रयणमाश्रयस्तस्मादित्याश्रयते र्भावेऽच्प्रत्ययः। कारिकाचतुर्थचरणस्य हेतूपस्थापकतां बोधयितुं मध्ये 'अत्र हेतुः' इत्येतावान् वृत्तिग्रन्थो निक्षिप्तः। व्यङ्ग्यार्थबुबोधयिषयैव कवे रचनाऽऽत्मकव्यापारस्य प्रवृत्तत्वादलङ्काराणां वाच्यवाचकावविकोत्कर्षेण व्यङ्ग्यतायामवश्यं ध्वन्यात्मत्वम्। यागप्रवृत्त्युद्देश्यस्वर्गवत्काव्यप्रवृत्त्युद्देश्यप्रतीतिविषयव्यङ्ग्यस्य प्राधान्यम्। तदर्थाप्रकाशकत्वे शब्दार्थयोः सहृदयाह्लादजनकत्वविरहात्काव्यत्वमेव न सम्भवतीति भावः॥

जब केवल वस्तुमात्रसे अलंकार अभिव्यञ्जित होते हैं, तब वे अलंकार वाच्यभूत वस्तुकी अपेक्षा नियतरूपसे अधिक चमत्कारजनक होनेके कारण ध्वनिपदसे व्यवहृत होते हैं, क्योंकि व्यङ्ग्यार्थको अभिव्यक्त करनेके अभिप्रायसे ही काव्यरचनामें कवियोंकी प्रवृत्ति होती है, अर्थात् व्यङ्ग्यार्थ बोधन द्वारा ही सहृदयोंको आह्लादित करनेसे कविका उद्देश्य सिद्ध होता है, अन्यथा कविता करना ही व्यर्थ हो जायगा।

तदाह—

**यस्मात्तत्र तथाविधव्यङ्ग्यालङ्कारपरत्वेनैव काव्यं प्रवृत्तम्। अन्यथा तु तद्वाक्यमात्रमेव स्यात्।**

अन्यथा व्यङ्ग्यतात्पर्यकत्वाभावे। देवदत्तो ग्रामं गच्छतीत्यादिवद्वाक्यमात्रं, नतु काव्यं स्यात् तस्य तत्परत्वेनैव व्यवस्थापितत्वात्॥

वृत्तिकार उसीको संक्षेपमें स्फुट करते हैं—यस्मादिति। क्योंकि उपर्युक्त काव्यमें वाच्यवस्तुकी अपेक्षा व्यङ्ग्यार्थ रूप अलंकार विषयक बोधको मुख्यरूपसे प्रकट करनेके तात्पर्यसे ही काव्यका निर्माण हुआ है। अन्यथा यदि व्यङ्ग्य बोधमें मुख्य तात्पर्य न हो तो वह, काव्य ही नहीं हो सकेगा, अपितु साधारण वाक्य जैसा हो जायगा।

अलङ्काराणां वस्तुव्यङ्ग्यतायां ध्वनिरूपतां व्यवस्थाप्यालङ्कारव्यङ्ग्यतायामपि व्यवस्थापयति—

तासामेवालङ्कृतीनाम्—

'अलङ्कारान्तरव्यङ्ग्यभावे,

पुनः—

ध्वन्यङ्गता भवेत् ॥

चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते ॥५३॥

तेषामेवालङ्काराणां पुनः अलङ्कारान्तरव्यङ्ग्यभावेऽन्यैर्व्यङ्ग्यभिन्नैरलङ्कारैर्व्यङ्ग्यत्वे, चारुत्वस्य विच्छित्तिजनकत्वसमनियतसौन्दर्यस्य, उत्कर्षत आधिक्याद् यदि व्यङ्ग्यानामलङ्काराणां प्राधान्यं, लक्ष्यते प्रतीयते, तदा ध्वन्यङ्गता ध्वनिव्यवहारप्रयोजकता भवेदित्यर्थः ।

व्यङ्ग्यालङ्कारप्राधान्याभावे वाच्यालङ्काराणामेव प्राधान्यमिति गुणीभूतव्यङ्ग्यतैव काव्यस्येति बोध्यम् ॥

उक्तरीतिसे वस्तुव्यङ्ग्य अलंकारका ध्वनिरूप स्थापित कर अब अलंकार व्यङ्ग्य अलंकारका ध्वनिरूप स्थापित करते हैं—अलंकारेति । व्यङ्ग्य भिन्न वाच्यात्मक अलंकारोंसे अभिव्यञ्जित होनेवाले व्यङ्ग्य रूप अलंकार यदि सहृदयोंको प्रधान रूपसे अधिक चमत्कारजनक प्रतीत होते हों, तो वे भी ध्वनिपदसे ही व्यवहृत होते हैं, परन्तु प्रधानरूपसे व्यङ्ग्यभूत अलंकारोंके बोध नहीं होनेपर वाच्यात्मक अलंकार विषयक बोधकी ही प्रधानता होनेसे गुणीभूतव्यङ्ग्य काव्यका ही व्यवहार होता है ।

उक्तप्राधान्यव्यवस्थां द्रढयति—

उक्तं ह्येतत्—'चारुत्वोत्कर्षनिबन्धना वाच्यव्यङ्ग्ययोः प्राधान्यविवक्षा' इति ।

प्रागेवेदं विवृतम् ॥

क्योंकि अधिक रमणीयताकी प्रतीतिके अनुसार ही वाच्य-व्यङ्ग्योंमें प्राधान्याप्राधान्यकी विवक्षा की जाती है ।

ननु वस्तुव्यङ्ग्यालङ्कारध्वनेरुदाहरणं मूले कुतो न दर्शितमित्यत आह—

वस्तुमात्रव्यङ्ग्यत्वे चालङ्काराणामनन्तरोपदर्शितेभ्य एवोदाहरणेभ्यो विषय उन्नेयः ।

अनन्तरोपदर्शितेभ्यः 'प्राप्तश्रीरेष' इत्यादिभ्य एव, विषय उन्नेय उदाहरणमूहनीयम् । तच्च दर्शितमेव प्राक् । चकारोऽलङ्कारव्यङ्ग्यालङ्कारध्वनेरपि संग्राहकः ॥

उक्त वस्तु मात्र व्यङ्ग्य अलंकार ध्वनिका—पूर्व दर्शित—'प्राप्तश्रीरेष'—इत्यादिसे वस्तु व्यङ्ग्य रूपक ध्वनि आदि उदाहरण समझना चाहिये, एवं अलंकार व्यङ्ग्य अलंकार ध्वनिका—'कारतोयविभो-' इत्यादिसे निदर्शना व्यङ्ग्य अधिकालंकार ध्वनि आदि उदाहरण समझना चाहिये।

समासेनोपसंहरति—

तदेवमर्थमात्रेणालङ्कारविशेषरूपेण वाऽर्थेन, अर्थान्तरस्यालङ्कारस्य वा प्रकाशने, चारुत्वोत्कर्षनिबन्धने सति प्राधान्ये, अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यो ध्वनिरवगन्तव्यः।

तथा च कवि-तन्निबद्धवक्तृप्रौढोक्तिसिद्ध—स्वतस्सम्भविवस्त्वलङ्कारव्यङ्ग्यवस्त्वलङ्काररूपत्वेनार्थशक्त्युद्भवस्संलक्ष्यक्रमव्यङ्ग्यो ध्वनि द्वादशविधो बोध्य इति भावः।

अब संक्षेपसे सबका उपसंहार करते हैं—तदेवमिति। पूर्वोक्त रीतिसे कवि-प्रौढोक्तिसिद्ध एवं कवि-निबद्ध वक्तृ प्रौढोक्ति सिद्ध तथा स्वतः सम्भवीरूप तीन प्रकारकी वस्तुओं और उक्त तीन प्रकारके अलंकारोंसे व्यज्यमान व्यङ्ग्य वस्तुओं और व्यङ्ग्य अलंकारोंके भेदसे प्रधानतया अत्यन्त रमणीयताका जनक अर्थशक्त्युद्भव संलक्ष्य क्रमव्यङ्ग्य ध्वनि १२ प्रकारकी होती है।

अथ ध्वनिगुणीभूतव्यङ्ग्यपार्थक्यप्रदर्शनकारिकां कारिकामवतारयति।

एवं ध्वनेः प्रभेदान् प्रतिपाद्य तदाभासविवेकं कर्तुमुच्यते—

ध्वनिप्रभेदपरिगणनमग्रे करिष्यते। तदाभासो ध्वन्याभासो गुणीभूतव्यङ्ग्यमिति यावत्। विवेको विभागः पृथग्भावार्थकघञन्तरोधादिकविचेर्विवेकशब्दस्य निष्पन्नत्वात्॥

उक्त रीतिसे ध्वनिकाव्यका निर्वचन कर अव ध्वन्याभास रूप गुणीभूत व्यङ्ग्य काव्यका निर्वचन करते हैं।

यत्र प्रतीयमानोऽर्थः प्रक्लिष्टत्वेन भासते।
वाच्यस्याङ्गतया वाऽपि नास्यासौ गोचरो ध्वनेः ॥५४॥

यत्र यस्मिन् काव्ये, प्रतीयमानो व्यङ्ग्योऽर्थः प्रक्लिष्टत्वेन गूढतयाऽस्वच्छत्वेनेति यावत्, भासते प्रतीयते, वाच्यस्यार्थस्याङ्गतयोपकारकत्वेनापि वा भासते, असौ काव्यविशेषोऽस्य संलक्ष्यक्रमस्य ध्वने र्न गोचरो न विषयः, किन्तु गुणीभूतव्यङ्ग्यत्वेनैव व्यपदेश्य इत्यर्थः। व्यङ्ग्यस्य स्फुटतायां चमत्कारातिशयकारित्वेन प्रधानतायां च ध्वनिः, अन्यथा गुणीभूतव्यङ्ग्यमेवेति सारम्॥

जिस काव्यमें प्रतीयमान व्यङ्ग्यार्थ अत्यन्त गूढ़ रूपसे भासित होता है, या वाच्यार्थके पोषक रूपसे ही भासित होता है, वह ( काव्य ) संलक्ष्य क्रमव्यङ्ग्य ध्वनिमें नहीं व्यवहृत होकर गुणीभूत व्यङ्ग्य काव्यमें ही व्यवहृत होता है, क्योंकि व्यङ्ग्यार्थके स्फुट रूपसे मुख्यतया अतिशय चमत्कार जनक होने पर ही ध्वनिका व्यवहार होता है, अन्यथा नहीं।

तदेव विभक्तिभङ्ग्याऽऽह—

द्विविधोऽपि प्रतीयमानः स्फुटोऽस्फुटश्च। तत्र य एव स्फुटः शब्दशक्त्याऽर्थशक्त्या वा प्रकाशते, स एव ध्वनेर्मार्गो नेतरः। स्फुटोऽपि योऽभिधेयस्याङ्गत्वेन प्रतीयमानोऽवभासते, सोऽस्यानुरणनरूपव्यङ्ग्यस्य ध्वनेरगोचरः।

अपिः प्रथमो ह्यर्थकः। इतरोऽस्फुटव्यङ्ग्यः।

अस्फुटव्यङ्ग्यस्त्वनतिचमत्करणात्, स्फुटव्यङ्ग्योऽपि वाच्याङ्गभूतव्यङ्ग्यो व्यङ्ग्याप्राधान्यान्न ध्वने विषयः, किन्तु स्फुटप्रधानव्यङ्ग्य एवेति सारम्॥

उक्त प्रयीयमान व्यङ्ग्यार्थ स्फुट और अस्फुट ( गूढ़ ) के भेदसे दो प्रकारके हैं, उनमें जो शब्दशक्तिमूल तथा अर्थशक्तिमूल व्यञ्जना द्वारा स्फुट रूपसे प्रकाशित होता है, वही ध्वनिपदसे व्यवहृत होता है, दूसरा नहीं, किन्तु स्फुट रूपसे भासमान होने पर भी जो वाच्यार्थके ही उपकारक रूपसे प्रतीत होता है, वह इस संलक्ष्य क्रमव्यङ्ग्य ध्वनिका विषय नहीं होता, अर्थात् स्फुट तथा प्रधान व्यङ्ग्य ही ध्वनिका विषय समझा जाता है।

ध्वनेरविषयं वाच्याङ्गव्यङ्ग्यरूपं गुणीभूतव्यङ्ग्यमुदाहरति—

यथा—

मुग्धा पितृष्वसारं व्याहरति—

कमलाअरा णँ मलिआ हंसा उड्डाविआ ण अ पिउच्छा!।
केण वि गामतडाए अब्भं उत्ताणअं फलिहम्॥

'कमलाकरा न मलिता हंसा उड्डायिता नच पितृष्वसः!
केनापि ग्रामतडागेऽभ्रमुत्तानितं क्षिप्तम्॥' इतिच्छाया।

अयि पितृष्वसः! कमलाकराः पद्मनिकरा न मलिताः खण्डिताः, हंसा नोड्डायिता उत्पातिताः, ( तडागेऽभ्रप्रवेशने तदावश्यकत्वात् ) केनाप्यतिकुशलेन जनेन ग्रामस्य तटागे सरसि, उत्तानितमुद्वर्त्तितम्, अभ्रं मेघः, निक्षिप्तं प्रवेशितमित्यर्थः। गाथासप्तशतीघटकं पद्यमिदम्।

अत्र मुग्धाकर्तृकं मेघप्रतिबिम्बदर्शनं व्यङ्ग्यमपि वाच्यस्याङ्गमिति न ध्वनेर्विषयः। तथाहि—तडागजलेऽधो मेघस्य प्रतिच्छायां दृष्ट्वा केनापि तत्र प्रवेशितं मेघमेव मन्वानाया मुग्धतमायाः कस्याश्चित् पितृष्वसारं प्रत्युक्तिरियं तदैव वाच्यार्थसङ्गतिं भजति, यदा जलधरप्रतिबिम्बदर्शनं तया आगूर्यत इति व्यङ्ग्यस्य तस्य वाच्योपपादकत्वात्तदङ्गत्वम् ॥

अब वाच्यका अङ्गरूप गुणीभूत व्यङ्ग्यका उदाहरण वतलाते हैं—यथेति। मुग्धा नायिका अपनी बूआसे कहती है—हे पितृष्वसः! इस सरोवरमें कमलसमूह भी नहीं खण्डित हुआ और हंस भी उड़ा कर नहीं भगाये गये, इसलिये मालूम पड़ता है, कि किसी अत्यन्त चतुर व्यक्तिने ही इस सरोवरमें उत्तान कर मेघको धीमेसे रख दिया है।

यहां पर 'मुग्धाने वास्तवमें जलमें मेघकी परछाँही देखी' इस व्यङ्ग्यार्थके प्रतीत होने पर भी उक्त वाच्यकी अपेक्षा गौण रूपसे ही वह (व्यङ्ग्यार्थ) भासित होता है, क्योंकि तड़ाग जलके अधस्तल पर पड़ती हुई मेघकी परछांहीको देखकर किसी व्यक्ति द्वारा स्थापित किए हुए साक्षात् वादलको ही समझनेवाली मुग्धा (भोली) नायिकाका कथन ही अत्यन्त रमणीय मालूम पड़ता है, अर्थात् मेघके प्रतिबिम्ब दर्शनात्मक व्यङ्ग्यार्थको छिपा देनेसे ही मुग्धाके अतिशय मुग्धापनकी प्रतीति द्वारा उक्त वाच्यार्थ अधिक चमत्कार जनक हो जाता है, अतः उक्त व्यङ्ग्य तादृश वाच्यके उपपादक होनेसे गुणीभूत व्यङ्ग्य काव्यसे ही व्यवहृत होता है।

तदाह—

**अत्र हि प्रतीयमानस्य मुग्धवध्वा जलधरप्रतिबिम्बदर्शनस्य वाच्याङ्गत्वमेव।**

तेन न ध्वनिः, किन्तु गुणीभूतव्यङ्ग्यमेवेति शेषः। 'वाच्येनैव हि विस्मयविभावरूपेण मुग्धिमातिशयः प्रतीयत इति वाच्यादेव चारुत्वसम्पत्। वाच्यन्तु स्वात्मोपपत्तयेऽर्थान्तरं स्वोपस्कारवाञ्छया व्यनक्ति' इति लोचनमपि द्रष्टव्यम् ॥

वृत्तिकार उसीका सार वतलाते हैं—अत्रेति। उक्तस्थलमें व्यङ्ग्यरूपसे प्रतीयमान—'मुग्धाकर्तृक मेघ प्रतिबिम्बदर्शन' उक्त वाच्यार्थके पोषक होनेसे ध्वनि पदसे व्यवहृत न होकर गुणीभूत व्यङ्ग्य काव्यका ही विषय समझा जाता है, क्योंकि उक्त वाच्यार्थ वोधसे ही चकित होनेवाली मुग्धाका अतिशय मुग्धापन जनित चारुता प्रतीत होती है।

गुणीभूतव्यङ्ग्यस्योदाहरणान्तरं दिदर्शयिषुः सामान्यव्यवस्थामाह—

**एवंविधे विषयेऽन्यत्रापि यत्र व्यङ्ग्यापेक्षया वाच्यस्य चारुत्वोत्कर्ष-**

प्रतीत्या प्राधान्यमवसीयते, तत्र व्यङ्ग्यस्याङ्गत्वेन प्रतीतेर्ध्वनेरविषयत्वम्।

एवंविधे गुणीभूतव्यङ्ग्ये। अन्यत्र 'वाणीर' इत्यादौ। नह्यस्मिन्नेवोदाहरणे, किन्त्वन्यत्रापीदृशस्थलेषु न ध्वनिरिति भावः॥

इसी तरह दूसरे भी गुणीभूत व्यङ्ग्य स्थलोंमें यदि व्यङ्ग्यकी अपेक्षा वाच्य ही मुख्यरूपसे अधिक रमणीयताका प्रतिपादक हो, तो वहां भी गुणीभूत व्यङ्ग्य काव्य ही समझना चाहिये।

उदाहरणान्तरमाह—

यथा—

कविस्तत्कालसन्निहितः कश्चन साक्षी वा स्वैरिणीचरितं परामृशति—

'वाणीरकुडङ्गोड्डीण-सउणि-कोलाहलं-सुणन्तीए।
घरकम्मवावड़ाए वहुए सीअन्ति अङ्गाइं॥'

वानीरकुञ्जोड्डीनशकुनिकोलाहलं श्रृण्वत्याः।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥' इति च्छाया।

वानीरकुञ्जाद्वेतसलतामण्डपाद्, उड्डीनानामुत्पतितानां, शकुनीनां पक्षिणां कोलाहलं कलकलं श्रृण्वत्या आकर्णयन्त्याः, तथा गृहकर्मसु व्यापृतायाः कृतव्यापारायाः संलग्नाया इति यावत्, वध्वा वनिताया अङ्गान्यवयवाः, सीदन्त्यवसादं व्रजन्त्याकुलीभवन्तीति यावदित्यर्थः। जघनविपुलाच्छन्दः।

तथा च 'अथ वेतसे। रथाभ्रपुष्पविदुरशीतवानीरवञ्जुलाः' 'निकुञ्जकुञ्जौ वा क्लीवे लताऽऽदिपिहितोदरे' 'कोलाहलः कलकलः' इत्यमरः।

अत्र 'दत्तसङ्केतः कान्तः कुञ्जं प्रविष्टः' इति व्यङ्ग्यापेक्षया शकुनिशब्दश्रवणसमकालमेव सकलाङ्गावसादसन्तन्यमानतात्पर्यं वाच्यमेव सुन्दरमिति प्रदीपकृतः। शरीरावसादरूपवाच्यमेवानुभावभूतमौत्सुक्यावेगसंवलितानुरागोद्रेककृतमदनपारतन्त्र्यबोधकम्, व्यङ्ग्यन्तु तन्मुखप्रेक्षीत्युद्योतकारः। तेनासुन्दरव्यङ्ग्यत्वेनैवास्य गुणीभूतव्यङ्ग्यत्वम्। लोचने पुनः—'अत्र दत्तसङ्केतचौर्यकामुकरतसमुचितस्थानप्राप्तिर्ध्वन्यमाना वाच्यमेवोपस्कुरुते। तथाहि—गृहकर्मव्यापृताया इत्यन्यपराया अपि, वध्वा इति सातिशयलज्जापारतन्त्र्यबद्धाया अपि, अङ्गानीत्येकमपि न तादृगङ्गं यद् गाम्भीर्यावहित्थवशेन संवरीतुं पारितम्, सीदन्तीत्यास्तां गृहकर्मसम्पादनं स्वात्मानमपि धर्तुं न प्रभवतीति, गृहकर्मयोगेन स्फुटं तथा लक्ष्यमाणानीत्यस्मादेव वाच्यात्सा-

तिशयमदनपरवशताप्रतीतेश्चारुत्वसम्पत्तिः' इत्यनेनास्य वाच्याङ्गव्यङ्ग्यत्वेन गुणीभूतव्यङ्ग्यत्वमुक्तम् ।

तत्र विचार्यते-वाच्यसिद्ध्यङ्गव्यङ्ग्ये व्यङ्ग्यस्य नाचारुत्वं, किन्तु वाच्याङ्गत्वेन गुणीभाव इह त्वचारुत्वमपीति मम्मटानुसारिसिद्धान्तसरणिरेव साधीयसी प्रतिभाति । अत एव काव्यप्रकाशदर्पणे-'एतच्च वाच्यसिद्ध्यङ्गताऽऽदेरपवादभूतत्वाद्भिन्नम् । तेषु हि व्यङ्ग्यस्यापि चारुत्वं सम्भवति' इति विश्वनाथोऽपि निरणयत् ।

जैसे कोई व्यक्ति कुलटाके चरित्रका चित्रण करता है—ग्रानीरेति । गृह समीपस्थ बेतसलताकी झाड़ीसे सहसा (एकाएक) झुण्डके झुण्ड पक्षियोंके उड़ पड़नेसे उत्पन्न कलकल शब्दको सुनकर गृहकार्यमें संलग्न कामुकी युवतीके सारे अङ्ग कामवासनासे उद्दीपित होकर सीदित होने (कड़कने) लगे । यहां पर 'रतिसंभोगार्थं कृत सङ्केतित कामुक पुरुष लताकुञ्जमें आगया' इस व्यङ्ग्यकी अपेक्षा 'पक्षियोंके शब्द सुनते ही आवश्यक गृहकार्यमें लगी रहनेपर भी अतिशय मदन संचारजनित रतिवासनासे पीड़ित होकर वह युवती अपने तकको भी नहीं सम्हाल सकी, गृहकार्यका सम्पादन तो दूर ही रहा ।' यह वाच्यार्थ ही चतुर रसिकोंको अधिक रुचिकर लगता है, इसलिये इसको भी ध्वनिका विषय न समझकर गुणीभूत व्यङ्ग्य काव्यका ही विषय समझना चाहिये ।

ईदृशानां तर्हि का गतिरित्यत्राह—

**एवंविधो हि विषयः प्रायेण गुणीभूतव्यङ्ग्यस्योदाहरणत्वेन निर्देक्ष्यते ।**

प्रायेणेत्यविवक्षितव्यङ्ग्यव्यवच्छेदाभिप्रायेण भणितम् ॥

इसी प्रकार वाच्यसिद्ध्यङ्ग व्यङ्ग्यादि सारे ही अप्रधान विषय प्रायः करके गुणीभूत व्यङ्ग्य काव्यके अन्दर ही संगृहीत हो जाते हैं ।

व्यङ्ग्यस्य पूर्वं गुणीभावेऽपि क्वचित्पश्चात्प्राधान्ये ध्वनेरेव विषय इत्युपदिशति—

**यत्र तु प्रकरणादिप्रतिपत्त्या निर्धारितविशेषो वाच्योऽर्थः पुनः प्रतीयमानाङ्गत्वेनैवावभासते, सोऽस्यैवानुरणनरूपव्यङ्ग्यस्य ध्वनेर्मार्गः ।**

अयं भावः—शब्दाः कामधेनव इति ततो वाच्यविशेषावधारणं पुरुषः प्रकरण-लिङ्ग-शब्दान्तरसान्निध्य-संयोग-विप्रयोग-साहचर्यप्रभृतीनामर्थनिर्णायकानां ज्ञानस्य बलेनैव कर्तुं शक्नोति । प्रकरणादि च वाच्यातिरिक्तमेव प्रायेणोपलभ्यते । ततश्च व्यङ्ग्येन प्रकरणादिना स्वज्ञानद्वारा वाच्यावधारणं सम्पाद्यत इति व्यङ्ग्यस्य यद्यपि वाच्याङ्गत्वम् , किन्तु यत्र तथा प्रकरणादिज्ञानेन निर्णीतो वाच्योऽर्थः प्रधानीभूतस्य

व्यङ्ग्यान्तरस्य पुनरुपस्कारकत्वेनाङ्गतां दधान एव प्रतीयते, तत्र पर्यन्ते व्यङ्ग्यार्थस्यैव प्राधान्यमिति ध्वनेरेव विषयता न गुणीभूतव्यङ्ग्यस्य ॥

**परन्तु जिस काव्यमें पहले व्यङ्ग्यार्थके गौण होने पर भी प्रकरणादिकी पर्यालोचनाके पश्चात् निर्णीत होकर वाच्यार्थ ही प्रधानीभूत व्यङ्ग्यके उपपादकके रूपसे प्रतीत होता है, उस काव्यको संलक्ष्यक्रम व्यङ्ग्य ध्वनिका ही विषय समझना चाहिये।**

उदाहरति—

**यथा—**

अविनीतकामुकेन सह क्रीडन्तीं नायिकां वहिश्श्रुतवलयध्वनिः सखी प्रतिबोधयति—

'उच्चिणसु पडिअ कुसुमं मा धुण सेहालिअं हलिअसुह्णे !।
अह दे विसमविरावो ससुरेण सुओ बलअसद्दो ॥'

'उच्चिनु पतितानि कुसुमानि मा धुनीः शेफालिकां हालिकस्नुषे !
एष ते विषमविरावः श्वशुरेण श्रुतो वलयशब्दः ॥' इति च्छाया ॥

हे हालिकस्नुषे ! हलवाहपुत्रवधु ! क्रियाकौशलानभिज्ञे ! पतितानि वृक्षाद्भूतल इति शेषः, कुसुमानि शेफालिकायाः पुष्पाणि, उच्चिनु संगृहाण, शेफालिकां श्वेतनिर्गुण्डीलतां मा धुनी र्न कम्पय, पुष्पाणि पातयितुमिति शेषः, यतः, विषम उत्कटो विरावो ध्वनिर्यत्र तादृश एष मयाऽपि श्रावणप्रत्यक्षविषयीक्रियमाणः, ते वलयानां कङ्कणानां, शब्दः, श्वशुरेण श्रुत इत्यर्थः।

तथाच—'शेफालिका तु सुवहा निर्गुण्डी' इत्यमरः।

अत्र 'धृष्टेन केनापि कान्तेनान्तः स्वैरं समुद्धतं क्रीडन्त्या नायिकाया मणितशिञ्जितादि तारं बहिःस्थितैव श्रुत्वा रहस्यभङ्गाद्बिभ्यती वचनचतुरा सहचरी तां तथा प्रतिबोधयति, यथा सा ततो निवर्तेत, रहस्योद्भेदश्चापि न भवेत्' इत्येव व्यज्यमानं प्रकरणम् 'तव श्वशुरस्य शेफालिकालतायां महानादर इति तदाकर्षणकम्पनादिभिरसौ भृशं कुप्येदत एवं न विधेयम्' इति प्रतीयमानं समर्थनं च ज्ञानद्वारा वाच्यार्थमुपकरोतीति व्यङ्ग्यस्य पूर्वं वाच्याङ्गत्वम्, किन्तु पश्चाच्छेफालिकानिर्धूननस्याप्रस्तुतत्वात्तदुक्तेस्तन्निषेधतात्पर्यकत्वाभावे, नायिकारहस्यगोपनतात्पर्यकत्वे च गृहीते, निषेधात्मनो वाच्यार्थस्य तादृशविहारनिषेधरूपप्रधानव्यङ्ग्यपोषकत्वमेवेत्यसौ पर्यवसाने संलक्ष्यक्रमव्यङ्ग्यध्वनेरेव विषयोऽवधार्यते ॥

उसका उदाहरण बतलाते हैं—यथेति। उद्धत कामुकके साथ रति क्रीड़ा करती हुई नायिकाके वलयोंकी ध्वनिको वाहरसे ही सुनती हुई सखी उसको चेताती है—हे हलवाहकी पुत्रवधू ! स्वयं गिरकर भूमि पर पड़े हुए शेफालिका पुष्पोंको चुन लो, किन्तु उसकी टेहुनियोंको पुष्प गिरानेके लिये न डुलाओ अन्यथा (वरना) अच्छा न होगा, क्योंकि मुझसे भी सुने गये तुम्हारे कङ्कणोंके अत्यन्त उत्कट शब्द ( टनटनाहट ) को तुम्हारे श्वशुरने भी सुन लिया है।

यहां पर अत्यन्त धृष्ट कामुकके साथ औद्धत्यपूर्वक यथेच्छ ( मनमानी ) रति क्रीड़ामें आसक्त युवतीके वलयोंकी ध्वनिको वाहरसे ही सुनकर रहस्य भङ्गके भयसे चतुर सहचरी उसको इस ढङ्गसे समझाती है, जिससे वह (कामुकी) उक्त रति क्रीड़ासे निवृत्त भी हो जाय और रहस्य भी न खुले इस अभिप्रायसे 'तुम्हारा श्वशुर शेफालिका फूलके वृक्षमें अत्यन्त अधिक प्रेम रखता है, उसे हिलानेसे वह बहुत असन्तुष्ट हो जायगा, इसलिये न हिलाओ' यह प्रतीयमान व्यङ्ग्य यद्यपि पहले उक्त वाच्यका ही पोषक प्रतीत होता है, तथापि वादमें विचार करने पर अप्रासङ्गिक शेफालिकाके कम्पनके निषेधमें तात्पर्य नहीं है, अपितु नायिकाके रहस्य गोपनमें ही तात्पर्य है, यह निश्चय होने पर उक्त निषेधात्मक वाच्य, तादृश उद्धत रति क्रीड़ाके निषेध रूप व्यङ्ग्यार्थका ही पोषक हो जाता है, अतः पर्यवसानमें संलक्ष्यक्रम व्यङ्ग्य ध्वनिका ही विषय प्रतीत होता है।

तदाह—

अत्र ह्यविनयपतिना सह रममाणा सखी बहिश्श्रुतवलयकलकलया सख्या प्रतिबोध्यते। एतदपेक्षणीयं वाच्यार्थप्रतिपत्तये। प्रतिपन्ने च वाच्यार्थे तस्याविनयप्रच्छादनतात्पर्येणाभिधीयमानत्वात् पुनर्व्यङ्ग्याङ्गत्वमेवेत्यस्मिन्ननुरणनरूपव्यङ्ग्यध्वनावन्तर्भावः।

अविद्यमानो विनय आर्जवं यस्यासावविनयो धृष्ट उद्धत इति यावत्। प्रतिपत्तिर्ज्ञानम्। अविनयस्यौद्धत्यस्य प्रच्छादनमपह्नवः॥

उक्त स्थलमें 'उद्धत नायकके साथ रमती हुई नायिकाको वाहरसे ही कङ्कणकी ध्वनि सुनकर सखी सचेत कर रही है'—यह व्यङ्ग्यभूत प्रकरण, वाच्यकी स्फुटताके लिये पहले अपेक्षित होनेपर भी वादमें वाच्यार्थके स्फुटरूपसे ज्ञात हो जाने पर उस उद्धत केलिक्रीड़ाको छिपानेके अभिप्रायसे ही उक्त वाच्य प्रतिपादित किया गया है, अतः वही व्यङ्ग्यका पोषक हो जाता है, इसलिये संलक्ष्यक्रम व्यङ्ग्य ध्वनिमें ही इसका अन्तर्भाव होता है।

अविवक्षितवाच्यध्वन्यविषयव्यवच्छेदप्रदर्शनकारिकां कारिकामवतारयति—

**एवं विवक्षितवाच्यस्य ध्वनेस्तदाभासविवेके प्रस्तुते सत्यविवक्षितवाच्यस्यापि तं कर्तुमाह—**

'प्रस्तुतइति हेतौ सप्तमी। तदाभासविवेकप्रस्तावलक्षणात्प्रसङ्गादिति यावत्। कस्य तदाभास इत्यपेक्षायामाह–विवक्षितवाच्यस्येति। स्पष्टे तु व्याख्याने प्रस्तुत इत्यसङ्गतम्। परिसमाप्तौ हि विवक्षिताभिधेयस्य तदाभासविवेकः। नत्वधुना प्रस्तुत ......मनुबध्नाति।' इत्याचार्यवचनमिहत्यमनावर्जकम्, संयोगसमवायसम्बन्धवैधुर्येण 'निमित्तात्कर्मयोगे' इत्यनेन वार्तिकेन हेतौ सप्तम्या दुर्घटत्वात्, विवक्षितवाच्यस्य ध्वनेस्तदाभासाद्विवेके ( विभागे ) प्रस्तुते ( सम्पन्ने ) सतीत्याद्यर्थेऽपि प्रस्तुत इत्यस्य सङ्गतत्वात्, 'यस्य च भावेन भावलक्षणम्' इत्यनेन सूत्रेण सप्तम्याः सुलभत्वाच्च॥

वाच्यार्थके विवक्षित होनेके कारण विवक्षित वाच्यध्वनिके गुणीभूत व्यङ्ग्यरूप ध्वन्याभासके विचारके प्रसङ्गसे अविवक्षित वाच्यध्वनिके आभासका विचार प्रस्तुत करते हैं:—

**'अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः।**
**शब्दस्य, स च न ज्ञेयः सूरिभिर्विषयो ध्वनेः॥ ५५॥**

अव्युत्पत्तेरनैपुण्यादनुप्रासादिनिबन्धनैकरसिकत्वादिति यावत्, वाऽथवाऽशक्तेर्वृत्तपरिपूरणसामर्थ्यविरहाद्धेतोः, स्खलद्गतेर्बाधितार्थस्य लक्षणागुणवृत्तिमात्रप्रयोज्यबोधजनकस्येति यावत्, शब्दस्य यो निबन्धो यः प्रयोगः स च ध्वनेरविवक्षितवाच्यस्य विषयः सूरिभिर्न ज्ञेय इत्यर्थः।

अयमाशयः—

अनुप्रासप्रवणतया कवेर्लाक्षणिकशब्दप्रयोगो यथा—

'प्रेङ्खत्प्रेमप्रबन्ध–प्रचुर–परिचयप्रौढसीमन्तिनीनां,
चित्ताऽऽकाशावकाशे विहरति सततं यः स सौभाग्यभूमिः॥'

इह प्रेङ्खदिति लाक्षणिकः, चित्तमाकाश इति गौणः शब्दप्रयोगो यः, स ध्वनेर्न विषयः। एवं वृत्तपरिपूरणसामर्थ्यविरहेण यथा—

'विषमकाण्डकुटुम्बकसञ्चयप्रवर! वारिनिधौ पतता त्वया॥
जलतरङ्गविघूर्णितभाजने, विचलितात्मनि कुब्जमये कृता॥'

अत्र प्रथमचरणश्चन्द्रमस्युपचरितो वृत्तपूरणमात्रप्रयोजन इत्ययमपि ध्वनेर्न विषयः। कारिकाघटमश्चकारः प्रथमोद्द्योतोक्तवदनुभवतिलावण्यादिलाक्षणिकशब्दान् सङ्गृह्णाति॥

व्युत्पत्तिकी कमीके कारण अनुप्रासादि तुकवन्दीके निर्माणमें ही अधिक स्नेह होनेसे या पद्यात्मक वृत्तोंको परिपूर्ण करनेकी सामर्थ्य नहीं होनेसे बाधितार्थक शब्दोंका लक्षणा आदि गौणीवृत्तिके सहारे जो बोध जननार्थ प्रयोग किया जाता है, वह उक्त अविवक्षितवाच्य ध्वनिका विषय नहीं माना जाता। जैसे—प्रेङ्खत्प्रेम-प्रबन्ध–' इत्यादि पद्यमें केवल अनुप्रासकी दृष्टिसे ही 'प्रेङ्खत्' इस लाक्षणिक शब्दका प्रयोग किया गया है, इसलिये यह उक्त ध्वनिका विषय नहीं होकर ध्वन्याभासमें गिना जाता है। 'विषमकाण्ड'–इत्यादि पद्यमें प्रथमचरण छन्दमात्रकी परिपूर्तिके लिये ही चन्द्रमामें उपचरित हुआ है, अतः यह भी ध्वनिका विषय नहीं है। कारिकास्थ चकारसे पूर्वोक्त लावण्यादि शब्दोंका संग्रह समझना चाहिये।

आभासाद्विवेके प्रक्रम्यमाणे ध्वनेरपि स्वरूपनिर्देश आवश्यक इति पुनर्ध्वनिस्वरूप-प्रदर्शिकां कारिकामवतारयति कारिकाऽर्थोपस्कारकार्थोपस्थापकपदोपन्यासेन वृत्तिकारः—

यतश्च—

'सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम्॥
यद्व्यङ्ग्यस्याङ्गिभूतस्य, तत्पूर्णं ध्वनिलक्षणम्॥ ५६॥

अङ्गिभूतस्य प्रधानस्य, व्यङ्ग्यस्य, सर्वेषु विवक्षितान्यपरवाच्या–विवक्षितवाच्यप्रभृतिषु प्रभेदेषु प्रकारेषु, यत् स्फुटत्वेनाक्लिष्टत्वेनैव (नतु गौणत्वगूढत्वाभ्याम्) अवभासनं ज्ञानं ज्ञापनं वा, तत्, पूर्णं समस्तमखण्डमिति यावत्, ध्वनेर्लक्षणं प्रमाणं प्रत्यायकं वा यतोऽस्त्यतो न गौणलाक्षणिकाद्याभासेषु ध्वनित्वम्॥

अब ध्वनिके वास्तविक सारभूत स्वरूपका संक्षेपमें उपसंहार करते हुए द्वितीय उद्योत समाप्त करते हैं—सर्वेष्विति। प्रधानरूपसे भासमान व्यङ्ग्यार्थोंके सारे ही विवक्षितान्यपरवाच्यादि–प्रभेदोंमें जिस व्यङ्ग्यार्थका स्फुटरूपसे ही भान होता है, (नकि गौण या अत्यन्त गूढ़रूपसे) वही वास्तवमें ध्वनिका अखण्ड असाधारण लक्षण है, अतः गौण–लाक्षणिक आदिमें ध्वनित्व नहीं है।

तदाह—

तच्च, उदाहृतविषयमेव।

इति राजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके
द्वितीय उद्द्योतः॥

---

तद् ध्वनिलक्षणं च, उदाहृताः 'स्निग्धश्यामलकान्ति' इत्याद्यारभ्य प्रदर्शिता दिपथा लक्ष्याणि यस्य, तादृशमेव, नतु तत्तदाभासविषयमप्यस्तीति शेष इत्यर्थः ॥

आलोके विषमे क्षमे लोचने च पुरातने ।
स्वैरं मे चरतश्शश्वत् स्खलनं क्षम्यतां बुधैः ॥

इति मैथिलश्रोत्रियपण्डित-श्रीबदरीनाथशर्मनिर्मितायां
ध्वन्यालोकदीधितौ द्वितीय उद्द्योतः ॥



उस उक्त ध्वनिका लक्षण 'स्निग्धश्यामल'-इत्यादि उदाहरणोंमें दिखा ही चुके हैं।
द्वितीय उद्द्योत समाप्त ।



# अथ तृतीय उद्द्योतः ।

विलसत्सागरोत्सङ्ग-सङ्गिगङ्गाविडम्बिनीम् ॥
क्रीडन्तीं केशवक्रोडे राधामाधारये धिया ॥

विनेयबुद्धिवैशद्याय प्रकारान्तरेण पुनर्ध्वनिनिरूपणमारभमाणोऽतीतोद्द्योतद्वय-सङ्गतिं दर्शयन् वृत्तिकारः कारिकामवतारयति—

**एवं व्यङ्ग्यमुखेनैव ध्वनेः प्रदर्शिते सप्रभेदे स्वरूपे पुनर्व्यञ्जकमुखेन तत् प्रकाश्यते—**

तच्छब्दो ध्वनिस्वरूपं परामृशति । अविवक्षितवाच्यत्व-विवक्षितान्यपरवाच्यत्वादिव्यङ्ग्यधर्मभेदभिन्ना ध्वनेः प्रकाराः प्रथममुद्द्योतयुगलेन प्रतिपादिताः, इदानीं पुनर्व्यञ्जकभेदभिन्नास्ते 'स्थूणाऽभिखनन' न्यायेन प्रतिपाद्यन्त इत्याशयः ।

तेन न पिष्टपेषणाशङ्का, नवाऽनवधेयवचनताप्रसक्ति र्वक्तुरिति बोध्यम् ।

अविवक्षितवाच्यत्व एवं विवक्षितान्यपरवाच्यत्वादि अनेक व्यङ्ग्यधर्मोंके भेदसे ध्वनिके स्वरूप तथा विभिन्न प्रकारोंका प्रथम दो उद्योतमें प्रतिपादन कर अब अनेक व्यञ्जकोंके भेदसे ध्वनिके स्वरूप एवं प्रकारोंका निरूपण करते हैं ।

**'अविवक्षितवाच्यस्य पदवाक्यप्रकाशता ॥**
**तदन्यस्यानुरणन-रूपव्यङ्ग्यस्य च ध्वनेः ॥ ५७ ॥**

अविवक्षितवाच्यस्य = अर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्येति द्विभेदस्य लक्षणामूलध्वनेः, पदवाक्यप्रकाशता = प्रत्येकं पदाद् वाक्याच्च प्रकाशः प्रतीतिर्यस्य तत्त्वं भवतीत्यर्थः।

इत्थं च ध्वने र्भेदत्रयं द्विशाखतया षोढाऽवगन्तव्यम्। न च ध्वनेः पदप्रकाशताया असम्भवः, इहैवोद्द्योते—'पदानां स्मारकत्वेऽपि पदमात्रावभासिनः' इत्यादिना तद्व्यवस्थाया वक्ष्यमाणत्वात् ॥

अर्थान्तर संक्रमित वाच्य एवं अत्यन्त तिरस्कृत वाच्यके भेदसे दो प्रकारकी जो उक्त लक्षणामूल अविवक्षितवाच्य ध्वनि है, वह पद और वाक्यसे प्रकाशित होनेके कारण फिर दो प्रकारकी होती है, तथा विवक्षितान्यपरवाच्य ध्वनिका जो संलक्ष्य क्रम व्यङ्ग्य ध्वनिरूप प्रकार है, वह भी पद और वाक्यसे प्रकाशित होनेके कारण दो प्रकारकी होती है इस तरह उक्त तीनों ध्वनि छे प्रकारकी सिद्ध हुई।

क्रमश उदाहर्तुमाह—

अविवक्षितवाच्यस्यात्यन्ततिरस्कृतवाच्ये प्रभेदे पदप्रकाशता यथा महर्षेर्व्यासस्य—

महाभारते।

'सप्तैताः समिधः श्रियः'।

'धृतिः क्षमा दया शौचं कारुण्यं वागनिष्ठुरा।
मित्राणां चानभिद्रोहः' ॥ इत्यत्रशिष्टं चरणत्रयम्।

धैर्यादयः सुहृदनभिद्रोहान्ताः सप्त श्रियः सम्पदः समिध उद्दीपिका इत्यर्थः। शुष्केन्धनानि वह्निमिव धृत्यादीनि समृद्धिं दीपयन्तीत्यौपम्यपर्यवसानेऽपि पुरस्ताद्धृत्यादिषु समित्तादात्म्यस्य बाधितत्वेन 'आयुर्घृतम्' इत्यत्र घृतशब्दवत् समिच्छब्दस्योद्दीपकत्वं लक्षयतोऽन्यवैलक्षण्येन तत्करत्वस्य व्यञ्जकत्वम्। इन्धनात्मनो वाच्यस्य सर्वथाऽविवक्षा, व्यञ्जने च समिदतिरिक्तपदानपेक्षा चेति पदादेकस्मादेव व्यङ्ग्यस्य प्रतीतिरिह व्यक्तैव।

उनमें पदप्रकाश्य अत्यन्त तिरस्कृत वाच्यात्मक अविवक्षित वाच्य ध्वनिका उदाहरण बतलाते हैं—अविवक्षितेति। जैसे महाभारतमें व्यासजीने कहा है—'धैर्य, क्षमा, दया, पवित्रता, करुणा, मधुर वचन और मित्रोंका अद्रोह ये सात गुण, सम्पदाओंके लिये समिधा हैं, अर्थात् उद्दीपक (वर्द्धक) हैं।

यहां पर 'जैसे शुष्क इन्धन अग्निके उद्दीपक होते हैं, वैसे ही धैर्यादि भी समृद्धिके उद्दीपक हैं' इस तरह पर्यवसानमें औपम्यके बोध होनेपर भी पहले

धैर्यादि गुणोंमें समिधाके तादात्म्यका बाध होनेसे 'आयुर्घृतं' में आयुवर्द्धकमें आयु पदकी तरह समिध शब्द उद्दीपक अर्थमें लाक्षणिक होता हुआ अनन्य साध्य समृद्धिके प्रति धैर्यादिके विलक्षण साधनत्वका व्यञ्जक होता है और इन्धनरूप वाच्यार्थ के सर्वथा त्याग होनेसे एवं समिध भिन्न पदकी अपेक्षा नहीं होनेसे पदैकप्रकाश्य उक्त व्यङ्ग्यकी स्पष्ट प्रतीति होती है।

पुनरुदाहरति—

**यथा वा कालिदासस्य—**

मेघदूते-मेघं प्रति यक्षस्योक्तिः।

**'कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायाम्'**

'न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः' इति पद्यस्य तुरीयश्चरणः।

हे मेघ! त्वयि सन्नद्धे समुन्नते सति विरहेण विधुरां विकलां जायां क उपेक्षेत? न कोऽपीत्यर्थः।

समुन्नतस्य मेघस्य नितरां मन्मथोन्माथदायकत्वमिति तात्पर्यम्।

इह 'सन्नद्धो वर्मितः सज्जो दंशितः' इत्यमरोक्तेः सन्नाहो युद्धोद्यमश्चेतनमात्रधर्म इत्यचेतने मेघे बाधित इति सन्नद्धपदं केवलं वाच्यनैरपेक्ष्येणौन्नत्यं लक्षयन्निष्कारुणिकत्वाप्रतिकार्यत्वादि व्यनक्ति।

दूसरा उदाहरण बतलाते हैं—यथा वेति। कालिदास रचित मेघदूतमें मेघको लक्ष्य कर यक्ष कहता है-हे मेघ! बिल्कुल सन्नद्ध होकर (काली घटा धारण कर) तुझे उपस्थित होने पर किसकी सामर्थ्य है, जो विरह पीड़ित कामिनीकी उपेक्षा कर सके अर्थात् कोई भी उपेक्षा नहीं कर सकता, क्योंकि मेरे जैसा दूसरा भी ऐसा कोई व्यक्ति नहीं होगा, जो कि इस तरहकी परतन्त्रताके निगड बन्धन (बेड़ी) में बंधा (जकड़ा) हो। यहां पर युद्ध करनेके लिये उद्यत होकर कवच धारणका अचेतन मेघमें नहीं हो सकता, अतः सन्नद्ध पद उक्त स्वार्थको बिल्कुल छोड़कर कार्य उन्नत अर्थको लक्षित करते हुए 'असाध्य प्रतीकार'को व्यक्त करता है।

पुनरुदाहरति—

**यथा वा तस्यैव—**

कालिदासस्यैव।

**'किमिव हि मधुराणां मण्डनं नाकृतीनाम्'**

अभिज्ञानशाकुन्तल आश्रमवृक्षान् सिञ्चन्तीं शकुन्तलां पश्यतो दुष्यन्तस्योक्तिरियम्। 'सरसिजमनुविद्धं शैवलेनापि रम्यं, मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति॥

इयमधिकमनोज्ञा वल्कलेनापि तन्वी' इत्याद्यं पादत्रयं श्लोकस्य।

मधुराणां कमनीयानामाकृतीनां किमिव ( वस्तु ) मण्डनं भूषणं न भवतीत्यर्थः। निसर्गशोभनमाकारं तुच्छमपि वस्तु भूषयत्येवेति भावः।

अत्र रसविशेषवाचकं मधुरपदं बाधसध्रीचीनतयाऽऽकृत्यभिसमर्थं बोधयितुमनर्हं सर्वानुरञ्जकत्वं लक्षयद् वाच्यनिरपेक्षमेव कमनीयतमत्वं सूचयति।

कालिदासका ही दूसरा उदाहरण बतलाते हैं—यथा वेति। आश्रम वृक्षोंको सींचती हुई शकुन्तलाको देखकर दुष्यन्त मन ही मन विचार करते हैं—संसारमें ऐसी कौनसी वस्तु है, जो कि अत्यन्त रमणीय आकृतिको अलंकृत नहीं करती, अर्थात् स्वाभाविक सुन्दर आकृतिको तुच्छ वस्तु भी सुशोभित ही करती है। यहां पर माधुर्य रस वाचक मधुर शब्द आकृति अर्थमें बाधित होकर सर्वानुरञ्जकत्व रूप अर्थको लक्षित करते हुए वाच्य निरपेक्ष अतिशय कमनीयताको व्यक्त करता है।

तदाह—

**एतेषूदाहरणेषु 'समिधः' इति 'सन्नद्धे' इति 'मधुराणाम्' इति च पदानि व्यञ्जकत्वाभिप्रायेणैव कृतानि।**

व्यञ्जकत्वस्य व्यञ्जनस्याभिप्रायेणेच्छयैव, व्यङ्ग्यार्थबुबोधयिषयैव, नतु वाच्यार्थबोधनाय, कृतान्युच्चारितानीत्यर्थः।

इन पूर्वोक्त तीनों उदाहरणोंमें 'समिध' 'सन्नद्ध' और 'मधुर' ये तीनों पद उक्तार्थके व्यञ्जकके अभिप्रायसे ही प्रयुक्त हुए हैं, अर्थात् उक्त व्यङ्ग्यार्थ बोधनके तात्पर्यसे ही उच्चरित हुए हैं।

इत्थमविवक्षितवाच्यध्वनेः प्रथममत्यन्ततिरस्कृतवाच्यात्मकं प्रकारमुदाहृत्य, द्वितीयमुदाहरति—

**तस्यैवार्थान्तरसङ्क्रमितवाच्ये यथा—**

तस्याविवक्षितवाच्यध्वनेः। पदप्रकाशतेति शेषः।

अब उसी पदप्रकाश्य अर्थान्तर संक्रमित वाच्यरूप अविवक्षित वाच्यध्वनिका उदाहरण बतलाते हैं—तस्यैवेति।

ऋष्यमूकस्थो रामः सीतां मनसा सम्बोध्य ब्रवीति—

**'रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्'**

प्रत्याख्यानरुषः कृतं समुचितं क्रूरेण ते रक्षसा,
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैश्शिरः॥
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा' इत्याद्यः पद्यांशः।

हे प्रिये ! वैदेहि ! क्रूरेण दारुणेन रक्षसा रावणेन प्रत्याख्यानरूपस्तदाज्ञाऽनङ्गीकारजकोपस्य समुचितमनुरूपं ते तव हरणतर्जनादि कृतम् । आज्ञाभङ्गात् कुपितो हि राजा तीव्रं दण्डं ददात्येव । त्वया च तद् हरणादि तथा धैर्येण कुलमर्यादां रक्षन्त्याऽलक्षितविकारतया सोढं मर्षितम् , न तु भयेन लोभेन वा तदीयत्वमङ्गीकृतम् , यथा कुलजनः शिर उच्चैर्वर्त्ते, न तु स्वकुलवधूवान्धक्यावबोधेनाधोनीतमूर्धा भवति, इति त्वयाऽपि सत्कुलोत्पत्तेरुचितमेव कृतम् । किन्तु सम्प्रति कान्ताहरणोत्तरमपि प्रतीकाराक्षमत्वेन व्यर्थं निष्फलमिदं सन्निहितमंसस्थं धनुर्बिभ्रता, त्वद्व्यापदस्त्वदीयविशिष्टापत्तेर्हरणादेः साक्षिणा तूष्णीमवेक्षकेण प्रियजीवितेन स्वजीवनरक्षायै युद्धाद्बिभ्यता साहसैकरसेनापि कातरेण स्वार्थान्धेनाविवेकिना वा रामेण मया प्रेम्णस्त्वद्विषयकप्रणयस्योचितं न कृतमित्यर्थः ।

न हि प्रियजनपराभवः प्रणयिना शूरेण तूष्णीं सोढव्य इत्यभिसन्धिः ।

अत्र 'प्रिये' इति सम्बोधनपदप्रवृत्तिनिमित्तस्य प्रेम्णोऽनौचित्येन कलङ्कितत्वाच्छोकालम्बनोद्दीपनविभावयोगाद्रामस्य करुणो रसः स्फुटतीत्याचार्याः ।

स्वयं रामेण दशरथापत्यमात्ररूपस्वार्थोपस्थापक—स्वनामोच्चारणासङ्गतेरतिसाहसिक्य-पराक्रमातिशयादिसमानाधिकरणकातर्यादिव्यङ्ग्यार्थविशिष्टः स्वार्थो रामपदेन प्रत्याय्यत इत्यर्थान्तरसङ्क्रमितवाच्यध्वनेः पदप्रकाशता ।

ऋष्यमूकमें विरहसे पीड़ित होकर रामचन्द्र सीताको संबोधित कर मन ही मन कह रहे हैं—हे प्रिये ! अत्यन्त क्रूर रावणने अपनी आज्ञाके उल्लंघन जन्य क्रोधके अनुसार तुम्हारा जो भी कुछ अपमान किया उस सबको तुमने बड़े धैर्यके साथ कुलकी मर्यादानुसार इस तरह सहन किया ( कुलकी लाज बचाई ) जिससे अपने कुलजन नतमस्तक नहीं हुए, अर्थात् उनका सिर ऊंचा ही उठा रहा, लेकिन तुम्हारे अपहरणादि जन्य अपमान होने पर भी उसका कुछ भी प्रतीकार नहीं कर व्यर्थ ही कन्धे पर धनुष धारण कर अपनी प्रशंसा करते हुए (डींङ्ग हांकने वाले) और तुम्हारे ऊपर किये गये अत्याचारोंको यों ही चुप चाप देखते हुए अपने प्राणके लोभसे वीर शिरोमणि होकर भी कायरता धारण कर युद्धसे डरने वाले रामने ( मैंने ) तुम्हारे प्रणयके योग्य कार्य नहीं किया, क्योंकि प्रियजनके पराभवको प्रणयी वीर पुरुष यों ही चुपचाप देखते हुए सहन नहीं करते ।

यहां पर अपने लिये निज द्वारा ही उच्चरित 'राम' इस पदसे अत्यन्त साहस एवं अतिशय पराक्रमके साथ २ कायरतादि व्यङ्ग्यार्थ विशिष्ट दशरथापत्य राम रूप अर्थ द्योतित होता है, इसलिये तादृश अर्थान्तर संक्रमित वाच्य ध्वनिकी पद्-प्रकाश्यता स्पष्ट प्रतीत होती है ।

तदाह—

अत्र रामेणेत्येतत् पदं साहसैकरसत्वादिव्यङ्ग्याभिसङ्क्रमितवाच्यं व्यञ्जकम् ।

विशेषणद्वयं पदस्य ।

वृत्तिकार उसीका सारांश बतलाते हैं—अत्रेति । उक्त स्थलमें 'राम' यह पद साहसैकरसिकत्व एवं कायरतादि व्यङ्ग्यार्थ विशिष्ट राम रूप वाच्यार्थको व्यक्त करता है ।

तमेव पुनरुदाहरति—

'एमेअ जणो तिस्सा देइ कवोलोपमाइ ससिबिम्बं ।
परमत्थविआरे उण चन्दो चन्दो विअ वराओ ॥'
'एवमेव जनस्तस्या ददाति कपोलोपमायां शशिबिम्बम् ।
परमार्थविचारे पुनश्चन्द्रश्चन्द्र एव वराकः ॥' इतिच्छाया ।

नायिकाप्रशंसापरं नायकस्य दूत्या वा वचनमिदम् । तस्याः प्रसिद्धैकसुन्दर्य्याः कपोलयोरुपमायां जन एवमेव गतानुगतिकतया विवेकं विनैव, शशिबिम्बं ददाति तद्गण्डसाम्येन चन्द्रमण्डलं निर्दिशति । परमार्थविचारे तत्त्वविवेके पुनः, चन्द्रः शशी वराकः क्षयिसुषमत्वाद्दयनीयः, क्षयिसुषमत्व-कलङ्कित्वादिधर्मविशिष्टश्चन्द्र एव, न तु तत्कपोलतुलां कथमप्यवरोहतीत्यर्थः ।

तस्या इत्यद्भुतसौन्दर्येण प्रसिद्धिम्, सा वाक्यार्थोपपत्तिम्, कपोलपदं स्वरूपसम्पदा निरवधिलावण्यसम्भारेण चन्द्रावधिकोत्कर्षम्, 'जन' इति गतानुगतिकतामात्रावलम्बनेन विवेकवैमुख्यम्, एवमेवेति विवेचनाक्षमत्वम्, शशिपदं कलङ्कितया साम्यासादनानर्हत्वम्, ददातीत्यौपम्यस्य वास्तविकताविरहम्, वराकपदं चन्द्रेऽज्ञानिनि दयनीयताम्, चरमं चन्द्रपदं क्षयिसुषमत्वादिविशिष्टं चन्द्रमसं प्रत्याययतीति द्वितीयचन्द्रपदापेक्षोऽत्रार्थान्तरसङ्क्रमितवाच्यध्वनिः । अन्यथा द्वितीयचन्द्रपदोपादानात् पौनरुक्त्यमापतेत् । इदानीं त्वर्थान्तरसङ्क्रमणाद् वाच्यस्याकारवैलक्षण्येन न दोषः ।

'विअ' इतीवार्थकशब्दघटितस्त्वपपाठः । तथा सति चन्द्रश्चन्द्र इवेत्यनन्वये द्वितीयसादृश्यव्यवच्छेदमात्रेऽवगम्यमाने चन्द्रस्य प्रत्युत महत्त्वमेव प्रतीयेतेति विवक्षितार्थप्रतीतिव्याघातः स्फुट एव ।

उसीका दूसरा उदाहरण देते हैं—एवमेवेति। नायक अपनी प्रेयसीकी प्रशंसा करता है—उस विश्वविख्यात सुन्दरीके कपोलोंकी उपमामें लोग योंही (अन्धाधुन्ध की तरह विना विचारे ही) चन्द्र विम्बको दे बैठते हैं, वास्तविक विचार करने पर तो चन्द्रमा बेचारा कलङ्क युक्त-क्षय शील चन्द्रमा ही है, अर्थात् किसी भी तरह वह उपमा देने योग्य नहीं है, यहां पर द्वितीय चन्द्रपद क्षयित्व-कलंकित्व आदि व्यङ्ग्यरूप अर्थान्तरविशिष्ट चन्द्र रूप विशेषार्थको व्यक्त करके 'नीलो घटः' की तरह सामान्य विशेष भावसे दोनोंका उपपादक होता है, अन्यथा दो चन्द्रपद होनेसे पुनरुक्ति दोष लग जाता।

तदाह—

**अत्र द्वितीयश्चन्द्रशब्दोऽर्थान्तरसङ्क्रमितवाच्यः।**

उक्त स्थलमें द्वितीय चन्द्रपद कलंकादि दोष युक्त क्षीण होनेवाले निकृष्ट चन्द्र रूप अर्थान्तर संक्रमित वाच्य ध्वनिको प्रकाशित करता है।

एवमविवक्षितवाच्यध्वनेः पदप्रकाशतायां प्रकारयुगलमुदाहृत्य वाक्यप्रकाशतायामप्युदाहरति—

**अविवक्षितवाच्यस्यात्यन्ततिरस्कृतवाच्ये प्रभेदे वाक्यप्रकाशता यथा—**

तत्रापि प्रथमं प्रकारमुदाहरति—

**'या निशा सर्वभूतानां तस्यां जागर्ति सँय्यमी।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥ ६६॥'**

भगवद्गीतायां द्वितीयाध्यायेऽर्जुनं श्रीकृष्ण उपदिशति। हे पार्थ! सर्वेषां स्थावरजङ्गमानां भूतानां प्राणिनां या निशा मोहजनकतया रात्रिसदृशी मिथ्यादृष्टिः, यद्वा सकलातात्त्विकपदार्थतिरोधापकतया तात्त्विकदृष्टिर्विद्यैव, अस्तीति शेषः। तस्यां तद्विषये सँय्यमी जितेन्द्रियो मुनिर्जागर्ति कथमियं हीयेतेति कथमियं लभ्येतेति वाऽवधत्ते। यस्यां पुनर्मिथ्यादृष्टौ भूतानि जाग्रत्यवदधत्यनुरज्यन्तीति यावत्। सा पश्यतस्तत्त्वावबोधं बिभ्रतो मुनेर्मननशीलस्य निशाऽनवधानविषयोऽस्तीत्यर्थः। मिथ्यादृष्टिः परिहेया, तत्त्वदृष्टिश्चाश्रयणीयेति तात्पर्यम्।

इत्यञ्चात्र निशाजागरणशब्दाभ्यां क्रमेण रात्रि-निद्राक्षयरूपवाच्यार्थयोरुपस्थितिमात्रे तात्पर्यानुपपत्तौ जागरूकायां मिथ्यादृष्टि-तत्त्वदृष्टी लक्षयित्वा मिथ्याज्ञानपराङ्मुखत्व-तत्त्वज्ञानौन्मुख्ये व्यज्येते इत्यनेकपदसापेक्षतयाऽत्यन्ततिरस्कृतवाच्यध्वनेर्वाक्यप्रकाशता। तथा हि—या भूतानां रात्रिः, स मुनेर्जागरणकाल इत्याद्यर्थः प्रकृ-

तोपदेशोऽनुपपन्न इति मूढानां मिथ्याज्ञानविषयपदार्थे आस्था, न तु ज्ञानिनाम् । 'अलस्त्वयाऽतात्त्विके जगत्यास्था न विधेया' इत्युपदेश्यार्थो लक्षणामूलव्यञ्जनया प्रत्याय्यते ।

अब अत्यन्त तिरस्कृत वाच्यरूप अविवक्षित वाच्य ध्वनिकी वाक्यप्रकाश्यता का उदाहरण बतलाते हैं—या निशेति । कृष्ण भगवान् अर्जुनको उपदेश देते हैं—हे अर्जुन ! प्राणियोंको मोह उत्पन्न करने वाली रातकी तरह जो अविद्यारूप मिथ्यादृष्टि है, या अज्ञानी होनेके कारण बिल्कुल ज्ञानसे वञ्चित ( निपट निरे ) रहने वाले प्राणी जिस विद्यारूप तात्त्विक दृष्टिमें सोते रहते हैं, उसमें योगी लोग जागते हैं अर्थात् किस तरह अविद्या दूर होगी या यह विद्यारूप तात्त्विक बुद्धि प्राप्त होगी इसीके अनुसन्धानमें लगे रहते हैं, और जिस विषय वासनात्मक मिथ्यादृष्टि रूप रातमें अज्ञानी जीव जागते हैं अर्थात् अनुरक्त होकर उसीमें लिप्त रहते हैं, वह अविद्यारूप मिथ्यादृष्टि तत्त्वज्ञानी योगियोंके लिये रात ही है, अर्थात् उस विषय वासना रूप मिथ्या दृष्टिसे महात्मा लोग बिल्कुल अलग ही रहते हैं, अतः मिथ्याज्ञान छोड़कर तत्त्वज्ञान प्राप्त करना चाहिये ।

यहां पर निशा और जागरण पद रात्रि·निद्रात्याग रूप वाच्यार्थ विषयक तात्पर्यकी अनुपपत्तिसे बाधित होकर क्रमशः अविद्या और विद्याको लक्षित कर मिथ्याज्ञानकी निवृत्ति और तत्त्वज्ञानमें प्रवृत्ति रूप व्यङ्ग्यार्थको व्यक्त करता है, अर्थात् जो जीवोंकी रात है, वही मुनियोंका जागरण काल है, इत्यादि वाच्यार्थ उपदेशके लिये संगत नहीं होता, अतः 'मूढ़ोंको ही सांसारिक विषयोंमें आस्था होती है, ज्ञानियोंको नहीं, इसलिये तुमको भी अतात्त्विक जगत्से आस्था नहीं करनी चाहिये' यह आशय लक्षणामूल व्यञ्जना द्वारा व्यक्त होता है ।

तदाह—

**अनेन हि वाक्येन (न) निशार्थो न (वा) जागरणार्थः कश्चिद्विवक्षितः, किन्तर्हि—तत्त्वज्ञानावहितत्वमतत्त्वपराङ्मुखत्वं च मुनेः प्रतिपाद्यत इति तिरस्कृतवाच्यस्यास्य व्यञ्जकत्वम् ।**

अनेन वाक्येन, प्रतिपाद्यते व्यज्यते, अस्य वाक्यस्येत्यर्थः । तिरस्कृतवाच्यस्येति वाक्यस्य विशेषणम् । प्रकोष्ठस्थ 'न-वा' शब्दाभ्यां विना न सम्यक् सन्दर्भशुद्धिरिति तत्कल्पना ।

वृत्तिकार उसीको व्यक्त करते हैं—अनेनेति । उक्त वाक्यसे रात्रि और जागरण रूप अर्थ विवक्षित नहीं है, अपितु मूढ़ोंमें तत्त्वज्ञान विमुखता और ज्ञानियोंमें अतत्त्वज्ञान पराङ्मुखता सूचित होती हैं, अतः यह वाक्य अत्यन्त तिरस्कृत वाच्य ध्वनिका व्यञ्जक है ।

वाक्यप्रकाशध्वनेरपरं प्रकारमुदाहरति—

**तस्यैवार्थान्तरसंक्रमितवाच्यस्य वाक्यप्रकाशता यथा—**

तस्याविवक्षितवाच्यस्य ध्वनेः ।

स्वकर्मार्जितं दुःखमनुभवन् कश्चिद् व्याहरति—

**'विसमअओ विअ काणवि काणवि वोलेइ अमिअणिम्माओ ।**
**काणवि विसामिअमओ काण वि अविसामिअमओ कालो ॥'**

'विषमय इव केषामपि केषामप्यतियात्यमृतनिर्माणः ।
केषामपि विषामृतमयः केषामप्यविषामृतमयः कालः ॥' इतिच्छाया ।

केषामपि पापिनामविवेकिनां वा जनानां कालो विषमय इव दुःखसाधनमयः, केषामपि पुण्यवतामतिविवेकभृत चाऽमृतेन निर्माणं यस्य तादृक् सुखसाधनमयः, केषामपि पुण्यापुण्योभयभृतां विवेकाविवेकजुषां वा विषामृतमयो दुःखसुखोभयसाधनमयः, पुनः केषामपि नितान्तमूढानामवाप्तपारमहंस्यानां चाऽविषामृतमयो दुःखसुखोभयसाधनविधुरः कालोऽतियाति, व्यत्येतीत्यर्थः ।

पापिनां दुःखोपभोगेन, पुण्यात्मनां सुखोपभोगेन, मिश्रकर्मणां तदुभयभोगेन अज्ञानां परमहंसानां वाऽनवधारितविशेषाणां दुःखसुखानुपभोगेन समयो गच्छतीति सारम् ।

अत्र लोचनसाच्येण पाठपरिवर्तो विहितः । केवलम् 'अमिअ णिम्माओ' इत्यलङ्कारसर्वस्वानुसारेण पठितम् । यथाश्रुतपाठे तु मात्राविकार आपतति ।

इह लावण्यादिशब्दानां छायाऽतिशयादाविव विषशब्दस्य दुःखसाधनेऽमृतशब्दस्य सुखसाधने च निरूढा लक्षणा 'विषं निम्बममृतं कपित्थम्' इतिवत् । केवलसुखदुःखमयतायाः कालेऽकिञ्चित्करत्वादसम्भवाद्वा तत्साधनपर्यन्तानुधावनम् । 'निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्' इत्यभियुक्तोक्तेर्निरूढलक्षणायाः शक्त्यनतिरेकात् सुखदुःखसाधनयोरभिधेयत्वव्यवहार इति वाच्ये तत्साधने प्रतीयमानयोः सुखदुःखयोः सम्बन्धेनैव प्रतीयेते इत्यर्थान्तरसंक्रमितवाच्यत्वं, वाक्यप्रकाशता च पूर्ववदेव ध्वनेः ।

उसी अविवक्षित वाच्य ध्वनिके एकभेद—अर्थान्तर संक्रमित वाच्य ध्वनिकी वाक्यप्रकाश्यताका उदाहरण देते हैं—तस्यैवेति । स्वपूर्वोपार्जित कर्मफल रूप दुःखका अनुभव करता हुआ कोई व्यक्ति कह रहा है—किन्हीं ( पापी ) व्यक्तियोंके लिये तो काल विषमय ( केवल दुःख साधनमय ) प्रतिकूल प्रतीत होता है, तथा किन्हीं ( पुण्यवान् ) व्यक्तियोंके लिये तो अमृतमय ( सुख साधनमय ) अनुकूल प्रतीत

होता है, एवं किन्हीं ( पुण्यापुण्यवान् ) व्यक्तियोंके लिये विष-अमृतमय ( दुःख सुख साधनमय ) प्रतीत होता है और किन्हीं अत्यन्त मूढ़ों या योगियोंके लिये विष-अमृत भिन्न ( दुःख सुख साधन भिन्न ) न प्रतिकूल नवा अनुकूल ही प्रतीत होता है, अर्थात् पापी लोग दुःख भोगते हुए एवं धर्मात्मा लोग सुख भोगते हुए तथा पाप-पुण्यात्मा दुःख सुख भोगते हुए और मूढ या ज्ञानी लोग न तो दुःख ही भोगते नवा सुख ही भोगते हुए समय बिताते हैं।

यहां पर विष और अमृत शब्द दुःख साधन एवं सुख साधनको लक्षित करते हुए दुःख-सुखरूप व्यङ्ग्यार्थको व्यक्त करते हैं, अतः उक्त रीतिसे यह अर्थान्तर संक्रमित वाच्यध्वनि वाक्यसे ही प्रकाशित होती है।

तदाह—

**अत्र हि वाक्ये विषामृतशब्दाभ्यां सुखदुःखरूपसंक्रमितवाच्याभ्यां व्यवहार इत्यर्थान्तरसंक्रमितवाच्यस्यास्य व्यञ्जकत्वम्।**

सुखदुःखयो रूपे संक्रमिते वाच्ये ययोरिति बहुव्रीहिः। विषामृतेत्युपक्रमानुसारं दुःखसुखेत्युपसंहरणमुचितम्। तद्विपर्यासमूलं तु 'सुखदुःखतत्क्रियायाम्' इति धातुपाठः, सुखस्याभ्यर्हितत्वं वा।

इदं पुनरिहानुसन्धेयम्—अमृतविषशब्दयोः सुखदुःखसाधनरूपार्थद्वये न निरूढा लक्षणा, वाच्यवत् सार्वत्रिकतत्प्रत्ययाभावात्, न वा रूढिमूलिकैव, तथा सति व्यङ्ग्यार्थसंस्पर्शासम्भवात्, किन्तु प्रयोजनवत्येव। तथा हि—विषामृतशब्दयोर्दुःखसुखानुभवकारणयोर्लक्षणा, तद्बाहुल्यं च प्रतीयमानं प्रयोजनमिति प्रतीत्यभावाद् वाच्यस्य व्यङ्ग्यसंक्रमणायोगादिदमुदाहरणं चिन्त्यम्। अपि त्वत्यन्ततिरस्कृतवाच्यध्वनेरेवेदमुदाहरणं प्रतिभाति। अत्र तु—

'कदली कदली, करभः करभः, करिराजकरः करिराजकरः।'

इत्यादि पीयूषवर्षपद्यमेवान्यैरप्युदाहृतमुदाहरणीयमिति दिक्।

वृत्तिकार उसीको स्फुट करते हैं-अत्रेति। उक्त वाक्यमें विष और अमृत शब्दसे दुःखसाधन एवं सुखसाधनरूप वाच्यवत प्रतीयमान अर्थका दुःख-सुखरूप व्यङ्ग्यार्थमें संक्रान्त होकर ही व्यवहार होता है इसलिये यह वाक्य अर्थान्तर संक्रमित वाच्य ध्वनिका व्यञ्जक होता है।

इत्थमविवक्षितवाच्यध्वनेर्द्विविधस्य प्रत्येकं पदवाक्यप्रकाशत्वेन प्रकारचतुष्टयमुदाहृत्य, विवक्षितान्यपरवाच्यस्यापि शब्दशक्त्युद्भवत्वेन कविप्रौढोक्तिनिष्पन्नार्थ-

शक्त्युद्भवत्वेन स्वतस्सम्भव्यर्थशक्त्युद्भवत्वेन च त्रिविधस्य ध्वनेः पदवाक्यप्रकाशतया सम्पन्नं प्रकारषट्कं क्रमेणोदाहरति—

**विवक्षिताभिधेयस्यानुरणनरूपव्यङ्ग्यस्य शब्दशक्त्युद्भवे प्रभेदे पदप्रकाशता यथा—**

दित्सुर्दारिद्र्याद्दातुमशक्तो निर्विण्णो वक्ति—

**'प्रातुं धनैरर्थिजनस्य वाञ्छां दैवेन सृष्टो यदि नाम नास्मि ।**
**पथि प्रसन्नाम्बुधरस्तडागः कूपोऽथवा किं न जडः कृतोऽहम् ॥'**

धनैर्नानाविधद्रविणैः, अर्थिजनस्य याचकनिकरस्य, वाञ्छामभिलाषं, प्रातुं पूरयितुम्, यदि नाम निश्चितं जडो मूढोऽहं, दैवेन विधिना सृष्ट उत्पादितो नास्मि, तदा प्रसन्नस्य स्वच्छस्यात एव लोकोपकारकस्याम्बुनो जलस्य धरस्तडागः, अथवा जडः शिशिरः कूपः पथि मार्गे किं कथं न कृतोऽस्मीत्यर्थः ।

मदपेक्षया मार्गसन्निकृष्टतडागकूपयोरेव परोपकारकत्वादुत्पत्तेः साफल्यमिति भावः । वाञ्छायास्त्राणानौचित्यात् 'त्रातुम्' इति पाठ उपचारेण योजनीयः । प्रातिस्तु पूरणार्थक एवेति तत्प्रयोगे नानुपपत्तिः । 'अम्बु धारयती'ति विग्रहप्रदर्शनमपि कस्यचिच्चिन्त्यम्, कर्मण्यणा बाधादम्बुधार इत्यापत्तेः ।

इह धनैरिति बहुवचनेन याचकप्रकरस्पृहाऽनुरूपनानाप्रकारकत्वम्, जनशब्देनार्थिनां बाहुल्यं धनमात्रस्पृहिता च, प्रातिना वितरणस्यार्थिजनेच्छाऽनुरूपत्वम्, तुमुना सृष्टेस्तदनन्यप्रयोजनकत्वम्, दैवपदेन स्वातन्त्र्यम्, तेन नियोगपर्यनुयोगानर्हत्वम्, अम्बुनः प्रसन्नत्वेन पथिस्थितया च लोकोपकारकत्वम्, स्वस्य जडत्वेन शोच्यता, कूपस्य च तत्वेन तापशामकतयाऽध्वन्योपयोगित्वम्, शोच्यतया 'जाएज्ज वणुद्देशे' इत्यादिवन्निर्वेदश्च व्यज्यते ।

किंच 'जडः' इति पदं मूढार्थे प्रथमैकवचनान्तं विषण्णो वक्ता स्वविशेषणत्वेन प्रयुङ्क्तेति तत्रैवाभिधायां नियन्त्रितायाम् 'सुषीमः शिशिरो जडः' इति कोशानुशिष्टं कूपाऽन्वयिनं शिशिररूपार्थं पश्चादभिधामूलव्यञ्जनया प्रत्याययतीति शब्दशक्तिमूलध्वनेः पदप्रकाशता ।

उक्त रीतिसे अविवक्षित वाच्य ध्वनिके उक्त प्रकार चतुष्टयका उदाहरण बतलाकर विवक्षितान्यपरवाच्य ध्वनिके संलक्ष्यक्रम व्यङ्ग्यात्मक शब्दशक्त्युद्भव, कविप्रौढोक्तिसिद्ध अर्थशक्त्युद्भव और स्वतःसंभवी अर्थशक्त्युद्भव ध्वनिके भेदसे त्रिविध ध्वनिके पद और वाक्य प्रकाश्य होनेसे निष्पन्न छे प्रकारोंमें सर्व प्रथम पद-

प्रकाश्य शब्दशक्त्युद्भव संलक्ष्यक्रम व्यङ्ग्यात्मक ध्वनिका उदाहरण बतलाते हैं—प्रातुमिति। एक अत्यन्त दान शील दरिद्र व्यक्ति दारिद्र्य प्रयुक्त देनेमें असमर्थ होकर खेद प्रकट कर रहा है—यदि विधाताने मेरे जैसे मूढ़ व्यक्तिको अनेक प्रकारके धनोंसे याचक गणकी अभिलाषाको पूर्ण करनेके लिये उत्पन्न नहीं किया, तो अत्यन्त स्वच्छ जलसे भरे हुए तालाव या रास्तेका अत्यन्त शीतलकूप ही मुझको, क्यों नहीं बना दिया, अर्थात् मेरी अपेक्षा मार्ग निकटवर्ती एक तालाब या कूपका ही जीवन परोपकारक होनेसे अधिक अच्छा है।

यहां पर 'जड' यह पद अत्यन्त खिन्न वक्ताके विशेषण रूपसे मूढार्थका प्रतिपादन कर अभिधाके शान्त हो जाने पर पश्चात् शीतल रूप व्यङ्ग्यार्थको अभिधामूल व्यञ्जनासे अभिव्यञ्जित करता है, अतः उक्त शब्दशक्त्युद्भव संलक्ष्यक्रमव्यङ्ग्य ध्वनिकी पदप्रकाशता स्पष्ट ही प्रतीत होती है।

तदाह—

**अत्र हि जड इति पदं निर्विण्णेन वक्त्राऽऽत्मसमानाधिकरणतया प्रयुक्तमनुरणनरूपतया कूपसमानाधिकरणतां स्वशक्त्या प्रतिपद्यते।**

समानाधिकरणताऽभेदसम्बन्धेन विशेषणत्वम्। अनुरणनरूपत्वं संलक्ष्यक्रमता। स्वशक्त्याऽभिधासहकृतव्यञ्जनया प्रतिपद्यते प्राप्नोति।

वृत्तिकार उसीको स्फुट करते हैं—अत्रेति। उक्त श्लोकमें अत्यन्त खिन्न प्रोक्त वक्ताने 'जड' इस पदको अपने लिये प्रयुक्त किया है, बादमें वह पद संलक्ष्य क्रम रूपसे कूपके लिये विशेषणरूपमें अभिधामूल व्यञ्जना द्वारा शीतलरूप व्यङ्ग्यार्थका व्यञ्जक होता है।

तस्यैव वाक्यप्रकाशात्मकं द्वितीयं भेदमुदाहरति—

**तस्यैव वाक्यप्रकाशता यथा हर्षचरिते सिंहनादवाक्येषु—**

तस्यैव संलक्ष्यक्रमशब्दशक्त्युद्भवध्वनेरेव। हर्षचरिते बाणभट्टकृते षष्ठोच्छ्वासे सिंहनादनामा हर्षनृपतिसेनापतिर्हर्षं ब्रवीति—

**'वृत्तेऽस्मिन् महाप्रलये धरणीधारणायाधुना त्वं शेषः।'**

अस्मिन् प्रभाकरवर्धनाभिधस्य पितुः, राज्यवर्धनाख्यस्य ज्येष्ठभ्रातुश्च मरणरूपे महति प्रलयेऽपाये, वृत्ते जाते सति, धरणीधारणाय राज्यधुराग्रहणाय, अधुना त्वं शेषोऽवशिष्ट इति प्राकरणिकवाक्यार्थबोधे सम्पन्ने, पश्चात्—

'प्रलयो मृत्युकल्पान्त-मूर्च्छाऽपायेषु पुंस्ययम्।' इति

'शेषः सङ्कर्षणे वधे।

'अनन्ते ना प्रसादेन स्वनिर्माल्यार्पणे स्त्रियाम् ॥' इति च मेदिनीकोशानुशासनादभिधामूलव्यञ्जनया 'अस्मिन् महाप्रलये कल्पान्ते वृत्ते सति धरणीधारणाय धरोद्वहनाय त्वं शेषोऽनन्त एव' इत्यर्थान्तरे प्रत्यायिते, अर्थद्वयस्य मिथोऽनन्वयापत्तिवारणायोपमानोपमेयभावोऽपि व्यज्यत इति प्रलयाद्यनेकपदसापेक्षतयाऽस्य ध्वनेर्वाक्यप्रकाशता, शब्दपरिवृत्त्यसहत्वाच्च शब्दशक्त्युद्भवत्वम्।

इसी शब्दशक्त्युद्भव संलक्ष्य क्रम व्यङ्ग्यात्मक ध्वनिकी वाक्यप्रकाश्यताका उदाहरण देते हैं—तथैवेति। सिंहनाद नामका हर्ष राजाका सेनापति हर्ष राजाको कहता है—हे राजन्! आपके पिता प्रभाकर वर्द्धन एवं बड़े भाई राज्यवर्द्धनके मरण रूप इस महाप्रलयके हो जाने पर अब राज्य शासन भारको ग्रहण करनेके लिये आप ही बचे हुए मालूम पड़ते हैं, इस प्राकरणिक वाक्यार्थके बोध होनेके बाद 'इस सृष्टिके प्रलय होने पर पृथिवीको धारण करनेके लिये आप शेषनाग ही हैं' यह अभिधामूल व्यञ्जना द्वारा प्रकाशित होता है, बादमें वाच्य-व्यङ्ग्य दोनोंके परस्परमें समन्वयार्थ उपमानोपमेय भाव भी व्यक्त होता है, अतः उक्त अनेक पदोंसे प्रकाश्य होनेके कारण यह वाक्यप्रकाश्य शब्दशक्त्युद्भव ध्वनिका विषय प्रतीत होता है।

तदाह—

एतद्धि वाक्यमनुरणनरूपमर्थान्तरं शब्दशक्त्या स्फुटमेव प्रकाशयति।

उक्त वाक्य, संलक्ष्यक्रम व्यङ्ग्य ध्वनिको शब्दशक्ति मूल व्यञ्जना द्वारा स्पष्ट ही व्यञ्जित करता है।

अथ तृतीयं भेदमुदाहरति—

अस्यैव कविप्रौढोक्तिमात्रनिष्पन्नशरीरस्यार्थशक्त्युद्भवे प्रभेदे पदप्रकाशता यथा हरिविजये—

अस्य विवक्षितान्यपरवाच्यध्वनेः। हरिविजये प्रवरसेनकृतप्राकृतरूपके।

वसन्तं वर्णयति—

'चूअङ्कुरावअंसं छणपसरमहग्घमणहरसुरामोअम्।
असमप्पिअं पि गहिअं कुसुमसरेण महुमासलच्छिमुहम्॥'

'चूताङ्कुरावतंसं क्षणप्रसरमहर्घमनोहरसुरामोदम्।
असमर्पितमपि गृहीतं कुसुमशरेण मधुमासलक्ष्मीमुखम्॥' इतिच्छाया।

कुसुमशरेण कामेन, चूतस्याङ्कुरो मञ्जरिरेव, अवतंसः कर्णपूरो यस्मिंस्तादृशम्, क्षणस्य वसन्तोत्सवस्य महाप्रसरेण विपुलसमारोहेण, घनो निबडो मधुरश्चामोदः

सुगन्धिरानन्दो वा यत्र तादृक्, मधुमासलक्ष्म्या वसन्तश्रिया मुखमाननमारम्भश्च, ( तया ) असमर्पितम् ( चुम्बितुम् ) अदत्तमपि ( बलाद् ) गृहीतमित्यर्थः ।

तथा च 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे' इत्यमरः । 'मुखं निस्सरणे वक्त्रे प्रारम्भोपाययोरपि' इति मेदिनी । 'महच्छब्दस्य परनिपातः प्राकृते नियमाभावात्' इति-लोचनम् । वसन्तारम्भो नितरां कामोद्दीपक इत्याशयः । नवोढललनाया मदिरामोदि वक्त्रं बलात् कान्तेनापि गृह्यत इति प्रत्यायनात् समासोक्तिरलङ्कारः ।

इह नवोढावस्थां सूचयन्मुखविशेषणोपस्थापकम् 'असमर्पितम्' इति पदं कामकर्तृकस्य बलान्मुखग्रहणात्मकहठकामुकव्यवहारस्य कविप्रौढोक्तिमात्रनिष्पन्नशरीरस्य सूचकम्, तच्च कामातिशयोद्दीपकताया इत्यर्थशक्त्युद्भवस्य कविप्रौढोक्तिमात्रनिष्पन्नाकारस्य ध्वनेः पदप्रकाशता ।

इसी विवक्षितान्यपरवाच्य ध्वनिका पदप्रकाश्य कविप्रौढोक्तिसिद्ध अर्थशक्त्युद्भव संलक्ष्य क्रमव्यङ्ग्य ध्वनि विषयक उदाहरण बतलाते हैं—चूताङ्करेति । कवि वसन्तका वर्णन करता है—कामदेवने आम्रमञ्जरीरूप कर्णभूषणोंसे अलंकृत एवं बड़ी धूम धामके साथ ऋतुराज वसन्तके महोत्सव मनाये जानेके समारोहके कारण आमोदसे भरे हुए वसन्त लक्ष्मीके मुखको या प्रारम्भिक अवस्थाको उस ( वसन्त लक्ष्मी ) के द्वारा चुम्बनार्थ नहीं देने पर भी बलत्कार पकड़ लिया, अर्थात् वसन्तका प्रारम्भ अत्यन्त कामोद्दीपक होता है और नव युवक भी नवोढ़ा नायिकाके मदिरामोदभरे मुखको चुम्बनार्थ हठसे पकड़ लेता है ।

यहां पर नवोढावस्थाको सूचित करनेवाला—'असमर्पित' यह पद कविप्रौढोक्ति मात्र सिद्ध कामदेव कर्तृक बलात्कारपूर्वक मुखग्रहणात्मक हठ कामुकके व्यवहारका सूचक है और उससे अतिशय कामोद्दीपन अभिव्यञ्जित होता है, अतः अर्थशक्त्युद्भव ध्वनि उक्त पदसे प्रकाशित होती है ।

तदाह—

अत्र ह्यसमर्पितमपि कुसुमशरेण मधुमासलक्ष्म्या मुखं गृहीतमित्यसमर्पितमित्येतदवस्थाभिधायिपदमर्थशक्त्या कुसुमशरस्य बलात्कारं प्रकाशयति ।

अवस्था नवोढादशा ।

वृत्तिकार उक्ताशयको स्फुट करते हैं—अत्रेति । उक्त श्लोकमें कुसुमशर कामदेवने वसन्त लक्ष्मीके मुखको उस ( वसन्त लक्ष्मी ) के द्वारा चुम्बनार्थ नहीं देने पर भी ग्रहणकर लिया, इस वाच्यार्थके द्वारा 'असमर्पितम्' यह पद नवोढाके

व्यवहारको सूचित कर अर्थशक्तिमूल व्यञ्जनासे हठीले कामुककी तरह कामदेवके बलात्कारको अभिव्यञ्जित करता है।

कविप्रौढोक्तिनिष्पन्नार्थशक्त्युत्थध्वनेर्वाक्यप्रकाशतायां चतुर्थभेदमुदाहरति—

**अत्रैव प्रभेदे वाक्यप्रकाशता यथा—उदाहृतं प्राक्—'सज्जेहि सुरहिमासो' इत्यादि।**

व्याख्यातमेव प्राक्।

एतदुदाहरणद्वयदानेनैव कविनिबद्धवक्तृप्रौढोक्तिसिद्धशरीरार्थशक्त्युत्थध्वनेरपि पदवाक्यप्रकाशतोदाहरणद्वयमपि दत्तमवगन्तव्यम्, 'प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः' इति पूर्वकारिकायां प्रौढोक्तिमात्रनिष्पन्नत्वेनैवोभयोः सङ्ग्रहात्।

वस्तुतस्तु कविनिबद्धवक्तृप्रौढोक्तिशरीरार्थशक्त्युद्भवध्वनेः पदप्रकाशतायाम्—

'सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः।
किन्तु मत्ताङ्गनाऽपाङ्ग—भङ्गलोलं हि जीवितम्॥' इत्युदाहरणम्।

अत्र कविनिबद्धविरागिवक्तृप्रौढोक्त्या जीवितशब्देन सर्वेषामर्थकामानां जीवितमात्रोपयोगित्वम्, तदभावे सतामपि तेषामसद्रूपत्वम्, प्राणधारणरूपस्य जीवितस्य प्राणवायुचाञ्चल्याच्चपलतमत्वम्, तेनानास्थाऽऽस्पदत्वम्, ततः को दोषो विषयाणां सर्वथा जीवितस्यैवापराधोऽत्रेति, अथवा तदपि नितरां चञ्चलमिति तस्यापि कोऽपराधः, दृढं वैराग्यमेवास्थापदमित्येतावत् सूच्यत इति पदप्रकाशता ध्वनेः।

वाक्यप्रकाशतायां तु 'शिखरिणि क्व नु नाम' इत्यादि पूर्वोक्तमेवोदाहरणम्।

उक्त कवि-प्रौढोक्तिसिद्ध अर्थशक्त्युद्भव ध्वनिकी वाक्यप्रकाशताका उदाहरण बतलाते हैं—अत्रैवेति। इस श्लोकका वर्णन पृ० १८७ में हम कर चुके हैं।

पूर्वोक्तमुपपादयति—

**अत्र सज्जयति सुरभिमासो न तावदर्पयत्यनङ्गाय शरानित्ययं वाक्यार्थः कविप्रौढोक्तिमात्रनिष्पन्नशरीरो मन्मथोन्मादकताऽपादनावस्थानं वसन्तसमयस्य सूचयति।**

मन्मथोन्मादकताऽऽपादनावस्थानं कामोद्दीपकताऽऽपत्तिदशा। इह कविप्रौढोक्तिनिष्पन्नाकारवसन्तकर्तृककामशरसज्जनतदर्पणाभावाद्यर्थः कामोद्दीपकताऽतिशयं व्यनक्तीत्यनेकपदापेक्षत्वाद् ध्वनेर्वाक्यप्रकाशता।

उक्त स्थलमें वसन्त, नूतन पल्लव रूप पंख युक्त आम्रमञ्जरीरूप बाणोंको सुसज्जित मात्र करता है, न कि विरही जन पर छोड़ने (वार करने) के लिये कामदेवको

सौंपता भी है, यह कविप्रौढोक्ति मात्र निष्पन्न वाक्यार्थ अभिधामूलव्यञ्जना द्वारा वसन्त ऋतुके अतिशय कामोद्दीपकत्वको व्यञ्जित करता है, अतः इस ध्वनिके अनेक पदापेक्ष व्यञ्जित होनेसे स्पष्ट ही वाक्यप्रकाशता प्रतीत होती है।

अथ स्वतस्सम्भव्यर्थशक्त्युद्भवध्वनेः पदप्रकाशतायां पञ्चमं भेदमुदाहरति—

**स्वतस्सम्भविशरीरार्थशक्त्युद्भवे प्रभेदे पदप्रकाशता यथा—**

त्वद्गृहे हस्तिदन्ता व्याघ्रकृत्तयश्च विक्रेयाः सन्ति ? इति तद्वाणिजकेन पृष्टो व्याधवृद्ध उत्तरं ददाति—

**'वाणिअअ ! हत्थिदन्ता कुत्तो अह्माण वाघकित्ती अ।**
**जाव लुलिआलअमुही घरम्मि परिसक्कए सुह्ना ॥'**

'वाणिजक ! हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च ।
यावल्लुलितालकमुखी गृहे परिष्वक्कते स्नुषा ॥' इतिच्छाया।

हे वाणिजक ! वणिज्याशील ! अस्माकं हस्तिनां दन्ताः, व्याघ्राणां कृत्तयश्चर्माणि च तावत् कुतः स्युः, यावत् लुलिता उल्लुठिता अलकाश्चूर्णकुन्तला मुखे यस्यास्तादृशी स्नुषा पुत्रस्य वधूः, गृहे परिष्वक्कते सविभ्रमं परिभ्रमतीत्यर्थः ।

तथा च 'अजिनं चर्मकृत्तिश्च' इत्यमरः । भौवादिको गत्यर्थकः ष्वक्कधातुः । उत्तरालङ्कार इति रुय्यकः ।

अलकालङ्कृतमुखत्वेन मनोहरतमायाः स्नुषाया विभ्रमावेक्षण-सुरतविलासाक्षिप्तचेताः सन्तततदुपभोगक्षामो मृगयाऽर्थं मत्सुतः क्षणमपि वहिर्न यातीति कुतो हस्तिदन्तादीनां मद्गृहे सम्भव इतीममर्थं स्वतस्सम्भविना तादृशस्नुषासत्वादिरूपार्थेन व्यज्यमानं 'लुलितालकमुखी' इत्येतत्पदं प्रकाशयतीति ध्वनेः पदप्रकाशता ।

अव स्वतः सम्भवी अर्थशक्त्युद्भव संलक्ष्य क्रम व्यङ्ग्य ध्वनिकी पदप्रकाश्यताका उदाहरण देते हैं—वाणिजकेति। हे व्याध ! क्या तेरे घरमें बेचने योग्य हाथीके दांत और व्याघ्र चर्म ( बघम्बर ) हैं ? इस तरह एक वणिकके द्वारा पूछे जाने पर बुड्ढा व्याधने कहा—हे वणिक् ! हमारे घरमें हाथीके दांत और बाघके चमरे तबतक कहाँसे हो सकते, जब तक कि लटकते हुए घुंघड़ीले बालोंसे अलंकृत अत्यन्त सुन्दर मुख वाली पुत्रवधू घरमें सविलास विचरती है।

यहां पर 'घुंघडीले कचोंसे सुशोभित मुख वाली पुत्रवधूके सविलास कटाक्ष-सुरत क्रीडादिसे अत्यन्त आकर्षित होकर हमेशा उसीमें लीन रहनेसे कुछ क्षीण सा मेरा लड़का क्षणभर भी उस ( वधू ) का सहवास छोड़कर मृगया ( शिकार ) आदिके लिये बाहर जाना पसन्द नहीं करता, अतः किस तरह मेरे घरमें हाथी

दांत आदिका सम्भव हो सकता है' इस व्यङ्ग्यार्थको स्वतः संभवी तादृश स्नुषा आदि वाच्यार्थकी शक्तिमूल व्यञ्जना द्वारा 'लुलितालकमुखी' यह पद अभिव्यञ्जित करता है, अतः इस ध्वनिकी पदप्रकाश्यता स्फुट ही है।

तदाह—

**अत्र 'लुलितालकमुखी' इत्येतत् पदं व्याधवध्वाः स्वतस्सम्भावितशरीरार्थशक्त्या सुरतक्रीडासक्तिं सूचयत् तदीयस्य भर्तुः सततसम्भोगक्षामतां प्रकाशयति।**

स्फुटम्।

उक्त स्थलमें 'लुलितालकमुखी' यह पद व्याध वधूके स्वतःसंभवी तादृश शरीर रूप अर्थशक्तिमूल व्यञ्जना द्वारा सुरत क्रीडासक्तिको सूचित करता हुआ उसके पतिकी सतत संभोगानुरक्ति जनित क्षीणताको व्यक्त करता है।

अथ षष्ठं भेदमुदाहरति—

**तस्यैव वाक्यप्रकाशता यथा—**

तस्य स्वतस्सम्भव्यर्थशक्त्युद्भवध्वनेरेव।

**'सिहिपिच्छकण्णऊरा वहुआ वाहस्स गव्विरी भमइ।**
**मुत्ताफलरइअपसाहणाणं मज्झे सवत्तीणम्॥'**

( गाथा सप्तशती )

उसी स्वतः सम्भवी अर्थशक्त्युद्भव संलक्ष्य क्रमव्यङ्ग्य ध्वनिकी वाक्य प्रकाश्यताका उदाहरण देते हैं—शिखीति। इसका वर्णन पृ० १९० में कर चुके हैं।

अस्यच्छायाप्रदर्शनं विवरणं च पूर्वमेव कृतमिति प्रकृतोक्त्युपपत्तये केवलं व्यङ्ग्यार्थमेव दर्शयति—

**अनेन वाक्येन व्याधवध्वाः शिखिपिच्छकर्णपूराया नवपरिणीतायाः कस्याश्चित् सौभाग्यातिशयः प्रकाश्यते, तत्सम्भोगकाले स एव व्याधः करिवरवधव्यापारसमर्थ आसीदित्यर्थप्रकाशनात्।**

अनेन 'सिहिपिच्छ' इत्यादिना। क्षणमपि त्यागासहिष्णुतया व्यज्यमानो गुणप्रकर्षो नवीनवध्वाः सौभाग्यातिशयमूलके गर्वे हेतुः। सपत्नीनां सम्भोगकाले भर्तुर्हस्तिनामपि हननसामर्थ्यसत्त्वेन तास्वनासक्तिः, तया तासां सौभाग्यापकर्षः, स च गर्वे हेतुस्तदुपपादकः। अन्यथा मौक्तिकभूषितानां पुरः पिच्छभूषणाया गर्वो नोपपद्येत। सर्वमेतत् स्वतस्सम्भव्यर्थबोधकं वाक्यमेव प्रकाशयतीति वाक्यप्रकाशता ध्वनेः।

वृत्तिकार केवल व्यङ्ग्यार्थको ही दर्शाते हैं—'शिखि पिञ्छ' इत्यादि वाक्य द्वारा क्षणभर भी सहवास त्यागकी असहिष्णुतासे व्यज्यमान गुण प्रकर्ष, मोरपिच्छोंको कर्णोंमें पहनी हुई नूतन विवाहिता किसी व्याध वधूके सौभाग्यातिशय मूलक गर्वका कारण हो रहा है। पर सपत्नियोंके संभोग दिनमें तो उसी पतिके हस्तिहनन सामर्थ्यके भी सूचित होनेसे उनमें अनासक्ति प्रतीत होती है और उससे उन स्त्रियोंका अतिशय दौर्भाग्य सूचित होता है, यह भी उक्त गर्वका ही उपपादक है, अन्यथा मौक्तिकभूषिताओंके सामने पिच्छभूषिता स्त्रीका गर्व करना संगत न होगा, इन सब बातोंको स्वतः संभवी अर्थका बोधक उक्त वाक्य ही प्रकाशित करता है।

इत्थमुदाहरणषट्कं प्रदर्श्य ध्वनेः पदप्रकाशताया असम्भवितां शङ्कते—

**ननु ध्वनिः काव्यविशेष इत्युक्तम्, तत् कथं तस्य पदप्रकाशता ?।**

उपपादयति—

**काव्यविशेषो हि विशिष्टार्थप्रतिपत्तिहेतुः शब्दसन्दर्भविशेषः, तद्भावश्च पदप्रकाशत्वे नोपपद्यते, पदानां स्मारकत्वेनावाचकत्वात्।**

काव्यविशेषो विलक्षणकाव्यम्, वैलक्षण्यं च शब्दार्थाधिकचमत्कारिव्यङ्ग्यबोधकत्वेन। अर्थे वैशिष्ट्यम्—व्यङ्ग्यत्वे सति तादृशचमत्कारभूमित्वमेव। प्रतिपत्तिर्बोधः। शब्दसन्दर्भविशेषस्तादृशवाक्यम्। तद्भावः काव्यविशेषत्वम्। वाक्यशक्तिवादिनां वेदान्तिनां प्राभाकरमीमांसकानां वा मते पदानां स्मारकत्वमिहास्थितमवसेयम्।

अयं भावः—ध्वनेः पदप्रकाशता तदा सम्भवति, यदि ध्वनेर्वाचकं पदं भवेत्, तन्नास्ति, यतः शब्दार्थातिशायिव्यङ्ग्यबोधकं काव्यमेव ध्वनिः, काव्यं पुनः सहृदयहृदयाह्लादजनकज्ञानजनकं वाक्यमेव, तद्वाचकता पदे कथं स्यात्, शक्तिग्राहकशिरोमणेर्व्यवहाराद् वाक्यस्यैव वाचकत्वेन पदानां तदभावात्, वाक्यावयवेषु पदेषु पदावयवेषु वर्णेष्विव स्मारकत्वमात्रस्य व्यवस्थापनात्। अथवा नहि शब्दाच्छब्दान्तरस्य बोधः प्रसिद्ध इति शब्दस्वरूपयोः पद-ध्वनिकाव्ययोः कथं मिथः प्रकाश्यप्रकाशकभावः सम्भवतीत्याक्षेपः। 'समुदाय एव ध्वनिरित्यत्र पक्षे चोद्यमेतत्' इति लोचनम्। तथा च यदि, पदप्रकाशत्वम्, न तर्हि ध्वनिकाव्यत्वम्, तत्त्वे वा कथं पदप्रकाशत्वम्, उभयोर्वैयधिकरण्यात्।

यहां यह प्रश्न उठता है, कि शब्दार्थसे अधिक चमत्कारजनक व्यङ्ग्यार्थ विषयक बोधजनक शब्दसंदर्भ विशेषात्मक विलक्षण काव्यको ही ध्वनि कहते हैं, अर्थात् सहृदय हृदयोंके आह्लादका जनक वाक्य ही काव्य है और लौकिक व्यव-

द्वारसे भी वाक्यगत शक्ति द्वारा ही आकांक्षाका पर्यवसान होकर वाक्यार्थ बोध निष्पन्न होता है, इसलिये पदमें शक्ति नहीं होनेसे ध्वनि पदप्रकाश्य कैसे हो सकती है ? क्योंकि पद तो केवल स्मारक ही होते हैं, अतः वे वाचक नहीं हो सकते।

समादधाति—

**उच्यते—स्यादेष दोषः, यदि वाचकत्वं प्रयोजकं ध्वनिव्यवहारे स्यात्। नत्वेवम्, तस्य व्यञ्जकत्वेन व्यवस्थानात्।**

प्रयोजकं साक्षात्परम्परासाधारणं कारणम्। व्यवस्थानं व्यवस्था, नियम इति यावत्। पदानां वाचकत्वाभावेन ध्वनेः पदप्रकाशत्वासम्भवो नैव वक्तुं शक्यते, ध्वनौ वाच्यार्थस्य प्रयोजनाभावादभिधारूपाया वाचकताया अनपेक्षणात्। 'व्यङ्ग्य-व्यञ्जकसम्बन्धनिबन्धनतया ध्वनेः' इति प्रागुक्तेः केवलं व्यञ्जनात्मिकाया व्यञ्जनाया अपेक्षितत्वात्। इत्थं च ध्वनेः पदात् प्रकाशो नाम बोधः, स चाभिधाप्रयोज्यो यदि न सम्भवति, तर्हि व्यञ्जनाप्रयोज्यः केन वार्यते, तावताऽपि पदप्रकाशत्वं ध्वनेरक्षतमेव।

अथवा ध्वन्यत इति ध्वनिरिति व्युत्पत्त्याऽतिशयचमत्कारी व्यङ्ग्यार्थोऽपि ध्वनि-पदार्थः, तस्य शब्दरूपत्वाभावात् तत्प्रकाशकत्वं प्राग्वद् व्यञ्जकत्वरूपं पदानां सम्भव-त्येवेति न काऽपि क्षतिरित्याकूतम्।

उसका यह उत्तर है, कि यह दोष तब लग सकता था, जब कि वाचकता (अभिधा) शक्ति भी ध्वनि व्यवहारका प्रयोजक होती, परन्तु ऐसी बात नहीं है, क्योंकि ध्वनि व्यवहारके लिये मुख्यरूपसे व्यञ्जना वृत्तिकी ही अपेक्षा होती है, इसलिये पदसे अभिधाके सहारे ध्वनिका बोध नहीं भी होगा, तो कोई क्षति नहीं है, क्योंकि व्यञ्जनाके बलसे ही पदद्वारा ध्वनिका बोध हो जायगा, इतनेसे ही ध्वनिकी पदप्रकाश्यता सिद्ध हो जाती है।

नन्वेकस्मात् पदाद् व्यङ्ग्यप्रतीतेरप्यदर्शनात् कथं पुनर्ध्वनेः पदप्रकाशतेत्या शङ्कां निरस्यति—

**किं च काव्यानां शरीरिणामिव संस्थानविशेषावच्छिन्नसमुदायसाध्याऽपि चारुत्वप्रतीतिरन्वयव्यतिरेकाभ्यां भागेषु कल्प्यत इति पदाना-मपि व्यञ्जकत्वमुखेन व्यवस्थितो ध्वनिव्यवहारो न विरोधी।**

संस्थानविशेषास्तत्तदवयवाः, तैरवच्छिन्नो विशिष्टो घटित इति यावत्, यः समुदायोऽवयवी। भागेष्ववयवेषु। काव्यानां शरीरितुल्यता रसादिविशिष्टानामेव, केवलशब्दार्थमात्राणां शरीरमात्रत्वात्।

अयमाशयः—नह्यवयवमन्तरेणावयविना कथमपि किञ्चिच्चारुत्वमाधातुं शक्यमित्यन्यथाऽनुपपत्त्या यथाऽवयविनीवावयवेष्वपि चारुत्वप्रयोजकता कल्प्यते, तथैवाकाङ्क्षाऽऽदिविशिष्टपदसमुदायरूपवाक्ये विद्यमाना चमत्कारिव्यङ्ग्यप्रतीतिप्रयोजकता पदेष्वप्यन्वयव्यतिरेकाभ्यां कल्पनीयैव, पदानां व्यञ्जकत्वाभावे तद्घटितवाक्यानामपि व्यञ्जकत्वासम्भवात्। इत्थं च यत्र वाक्यस्य व्यञ्जकत्वम्, तत्र तद्घटकपदानामपि व्यञ्जकत्वम्। दृश्यते च क्वचिद् वाक्यघटकादेकस्मादपि पदाद् व्यङ्ग्यप्रतीतिः। अतोऽनुपदं वक्ष्यति—'विच्छित्तिशोभिनैकेन' इत्यादि। तथा च पदानामपि व्यञ्जकत्वे सुस्थिते ध्वनिप्रकाशकता तेषामुचितैवेति दिक्।

एक पदमात्रसे व्यङ्ग्यकी प्रतीति नहीं होती है, अतः ध्वनि पदप्रकाश्य कैसे हो सकती? इस शङ्काको दूर करते हैं—किञ्चेति। अर्थात् जैसे मुख-नयनादि अवयव विशिष्ट सम्पूर्ण शरीरसे आत्मारूप शरीरीकी रमणीयताकी प्रतीति होने पर भी अत्यन्त सुन्दर मुखादि अवयवमें ही रमणीयताका प्रयोजकत्व माना जाता है, वैसे ही साकांक्षपद समुदायात्मक वाक्यसे व्यङ्ग्य रसादि विशिष्ट काव्यकी आह्लादजनकताकी प्रतीति होने पर भी 'अन्वय-व्यतिरेक' से तत्तत् पदविशेषके रहने पर ही रमणीयताकी प्रतीति होती है, और तत्तत्पद विशेषके न रहनेसे रमणीयताकी प्रतीति नहीं होती, इसलिये व्यञ्जकवाक्य घटक पदमें भी अनुभव सिद्ध व्यञ्जकत्व का अपलाप नहीं किया जा सकता है।

तदेव पुनरपरथा व्यवस्थापयति—

'अनिष्टस्य श्रुतिर्यद्वदापादयति दुष्टताम्।
श्रुतिदुष्टादिषु व्यक्तं तद्वदिष्टस्मृतिर्गुणम्॥
पदानां स्मारकत्वेऽपि पदमात्रावभासिनः।
तेन ध्वनेः प्रभेदेषु सर्वेष्वेवास्ति रम्यता॥
विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती॥'

इति परिकरश्लोकाः।

श्रुतिदुष्टेति भावप्रधानो निर्देशः पदविशेषणं वा। स्मारकत्वेऽपीत्यपिशब्दः काकाक्षिगोलकन्यायेन पदमात्रावभासिनोऽपीत्यत्राप्यन्वेति।

श्रुतिदुष्टत्वादिषु दोषेषु यद्वत् यथाऽनिष्टस्य श्रुत्युद्वेगजनकस्य शब्दस्य श्रुतिःश्रवणं दुष्टतामापादयति करोति, तद्वत् तथा इष्टस्य व्यङ्ग्यार्थस्य स्मृतिः स्मरणमपि गुणं चारुतोत्कर्षमापादयत्येव।

तेन हेतुना पदानां स्मारकत्वेऽवाचकत्वेन द्योतकत्वे सत्यपि, पदमात्रादवभा· सते वैयञ्जनिकप्रतीतिविषयो भवतीति तादृशस्य ध्वनेरपि सर्वेष्वपि प्रभेदेषु रम्यता रमणीयताऽस्त्येव ।

विच्छित्तिशोभिना चमत्कारकेण, एवेनापि भूषणेन कामिनीव, पदद्योत्येन पद- व्यङ्ग्येन ध्वनिना विलक्षणप्रतीतिविषयेण तदर्थेन, सुकवेर्भारती वाणी कवितेति यावत् , भातीत्यर्थः ।

यथा वाचकेष्वपि पदेषु तदंशेषु वर्णेषु वा, श्रुत्युद्वेगजनकतया दुष्टत्वं स्वीक्रियते, रमणीयार्थस्मारकतया तेषु चारुताऽपि स्वीकर्तव्यैवेति रमणीयव्यङ्ग्यार्थप्रकाशकत्वं पदानाम् , पदव्यङ्ग्यत्वं च तादृशार्थरूपध्वनेरायातमेव तुल्यन्यायात् । किञ्च कामिन्ये· कमात्रावयवस्थितभूषणनिदर्शनमपि पदप्रकाशतां रम्यतां च द्रढयति—ध्वनेरिति नात्र पर्यनुयोगावसर इति सारम् ।

उक्त बातको ही दूसरे ढङ्गसे पुष्ट करते हैं—अनिष्टस्येति । जैसे श्रुतिदुष्टत्वादि दोषोंमें कर्ण कटुता जनक कठोर शब्दका श्रवण, दुष्टताको व्यक्त करता है, वैसे ही अत्यन्त हृद्य व्यङ्ग्यार्थ विषयक स्मरण भी रमणीयताको प्रकाशित करता है इसलिये पदके स्मारकत्व पक्षमें अवाचक होनेसे द्योतकत्व होने पर भी पदमात्रसे व्यञ्जना द्वारा विलक्षण व्यङ्ग्यार्थ विषयक प्रतीति होती है, अतः पदमात्र प्रकाश्य उक्त ध्वनि प्रकारोंमें रमणीयताका ह्रास नहीं होता, क्योंकि जैसे अत्यन्त सुन्दर एक भी भूषणसे कामिनी बहुत ही रमणीय प्रतीत होती है, वैसे ही एक भी पद द्वारा प्रकाशित अत्यन्त आह्लाद जनक व्यङ्ग्यार्थ विषयक ध्वनिसे सुकवि जनकी कविता अत्यन्त रमणीय मालूम पड़ती है ।

एवं व्यञ्जकमुखेन संलक्ष्यक्रमध्वनिं निरूप्यासंलक्ष्यक्रमध्वनिमपि तथा निरूपयति—

**'यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु ।**
**वाक्ये सङ्घटनायां च स प्रबन्धेऽपि दीप्यते ॥ ५८ ॥**

तुशब्दः संलक्ष्यक्रमव्यङ्ग्यापेक्षयाऽस्य वैलक्षण्यं सूचयति ।

यःपुनरलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः, स वर्णे नित्यस्फोटात्मन्यक्षरे, पदे प्रयो- गार्हानन्वितैकार्थबोधके सुप्तिङन्तलक्षणे, आदिशब्देनानर्थके पदावयवे, वाक्ये योग्य- ताऽऽकाङ्क्षाऽऽसत्तिभृति पदसमूहे, सङ्घटनायां पदवाक्यसन्निवेशात्मकरीतौ, प्रबन्धे योग्यताऽऽदिमद्वाक्यप्रकरलक्षणे महावाक्ये च दीप्यते प्रकाशत इत्यर्थः । यत्त्विह निमित्तार्थिका सप्तमीति लोचनम् , तदालोचनीयम्-'निमित्तात् कर्मयोगे' इति वार्ति-

केन विहितायाः सप्तम्या अप्राप्तेः, तथा हि—'केशेषु चमरीं हन्ति' इत्यादितदुदाहरणेषु संयोगसमवायान्यतरसंसर्गेण हननक्रियाकर्मभूतचमर्यादिविशिष्टगलरूपनिमित्तवाचककेशादिपदेभ्यः सप्तमी भवति। प्रकृते दीपनक्रियाया अकर्मकत्वात् तत्कर्मणा सह रसादिप्रकाशनिमित्तवर्णादीनां तादृशसम्बन्धाभावान्नैव सा सम्भवतीत्यौपश्लेषिकाधार एव सप्तमी युक्ता।

उक्त रीतिसे व्यञ्जक रूपमें संलक्ष्य क्रमव्यङ्ग्य ध्वनिका निरूपण कर व्यञ्जक रूपमें ही असंलक्ष्य क्रमव्यङ्ग्य ध्वनिका निरूपण करते हैं—यस्त्विति। जो असंलक्ष्यक्रमव्यङ्ग्यात्मक रसादि ध्वनि है, वह वर्ण, पद, पदावयव, वाक्य, पदवाक्य संनिवेशात्मक रीति और महावाक्य प्रभृति सभी स्थानोंमें प्रकाशित होती है।

ननु व्याकरणमहाभाष्यादिषु वर्णानामनर्थकत्वोक्तेः कथं प्रकृते रसादिव्यङ्ग्यबोधकतेत्याक्षेपं निरसितुं वर्णानां रसादिव्यञ्जकत्वव्यवस्थापिके कारिके अवतारयति—

तत्र वर्णानामनर्थकत्वाद् द्योतकत्वं न सम्भवतीत्याशङ्क्येदमुच्यते—

'शषौ सरेफसंयोगौ ढकारश्चापि भूयसा।
विरोधिनः स्युः शृङ्गारे तेन वर्णा रसच्युतः॥ ५९॥
त एव तु निवेश्यन्ते वीभत्सादौ रसे यदा।
तदा तं दीपयन्त्येव तेन वर्णा रसच्युतः॥ ६०॥

शृङ्गारपदं करुणशान्तयोरुपलक्षणम्। आदिशब्देन रौद्रवीरयोर्ग्रहणम्।

भूयसा बाहुल्येन रेफसंयोगेन सहितौ शषौ शकारषकारौ ढकारश्चापि, यतः शृङ्गारे तद्व्यञ्जने विरोधिनः प्रतिबन्धका भवन्ति, तेन हेतुना वर्णा रसांश्च्योतन्त्यासिञ्चन्ति द्योतयन्तीति रसच्युतः, यद्वा रसाच्च्यवन्ते च्युता भवन्ति तेन प्रकाशयन्तीति रसच्युतो भवन्ति।

ते रेफसंयुक्तशषादयो वर्णा एव यदा वीभत्सादौ रसे व्यञ्जनीये निवेश्यन्ते निबध्यन्ते, तदा यतस्तं रसं दीपयन्त्येव, न तु विरोधिनो भवन्ति, तेन हेतुना वर्णा रसच्युतो मन्यन्त इत्यर्थः।

'च्युतिर् आसेचने' 'च्युङ् गतौ' इति भौवादिको धातू, ततः क्विप्।

इदमिहाभिधीयते—न हि महाभाष्ये सर्वेषामेव वर्णानामानर्थक्यमुक्तम्, यदप्युक्तम्, तदप्यभिधाशक्तिविरहमूलकमेव, तेन व्यञ्जनाशक्तेस्तेष्वपि सद्भावाद् रसादिव्यञ्जकत्वं सम्भवत्येव। तत्रैव का युक्तिरिति चेत्?

श्रूयताम्—यदि वर्णानामपि व्यक्तिप्रयोज्यरसादिप्रतीतौ सहकारिता न स्यात् , तर्हि शृङ्गाररसे व्यञ्जनीये, कठोरवर्णसद्भावे तत्प्रतीत्यभावः, वीभत्सादौ पुनः कठोर वर्णसत्त्व एव तत्प्रतीत्युत्कर्षः कथं स्यात् । अतः कोमलवर्णैः सह शृङ्गारादिप्रतीतेः, कठोरवर्णैः सह वीभत्सादिप्रतीतेश्चान्वयव्यतिरेकावेव तत्र तेषां सहकारिकारणतां निर्णयतः । अत एव परुषा वृत्तिर्गौडीरीतिर्वा वीभत्सादावनुकूला, शृङ्गारादौ प्रतिकूला, उपनागरिका वृत्तिर्वैदर्भीरीतिर्वा शृङ्गारादावनुकूला, वीभत्सादौ प्रतिकूलेति व्यवस्थीयते ।

ननु विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति भरतोक्ते रसप्रतीतौ विभावादिप्रतीतेः प्रतीयमानविभावादीनां वा कारणता प्रसिद्धा, वर्णानामभिनवा पुनरिह सा कथमुच्यते—मैवम् , विभावादिप्रतीतिर्हि रसप्रतीतिं जनयति, तत्र शब्दाधीनतत्प्रतीतिं केचनानुकूला वर्णाः सहकुर्वन्ति, परे प्रतिकूलाश्च ते प्रतिबध्नन्तीत्यानुभविकी केषांचन सहकारिता, परेषां प्रतिबन्धकता च वर्णानां कल्प्यते, न तु कारणतेति निष्पत्तेः ।

उनमें सर्वप्रथम वर्णोंके अनर्थक होनेसे रसादि व्यञ्जकत्व नहीं हो सकता। इस सन्देहको दूर करते हैं—तत्रेति । प्रायः करके रेफ संयोग सहित तालव्य शकार एवं मूर्धन्य षकार और ढकार वर्ण शृंगार, करुण और शान्त रसके प्रतिबन्धक होते हैं, इसीलिये तुल्ययुक्त्या रसादिके प्रति वर्ण, व्यञ्जक भी होते हैं, परन्तु वे ही रेफ संयुक्त-श-ष-ढ आदि वर्ण जब बीभत्स, रौद्र और वीर रसमें प्रयुक्त होते हैं, तब उक्त इन रसोंको प्रकाशित ही करते हैं, इसलिये वर्णोंको भी अन्वय-व्यतिरेकसे रसादिके प्रति व्यञ्जकत्व मानते हैं ।

कारिकाद्वयतात्पर्यं विवृणोति वृत्तिकृत्—

**श्लोकद्वयेनान्वयव्यतिरेकाभ्यां वर्णानां द्योतकत्वं दर्शितं भवति ।**

इह प्रथमश्लोकेन व्यतिरेको द्वितीयश्लोकेन चान्वयः प्रत्याय्यत इति श्लोकाभ्यामिति द्वन्द्वनिर्देशो न कृतः । तदुक्तौ यथासङ्ख्यान्वये प्रथमश्लोकेनान्वयप्रत्यायनाभावादनुपपत्तिः स्यादिति व्युत्क्रमेणाप्यन्वयबोधनार्थं श्लोकद्वयेनेत्युक्तम् ।

उक्त श्लोकद्वय घटक प्रथम श्लोकसे व्यतिरेक ( व्यञ्जक वर्णोंके नहीं रहनेसे शृंगारादि रसकी प्रतीति नहीं होती ) द्वारा और द्वितीय श्लोकसे अन्वय ( व्यञ्जक वर्णोंके रहनेसे बीभत्सादि रसकी प्रतीति होती है ) द्वारा वर्णोंका व्यञ्जकत्व दर्शाया गया है अर्थात् कोमल वर्णोंसे शृंगारादिकी प्रतीति और कठोर वर्णोंसे बीभत्सादिकी प्रतीति अन्वय व्यतिरेक द्वारा सिद्ध होती है ।

इत्थं वर्णानां रसद्योतकत्वं व्यवस्थाप्य, पदानामप्युदाहरणमुखेन व्यवस्थापयति—

**पदे चालक्ष्यक्रमव्यङ्ग्यस्य द्योतकत्वं यथा—**

अत्रापि पदे द्योतकत्वं पूर्ववदेव विभावादिप्रतीतिकृततद्द्योतनसहकारित्वम्। एवं परत्रापि शब्दे ज्ञेयम्। द्योतनसहकारिष्वपि वर्णपदादिषु द्योतकत्वमहत्त्वमारोप्यत इति तदुक्तिः।

इस प्रकार वर्णोंका रस व्यञ्जकत्व बतलाकर पदोंके भी उदाहरण द्वारा असंलक्ष्य क्रमव्यङ्ग्य ध्वनि व्यञ्जकत्वको व्यवस्थापित करते हैं—पदे इति।

वत्सराज उदयनो लावाणके प्रेयसीं वासवदत्तां दग्धां सम्भाव्यानुध्यायन् परिदेव्यति—

'उत्कम्पिनी भयपरिस्खलितांशुकान्ता,
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती।
क्रूरेण दारुणतया सहसैव दग्धा,
धूमान्धितेन दहनेन न वीक्षिताऽसि॥'

अयि प्रेयसि! उत्कम्पिनी समुद्भूतकम्पा, भयेन परिस्खलितः परिभ्रष्टोऽंशुकान्त उत्तरीयप्रान्तो यस्यास्तादृशी, तथा ते मदनुभवैकगोचरीभूते कथमपि विस्मर्तुमशक्ये अनिर्वचनीयसौन्दर्यविभ्रमशालिनी वा विधुरे रक्षणोपायाभावाद् विकले लोचने कश्चिन्मां रक्षेदित्याशया प्रतिदिशं कान्दिशीकतया क्षिपन्ती सञ्चारयन्ती त्वं क्रूरेण प्रोज्ज्वलितेन दहनेन दाहकारिणा वह्निना दारुणतया निष्करुणत्वेन सहसाऽविचार्य तत्कालमेव दग्धा भस्मीकृताऽसि; न पुनर्धूमान्धितेन धूमोपहतदृष्टिना तदाच्छन्नेन तेन वीक्षिताऽवलोकिताऽसीदित्यर्थः।

तथा च 'अंशुकं शुक्लवस्त्रे स्यात् वस्त्रमात्रोत्तरीययोः' इति रभसः। 'विधुरं विकले त्रिषु' इति मेदिनी च।

तदवस्थां त्वां दृष्ट्वा वह्निः कथमपि दग्धुं न प्रवर्त्तेतेति तात्पर्यम्।

अत्र वासवदत्तारूपेष्टनाशजन्यवत्सराजवृत्तिचित्तवृत्तिविशेषात्मकशोकस्थायिभावकस्य रत्युद्दीपनविभावचर-तादृशलोचनविक्षेपाद्युद्दीपनविभावकस्य कम्पाद्यनुभावकस्य तदनुमितभयादिव्यभिचारिकस्य करुणरसस्य 'ते' इति पदं तल्लोचनद्वयस्य निर्वचनीयगुणगणस्मरणप्रयोजकत्वेन व्यञ्जने सहकारीति स्फुटं रसस्य पदप्रकाशता। अनुभूतार्थकत्वाच्च तच्छब्दस्य न यच्छब्दोपादानापेक्षा।

उसी असंलक्ष्य क्रम व्यङ्ग्य ध्वनिके प्रति पदगत व्यञ्जकत्वका उदाहरण देते हैं—उत्कम्पिनीति। वत्सराज उदयन लावाणकमें प्रेयसी वासवदत्ताके जल जानेका अनुमानकर विलाप करते हैं—हे प्रिये! भयसे कांपती हुई एवं शरीरसे गिरती हुई वस्त्राञ्चलकी छोरवाली तथा किसी भी अवस्था (हालत) में नहीं भुलाने योग्य अत्यन्त

कातर आंखोंसे अभी 'कौन मुझे बचायगा' इस तरह चौतरफ ताकती हुई तुमको अत्यन्त कठोर अग्निने निर्दय होकर जला दिया, उस (अग्नि) ने धूमसे अपनी आंखोंके बन्द हो जानेके कारण तुमको नहीं देखा, यदि ऐसी बात न होती, तो उस दयनीय अवस्थामें तुमको देखकर अग्नि जलानेके लिये कथमपि उद्यत नहीं होता।

यहां पर वासवदत्ता रूप इष्टजनके नाशसे उत्पन्न वत्सराज वृत्ति चित्तवृत्ति विशेषात्मक शोक स्थायी भाव वाले करुणरसको 'ते' यह पद उक्त नायिकाके नयन-वृत्ति अनिर्वचनीय गुण सौन्दर्य स्मारण द्वारा अभिव्यक्त करता है, अतः इस ध्वनिमें स्पष्ट ही पदप्रकाश्यता प्रतीत होती है।

तदाह—

अत्र हि 'ते' इत्येतत्पदं रसमयत्वेन स्फुटमेवावभासते सहृदयानाम्।

पदस्य रसमयत्वं च व्यञ्जकतया रसवत्त्वम्। यद्वा स्वरूपार्थे मयट्, तादात्म्यमौपचारिकम्।

उक्त स्थलमें 'ते' यह पद सहृदयोंको स्फुटरूपसे ही अत्यन्त आह्लालजनक प्रतीत होता है।

दार्ढ्याय पदप्रकाशतामेव रसस्य पुनरुदाहरति—

यथा वा—

वैदेहीविरही रामो विलपति—

'झगिति कनकचित्रे तत्र दृष्टे कुरङ्गे,
रभसविकसितास्ते दृष्टिपाताः प्रियायाः।
पवनविलुलितानामुत्पलानां पलाश—
प्रकरमिव किरन्तः स्मर्यमाणा दहन्ति ॥'

तत्र तस्मिन् मारीचरक्षोरूपे कनकचित्रे हिरण्यकर्बुरे कुरङ्गे हरिणे दृष्टे सति, झगिति शीघ्रं रभसेन हर्षेण विकसिताः प्रसृताः तेऽनुभूतिमात्रविषयाः प्रियाया जानक्या दृष्टिपाताः कटाक्षविक्षेपाः, पवनेन विलुलितानां तरलितानामुत्पलानां नीलकमलानां पलाशप्रकरं दलसमुदयं किरन्तः परितो विक्षिपन्त इव स्मर्यमाणा विरहदशायामिदानीं स्मृतिविषयतामापद्यमाना दहन्ति, मां तापयन्तीत्यर्थः।

तथा च 'मृगे कुरङ्गवातायुहरिणाजिनयोनयः' इत्यमरः। 'रभसो हर्षवेगयोः' इति विश्वश्च।

इहापि 'ते' इति पदं पूर्ववद् विप्रलम्भश्रृङ्गारव्यञ्जकम्।

रसकी ही पदप्रकाश्यताका दूसरा उदाहरज बतलाते हैं—झगितीति। सीताके

विरहसे अत्यन्त खिन्न होकर रामचन्द्रजी विलाप करते हैं—उस मारीच नामक राक्षस रूप सुवर्णमय हरिणको देखनेसे शीघ्रही अत्यन्त कुतूहलसे विस्फारित (फैले हुए) एवं पवन कम्पित नील कमल पत्रोंको पराजित करने वाले प्रियाके प्रिय विलोकन स्मृति विषय होने पर मुझे अत्यन्त सतारहे हैं, यहां पर 'ते' यह पद पूर्ववत् विप्रलम्भ शृङ्गारका व्यञ्जक होता है।

अथ रसादिध्वनेः पदांशप्रकाशतामुदाहरति—

पदावयवेन द्योतनं यथा—

प्रवासी कश्चन सुहृदं वदति, स्वयं वा परामृशति—

'व्रीडायोगान्नतवदनया सन्निधाने गुरूणां,
बद्धोत्कम्पं कुचकलशयोर्मन्युमन्तर्निगृह्य।
तिष्ठेत्युक्तं किमिव न तया यत् समुत्सृज्य बाष्पं,
मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः ॥' इत्यत्र त्रिभागशब्दः।

रसप्रकाशक इति शेषः। गुरूणां श्वश्रूप्रभृतीनां सन्निधाने निकटे, व्रीडायोगात् लज्जोदयात्, नतवदनया नम्रीकृतास्यया, तया प्रेयस्या, कुचकलशयोः स्तनकुम्भयोर्बद्धो योजित उत्कटः कम्पो येन, तं मन्युं शोकं क्रोधं वा अन्तर्हृदये निगृह्य निरुध्य, प्रवसन्तं मां प्रति, 'तिष्ठ' 'मा प्रवासं व्राजीः' इति किमिव नोक्तं कथं न कथितम्, 'अपि तूक्तमेव' यद् बाष्पमश्रु समुत्सृज्य सन्त्यज्य, चकिताया मृगयुत्रस्ताया हरिण्या इव हारि तरलताऽऽधिक्येन मनोहरं यन्नेत्रं तस्य त्रिभागः कटाक्षरूपः, मयि—आसक्तो, मामुद्दिश्य निक्षिप्त इत्यर्थः।

तथा च 'मन्युः क्रतौ क्रुधि। दैन्ये शोके च' इति मेदिनी।

अत्र स्वतन्त्रपदरूपोऽपि समस्तपदावयवत्वात् पदांशरूपस्त्रिभागशब्दः प्रवासहेतुकविप्रलम्भशृङ्गारप्रकाशकः। तदुक्तमाचार्यैः—'त्रिभाग इति गुरुजनमवधीर्यापि सा मां यथा तथाऽपि साभिलाषमन्युदैन्यगर्भमधुरं विलोकितवतीत्येवं स्मरणेन परस्परहेतुकत्वप्राणप्रवासविप्रलम्भोद्दीपनं त्रिभागशब्दसन्निधौ स्फुटं भातीति'। त्रिशब्दात् पूरणार्थकप्रत्ययोत्पत्तेरौचित्यात्, 'तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः' इत्यादि कालिदासप्रयोगवदुपपत्तिश्चिन्त्या सा चेत्थम्—'सङ्ख्यावाचकानां वृत्तिविषये पूरणार्थत्वनियमात्' इति नियमेन त्रिभिर्भागो यस्येति ज्यौतिषरीत्या बहुव्रीहिणा वाऽवगन्तव्या।

क्रमप्राप्तं वाक्यव्यङ्ग्यरसादिध्वनिमुदाहर्तुं विभजते—

वाक्यरूपश्चालक्ष्यक्रमव्यङ्ग्यो ध्वनिः शुद्धोऽलङ्कारसङ्कीर्णश्चेति द्विधामतः।

वाक्यं रूपं यस्येति विग्रहे तु व्यङ्ग्यार्थकध्वनिशब्देन सामानाधिकरण्यं नोपपद्येत ध्वनेः शब्दरूपत्वे तु वाक्यप्रकाशता प्रकृतोपादानसङ्गतिश्च दुरुपपादा स्यादिति रूपणं रूपं वाक्यात् रूपं रूपसम्पत्तिर्वा यस्य सः, वाक्यरूपो वाक्यव्यङ्ग्य इत्यर्थः। शुद्धोऽर्थालङ्कारानुपस्कृतः, तदुपस्कृतोऽलङ्कारसङ्कीर्ण इति द्विविधः सः। वाक्यरूप इति प्रथमान्तनिर्देशेन पदादिप्रकाशध्वन्यपेक्षयाऽस्य वैलक्षण्यं सूच्यते। तथा हि—पदतदंशादयः स्वयमसम्पूर्णशरीराः सामस्त्येन रसोपयोगिविभावादिप्रतीतिं जनयितुमनर्हा इति घटोत्पत्तौ व्यस्तानां दण्डादीनामिव रसप्रतीतौ तेषां निमित्ततामात्रम्। वाक्यं पुनः समस्तरूपं सर्वथा समर्थमिति तस्य दण्डादिकूटस्येव तत्र स्वातन्त्र्यम्।

अब क्रम प्राप्त वाक्य व्यङ्ग्य रसादि ध्वनिका उदाहरण प्रदर्शनार्थं विभाग करते हैं—वाक्येति। वाक्यप्रकाश्य असंलक्ष्य क्रमव्यङ्ग्य ध्वनि 'शुद्ध' और 'अलंकार संकीर्ण' के भेदसे दो प्रकार की है।

तत्र प्रथमं भेदमुदाहरति—

**तत्र शुद्धस्योदाहरणं यथा, रामाभ्युदये 'कृतककुपितैः' इत्यादिश्लोकः।**

रामाभ्युदयं यशोवर्मप्रणीतं नाटकम्। स च कान्यकुब्जेश्वरः।

'कृतककुपितैर्वाष्पाम्भोभिः सदैन्यविलोकितै-
र्वनमपि गता यस्य प्रीत्या धृताऽपि तथाऽम्बया।
नवजलधरश्यामाः पश्यन् दिशो भवतीं विना,
कठिनहृदयो जीवत्येव प्रिये! स तव प्रियः॥' इति पूर्णः श्लोको

विरहे वैदेहीमुद्दिश्य रामेणोक्तः प्रकृतोपयोगितया व्याख्यायते—

हे प्रिये! (त्वं) यस्य मे प्रीत्या प्रणयेन, अम्बया कौशल्यया तथाऽनेकविधाग्रहैः धृता निरुद्धाऽपि, कृतककुपितैः कृत्रिमरोषैः, वाष्पाम्भोभिरश्रुसलिलैः दैन्येन विषादेन सह विलोकितैरीक्षणविभ्रमैः, (हेतुभिः) वनमपि गता का कथा गृहस्य। स तव प्रियः (रामः) कठिनहृदयः कठोरमनाः, नवैर्जलधरैः श्यामा नीला दिशः पश्यन्, भवतीं विना जीवत्येव, न तु मृत इत्यर्थः।

अत्र त्वया यदर्थं सुखसम्पत्तयस्त्यक्ताः, तेन त्वद्विरहे दूयमानेनापि तुच्छं जीवनमपि न त्यक्तमित्यहो तस्य दौरात्म्यमिति रामोक्तिः सकलवाक्यमेव सीतारामयोरनुसरणादिभिः परिपुष्टं परस्परानुरागं प्रकाशयद् विप्रलम्भश्रृङ्गारं व्यनक्ति।

न चात्र कस्यचनार्थालङ्कारस्य सङ्करः।

उनमें शुद्धका उदाहरण बतलाते हैं—तत्रेति। विरहसे पीड़ित होकर रामचन्द्र सीताको लक्ष्यकर कहते हैं—हे प्रिये! जिस मेरे प्रणयसे कौशल्याके द्वारा अनेकों प्रकार रोके जाने पर भी कृत्रिम कोप, अश्रुपात, विषाद युक्त रोदनादि उपायोंसे वनको भी तूं चल पड़ी, वह तुम्हारा प्रिय राम अत्यन्त कठोर हृदय करके बादलोंकी काली २ घन घोर घटाओंसे व्याप्त दिशाओंको देखता हुआ तुम्हारे बिना भी जी ही रहा है, मरा नहीं। यहां पर तुमने जिसके लिये सारे राज पाट तक छोड़ दिये, उस व्यक्तिने तुम्हारे विरहमें दुःखी होकर अपने एक तुच्छ जीवन तकको भी नहीं छोड़ा, बतलाओ कितना खेदका विषय है, इस रामोक्तिसे सारा ही वाक्य अनुरागको प्रकाशित करता हुआ विप्रलम्भश्रृङ्गारको व्यक्त करता है।

तदाह—

एतद्धि वाक्यं परस्परानुरागं परिपोषप्राप्तं प्रदर्शयत् सर्वत एव परं रसतत्त्वं प्रकाशयति।

सर्वत इति पदाद्यपेक्षयेत्यर्थः न हि पदादीनामिह व्यञ्जकत्वम्, अपि तु वाक्यस्यैवेति द्रष्टव्यम्।

उक्त वाक्य सीता और रामके परस्पर अनुरागको अनुसरणादि द्वारा पुष्ट करता हुआ सब ओरसे ही विप्रलम्भ श्रृंगारको प्रकाशित करता है, अर्थात् पूरा वाक्य ही उक्त (विप्रलम्भ श्रृङ्गार) रसका व्यञ्जक है।

द्वितीयमुदाहरति—

अलङ्कारान्तरसङ्कीर्णो यथा—'स्मरनवनदीपूरेणोढाः' इत्यादिश्लोकः।

अलङ्कारान्तरेणालङ्कारभेदेन सङ्कीर्ण इत्यर्थः, 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इति मेदिनीकोशात्। न त्वन्येनालङ्कारेण, प्रकृतेऽलङ्कारद्वयानुपनिपातात्।

'स्मरनवनदीपूरेणोढाः पुनर्गुरुसेतुभि—
र्यदपि विधृता दुःखं तिष्ठन्त्यपूर्णमनोरथाः।
तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा—
नयननलिनीनालानीतं पिबन्ति रसं प्रियाः।' इति पूर्णः श्लोकः

पूर्ववद् व्याख्यायते—

स्मर एव वेगप्रकर्षाद् नवो नदीपूरः प्रावृषेण्यः सरित्प्रवाहस्तेन ऊढास्तृणकाष्ठादिवदज्ञानपूर्वमेव परस्परसाम्मुख्यं प्रापिताः, पुनर्गुरवः श्वश्रूप्रभृतय एव स्वैरप्रसरवारकतया सेतवस्तैर्विधृता निरुद्धा अत एवापूर्णमनोरथाः प्रियाश्च प्रियाश्चेत्येकशेषे

प्रियाः—प्रेयांसः प्रेयस्यश्च, यदपि दुःखं वियोगकदनानुभवेन तिष्ठन्ति, पृथगिति शेषः। तथाऽपि परस्परम् उन्मुखा इत्यौन्मुख्येनैव मिथस्तादात्म्योल्लासाद् देहे निस्स्पन्दे, लिखितप्रख्यैरालेख्यसदृशैरङ्गैरुपलक्षिताः, नयनान्येव नलिन्या नालानि वृन्तानि तैरानीतं प्रापितं रसं मिथोऽभिलापात्मकविप्रलम्भशृङ्गारं पिबन्त्यास्वादयन्तीत्यर्थः। सङ्गमाभावेऽपि मिथ आकस्मिकदृष्टिमिश्रणविनोदेनैव सुखं समयमतिवाहयन्तीति भावः।

इह स्मरे नवनदीपूरत्वस्य, गुरुषु सेतुत्वस्य, नयनेषु नलिनीनालत्वस्य चारोपाद् रूपकेण रसोपकारितयाऽलङ्कारेणोपस्कृतो विप्रलम्भः पारस्परिकदर्शनात् सम्भोगो वा शृङ्गाररसः सूच्यते वाक्येन।

अब वाक्यप्रकाश्य अलंकारान्तर संकीर्ण असंलक्ष्य क्रमव्यङ्ग्य ध्वनिका उदाहरण बतलाते हैं-स्मरेति। कामदेव रूप वर्षा कालीन अत्यन्त वेग युक्त नदी प्रवाहके द्वारा तृण काष्ठवत् आपसमें एकको दूसरेके सामने ले जाये जाने पर भी श्वश्रू प्रभृति श्रेष्ठजन रूप सेतु ( बाँध ) द्वारा यथेच्छ रमणादिसे रोक दिये जानेके कारण उपभोगसे वञ्चित होकर पूर्ण मनोरथ नहीं होने पर यद्यपि प्रिय-प्रेयसी दोनों दुःखके साथ अलग २ ही रहते हैं, तथापि परस्पर अत्यन्त अनुराग जनित उत्कण्ठा पूर्वक एक दूसरेमें लीन होकर चित्र लिखितकी तरह निस्पन्द अङ्गोंसे स्तब्ध होकर कमलिनी नालकी नली रूप परस्पर ईक्षण द्वारा पिलाये गये अभिलाषरूप विप्रलम्भ शृङ्गारात्मक अलौकिक रसामृतका आस्वादन करते ही हैं, अर्थात् संगम नहीं हो सकने पर भी परस्पर आकस्मिक दृष्टि मिश्रण जनित मनोरञ्जनसे ही सुखपूर्वक समय बिताते हैं। यहां पर कामदेवमें नवीन नदी प्रवाहत्वके एवं श्रेष्ठ जनोंमें सेतुत्वके और नयनोंमें नलिनी नालत्वके आरोपसे रसपोषक रूपकालंकार द्वारा परिपुष्ट होकर विप्रलम्भ या परस्पर दर्शन रूप संभोग शृङ्गार वाक्यसे प्रकाशित होता है।

तदाह—

अत्र हि रूपकेण यथोक्तव्यञ्जकलक्षणानुगतेन प्रसाधितो रसः सुतरामभिव्यज्यते।

यथोक्तव्यञ्जकलक्षणानुगतेन 'विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन' इत्यादिद्वितीयोद्द्योतोक्तालङ्कारलक्षणमनुसृतेन। तेनात्र रूपकेणारम्भं विधाय नायकयुगुले नलिनीनालद्वारा रसपानकारितया चक्रवाकमिथुनत्वानारोपणाद् रूपकेणैव निर्वाहं न कृतवानिति न्यूनत्वाक्षेपो निरस्तः, तत्रैव 'नातिनिर्वहणैषिता' इत्युक्तेः। प्रसाधितो विभावाद्यलङ्करणद्वारोपस्कृतः।

उक्त स्थलमें व्यङ्ग्य रसादिके उपकारकतया विवक्षित उक्त रूपकालंकारसे समलंकृत होकर विप्रलम्भ श्रृंगार स्फुट रूपसे अभिव्यक्त होता है।

संघटनाव्यङ्ग्यं रसादिध्वनिमुदाहर्तुमुक्तं स्मारयन् संघटनास्वरूपोपस्थापनगर्भ-विभागबोधककारिकामवतारयति—

**अलक्ष्यक्रमव्यङ्ग्यः संघटनायां भासते ध्वनिरित्युक्तम्, तत्र संघटना-स्वरूपमेव तावन्निरूप्यते—**

संघटना वामनोक्ता रीतिः। उक्तं 'वाक्ये संघटनायां च' इत्यादिना पूर्वकारिकायाम्। निरूप्यते गुणपृथक्कारेण विचार्य्यते।

संघटनासे भी असंलक्ष्य क्रम व्यङ्ग्य ध्वनि प्रकाशित होती है, यह बात कह चुके हैं, अतः रीति स्वरूप संघटनाका निरूपण करते हैं।

**'असमासा समासेन मध्यमेन च भूषिता।**
**तथा दीर्घसमासेति त्रिधा संघटनोदिता॥ ६१॥'**

अविद्यमानः समासो यस्यां सा वैदर्भीरूपैका, मध्यमेनादीर्घेण समासेन भूषिता च पाञ्चालीरूपा द्वितीया, तथा दीर्घः समासो यस्यां सा गौडीरूपा तृतीयेति त्रिधा त्रिप्रकारा संघटना रीतिः क्रमेणोपनागरिका कोमला परुषा च वृत्तिर्वा उदिता, कथितेत्यर्थः। तदुक्तम्—

'अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता। विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते॥'

'आश्लिष्टश्लथभावां तु पुराणच्छाययाऽन्विताम्।
मधुरां सुकुमारां च पाञ्चाली कवयो विदुः॥'
'समस्तात्युद्भटपदामोजः कान्तिगुणान्विताम्।
गौडीयामपि गायन्ति रीतिं रीतिविचक्षणः॥' इति वामनेन।
'माधुर्य्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते॥'
'ओजः प्रकाशकैस्तैस्तु परुषा' 'कोमला परैः॥' इति मम्मटेन च।

असमास, मध्यम (अदीर्घ) समास और दीर्घ समासके भेदसे क्रमशः वैदर्भी, पाञ्चाली और गौड़ी रूप तीन प्रकारकी संघटनात्मक रीतियां होती हैं, उनको क्रमशः उपनागरिका, कोमला और परुषा नामकी वृत्तियां भी कहते हैं।

संघटना—गुणविवेकमुपक्रममाणः कारिकामवतारयति—

**कैश्चित् तां केवलमनूद्येदमुच्यते—**

**'गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा।**
**रसांस्तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः॥ ६२॥'**

माधुर्यादीन् माधुर्यौजःप्रसादान् गुणान् आश्रित्यावलम्ब्य तिष्ठन्ती सा संघटना रसान् व्यनक्ति, तन्नियमे तस्याः संघटनाया नियन्त्रणे, वक्तृवाच्यस्य च औचित्यं हेतुरित्यर्थः।

गुणाश्रिताया रसव्यञ्जिकायाः संघटनाया वक्त्रौचित्यानुसारेण वाच्यौचित्यानुसारेण च व्यवस्थेति सारम्।

संघटनाया गुणाश्रयत्वं वक्ष्यमाणविकल्पदिशाऽवसेयम्। तृतीयचरणे 'रसः' इत्यपपाठः, रसस्य संघटनानियामकत्वाभावात्, व्यञ्जनकर्मानुक्तिप्रसक्तेश्च।

माधुर्य, ओज, प्रसादादि गुणोंका अवलम्बन कर रहने वाली संघटनात्मक रीति रसादिको व्यक्त करती है और उसका नियन्त्रण वक्ता तथा वाच्यार्थके औचित्य पर ही निर्भर रहता है, अर्थात् गुणाश्रित एवं रस व्यञ्जक संघटनात्मक रीतिकी यथोचित व्यवस्था वक्ता और वाच्यके औचित्यानुसार ही होती है।

कारिकापूर्वार्धं विवृणोति—

**संघटना रसादीन् व्यनक्ति, गुणानाश्रित्य तिष्ठन्तीति।**

गुणाश्रया हि संघटना रसव्यञ्जिकेत्यर्थः।

गुणोंका आश्रयण कर रहनेवाली संघटना (रीति) रसोंको व्यक्त करती है।

अथ संघटनाया गुणतादात्म्यम्, उत गुणवृत्तित्वम्, गुणानां संघटनावृत्तित्वं वेति सम्भावयितुं शक्यं पक्षत्रयं परीक्षितुमुपक्षिपन् निर्दिशति—

**अत्र च विकल्प्यम्—गुणानां संघटनायाश्चैक्यम्, व्यतिरेको वा? व्यतिरेकेऽपि द्वयी गतिर्बोद्धव्या—गुणाश्रया संघटना? संघटनाश्रया वा गुणा इति।**

विकल्प्यं विभज्य विवेचनीयम्। व्यतिरेको भेदः।

अब उक्त संघटनात्मक रीति गुणोंसे भिन्न है, और गुण वृत्ति है इस सिद्धान्त पक्षको स्थापित करनेके लिये विश्लेषणके साथ विशद विवेचन करते हैं—अत्रेति। उक्त संघटना और गुण ये दोनों एक ही पदार्थ हैं, या भिन्न हैं? भेद पक्षमें भी संघटना गुण वृत्ति है, या गुण ही संघटना वृत्ति हैं? इस तरह दो पक्ष होते हैं।

तत्र प्रथमतृतीयपक्षयोः कारिकांऽशं व्याख्याति—

**तत्रैक्यपक्षे, सङ्घटनाश्रयगुणपक्षे च—गुणानात्मभूतानाधेयभूतान् वाऽऽश्रित्य तिष्ठन्ती संघटना रसादीन् व्यनक्तीत्ययमर्थः।**

धर्मधर्मिणोस्तादात्म्यमङ्गीकुर्वतां मते गुणानां संघटनायाश्च यदैक्यं, तदा संघट-

नाऽऽत्मका एव गुणा इत्युक्तम्—आत्मभूतानिति। संघटनायामेव गुणान् मन्वानाना- मुद्भटादीनां नये तु संघटनाऽधिकरणम्, धर्मित्वात्, गुणास्त्वाधेया धर्मत्वादित्यु- क्तम्—आधेयभूतानिति। आश्रयणं च पूर्वत्र घटे नष्टे घटाकाशो महाकाशमाश्रय- दित्यादिव्यवहारात् तादात्म्यसद्भावेऽपि काल्पनिकभेदेन, उत्तरत्र तु वृक्षो भूमिमाश्रय- तीत्यादिव्यवहारादाधाराधेयभावेनैव।

उनमें ऐक्य पक्षमें धर्म-धर्मीके ऐक्यमतकी दृष्टिसे संघटनात्मक गुणोंको आश्रय कर रहने वाली संघटना रसोंको व्यक्त करती है। एवं संघटना वृत्ति गुण पक्षमें अर्थात् संघटनामें गुण रहते हैं, इस दृष्टिसे आधेय भूत गुणोंको ग्रहण कर संघट- नात्मक रीति रसोंको व्यक्त करती है, यह उक्त कारिकाके पूर्वार्द्धका अर्थ होता है।

द्वितीयपक्षे तदर्थमाह—

**यदा तु नानात्वपक्षो गुणाश्रयसंघटनापक्षश्च, तदा गुणानाश्रित्य तिष्ठ- न्तीति गुणपरतन्त्रस्वभावा, न तु गुणरूपैवेत्यर्थः।**

नानात्वं भेदः। गुणाश्रया संघटना इत्युपाध्यायाश्रिताश्छात्रा इत्यादिदर्शनादा- श्रयणमायत्तत्वमात्रेण, नत्वाधाराधेयभावेन, गुणेषु संघटनास्थितेरप्रसिद्धेः।

परन्तु जब भेद पक्ष है, अर्थात् गुणोंसे संघटना भिन्न है और गुणोंमें ही संघटना रहती है यह पक्ष मानते हैं, तब गुणोंका आश्रयण कर रहने वाली संघटना रसोंको व्यक्त करती है, इस अर्थके द्वारा यह सिद्ध होता है कि संघटना गुणके अधीन रहने वाली ही है, गुण स्वरूप नहीं है।

पक्षत्रयप्रदर्शनप्रयोजनं दर्शयति—

**किं पुनरेवं विकल्पनस्य प्रयोजनम्? इत्यभिधीयते, यदि गुणाः संघ- टना चेत्येकं तत्त्वम्, सङ्घटनाश्रया वा गुणाः, तदा संघटनाया इव गुणा- नामप्यनियतविषयत्वप्रसङ्गः।**

किं प्रयोजनमिति जिज्ञासायामभिधीयत इत्यभिसम्बन्धः। एकं तत्त्वमभिन्नं वस्तु।

अयं भावः—अस्मिन् रसे व्यङ्ग्ये इयमेव संघटना भवेदिति संघटनाया यथा विषयनियमो नास्ति, तथैव संघटनारूपत्वे संघटनानिष्ठत्वे च गुणानामपि विषय- नियमो न स्यादित्यापत्तिः। एकत्र तादात्म्यम्, अपरत्राधेयानामाधारानुसारेणैव व्य- वस्था तत्र निमित्तम्।

उक्त पक्ष त्रय करनेका प्रयोजन बतलाते हैं कि—इस व्यङ्ग्य रसमें यही (अमुक नामकी) संघटना होगी, इस प्रकार जैसे संघटनामें कोई विशेष नियम नहीं है, उसी

प्रकार गुणोंको भी संघटना रूप या संघटना वृत्ति मानने पर कोई विशेष नियम नहीं होगा।

ननु केयमापत्तिः ? नैव गुणानामपि नियतविषयत्वमित्यत आह—

गुणानां हि माधुर्यप्रसादप्रकर्षः करुणविप्रलम्भशृङ्गारविषय एव । रौद्राद्भुतादिविषयमोजः । माधुर्यप्रसादौ रसभाव-तदाभासविषयावेवेति विषयनियमो व्यवस्थितः ।

गुणानां हि विषयनियमो व्यवस्थित इति सम्बन्धः । 'शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् ।' 'माधुर्यम्' इति प्रागुक्ते माधुर्यगुणस्य प्रसादप्रकर्षः स्फीतिमाधिवयम्, यद्वा माधुर्यप्रसादयोः प्रकर्षः, करुण-विप्रलम्भशृङ्गारौ विषयौ यस्य तादृशः । 'रौद्रादयो रसाः' इत्याद्युक्तेरोजसः पुनर्गुणस्य रौद्राद्भुतवीरबीभत्सा विषयाः । सम्मिलितयोर्माधुर्यप्रसादयोस्तु रसो भावस्तदाभासौ च विषया इति विषयनियमः साम्प्रतं सङ्घटनातादात्म्याद्यङ्गीकारे भज्येत । प्रसादस्य सकलरसभावादिविषयता तु रुढैव । माधुर्यस्य पुनः कथं तथोपादानमिति न ज्ञायते, तस्याधुनैव करुणादिमात्रविषयत्वस्य कथनात् । यद्वा स्वतन्त्रयोर्माधुर्यप्रसादयो रसाः पृथक् पृथग् विषयाः, सम्मिलितयोस्तु सकला रसादय इति व्यवस्था कल्प्यताम् ।

संघटनाकी तरह गुणोंमें भी अनियत व्यवस्थाका इष्टापत्तिके द्वारा स्वीकार नहीं कर सकते, क्योंकि 'माधुर्य और प्रसाद गुणकी उत्कृष्टता करुण एवं विप्रलम्भ श्रृंगारमें होती है, एवं ओजगुणकी उत्कृष्टता रौद्र, अद्भुत और वीरादि रसोंमें ही होती है, तथा माधुर्य और प्रसाद गुण रस-भाव और तदाभासमें ही होते हैं' इस तरह गुणोंकी व्यवस्था नियत है।

नन्वेवं संघटनाया अपि विषयनियमो वक्तुं शक्यते, तथा हि—शृङ्गारादौ व्यङ्ग्येऽसमासा, रौद्रादौ दीर्घसमासा, रसादिसामान्ये मध्यमसमासा चेति को दोष इत्यत आह—

सङ्घटनायास्तु स विघटते ।

तुशब्दो गुणव्यवच्छेदकः । स नियमो विषयस्य । विघटतेऽनियतो भवतीत्यर्थः । बहुत्र व्यभिचारदर्शनादिह तथा नियमो दुरुदाहर इति भावः ।

परन्तु श्रृंगारादि व्यङ्ग्य रसमें 'वैदर्भी' एवं रौद्र-वीरादिमें 'गौड़ी' और रस सामान्यमें 'पाञ्चाली' रीतिको मानकर संघटनाकी विषय व्यवस्था नहीं कर सकते, क्योंकि निम्न प्रकार संघटनाकी विषय व्यवस्था नियत नहीं है।

तामेवाव्यवस्थामुपपादयति—

तथा हि—शृङ्गारेऽपि दीर्घसमासा दृश्यन्ते, रौद्रादिष्वसमासाश्चेति ।

व्यभिचारलक्ष्यबाहुल्यबोधनाय बहुवचनम् ।

क्योंकि श्रृंगारादिमें भी दीर्घ समासात्मक गौड़ी रीति देखी जाती है और रौद्र आदिमें भी असमासात्मक वैदर्भी रीति देखी जाती है।

व्यभिचारमुदाहरणेन दर्शयति—

तत्र श्रृङ्गारे दीर्घसमासा यथा—'मन्दारकुसुमरेणुपिञ्जरितालका' इति।

मन्दारस्य देवद्रुमविशेषस्य कुसुमानां रेणुभिः परागैः पिञ्जरिताः पिशङ्गिता अलका यस्याः सेत्यर्थः। इह श्रृङ्गाररसेऽपि समासदीर्घतेति कल्पितसङ्घटनानियमो व्यभिचरति। 'नात्र श्रृङ्गारः कश्चिदित्याशङ्क्य द्वितीयमुदाहरणमाहेति'—परकीयमवतरणकल्पनं चिन्त्यम्, इयतोऽपि श्रृङ्गारालम्बनोपस्थापकतया सर्वथा तदभावस्य वक्तुमशक्यत्वात्।

उनमें पहले श्रृंगार रसमें दीर्घ समासका उदाहरण देते हैं—मन्दारेति मन्दार नाम कल्प वृक्षके पुष्पोंकी पराग धूलियोंसे धूसर (भूड़े) रङ्ग वाले घुंघराले केश पाशोंसे विभूषित नायिका शोभ रही है, यहां पर श्रृंगार रसमें भी दीर्घ समास (गौड़ी रीति) देखा जा रहा है, अतः उक्त संघटनाका नियम व्यभिचरित हो रहा है।

किन्तु—श्रृङ्गारव्यञ्जकसन्दर्भैकदेशोऽयमालम्बनमात्रवर्णनलक्षण इति श्रृङ्गारोऽत्र स्फुटो न प्रतीयत इति स्फुटश्रृङ्गारव्यञ्जकमुदाहरणान्तरं दर्शयति—

यथा वा—

'अनवरतनयनजललवनिपतन-परिमुषितपत्रलेखान्तम्।
करतलनिषण्णमबले! वदनमिदं कं न तापयति॥' इत्यादौ।

मानिनीमनुनयत उक्तिरियम्। अयि! अबले! अनवरतं सततं नयनजलस्याश्रुणो लवानां विन्दूनां निपतनेन परिमुषितो मार्जनाचोरितः पत्रलेखान्तः कपोललिखितमकराकारो यत्र तादृशं, पुनः करतले वामकरमध्ये निषण्णं स्थितम्, इदं त्वदीयं वदनं पश्यन्तं कं जनं न परितापयतीत्यर्थः।

अत्रेर्ष्याविप्रलम्भश्रृङ्गारे व्यङ्ग्येऽपि दीर्घसमासा सङ्घटना दृश्यत इति व्यभिचारः स्फुटः।

अब स्फुट रूपसे प्रतीयमान श्रृंगारका व्यञ्जक दूसरा उदाहरण दे रहे हैं—यथावेति। मानिनीको मनाता हुआ नायक कह रहा है—अयि मानिनि। लगातार नयनाश्रु बून्दोंकी झरी लगी रहनेसे धुलकर मिट जाने वाले मकराकृति पत्र रचनाके चिह्नसे युक्त बायीं हथेली पर रखा हुआ यह तुम्हारा मुख किस दर्शकको दुःखी नहीं

करता है। यहां पर ईर्ष्या विप्रलम्भ श्रृंगारात्मक व्यङ्ग्य रसमें भी दीर्घ समासात्मक संघटना व्यञ्जक रूपसे देखी जा रही है।

पुनरन्यं व्यभिचारं दर्शयति—

**तथा रौद्रादिष्वप्यसमासा दृश्यन्ते**

सङ्घटना इति शेषः। उचितास्तु दीर्घसमासा एव।

वैसे ही रौद्रादि रसमें भी असमासात्मक संघटना व्यञ्जक रूपसे ही देखी जा रही, है, जहांकि दीर्घ समासका होना उचित था।

व्यभिचारस्थलं दर्शयति—

**यथा—'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः' इत्यादौ।**

प्रागोजोगुणोदाहरणतया व्याख्यातोऽयं श्लोकः। अत्र रौद्ररसेऽपि व्यङ्ग्ये समासदैर्घ्याभावाद् व्यभिचारः।

दोषात्मक व्यभिचार स्थल बतलाते हैं—यो य इति। इस श्लोकको ओज गुणके उदाहरण रूपसे पृ. १२० में बतला चुके हैं। अश्वत्थामा अपने पिता द्रोणके अवैध निधनसे क्रुद्ध होकर कह रहा है—पाण्डवोंके बीच जिस २ को अपने बांह बलका घमण्ड है, उस सबको मैं अभी यमपुरी भेजता हूँ, इसतरह व्यङ्ग्य रौद्र रसमें भी दीर्घ समास नहीं होनेसे व्यतिरेक व्यभिचार दोष लग रहा है।

उपसंहरति—

**तस्मान्न गुणाः सङ्घटनास्वरूपा न च सङ्घटनाश्रयाः।**

तस्माद् गुणानामप्यनियतविषयत्वापत्तिहेतोः। इत्थं च प्रथमतृतीयपक्षौ निरस्तौ बोध्यौ।

इसलिये गुण संघटना स्वरूप नहीं हैं, एवं संघटनामें वृत्ति भी नहीं हैं, इससे यह सारांश निकला कि गुण और संघटना दोनों भिन्न २ वस्तु हैं और संघटना ही गुणाश्रित है, गुण संघटनाश्रित नहीं हैं।

पुनरश्शङ्कते—

**ननु यदि सङ्घटना गुणानां नाश्रयः, तर्हि किमालम्बना एते परिकल्प्यन्ते।**

आलम्बनमाधारः। निराधाराणामाधेयानां कल्पनाऽसम्भवाद् गुणानामाधारत्वेन सङ्घटनाया अस्वीकारात् कस्तेषामाधारत्वेन कल्प्यते, शब्दार्थाश्रयत्वे त्वलङ्काराभेदः स्यादिति प्रष्टुरभिप्रायः।

यदि संघटना गुणोंका आधार नहीं है, तो गुणोंका आधार कौन है? अर्थात् गुण कहां रहते हैं।

उत्तरयति—

उच्यते—प्रतिपादितमेवैषामालम्बनम्।

प्रतिपादितमेव कारिकायां द्वितीयोद्द्योते। एषां गुणानाम्। आलम्बनं रसरूपम्। उक्त गुणोंके रस रूप आधारको द्वितीय उद्योतमें कह चुके हैं।

तामेव कारिकामनुवदति—

'तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।
अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्॥' इति।

कारिकेयं पूर्वं विवृतैव। रस एवाधिकरणं गुणानामित्यनया प्रतिपादितम्।

तस्माद् द्वितीयपक्ष एव सहृदयहृदयङ्गम इति बोध्यम्।

उक्त कारिकाका अनुवाद करते हैं—तमर्थमिति। इसकी व्याख्या पृ. ११५ में कर चुके हैं, अर्थात् रस ही गुणोंका आधार है, यह उसका आशय है।

गुणानां सङ्घटनाश्रयत्वेऽनियतविषयता दुरुद्धरैवेति सङ्घटनामनुपादाय शब्दाश्रयान् गुणान् मन्वान औपचारिकत्वेनानभिमतमप्यविवेकिजनानुरोधेन तृतीयपक्षमंशतोऽभ्युपगच्छति—

अथवा भवन्तु शब्दाश्रया एव गुणाः।

शब्दानामाश्रयता च व्यञ्जकतासम्बन्धेनेत्यनुपदं स्फुटीभविष्यति।

अथवा शब्दोंसे गुण अभिव्यञ्जित होते हैं, अतः रसवृत्ति गुणोंका व्यञ्जकत्व सम्बन्धसे शब्द भी औपचारिक ( काल्पनिक ) आधार हो सकता है।

तत्रापत्तिमाशङ्क्य निराकरोति—

न चैषामनुप्रासादितुल्यत्वं शङ्कनीयम्, यस्मादनुप्रासादयोऽनपेक्षितार्थविस्ताराः शब्दधर्मा एव। शब्दधर्मत्वं चैषामन्याश्रयत्वेऽपि शरीराश्रयत्वमिव शौर्यादीनाम्।

एषां गुणानां शब्दवृत्तित्वादनुप्रासादिभिः शब्दालङ्कारैस्तुल्यत्वं च न शङ्कनीयम्, यस्माद्धेतोः, अनुप्रासादयः—अनपेक्षितोऽर्थविस्तारो येषु यैर्वा तादृशाः केवलं शब्दधर्माः। यथा शौर्यादीनां गुणानामन्याश्रयत्वेऽप्यात्मधर्मत्वेऽपि, शरीराश्रयत्वं, तथैव माधुर्यादीनां गुणानां रसाश्रयत्वेऽपि शब्दधर्मत्वमौपचारिकं वेद्यमित्यर्थः।

अयं भावः—अनुप्रासादिष्वर्थापेक्षा नास्ति, माधुर्यादिषु तु सा परिहर्तुमशक्यैव,

तेन शब्दाश्रयत्वमात्रेण साम्यमवलोक्य तादात्म्यं न कल्पनीयम् । किञ्च न हि गुणानां वास्तविकी शब्दधर्मता किन्त्वौपचारिक्येव, तथा हि-यथाऽविवेकिनः शरीरात्मनोः पार्थक्यमवधारयितुमसमर्था आत्मवृत्तीनपि शौर्यादीन् 'शरीरमस्य शूरम्' इत्यादि-व्यवहारतः शरीरवृत्तीन् मन्यन्ते, तथैव रसवृत्तीनपि माधुर्यादींस्तत्तद्रसव्यञ्जकवाच्यो-पस्थापनसामर्थ्यमेव शब्देषु गुणान् मत्वा शब्दधर्मत्वेन मन्यन्त इत्यविवेक एवोप-चारस्य मूलम् । अविवेकमूलकतयैव चास्याभ्युपगमपक्षस्यानुपादेयता सूच्यते ।

उक्त कल्पना द्वारा शब्द वृत्ति होनेसे ही अनुप्रासादि शब्दालंकारके समान गुणोंमें शब्दालंकारत्वका संदेह नहीं करना चाहिये, क्योंकि अनुप्रास आदि केवल शब्दके ही धर्म हैं, उनमें अर्थोंकी अपेक्षा नहीं होती, किन्तु माधुर्यादि गुणोंमें तो नियमतः अर्थोंकी अपेक्षा होती है, अतः आत्मवृत्ति शौर्य आदि गुणोंका 'शरीरमस्य शूरम्' इस रीतिसे परम्परया शरीर वृत्तितया व्यवहार होने पर भी वे ( शौर्यादि ) शरीरके धर्म जैसे नहीं माने जाते हैं, वैसे ही रस वृत्ति गुण भी कथंचित् शब्द वृत्ति होनेसे ही शब्दके धर्म नहीं हो सकते, अर्थात् गुण शब्दके वास्तविक धर्म नहीं हैं, अपितु काल्पनिक ही माने गये हैं ।

गुणानां सङ्घटनाऽऽश्रयत्वमुपेत्य शब्दाश्रयत्वं व्याहृतवन्तं प्रतिवादी शङ्कते—

**ननु यदि शब्दाश्रया गुणाः, तत् सङ्घटनारूपत्वं तदाश्रयत्वं वा तेषां प्राप्तमेव ।**

तदिति तदाऽर्थकमव्ययम् । सङ्घटनारूपत्वं च पूर्ववद्धर्मधर्मिणोरभेदेन । तदा-श्रयत्वं सङ्घटनाऽऽश्रयत्वम् । प्राप्तमेव भवद्भिरनुक्तमप्यर्थत आपतितमेव ।

यदि आप गुणोंको शब्द वृत्ति मानते हैं, तो संघटनाके शब्दात्मक होनेसे धर्म-धर्मिके ऐक्य पक्षमें गुणोंको भी संघटना होना स्वयं सिद्ध हो जाता है, या धर्म धर्मीके अनैक्य पक्षमें भी गुणोंका संघटनात्मक शब्द वृत्ति होना स्वभावतः फलित हो जाता है ।

स एवोपपादयति—

**नह्यसङ्घटिताः शब्दा अर्थविशेषं प्रतिपाद्य रसाद्याश्रितानां गुणानामवाचकत्वादाश्रया भवन्ति ।**

असङ्घटिताः सङ्घटनारहिता अप्राप्तवाक्यभावा इति यावत्, शब्दा अर्थविशेषं रसव्यञ्जकमर्थं प्रतिपाद्य रसाद्याश्रितानां रसादिवृत्तीनां गुणानामाश्रया न भवन्ति, अवाचकत्वादित्यर्थः ।

इदमुक्तं भवति-सङ्घटना नाम शब्दानां वाक्यत्वसम्पादकः परस्परसम्बन्धः,

तदभावे विशृङ्खलशब्दानां वाच्यार्थाबोधकत्वाद् रसव्यञ्जकत्वेन गुणव्यञ्जकत्वरूपगुणाश्रयत्वस्याप्यभावस्तेषां सुतरामेवेति गुणानां शब्दवृत्तित्वमभ्युपगच्छता भवताऽकामेनापि सङ्घटनाधर्मत्वमभ्युपगतमेव, तत् कोऽयमाडम्बरः, यत् सङ्घटनाशब्दो निह्नूयते।

क्योंकि असंघटित शब्द व्यङ्ग्यार्थ विशेषके प्रतिपादन करनेमें असमर्थ होनेके कारण रसाश्रित गुणोंके अवाचक होनेसे आधार नहीं हो सक्ते हैं, अतः रस व्यञ्जनार्थ गुण व्यञ्जक शब्दोंमें संघटनाको मानना आवश्यक है।

निरस्यति—

**नैवम्—वर्णपदव्यङ्ग्यत्वस्य रसादीनां प्रतिपादितत्वात्।**

प्रतिपादितत्वात् पूर्वमिति शेषः। न हि रसादीनां वाक्यव्यङ्ग्यत्वमेवेति नियमः, यत् सङ्घटनयाऽपि तत्रायातव्यम्। निरपेक्षाणामपि पदानां वर्णानां च स्वसौष्ठवबलेन रसव्यञ्जकत्वदर्शनाद् रसानां 'यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु' इति कारिकाकृता वर्णव्यङ्ग्यत्वस्य पदव्यङ्ग्यत्वस्य च कथितत्वात्। इत्थं च यदा सङ्घटनाशून्यानां वर्णानां पदानां वा गुणाधिकरणरसव्यञ्जकत्वम्, तदा सर्वथा सङ्घटनासम्पर्कविरहात् कथं पुनस्तस्या गुणव्यञ्जकत्वेन तदधिकरणत्वमित्युत्तरयितुराशयः।

उक्त पूर्व पक्षका खण्डन करते हैं—नैवमिति। अर्थात् संघटना रहित वर्ण या पदसे भी रसादिकी अभिव्यक्ति होती है, इसलिये रस व्यञ्जनार्थ सभी जगह संघटनाका होना कोई आवश्यक नहीं है, अन्यथा सर्वथा संघटना रहित वर्ण या पदमें सर्वानुभव सिद्ध रस व्यञ्जन द्वारा गुणाभिव्यञ्जकत्वका अपलाप करना पड़ेगा।

ननु रसानां वाक्यव्यङ्ग्यतायान्तु सङ्घटितपदसमुदायात्मकवाक्यानुषङ्गित्वेन तया विना वाक्यस्वरूपसौष्ठवविरहेण च, सङ्घटनाया अपि रसव्यञ्जकत्वमायातमेवेत्याक्षेपिपक्षमभ्युपगच्छन् क्षिपति—

**अभ्युपगते वा वाक्यव्यङ्ग्यत्वे रसादीनां, न नियता काचित् सङ्घटना तेषामाश्रयत्वं प्रतिपद्यत इत्यनियतसङ्घटनाः शब्दा एव गुणानां व्यङ्ग्यविशेषानुगता आश्रयाः।**

अप्यर्थको वाशब्दः। तेषां गुणानाम्। व्यङ्ग्यविशेषानुगता रसव्यञ्जकाः।

रसादीनां व्यञ्जकानि वाक्यानीति स्वीकारेऽपि सङ्घटनाया नैव गुणाश्रयत्वं साधयितुं शक्यम्, तस्या रसेषु प्रागुक्तदिशा नियमाभावात्। तथा हि—शृङ्गारेऽपि दीर्घसमासा, ओजस्यसमासा सा दृश्यत इति रसव्यञ्जन एव चेद् व्यभिचारः, तर्हि दूरे गुणव्यञ्जनप्रत्याशेति रसव्यञ्जननियताः शब्दा एव गुणाश्रया उच्यन्ते, न तु सङ्घटनेत्यभिप्रायः।

अथवा रसादिको संघटित पदसमुदायात्मक वाक्य व्यङ्ग्यत्व मान लेने पर भी किसी नियत संघटनाको गुणका अयत्व नहीं सिद्ध कर सकते, क्योंकि शृङ्गारमें दीर्घ समास और रौद्रादिमें असमास रूप संघटना भी देखी जारही है, अतः रस व्यञ्जनार्थ उस (संघटना) की कोई नियत व्यवस्था नहीं होनेसे रस व्यञ्जनमें नियत शब्द ही गुणोंके आश्रय ( व्यञ्जक ) हैं, संघटना गुणोंका आश्रय नहीं है।

सङ्घटनाऽऽश्रयगुणवादी पुनराक्षिपति—

**ननु माधुर्ये यदि नामैवमुच्यते, तदुच्यताम् , ओजसः पुनः कथमनियतसङ्घटनशब्दाश्रयत्वम् । नह्यसमासा सङ्घटना कदाचिदोजस आश्रयतां प्रतिपद्यते ।**

माधुर्यगुणे व्यञ्जनीये सर्वत्रासमासा क्वचिद् 'अनवरत-' इत्यादौ दीर्घसमासा च सङ्घटना दृश्यत इति तद्व्यञ्जकसङ्घटनाया अनियतत्वं वक्तुमुचितम् , न तु समान्येन सङ्घटनायाः, ओजोव्यञ्जने दीर्घसमासेतरसङ्घटनायाः कुत्रचिदप्यनुपलम्भादोजोव्यञ्जकसङ्घटनाया नियतत्वादित्याशयः ।

'वाक्यव्यङ्ग्यध्वन्यभिप्रायेणेदं मन्तव्यम्' इति चन्द्रिका । 'वर्णपदव्यङ्ग्येऽप्योजसि रौद्रादिस्वभावे वर्णपदानामेकाकिनां स्वसौन्दर्यमपि न तादृगुन्मीलति तावद् , यावत् तानि समाससङ्घटनाऽङ्कितानि न कृतानीति सामान्येनैवायं पूर्वपक्षः' इति लोचनम् । वयमप्यत्र लोचनपक्ष एव पतामः ।

पुनः संघटना वृत्ति गुणवादी पूर्व पक्ष करता है—नन्विति । माधुर्य गुण व्यञ्जन स्थलमें असमास एवं दीर्घ समासादि संघटनाकी कोई नियत-व्यवस्था नहीं रहने पर भी ओज गुण व्यञ्जनार्थ नियत संघटित दीर्घ-समासात्मक शब्द ही व्यवस्थित देखे जाते हैं, क्योंकि असमस्त संघटित शब्द ओज गुण व्यञ्जक नहीं होते हैं।

प्रतिपक्षी निराकरोति—

**उच्यते—यदि न प्रसिद्धिमात्रग्रहदूषितं चेतः, तदत्रापि न ब्रूमः ।**

प्रसिद्धिमात्रे केवलायां प्राचीनरूढौ, ग्रहोऽभिनिवेशस्तेन दूषितमभिनिविष्टं चेतो भवतामिति शेषः, यदि नास्ति, यत्तदा, अत्रापि—ओजोव्यञ्जकसङ्घटनानियतत्वेऽपि, नेति ब्रूमो नियतत्वाभावं वदाम इत्यर्थः ।

थूत्करोतीत्यादिवच्चरमनकारस्यानितिपरत्वेऽप्यनुकरणत्वं बोध्यम् । आदिमनकाररहितपाठे तु, न ब्रूमो नैव वदाम इत्यर्थः । अनुपदमेव खण्डनादाद्यनकारघटितपाठ एव सन्दर्भशुद्धिः ।

आग्रहाविष्टजनोक्तेरनुचितत्वादुपेक्षणीयतेत्यभिसन्धिः ।

उक्त पूर्वपक्षका खण्डन करते हैं—उच्यते इति। यदि आप केवल रूढिवादके दुराग्रहसे नहीं, अपितु जिज्ञासु भावसे ही पूछते हैं, तब तो इतना कहना ही पर्याप्त होगा, कि ओज गुण स्थलमें भी केवल दीर्घ समास रूप संघटना, उस (ओज गुण) के व्यञ्जनार्थ नियत रूपसे व्यवस्थित नहीं है।

ओजस्यपि सङ्घटनाया अनियतत्वं स्पष्टमाह—

**ओजसः कथमसमासा सङ्घटना नाश्रयः ।**

कथं नेत्यन्वयः अस्त्येवेति तात्पर्यम् ।

क्योंकि 'यो यः शस्त्रं बिभर्त्ति' इत्यादि स्थलमें असमासात्मक संघटना भी ओज गुणका व्यञ्जक हो रही है।

उपपादयति—

**रौद्रादीन् हि प्रकाशयतः काव्यस्य दीप्तिरोज इति प्राक् प्रतिपादितम्। तच्चौजो यद्यसमासायामपि सङ्घटनायां स्यात्, तत् को दोषो भवेत्।**

हि यतो रौद्रादीन् रसान् प्रकाशयतो व्यञ्जतः काव्यस्य या वैयञ्जनिकी दीप्तिरुज्ज्वलितप्रायता व्यङ्ग्या, तदेवौज इति प्रागूगुणनिरूपणप्रस्तावे प्रतिपादितम्। तदोजश्च यद्यसमासायामपि सङ्घटनायां स्याद्, व्यङ्ग्यतयेति शेषः। तत् तर्हि को दोषः, न कोऽपीत्यर्थः।

चित्तौज्ज्वल्यरूपमोजो यथा दीर्घसमाससङ्घटनया व्यज्यते, तथैव यदि क्वचिदर्थप्रौढिप्रभावेणासमाससङ्घटनया व्यज्यते, तर्हि न कथमोजोव्यञ्जकसङ्घटनाया अप्यनियतत्वमित्याकूतम्।

उसीका उपपादन करते हैं—रौद्रादि रसोंके प्रकाशक काव्यका जो व्यञ्जना द्वारा उज्ज्वलताख्य दीप्ति रूप ओज गुण व्यक्त होता है, वह यदि असमासात्मक संघटनासे भी अभिव्यक्त होने वाला माना जाय, तो क्या क्षति होगी, अर्थात् जैसे चित्त विस्फार रूप उज्ज्वलता दीर्घ समाससे भासित होती है, वैसे ही अर्थकी प्रौढ़िवश असमाससे भी भासित होती है।

नन्वोजसि दीर्घसमासाभाववत्सङ्घटनाव्यङ्ग्येऽपि, स्थितिविपर्यासेन बलवान् काव्यप्रयोजनीभूतचमत्कारविशेषविरह आपतेदिति नियमभङ्गकलङ्कमेवान्यथनीयमिति प्राप्ते ब्रवीति—

**न चाचारुत्वं सहृदयहृदयसंवेद्यमस्ति।**

चकारो हेत्वर्थकः। यतोऽचारुत्वं न सहृदयहृदयसंवेद्यं न तस्मादित्यग्रिमवाक्येनान्वयः।

नहि भवदुक्त्यैव लक्ष्यमन्यथाकर्तुं शक्यते, किन्त्वचारुत्वप्रतीत्या, तत्र पुनः सहृदयहृदयमेव साक्षितामवलम्बते। तच्च 'यो यः शस्त्रं बिभर्ति इत्यादि तदुदाहरणे चारुत्वाभावं नानुभवतीति कुतो न सङ्घटनानियमभङ्गः स्थेयानिति भावः।

क्योंकि 'यो यः' इत्यादि स्थलमें भी सहृदयोंको अरमणीयताकी प्रतीति नहीं होती है, इसलिये विद्वानोंके अनुभवोंका अपलाप नहीं किया जा सकता, इससे यह सिद्ध होता है, कि गुणादिव्यञ्जनार्थ संघटनाका कोई नियम नहीं है।

उपसंहरति—

**तस्मादनियतसङ्घटनशब्दाश्रयत्वे गुणानां न काचित् क्षतिः।**

तस्मादुक्तहेतोः, गुणानामनियतसङ्घटना ये शब्दास्तदाश्रयत्वे तद्व्यङ्ग्यत्वे काचित् क्षतिरनुपपत्तिर्नेत्यर्थः।

**इसलिये अनियत संघटनात्मक शब्दोंसे माधुर्य ओज आदि गुणोंके अभिव्यङ्ग्य होनेमें कोई क्षति नहीं है।**

ननु गुणानां शब्दव्यङ्ग्यत्वेऽपि क्वचिन्माधुर्यं कठोरशब्दैर्व्यज्यते, कुत्रचिदोजो वा मसृणशब्दैरिति सङ्घटनावद् व्यभिचारस्तदवस्थ एवेत्यत आह—

**तेषां तु चक्षुरादीनामिव यथास्वं विषयनियमितस्य स्वरूपस्य न कदाचिद् व्यभिचारः।**

तेषां गुणानाम्। यथास्वं स्वमनतिक्रम्य स्वविषयानुसारमिति यावत्। विषयो लक्ष्यं रूपादि च। विषयनियमितस्य कृतविषयनियमस्य।

यथा रूपप्रत्यक्षे चक्षुषो, रसप्रत्यक्षे रसनायाः पृथक् कारणत्वकल्पने न व्यभिचारः, तद्वदत्रापि—

'शृङ्गार एव मधुरः परः प्रह्लादनो रसः।
तन्मयं काव्यमाश्रित्य माधुर्यं प्रतितिष्ठति॥ इत्यादिना—

द्वितीयोद्द्योते करुणादिवृत्तित्वे माधुर्यस्य, रौद्रादिवृत्तित्वे चौजसो निर्णीते, माधुर्यव्यञ्जने करुणादिव्यञ्जककोमलशब्दानामोजोव्यञ्जने रौद्रादिव्यञ्जककर्कशशब्दानां च कारणतायां मतायां न व्यभिचारः स्यात्। 'अनवरत' इत्यादौ नैसर्गिकं शब्दानां कोमलत्वम्, 'यो यः शस्त्रम्' इत्यादौ च काठिन्यमस्त्येव, केवलं समासस्य दैर्घ्याल्प-

त्वाभ्यां संघटनैव विपर्यस्तेति संघटनाया व्यञ्जकत्वे एव व्यभिचारो न तु शब्दानाम्। यदि च कठोरशब्देभ्योऽपि वैयञ्जनिकमाधुर्यप्रतीतिः, क्वचिदानुभविकी भवेत्, तदा कोमलशब्दश्रवणाव्यवहितोत्तरजायमानमाधुर्यप्रतीतिं प्रति श्रूयमाणः कोमलशब्दस्तच्छ्रवणं वा कारणमित्यादिप्रातिस्विकरूपेण कार्यताऽवच्छेदककोटावव्यवहितोत्तरत्वं निवेश्य कार्यकारणभावकल्पनया व्यभिचारो वारणीय इति भावः।

माधुर्य–ओज आदि गुणोंके व्यञ्जनके प्रति संघटनाकी जैसे कोई नियत व्यवस्था नहीं है, वैसे ही क्रमशः उक्त गुणोंके व्यञ्जकतया सिद्ध कोमल कठोर आदि शब्दोंमें भी कोई नियत व्यवस्था न होगी, इस सन्देहको दूर करते हैं—तेषामिति। अर्थात् जैसे चक्षु रसना आदि इन्द्रियोंके रूपरसादि विषय अलग २ व्यवस्थित हैं, वैसे ही माधुर्य व्यञ्जनस्थलमें शृङ्गार करुण आदि रसके व्यञ्जक कोमल शब्दोंको एवं ओज गुण व्यञ्जन स्थलमें रौद्र–वीर आदि रसके व्यञ्जक कठोर शब्दोंको हेतु माननेसे उक्त दोष नहीं लगता।

उपसंहरति—

**तस्मादन्ये गुणाः, अन्या च सङ्घटना, न च सङ्घटनामाश्रिता गुणा इत्येकं दर्शनम्।**

तस्मादुक्तहेतोः। गुणानां संघटनायाश्च भेदः, भेदे च संघटनावृत्तित्वं न गुणानाम्, किन्तु व्यञ्जकतया शब्दाश्रयत्वमेवेत्येकं दर्शनं मतमुपपादितमित्यर्थः।

अब संघटना विषयका उपसंहार करते हैं—तस्मादिति। इसलिये उपर्युक्त युक्तियों द्वारा गुणोंसे संघटना भिन्न ही पदार्थ है और गुण संघटनामें नहीं रहते, अपितु स्वव्यञ्जक होनेसे शब्दोंमें ही रहते हैं, इस तरह एकमत सम्पन्न हुआ।

अथ गुणसंघटनातादात्म्यपक्षपाती स्वमतं स्थापयति—

**अथवा संघटनारूपा एव गुणाः।**

जगदीशमते समानाधिकरणानां प्रकारताविशेष्यताऽऽदिविषयतानामिवात्र संघटनागुणानामपि तादात्म्यं कथञ्चिदुपपादनीयम्। वस्तुतस्तु शब्देषु संघटनाया अवयवावयविभावेन, गुणानां च व्यङ्ग्यव्यञ्जकत्वेन वृत्तित्वमिति तदभेदपक्षो दुरुपपाद एव।

अब गुण और संघटनाको एक माननेवालोंका मत प्रकट करते हैं—अथवेति। शृङ्गारादि तत्तद्रसाभिव्यञ्जन सामर्थ्य रूप ही शब्दगत माधुर्यादि गुण हैं और वह सामर्थ्य भी तत्तद्रूपसे शब्दोंके संघटनात्मक सन्निवेशसे ही होता है, इसलिये संघटना रूप ही गुण हैं।

तादात्म्यपक्षे कृतपूर्वमाक्षेपं स्मारयति—

यत्तूक्तम्—'सङ्घटनावद् गुणानामप्यनियतविषयत्वं प्राप्नोति, लक्ष्ये व्यभिचारदर्शनात्' इति।

पूर्वोक्तेरयमार्थिकोऽनुवादः, आनुपूर्वीविपर्यासात्।

यदि गुणोंको संघटना स्वरूप ही मानते हैं, तो 'यो य.' यहां पर ओज गुण व्यञ्जक दीर्घ समासात्मक संघटना नहीं रहने पर भी ओज गुण व्यक्त होनेसे एवं 'अनवरत-' यहाँ पर माधुर्य गुण व्यञ्जक असमासात्मक संघटना नहीं रहने पर भी माधुर्य गुण व्यक्त होनेसे जैसे किसी गुणके व्यञ्जनार्थ नियत संघटना नहीं मानी जाती, वैसे ही माधुर्य गुण व्यञ्जक कोमल शब्दोंके नहीं रहनेसे भी माधुर्यकी तथा ओज गुण व्यञ्जक कठोर शब्दोंके नहीं रहनेपर भी ओजकी अभिव्यक्ति मानकर गुण व्यञ्जक शब्द भी कोई नियत नहीं माना जा सकेगा, क्योंकि उक्त इन्हीं दर्शित स्थलोंमें व्यभिचार लग रहा है, अतः आपके मतसे ओजमें भी कोमल शब्द एवं माधुर्यमें भी कठोर शब्द व्यञ्जक होने लगेगा।

खण्डयति—

तत्राप्येतदुच्यते—यत्र लक्ष्ये परिकल्पितविषयव्यभिचारः, तद् विरूपमेवास्तु।

'नह्येकमुदाहरणं योगारम्भं प्रयोजयति' इति महाभाष्यभाषितरीत्या क्वचिदेकमात्रविपरीतलक्ष्यावेक्षणेन नियमो न व्यभिचारणीयः, किन्तु तल्लक्ष्यमेवान्यथाकार्यमिति 'यो यः शस्त्रं बिभर्ति' इत्यादिलक्ष्यमेव कोमलैः शब्दैर्विरच्यताम्, परिह्रीयतां वेत्याशयः।

गुण-संघटनाका ऐक्य पक्षवादी उक्त दोषका निराकरण करते हैं—तत्रेति। एक उदाहरणके लिये अलग लक्षण नहीं बनाया जाता, इस नियमसे कहीं पर एक मात्र विपरीत लक्ष्यको देखकर लक्षणात्मक नियमको व्यभिचरित नहीं करना चाहिये, अपितु उस लक्ष्यको ही लक्षणके अनुसार बदल देना चाहिये, अर्थात् 'यो यः' इत्यादिमें दीर्घ समास करना उचित था, ताकि दीर्घ समासात्मक संघटना रूप ओज गुण व्यक्त होता, एवं 'अनवरत-' इत्यादिमें असमास करना उचित था, ताकि असमासात्मक संघटना रूप माधुर्य गुण व्यक्त होता।

ननु तल्लक्ष्ये यदि किञ्चिदप्यचारुत्वमस्ति, तर्हि कथं न सहृदयास्तदनुभवन्ति, तस्माच्चारुत्वमेव तत्राचारुत्वमित्याशङ्कते—

कथमचारुत्वं तादृशविषये सहृदयानां (न) प्रतिभातीति चेत्।

सन्दर्भशुद्ध्यनुरोधेन अकोष्ठस्थनकारघटितः पाठः कल्पितः। कर्मप्रवचनीययोगे प्राप्तां द्वितीयां वारयितुं सहृदयानामिति सम्बन्धसामान्यविवक्षायां षष्ठी।

यदि उक्त उदाहरणोंमें कविके स्खलनसे अचारुत्व है, तो वह ( अचारुत्व ) सहृदयोंको क्यों नहीं लक्षित होता ( अखड़ता ) ?

उत्तरयति—

कविशक्तितिरोहितत्वात्।

न प्रतिभातीति शेषः ?

कविकी प्रतिभाके चमत्कारसे तिरोहित हो जानेके कारण तादृश अचारुत्व रहते हुए भी सरसविदग्धोंको नहीं लक्षित होता ( खटकता ) है, अर्थात् कविकी विलक्षण प्रतिभाके प्रभावसे चकित होते हुए सहृदयजन भी चिदानन्द चमत्कारात्मक रस प्रवाहमें निमग्न होकर उस अचारुत्वको भूल जाते हैं।

विभज्यान्वाख्याति—

द्विविधो हि दोषः कवेः, अव्युत्पत्तिकृतोऽशक्तिकृतश्च। तत्राव्युत्पत्तिकृतो दोषः शक्तितिरोहितत्वात् कदाचिन्न लक्ष्यते, यस्त्वशक्तिकृतो दोषः, स झटिति प्रतीयते।

कवित्वबीजभूता प्रतिभैव शक्तिः। तदुपयोगिसमस्तवस्तुपरामर्शकौशलं निपुणताऽऽत्मिका च व्युत्पत्तिः। कवेस्तयोरभावश्च दोषप्रयोजकः।

प्रतिभामात्रवत्कविरचिते काव्ये सकलवस्तुवृत्तनैपुण्याभावप्रयोज्यं क्वचित् स्खलनमपि तदीयप्रतिभाऽतिरेकोन्मिषितवस्तुवृत्तवर्णनवैचित्र्यसमाक्षिप्तचेताः सचेताः कदाचिन्नावदधाति। केवलव्युत्पत्तिशालिकविरचिते तु याथातथ्येन वर्णितेऽपि वस्तुनि प्रतिभाविरहाच्छब्दार्थयोरेवोत्कटं तस्य स्खलनं दुराच्छादं भवतीति भावः।

उक्ताशयको ही दूसरे ढङ्गसे पल्लवित करते हैं—द्विविध इति। अव्युत्पत्ति प्रयुक्त एवं अशक्ति प्रयुक्तके भेदसे कविके दोष दो प्रकारके हुआ करते हैं। उनमें कवित्तोपयोगी सकलवस्तु संकलन कौशलरूप निपुणतात्मक व्युत्पत्तिकी त्रुटिसे होने वाला स्खलन (दोष) कविकी अलौकिक प्रतिभाके सामने ढक जानेसे सहृदयोंको भी नहीं सा जानने योग्य होता है, परन्तु व्युत्पत्तिशाली कविद्वारा यथायोग्य विषयोंके वर्णित होने पर भी उक्त प्रतिभाकी त्रुटि ( कमी ) से होने वाला शब्दार्थ विषयक स्खलन सबको बहुत जल्दी ही जानने योग्य हो जाता है।

तदाह—

परिकरश्लोकश्चात्र—'अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः ।
यस्त्वशक्तिकृतस्तस्य स झटित्येव भासते ॥'

संव्रियत आच्छाद्यते । तस्य कवेः । स दोषः ।

किसीने उसीका सार कहा है—अव्युत्पत्ति कृत दोष कविकी प्रतिभासे ही आच्छादित हो जाता है, परन्तु कविका अशक्ति कृत दोष बहुत जल्दी ही सबको जानने योग्य हो जाता है ।

निदर्शनदर्शनेनोक्तमर्थं द्रढयति—

तथा हि—महाकवीनामप्युत्तमदेवताविषयप्रसिद्धसम्भोगशृङ्गारनिबन्धनाद्यनौचित्यं शक्तितिरस्कृतं ग्राम्यत्वेन न प्रतिभासते । यथा कुमारसम्भवे–देवीसम्भोगवर्णनम् । एवमादौ च विषये यथौचित्यत्यागः, तथा दर्शितमेवाग्रे ।

उत्तमदेवता लक्ष्मीनारायण–पार्वतीपरमेश्वर–वाणीब्रह्मादयः । ग्राम्यत्वेनौचित्यपरित्यागादचमत्कारित्वेन । कुमारसम्भवेऽष्टमसर्गे । देवी पार्वती । अग्रे विभावभावानुभाव'इत्यादिकारिकानिकरविवरणे–'अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्' इत्यन्तेन सन्दर्भेण ।

तदुक्तं लोचने–'सम्भोगोऽपि ह्यसौ वर्णितस्तथा प्रतिभानवता कविना, यथा तत्रैव विश्रान्तं हृदयं पौर्वापर्यपरामर्शं कर्तुं न ददाति । यथा निर्व्याजपराक्रमस्य पुरुषस्याविषयेऽपि युध्यमानस्य तावत् तस्मिन्नवसरे साधुवादो वितीर्यते, नतु पौर्वापर्यपरामर्शे, तथाऽत्रापीति भावः ।'

दृष्टान्तके साथ उक्तार्थको दृढ करते हैं—लक्ष्मी और विष्णु, पार्वती और शङ्कर आदि देवोंके विषयमें संभोग शृङ्गारके वर्णन जनित कविका अनौचित्य, प्रतिभाके सामने ढक जानेसे सहृदयोंके आनन्दानुभवमें प्रतिबन्धक नहीं होता है, जैसे कालिदासने कुमारसंभवमें पार्वतीके संभोगका वर्णन किया है, ऐसे ही अन्यत्र भी जहां कहीं औचित्यका त्याग किया गया है, उन सबका विवरण आगे कर रहे हैं ।

ननु कवेः प्रतिभया दोषा आच्छाद्यन्ते इति कुतोऽवगम्यत इत्यत आह—

शक्तितिरस्कृतत्वं चान्वयव्यतिरेकाभ्यामवसीयते ।

अव्युत्पत्तिकृतदोषाणामिति शेषः । अवसीयते निर्णीयते ।

कविकी प्रतिभासे अव्युत्पत्ति जनित स्खलन दूर हो जाता है, इसको बतलाते

हैं—शक्तीति। अन्वय-व्यतिरेकसे प्रतीत होता है कि प्रतिभा पूर्ण विषय वर्णित रहने पर उक्त परिस्खलनका बोध नहीं होता और प्रतिभा नहीं रहने पर उक्त दोष खटकने लगता है, अर्थात् कविकी विलक्षण प्रतिभा पूर्ण वर्णन स्थलमें सहृदय जन अलौकिक चमत्कारसे क्षुब्ध होकर रसमें तल्लीन हो जाते हैं, अतः कविकी अव्युत्पत्ति कृत त्रुटिका भान नहीं हो पाता। जैसे कि कुमारसंभवमें कविकी प्रतिभाके प्रभाववश ही अलौकिक वर्णनके सामने माता-पिताके संभोगके वर्णनकी तरह पूज्य गौरी-शङ्करके संभोग वर्णनके अनुचित होने पर भी कविका स्खलन विद्वानोंको नहीं अखरता।

तत्रान्वयः कुमारसम्भवादौ दर्शित एवेति व्यतिरेकमात्रं दर्शयति—

तथा हि—शक्तिरहितेन कविना एवंविधे विषये शृङ्गार उपनिबध्यमानः स्फुटमेव दोषत्वेनावभासते।

'अनवरतनयन–' इत्यादावप्रतिभकविनिबद्धसमासबहुलशब्दव्यज्यमानः शृङ्गारः सौष्ठवं नादधात्यतो दोष इति शक्त्यभावे दोषसद्भावात् स्फुटो व्यतिरेकः।

परन्तु 'अनवरत-नयन' इत्यादि स्थलमें अप्रतिभ कवि द्वारा निबद्ध समास बहुल शब्दोंसे व्यज्यमान शृङ्गार रस विदग्ध रसिकोंको उतना रमणीय नहीं प्रतीत होता, इसलिये प्रतिभा रहित कविका अप्रतिभा जनित दोष क्षम्य नहीं होता है, अतः इन दोनों उदाहरणोंसे उक्त दोषाभावके प्रति प्रतिभाका अन्वय-व्यतिरेक स्पष्ट ही प्रतीत होरहा है।

अथेदानीमेवाभ्युपगतं पक्षमनुपपत्त्या तिरयति—

नन्वस्मिन् पक्षे—'यो यः शस्त्रं बिभर्ति' इत्यादौ किमचारुत्वमप्रतीयमानमेवारोपयामः ?।

अस्मिन् गुणसङ्घटनातादात्म्यपक्षे।

अयं भावः—यदि गुणानां सङ्घटनायाश्चाभेदः, तदा 'यो यः शस्त्रम्' इत्यादावोजोगुणानुसारिदीर्घसमाससङ्घटनाविरहेणापाद्यमानं व्यभिचारं वारयितुमुक्तलक्ष्यस्यालक्ष्यत्वसम्पादनाय कविशक्तितिरस्कृतत्वात् सहृदयैरज्ञायमानोऽपि विच्छित्तिविरहो बलात् कल्पनीयःस्यादिति महीयस्यनुपपत्तिः, अतो नायं पक्षः समीचीनः।

अब उक्त रीतिसे गुण और सङ्घटनाके विषयमें स्वीकृत ऐक्य पक्षका खण्डन करनेके लिये भूमिका रचते हैं—ननु इति। यदि गुण और सङ्घटनाको एक ही पदार्थ मानते हैं, तो 'यो यः शस्त्रं' इत्यादि स्थलमें ओज गुणके अनुसार सर्वथा अपेक्षित दीर्घ समासात्मक सङ्घटनाके नहीं रहनेसे उपस्थित व्यभिचार दोषको दूर करनेके लिये इस उक्त लक्ष्यको ही अलक्ष्यत्व प्रतिपादनार्थ कविकी प्रतिभाके कारण सहृदयों

द्वारा आस्वाद्यमान होने पर भी चमत्कारातिशयका बलात्कार अपलाप करना पड़ेगा, अर्थात् यहां चमत्कार ही नहीं है, ऐसा दोष लगाकर (टालमटोल) करना होगा, यह एक बड़ी विचित्रसी समस्या (उलझन) उत्पन्न होगी, अतः यह (ऐक्य) पक्ष समीचीन नहीं है, यही कहना ठीक है।

उपसंहरन् कारिकोत्तरांशमवतारयति—

तस्माद् गुणव्यतिरिक्तत्वे, गुणरूपत्वे च सङ्घटनाया अन्यः कश्चिन्नियमहेतुर्वक्तव्य इत्युच्यते—

'तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः।'

तस्मादुक्तकारणकूटात्। नियमहेतुर्व्यवस्थापकः।

वक्तुरौचित्यं वाच्यस्यौचित्यं च तस्याः सङ्घटनाया नियमे हेतुर्नियामक इत्यर्थः।

सङ्घटनाया गुणतादात्म्यं गुणाश्रयत्वं गुणाश्रितत्वं वाऽस्तु, किन्तु तस्या रसानुसारेण व्यवस्था नोचिता, दर्शितानुपपत्तिव्यूहात्, अपि तु वक्तुर्वाच्यस्य चौचित्यानुसारेणैव, तथा च न व्यभिचार इति तात्पर्यम्।

उपसंहार द्वारा उक्त कारिकाके उत्तरार्द्धका अवतरण करते हैं—तस्मादिति। उपर्युक्त कारणोंसे सङ्घटनाको गुण स्वरूप या उससे भिन्न स्वरूप माननेमें किसी अन्य ही व्यवस्थापक युक्तिको कहना उचित होगा, अतः व्यवस्थापक युक्ति बतलाते हैं—तन्नियम इति। वक्ता या वाच्यका औचित्य ही संघटनाका नियामक है, अर्थात् संघटना गुण ही हो, या गुणोंका आश्रय हो, अथवा गुणोंमें ही रहती हो, परन्तु पूर्वोक्त अनुपपत्तियोंसे रसके अनुसार उसकी व्यवस्था करना ठीक नहीं, अपितु वक्ता या वाच्यके औचित्यानुसार ही व्यवस्था करनी चाहिये, इस तरह व्यवस्था होने पर पूर्वोक्त व्यभिचार (दोष) नहीं लगेगा।

कारिकांऽशं विवृण्वन् वक्तृभेदान् दर्शयति—

तत्र वक्ता कविः, कविनिबद्धो वा कश्चित्।

तत्र वक्तृवाच्ययोर्मध्ये। कविनिबद्धः कविना कल्पितः। वा शब्दः समुच्चये।

इन दोनों (वक्ता और वाच्य) में वक्तासे कवि या कवि निबद्ध व्यक्ति समझना चाहिये।

तत्रापि द्वितीयस्य द्वैविध्यमाह—

कविनिबद्धश्चापि रसभावरहितो रसभावसमन्वितो वा।

वक्तृ रसभावराहित्यसाहित्ये रसभावानास्वादकत्वास्वादकत्वरूपे।

उनमें कवि निबद्ध व्यक्ति दो प्रकारके होते हैं—'रसभावरहित' और 'रसभाव-

समन्वित'। अर्थात् कवि निबद्ध व्यक्ति रूप वक्ता कहीं पर रस भावका आस्वादक नहीं होता और कहीं पर आस्वादक भी होता है।

तदेकदेशरसभेदावाचष्टे—

रसोऽपि कथानायकाश्रयस्तद्विपक्षाश्रयो वा।

कथायाः प्रधानेतिवृत्तस्य नायको निर्वहणसन्धौ फलभाग् रामादिराश्रयो यस्य तादृशः। तद्विपक्षः प्रतिनायको रावणादिश्चाश्रयो यस्य तादृशश्चेति द्विविधो रसः। आश्रय आलम्बनमिति केचित्। कथां 'नयतीति' लोचनदर्शितविग्रहे तु कर्मण्यणो दुर्वारत्वाद् रूपासिद्धिः।

कथाके नायकाश्रित एवं प्रतिनायकाश्रितके भेदसे रस दो प्रकारका होता है, अर्थात् प्रधान इतिवृत्त (कथा) को अन्त तक निभाकर फल भोगने वाला नायक रसका आलम्बन (आधार) कहा जाता है, और उसका प्रतिपक्षीभूत प्रतिनायक भी रसका आलम्बन व्यवहृत होता है।

कथानायकमपि विभजन् वक्तृभेदानुपसंहरति—

कथानायकश्च धीरोदात्तादिभेदभिन्नः पूर्वस्तदनन्तरो वेति विकल्पाः।

नायकः प्रथमं धीरोदात्तो धीरोद्धतो धीरललितो धीरप्रशान्तश्चेति चतुर्विधः। चतुर्विधोऽप्यनुकूलो दक्षिणो धृष्टः शठश्चेति चतुर्विधः। उत्तमोमध्यमोऽधमश्चेति पुनस्त्रिधेत्यष्टचत्वारिंशद्विधो ज्ञेयः। तत्तद्भेदलक्षणादि मदीयरसमञ्जरीसुरभौ द्रष्टव्यम्। पूर्वो नायकः। तदनन्तरोऽनुनायक उपनायकः प्रतिनायको वा। इति विकल्पा इयन्तो वक्तुर्भेदाः, सम्भवन्तीति शेषः।

उक्त नायकरूप वक्ताके मुख्य चार भेद हैं—धीरोदात्त, धीरोद्धत, धीरललित और धीरप्रशान्त। उक्त चतुर्विध नायकके और भी अवान्तर चार भेद हैं—अनुकूल, दक्षिण, धृष्ट और शठ इस तरह ये १६ भी उत्तम, मध्यम और अधमके भेदसे ४८ प्रकारके होते हैं, एवं अनुनायक उपनायक और प्रतिनायकके भी इतने भेद हो सकते हैं।

इत्थं वक्तृवैविध्यं प्रपञ्च्य वाच्यवैविध्यमपि दर्शयति—

वाच्यं च ध्वन्यात्मरसाङ्गं रसाभासाङ्गं वा, अभिनेयार्थमनभिनेयार्थं वा, उत्तमप्रकृत्याश्रयं तदितराश्रयं वेति बहुप्रकारम्।

चकारोऽप्यर्थकः। वाशब्दाः समुच्चयार्थकाः।

वाच्यं ध्वन्यात्मनो ध्वनिरूपस्य रसस्याङ्गं व्यञ्जकत्वेनोपकारकम्, रसाभासस्योपकारकं चेति द्विविधम्। द्विविधमपि, अभिनेयो रसाङ्गविभावाद्यात्मकत्वेनाभि-

नेतुं योग्यो दृश्यकाव्यप्रतिपाद्योऽर्थो यस्य तादृशम्, तद्भिन्नः श्रव्यकाव्यप्रतिपाद्योऽर्थो यस्य तादृशं चेति द्विविधम्। तावद्द्विधमपि, उत्तमप्रकृतयो देवमुनिप्रभृतय आश्रया अवलम्बनानि यस्य तत्, तदितरे मध्यमाधमप्रकृतयो मनुजदनुजादय आश्रया यस्य तादृशं चेति पुनर्द्विविधमित्यनेकप्रकारकं वाच्यम्, सम्भवतीति शेषः।

तत्र द्वितीयविकल्पे वाच्यस्याभिनेयार्थेनाभेदेऽपि भेदसहं तत्सम्बन्धित्वमौपचारिकं चन्द्रिकाऽनुमतं व्यपदेशिवद्भावेनावगन्तव्यम्। तत्खण्डनपरं लोचनन्त्वामर्शनीयम्, नान्तरीयकतया वाच्यस्याभिनेयत्वेऽभ्युपगतेऽपि भेदस्थापनाविरहादन्यसम्बन्धबोधकबहुव्रीहेरसम्भवात्।

वाच्य भी ध्वनिरूप रसके उपकारक एवं रसाभासके उपकारक तथा दृश्य नाटकादि काव्य प्रतिपाद्य और श्रव्य काव्य प्रतिपाद्य अर्थोंके भेदसे चार प्रकारके होते हुए भी उत्तम प्रकृतिक देव, मुनि प्रभृति एवं मध्यमाधम प्रकृतिक मानव, दानवादि आलम्बनके भेदसे अनेक प्रकारके होते हैं।

इत्थं वक्तृवाच्ययोः प्रकारान् निरूप्य तदौचित्यस्य सङ्घटनानियामकत्वं क्रमशो दर्शयति—

तत्र यदा कविरपगतरसभावो वक्ता, तदा रचनायाः कामचारः।

रचना सङ्घटना। कामचारः स्वाच्छन्द्यं, यथेच्छं व्यवहार इति यावत्। नीरसभावकवेरुक्तौ रसभावादिविरहात् सङ्घटनाया नियमो नास्तीति भावः।

'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्' इत्याग्नेयानुशासनादीदृशः कविर्यमकादिचित्रप्रदर्शनपरः क्वाचित्क एवेति बोध्यम्,

उनमें जब वक्तारूप कवि रस-भावसे वञ्चित रहता है, तब संघटना रूप रचना का यथेच्छ (मनमानी) प्रयोग हो सकता है, क्योंकि नीरस कविकी उक्तिमें भी रस भाव नहीं रहनेसे संघटनाका यथेच्छ प्रयोग करने पर भी कोई क्षति नहीं होती है, ऐसा कवि केवल यमकादि प्रदर्शन परक चित्र काव्यको ही बनाने वाला होता है।

पुनराह—

यदाऽपि कविनिबद्धो वक्ता रसभावरहितः, तदा स एव।

स एव कामचार एव। सङ्घटनाया इति शेषः।

ईदृशो वक्ता च तापसादिरुदासीनस्वभाव इति वृत्तान्तानुरोधेन क्वचित् कविना कल्प्यते। वस्तुतस्तु सोऽपि प्रबन्धप्रधानव्यङ्ग्यरसानुसार्य्येवेति ज्ञेयम्।

इसी तरह यदि कवि निबद्ध व्यक्ति रूप वक्ता रस भावसे वञ्चित हो, तो वहाँ पर भी संघटनाका बिना किसी नियमके यथेच्छ प्रयोग होता है।

विशेषमाह—

**यदा तु कविः कविनिबद्धो वा वक्ता रसभावसमन्वितो, रसश्च प्रधानभूतत्वाद् ध्वन्यात्मभूतः, तदाऽपि नियमेनैव तत्रासमासा-मध्यमसमासे एव सङ्घटने।**

अपिस्त्वर्थकः। यदा तु पुनः, कविस्तत्कल्पितो वक्ता च नियमेनैव रसभावसमन्वितो न तूदासीनः, कथञ्चिद् रसः पुनर्ध्वनिरूपो, न तु रसवदलङ्कारस्वरूपः स्यात्, तदाऽसमासा-मध्यमसमासे सङ्घटने, न तु कदाचिदपि दीर्घसमासा सङ्घना स्यादित्यर्थः। अर्थानुरोधेनात्र पदक्रमभेदः कृतः। अन्यथा नियमशब्दस्य द्वयोरेवकारयोश्च पौनरुक्त्यं दुष्परिहरं स्यात्।

सरसवक्त्रौचित्यापेक्षयैव रसध्वनौ दीर्घसमाससङ्घटनाव्यावृत्तिः, असमासा तु सर्वथाऽनुकूला, मध्यमसमासाया अपि क्वचिदभ्युपगमः।

परन्तु जब कवि या कवि निबद्ध वक्ता रसभावसे युक्त हो, और इसी प्रकार रस भी ध्वनिरूप व्यङ्ग्य हो, न कि रसवदलंकार स्वरूप हो, तब असमास या मध्यम समासात्मक संघटनाका ही रस व्यञ्जनार्थं व्यवहार करना चाहिये, न कि दीर्घ समासात्मक संघटनाका कथंचित् प्रयोग करना उचित है, अर्थात् रसध्वनिमें सरसवक्ता की अपेक्षा ही दीर्घ समासात्मक संघटनाकी व्यावृत्ति होती है, न कि रसकी अपेक्षा। ऐसे स्थलमें असमास सर्वथा अनुकूल है और मध्यम समास तो कथंचित् कहीं पर सह्य किया जासकता है।

करुणविप्रलम्भध्वनौ विशेषमाह—

**करुणविप्रलम्भशृङ्गारयोस्त्वसमासैव सङ्घटना।**

करुणे विप्रलम्भशृङ्गारे च रसे कोमलताऽतिशयोऽपेक्ष्यत इत्यनुपदं वक्ष्यति।

करुण और विप्रलम्भ शृङ्गारमें तो अतिशय कोमलताकी अपेक्षा होती है, अतः असमासात्मक संघटना ही तदर्थ अत्यन्त उपयुक्त होती है।

तत्र शङ्कते—

**कथमिति चेत्?**

तत्र को हेतुः, न हि भवदुक्तौ स्वतः प्रामाण्यमिति शङ्कितुराशयः।

उसमें क्या प्रमाण है? क्योंकि केवल आपका वचन ही प्रामाणिक नहीं माना जा सकता है?

उत्तरमाह—

**उच्यते—रसो यदा प्राधान्येन प्रतिपाद्यः, तदा तत्प्रतीतौ व्यवधायका**

**विरोधिनश्च सर्वात्मनैव परिहार्य्याः। एवं च दीर्घसमासा सङ्घटना समासानामनेकप्रकारसम्भावनया कदाचिद् रसप्रतीतिं व्यवदधातीति तस्यां नात्यन्तमभिनिवेशः शोभते, विशेषतोऽभिनेयार्थे काव्ये, ततोऽन्यत्र च विशेषतः करुण-विप्रलम्भश्रृङ्गारयोः।**

तत्प्रतीतौ रसास्वादे, व्यवधायका विलम्बकारकाः, विरोधिनः प्रतिबन्धकाः। एवं च तेषां सर्वथा परिहार्यत्वे सति, समासानामनेकप्रकारसम्भावना च 'पीतपटः' इत्यादौ कर्मधारय-बहुव्रीहि-मध्यमपदलोपिसमासानामुत्कटकोटिकाशङ्का। रसप्रतीतिं व्यवदधाति वाच्यार्थनिर्णयाभावाद्रसास्वादं विलम्बयति। इति हेतोः। तस्यां दीर्घसमाससङ्घटनायाम्। अत्यन्तमभिनिवेश आग्रहो न शोभते। विशेषतः श्रव्यकाव्यापेक्षयाऽप्यधिकम्। अभिनेयार्थे दृश्यकाव्ये तदभिनिवेशो न शोभते, दीर्घसमासघटितपदार्थस्याभिनये क्लेशात्, नाट्यप्रतिपत्तेः प्रत्यक्षरूपत्वात्। ततो दृश्यकाव्यादन्यत्र, चकरादभिनेयार्थेऽपि। विशेषतोऽधिकं करुणविप्रलम्भश्रृङ्गारयोस्तदभिनिवेशो न शोभते।

उसीमें युक्ति बतलाते हैं—उच्यते इति। रस जब काव्यका प्रधानरूपसे प्रतिपाद्य विषय होता है, तब उसके आस्वादनमें विलम्ब या प्रतिबन्ध करनेवाले जो पदार्थ मालूम पड़ते हों, उनको बिल्कुल दूरकर देना चाहिये, अन्यथा मध्यमें विक्षेप हो जानेपर रसका अच्छी तरह आस्वादन नहीं हो सकेगा, ऐसी स्थितिमें दीर्घ समासात्मक संघटनाके आश्रयण करने पर उस ( दीर्घ समास ) में अनेक समास का उत्कट कोटिक संभावनात्मक संशय उपस्थित होकर रसास्वादनमें ही विघ्न डालता है, इसलिये दीर्घसमास रूप संघटनाके विषयमें दुराग्रह होना ठीक नहीं है। उनमें भी विशेष कर दृश्य काव्यमें और उससे भी बढ़कर करुण और विप्रलम्भ श्रृङ्गारात्मक श्रव्य एवं दृश्य काव्यमें दीर्घ समासका व्यवहार नहीं करना चाहिये।

तत्र हेतुमाह—

**तयोर्हि सुकुमारतरत्वात् स्वल्पायामप्यस्वच्छतायां शब्दार्थयोः प्रतीतिर्मन्थरीभवति।**

तयोः करुणविप्रलम्भश्रृङ्गाररसयोः सुकुमारतरत्वान्माधुर्यप्रकर्षाश्रयत्वेनातिकोमलशब्दार्थव्यङ्ग्यत्वात्, शब्दार्थयोरल्पायामपि द्रागपि, अस्वच्छतायां सन्देहादिजननेन कार्कश्येन वा व्यङ्ग्यार्थोपस्थापनाक्षमतायाम्, प्रतीतौ रसास्वादो मन्थरीभवति, प्रतिबद्धा भवतीत्यर्थः।

इदमुक्तम्—करुणविप्रलम्भरसयोर्माधुर्यप्रकर्षादतिकोमलत्वेन शब्दार्थयोर्द्रुततरं

व्यङ्ग्यार्थोपस्थापकत्वमपेक्ष्यते। समासदैर्घ्ये तु तदनेकप्रकाराणां सम्भावनया द्रुतमेव सा न सम्भवति। तस्माद् दीर्घसमाससङ्घटना तयोर्व्यङ्ग्यत्वे परिहरणीयैव।

क्योंकि करुण और विप्रलम्भ शृङ्गार रसमें अत्यन्त माधुर्य विशिष्ट सुकुमारताके कारण कोमल शब्दार्थ ही द्रुततर व्यङ्ग्यार्थका उपस्थापक होता है, इसलिये शब्दार्थों के सन्देह या कार्कश्यादि दोष वश व्यङ्ग्यार्थोपस्थानमें थोड़ी भी देर या अक्षमता होनेपर रसास्वाद ही स्थगित हो जाता है, इसलिये करुण और विप्रलम्भमें दीर्घसमासात्मक संघटनाको छोड़ देना ही अच्छा है, क्योंकि उस (दीर्घसमास) में अनेक कोटिक विग्रह वाक्यके संशय उपस्थित होनेसे रसविच्छेद होनेकी संभावना रहती है।

इत्थं तत्रोपपत्तिमुक्त्वा रसान्तरेऽपि व्यवस्थां कथयति—

**रसान्तरे पुनः प्रतिपाद्ये रौद्रादौ, मध्यमसमासा सङ्घटना, कदाचिद् धीरोद्धतनायकसम्बन्धव्यापाराश्रयेण दीर्घसमासापि वा, तदाक्षेपाविनाभाविरसोचितवाच्यापेक्षया न विगुणा भवतीति साऽपि नात्यन्तं परिहार्य्या।**

रसान्तरे करुणविप्रलम्भाभ्यामन्यस्मिन् रौद्रादौ रसे प्रतिपाद्ये व्यञ्जनीये सति, पुनर्मध्यमसमासा सङ्घटनाऽनुकूलेति शेषः। कदाचित् पुनः—

'मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः।
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः॥' इति

दर्पणलक्षितस्य धीरोद्धतनायकस्य सम्बन्धो यत्र तादृशस्य चरितस्याश्रयेण दीर्घसमासाऽपि, तदाक्षेपाविनाभावी—तस्यां दीर्घसमाससङ्घटनायां य आक्षेपोऽनुपपत्तिमूलकोऽध्याहारस्तेन विना यो न भवितुं शक्नोति, तादृग् रसोचितो रसव्यञ्जनोपयोगित्वेनोपादीयमानो यो वाच्योऽर्थस्तदपेक्षया विगुणा प्रतिकूला यतो न भवति, तस्मात् सा (दीर्घसमासाऽपि) नात्यन्तं परिहार्या, किन्तु तत्रात्यन्ताभिनिवेशो न शोभत इत्यर्थः।

रौद्रादौ रसे व्यङ्ग्ये रसानुसारेण मध्यमसमासा सर्वथाऽनुकूला, कदाचिद् धीरोद्धतवक्त्रनुसारेण समुद्धतवाच्यानुसारेणाख्यायिकाऽऽदि प्रबन्धानुसारेण वा दीर्घसमासाऽपि सङ्घटनाऽनुकूलप्रायैव।

तदुक्तम्—

'क्वचित्तु वक्त्राद्यौचित्यादन्यथा रचनाऽऽश्रयः' इति सारम्।

किन्तु करुण-विप्रलम्भसे भिन्न रौद्र आदि रस, ध्वनिरूपसे प्रतिपाद्य हों, तो मध्यम समासात्मक संघटना अनुकूल होती है। उनमें यदि अहंकारी धीरोद्धत नायकके चरित्रके चित्रण द्वारा उक्त रस वक्ताका तात्पर्य विषयीभूत हो, तो उसके लिये दीर्घसमासात्मक संघटना भी अनुकूल ही होती है, क्योंकि उसके बिना रसादि को अभिव्यक्षित करनेमें असमर्थ होनेवाले रस व्यञ्जन योग्य वाच्यार्थके द्वारा तदर्थ नियतरूपसे अपेक्षित होनेके कारण उक्त संघटना प्रतिकूल नहीं होती, अतः वह अत्यन्त त्याग देनेके योग्य नहीं है, परन्तु तदर्थ अधिक आवेश नहीं होना चाहिये, अर्थात् रौद्रादि व्यङ्ग्यरसमें मध्यम समास सर्वथा अनुकूल है, किन्तु धीरोद्धत वक्ता या उद्धत वाच्यार्थके अनुसार दीर्घसमासात्मक संघटना भी अनुकूल जैसी होती है।

इत्थं सङ्घटनाया वक्रार्थौचित्यनिबन्धनं नियममुक्त्वा, प्रसादगुणस्य तद्व्यापकत्वमाह—

**सर्वासु च सङ्घटनासु प्रसादाख्यो गुणो व्यापी।**

सङ्घटनात्रयेपि झटित्यर्थोपस्थापनमावश्यकमिति भावः।

परन्तु उक्त तीनों संघटनाओंमें ही झटिति अर्थोपस्थापकत्वरूप प्रसाद गुण अवश्य होना चाहिये, अर्थात् जिसके श्रवण मात्रसे ही अर्थका बोध हो जाय, ऐसी रचनाका होना अत्यन्त आवश्यक है।

उपपादयति—

**स हि सर्वरससाधारणः सर्वसङ्घटनासाधारणश्चेत्युक्तम्।**

स प्रसादगुणः सर्वेषु रसेषु, सर्वासु सङ्घटनासु च साधारणः समानोऽस्ति।

उक्तम्—

'समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति।
स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः॥' इति कारिकया।

क्यों कि वह (प्रसाद) गुण सभी रसों और संघटनाओंमें समान रूपसे ही अपेक्षणीय होता है।

प्रसादस्य साधारणत्वं स्थापयितुमन्वयव्यतिरेकौ दर्शयति—

**प्रसादातिक्रमे ह्यसमासाऽपि सङ्घटना करुणविप्रलम्भशृङ्गारौ न व्यनक्ति। तदपरित्यागे च मध्यमसमासाऽपि प्रकाशयति।**

प्रसादस्यातिक्रमे त्यागे। न व्यनक्ति, व्यञ्जकस्य वाच्यार्थस्य बोधाभावात्। तदपरित्यागे प्रसादसद्भावे। करुणविप्रलम्भयोर्विशिष्योपादानं कोमलताऽतिरेकं सूचयितुम्। प्रसादसत्त्वे तद्व्यञ्जनम्, प्रसादाभावे तदभाव इत्यन्वयव्यतिरेकाविह व्यक्तमुक्तौ।

इत्थं च भुवो गन्ध इव सरससङ्घटनायाः प्रसादो व्यापक इति बोध्यम् ।

प्रसाद गुणके नहीं रहने पर असमासात्मक संघटना भी करुण और विप्रलम्भ शृङ्गारको अभिव्यक्त नहीं करती, क्योंकि पहले वाच्यार्थका बोध ही नहीं हो पाता है। किन्तु प्रसाद गुणके रहनेपर मध्यम समासात्मक संघटना भी उक्त दोनों रसोंको अभिव्यक्त करती है। इसलिये अन्वय व्यतिरेकसे करुण विप्रलम्भादिकी अभिव्यक्ति में प्रसाद गुणके ही मुख्य हेतु होनेसे सभी सरस सङ्घटनाओंमें प्रसाद गुण व्यापक रूपसे प्रतीत होता है।

निर्गलितमाह—

**तस्मात् सर्वत्र प्रसादोऽनुसर्तव्यः ।**

सर्वत्र सर्वासु सङ्घटनासु । अनुसर्तव्य आश्रयणीयः ।

**इसलिये सारी संघटनाओंमें प्रसाद गुण होना आवश्यक है।**

उपोद्घलकमभिदधाति—

**अत एव 'यो यः शस्त्रं बिभर्ति' इत्यादौ यद्योजसः स्थितिर्नेष्यते, तत् प्रसादाख्य एव गुणो, न माधुर्यम्। नचाचारुत्वम्, अभिप्रेतरसप्रकाशनात्।**

अत एव प्रसादस्य व्यापकत्वादेव, ओजोगुणस्य स्थितिः प्राधान्येनेति शेषः। यदि नेष्यते दीर्घसमाससङ्घटनाविरहात्, कैश्चिदिति शेषः। तत्तदा, प्रसादाख्यो गुण एव तत्राङ्गीकरणीयो न तु माधुर्यगुणः, ओजोमाधुर्ययोरन्योऽन्याभाववत्त्वाद् विरुद्धत्वाद्वा। तत्राचारुत्वं स्यादिति न शङ्कनीयम्, अभिप्रेतस्येष्टस्य रौद्ररसस्य प्रकाशनाद्, रसप्रकाशस्यैव चारुत्वहेतुत्वात्।

ये केचन सङ्घटनाविशेषाभिनिवेशिन उक्तपद्य ओजोगुणं न मन्वते, तन्मते प्रसाद एव गुणस्तत्र तत्र प्रसादप्रकाशेनैव रौद्ररसप्रकाश इति प्रसादस्य व्यापकत्वादेवेदं सङ्गच्छत इति द्रष्टव्यम्।

इसीलिये 'यो यः शस्त्रं'—यहां पर दीर्घ समासात्मक संघटना नहीं रहनेसे यदि ओज गुण माननेमें किन्हींको कोई चोद्यक्षेम (आपत्ति) हो, तो प्रसाद गुणको ही मान लेना चाहिये, क्योंकि प्रसाद गुण सभी जगह रहता है। किन्तु माधुर्य गुणको ओजगुणके साथ विरोध रहनेसे सभी जगह मानना ठीक नहीं, प्रसाद गुणको मानने से तो अभिप्रेत रौद्ररसकी रमणीयता भी तिरोहित न होकर प्रकाशित ही होती है।

उपक्रान्तं सङ्घटनाया रसव्यञ्जकत्वं पर्यवसितपक्षत्रयसामञ्जस्येन दर्शयति—

**तस्माद् गुणाव्यतिरिक्तत्वे गुणव्यतिरिक्तत्वे वा सङ्घटनाया यथोक्तौचित्याद् विषयनियमोऽस्तीति तस्या अपि रसव्यञ्जकत्वम्। तस्याश्च**

**रसाभिव्यक्तिनिमित्तभूताया योऽयमनन्तरोक्तो नियमहेतुः, स एव गुणानां नियतो विषय इति गुणाश्रयेण व्यवस्थानमप्यविरुद्धम् ।**

तस्मादुक्तहेतुकूटात् । गुणेभ्योऽव्यतिरिक्तत्वेऽभेदे । वाशब्दः समुच्चये । यथोक्ताद् वक्तृवाच्यसम्बन्धिनः । तस्याः सङ्घटनायाः ।

अयं भावः—सङ्घटना गुणरूपा गुणवती गुणनिष्ठा वा भवतु, न च क्वचिदपि नः क्षतिः । तथाहि–यदि वक्त्रायौचित्यविहितविषयव्यवस्था सा नियता, तर्हि तस्या गुणात्मत्वे गुणाश्रयत्वे वाऽप्राधान्याभावान्नैवानियतविषयता । गुणवृत्तित्वेऽपि वक्त्रायौचित्येनैव गुणानामपि विषयनियमनात् तदाश्रितायाः सङ्घटनाया अपि नियतविषयता ।

तथा च नियतविषयतया तस्याः प्रागुक्तं रसव्यञ्जकत्वमप्यक्षतं भवति, तस्मात् पक्षत्रयमप्यत्र समीचीनमेव, तत्रापि ज्यायस्त्वं तु सङ्घटनाऽऽश्रयगुणपक्षस्यैव, व्यङ्ग्यव्यञ्जकभावेन गुणवती सङ्घटनेत्यविसंवादिप्रतीतेः ।

तदाहुराचार्याः—'गुणाः सङ्घटनैकरूपाः, तथाऽपि गुणनियम एव सङ्घटनाया नियमः । गुणाधीनसङ्घटनापक्षेऽप्येवम् । सङ्घटनाऽऽश्रयगुणपक्षेऽपि सङ्घटनाया नियामकत्वेन यद् वक्तृवाच्यौचित्यं हेतुत्वेनोक्तम्, तद्गुणानामपि नियमहेतुरिति पक्षत्रयेऽपि न कश्चिद् विप्लव इति तात्पर्यम् ।'

इसलिये संघटना गुणरूप ही हो, या गुणमें रहती हो, अथवा गुण ही उसमें रहते हों, किसी भी पक्षमें हमें कोई चोद्यक्षेम ( आपत्ति ) या हानि नहीं है, क्योंकि उपर्युक्त युक्तियोंसे वक्ता एवं वाच्यके औचित्यानुसार ही संघटनाकी विषयव्यवस्थाके नियत होनेसे रसव्यञ्जनमें कोई क्षति नहीं होती, अतः ऐसी स्थितिमें रसाभिव्यक्तिके निमित्त संघटनाके उक्त नियमके अनुसार ही गुणोंकी भी विषय व्यवस्था सिद्ध होनेके कारण संघटनाको गुणवृत्ति या गुण विशिष्ट माननेमें कोई विरोध नहीं है । फिर भी व्यङ्ग्यव्यञ्जक भावसे 'गुणवती सङ्घटना है' 'यह अबाधित प्रतीति होती है, अतः गुण विशिष्ट सङ्घटना पक्ष ही सर्वोत्तम प्रतीत होता है ।

सङ्घटनाया अपरं नियामकमाह—

**'विषयाश्रयमप्यन्यदौचित्यं तां नियच्छति ।**
**काव्यप्रभेदाश्रयतः स्थिता भेदवती हि सा ॥६३॥'**

विषयः सङ्घातविशेषरूपः प्रबन्ध आश्रयो यस्य तादृशमन्यदुक्तौचित्यात् भिन्नं विषयौचित्यमपि तां सङ्घटनां नियच्छति नियमयति । हि यतः सा सङ्घटना काव्यस्य प्रभेदानां मुक्तकादीनामाश्रयत आश्रयणाद् भेदवती, भिन्नेत्यर्थः ।

तदुक्तं लोचने—'यथा हि सेनाऽऽद्यात्मकसङ्घातनिवेशी पुरुषः कातरादिभिरपि तदौचित्यादनुगुणतयैवास्ते, तथा काव्यवाक्यमपि सङ्घातविशेषात्मकसन्दानितकादि-मध्यनिविष्टं तदौचित्येन वर्तते। मुक्तकं तु विषयशब्देन यदुक्तम्, तत् सङ्घाता-भावे तत्स्वातन्त्र्यमात्रं प्रदर्शयितुम्, स्वप्रतिष्ठितमाकाशमिवेति।

यथा वक्तृवाच्ययोर्वैचित्र्यात् तदौचित्यं सङ्घटनां नियमयति, तथैव विषयस्यापि मुक्तकादिभेदेन वैचित्र्यात् तदौचित्यमपि तां नियमयतीति सारम्।

यच्छतेरुपसर्गबलेन नियमनार्थकत्वम्। समुच्चयार्थकेनापिना विषयौचित्यस्य तार-तम्यभेदमात्रव्यावृत्तत्वम्, न तु तेन वक्तृवाच्यौचित्यनिराकरणमपि सूच्यते।

अब संघटनाके अपर नियामकको बतलाते हैं—विषयेति। उक्त (वक्ता और वाच्यके) औचित्यके अतिरिक्त सघात विशेष रूप सन्दानितकादि प्रबन्धात्मक विषय निष्ठ औचित्य भी संघटनाको नियन्त्रित करता है, क्योंकि 'मुक्तक' आदि काव्य विशेषके आश्रयणसे भी संघटना व्यवस्थित होती है, अर्थात् जैसे वक्ता और वाच्योंके वैचित्र्यसे उनके औचित्यानुसार संघटना व्यवस्थित होती है, वैसे ही मुक्तक आदिके भेदसे विषयोंके वैचित्र्य होनेसे उनके औचित्यानुसार भी संघटना व्यवस्थित होती है।

समासेन कारिकां विवृणोति वृत्तिकारः—

वक्तृवाच्यौचित्ये विषयाश्रयमन्यदौचित्यं सङ्घटनां नियच्छति।

अपिशब्दार्थ उपरि स्फुटीकृतः।

वक्ता एवं वाच्य गत औचित्य और विषयगत औचित्य, ये तीनों ही संघटनाको नियन्त्रित करते हैं।

हेतुतया प्रसङ्गाद् विषयप्रभेदान् दर्शयति—

यतः काव्यस्य प्रभेदाः मुक्तकं संस्कृतप्राकृतापभ्रंशनिबद्धम्, सन्दा-नितकविशेषककालापककुलकानि, पर्यायबन्धः, परिकथा सकलकथा-खण्डकथे सर्गबन्धोऽभिनेयार्थमाख्यायिका कथेत्येवमादयः।

मुक्तकमन्यपद्यासम्बद्धं स्वातन्त्र्येणार्थबोधनक्षममेव मुक्तकम्, स्वार्थे कः, सञ्ज्ञायां वा कन्। तच्च संस्कृतं देववाङ्निबद्धम्। प्राकृतं संस्कृतप्रकृतिकम्, तद्भव-तत्सम-देशीत्यनेकप्रकारकभाषाविशेषः, तन्निबद्धम्। अपभ्रंश आभीरादिभाषा, तन्निबद्धं च त्रिविधं भवति। सन्दानितकं च युग्मकापरपर्यायं द्विपरिसमाप्तक्रियं पद्यद्वयम्। विशेषकं त्रिपरिसमाप्तक्रियं पद्यत्रयम्। कालापकं चतुष्परिसमाप्तक्रियं पद्यचतुष्ट-

यम् । कुलकं पञ्चादिपरिसमाप्तक्रियं पद्यपञ्चकादि । क्रियापरिसमाप्तिकृता एवामी भेदा इति सूचनाय मूले द्वन्द्वेन निर्देशः । पर्यायबन्धः खण्डकाव्यस्वरूपः समाप्तायामप्यवान्तरक्रियायां वसन्ताद्येकतमवर्णनीयवस्तुवर्णनात्मकः प्रबन्धः । परिकथा धर्माद्येकतमपुरुषार्थोद्देश्यप्रवृत्तविचित्रप्रकारकानेकवृत्तान्तवर्णना । खण्डकथा तदेकदेशवर्णनैव । सकलकथा सर्वेषां फलपर्यन्तानुधाविवृत्तान्तानां वर्णना । खण्डकथासकलकथे प्राकृतमात्रप्रसिद्धे इति सूचयितुं द्वन्द्वेन निर्देशः । सर्गबन्धः संस्कृतमयं श्रव्यं महाकाव्यम् । अभिनेयार्थं दृश्यं काव्यम् । नाटकादिदशविधं रूपकम् । नाटिकाद्यष्टादशविधमुपरूपकं च । आख्यायिका क्वाचित्कवक्त्रापरवक्त्रादिच्छन्दस्क उच्छ्वासाश्वासाभिधविभागभाग् गद्यप्रचुरः प्रबन्धः । कथा सज्जनदुर्जनवृत्तान्तवर्णनपरः क्वाचित्कार्यावक्त्रापरवक्त्रयुक्त आश्वासादिशून्यो गद्यमयः प्रबन्धः । आदिशब्देनाख्यान–चम्पू–सङ्घात– कोष–चक्रवालो–दाहरण–विरुदावली–भोगावली–तारावली–विश्वावली–रत्नावली–पञ्चाननावलीप्रभृतयो गृह्यन्ते ।

तथा चोक्तमाग्नेयपुराणे—'मुक्तकं श्लोक एवैकश्चमत्कारक्षमः सताम् ।
द्वाभ्यां तु युग्मकं ज्ञेयं त्रिभिः श्लोकैर्विशेषकम् ।
चतुर्भिस्तु कलापं स्यात् पञ्चभिः कुलकं मतम् ॥' इति ।

काव्यादर्शे—संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः ।
तद्भवस्तत्समो- देशीत्यनेकः प्राकृतक्रमः ।
आभीरादिगिरः काव्येष्वपभ्रंश इति स्मृताः ॥' इति ।

साहित्यदर्पणे---'खण्डकाव्यं भवेत् काव्यस्यैकदेशानुकारि च ॥' इति ।
'सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ।
सद्वंशः क्षत्रियो वाऽपि धीरोदात्तगुणान्वितः ॥ इत्यादि ।
नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥'
'नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् ।
प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ॥
संलापकं श्रीगदितं शिल्पकं च विलासिका ।
दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ॥'
'कथायां सरसं वस्तु गद्यैरेव विनिर्दिशेत् ।

क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ।
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम् ॥' इति ।
'आख्यायिका कथावत् स्यात् कवेर्वंशानुकीर्तनम् ।
अस्यामन्यकवीनां च वृत्तं पद्यं क्वचित् क्वचित् ॥
कथांऽशानां व्यवच्छेद आश्वास इति वध्यते ।
आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित् ॥
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम् ॥' इति ।

काव्यादर्शे—'अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः ।' इति ।

आग्नेये—'आख्यायिका कथा खण्डकथा परिकथा तथा ।
कथानिकेति मन्यन्ते गद्यकाव्यं च पञ्चधा ॥
कर्तृवंशप्रशंसा स्याद् यत्र गद्येन विस्तरात् ।
कन्याहरणसङ्ग्रामा-विप्रलम्भविपत्तयः ॥
भवन्ति यत्र दीप्ताश्च रीतिवृत्तिप्रवृत्तयः ।
उच्छ्वासैश्च परिच्छेदो यत्र या चूर्णकोत्तरा ॥
वक्त्रं वाऽपरवक्त्रं वा यत्र साऽऽख्यायिका स्मृता ।
श्लोकैः स्ववंशं सङ्क्षेपात् कविर्यत्र प्रशंसति ॥
मुख्यस्यार्थावताराय भवेद् यत्र कथाऽन्तरम् ।
परिच्छेदो न यत्र स्याद् भवेद्वा लम्बकैः क्वचित् ॥
सा कथा नाम तद्गर्भे निबध्नीयाच्चतुष्पदीम् ।
भवेत् खण्डकथा याऽसौ, याऽसौ परिकथा तयोः ॥
अमात्यं सार्थकं वाऽपि द्विजं वा नायकं विदुः ।
स्यात् तयोः करुणं विद्धि विप्रलम्भश्चतुर्विधः ॥
समाप्यते तयोर्नाद्या या कथामनुधावति ।
कथाऽऽख्यायिकयोर्मिश्रभावात् परिकथा स्मृता ॥
भयानको सुखपरो गर्भे च करुणो रसः ।
अद्भुतोऽन्ते सुक्लृप्तार्था नोदात्ता सा कथानिका ॥' इति ।

दर्पणे—'गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ।' इति ।

अन्यत्र—'कोषः श्लोकसमूहस्तु स्यादन्योऽन्यानपेक्षकः' ।

यत्र कविरेकमर्थं वृत्तेनैकेन वर्णयति काव्ये।
सङ्घातः स निगदितो वृन्दावन-मेघदूतादिः॥' इति।

मन्दारमरन्दे—'येन केनापि तालेन गद्यपद्यसमन्वितम्।
जयेत्युपक्रमं मालिन्यादि-प्रासविचित्रितम्॥
तदुदाहरणं नाम्ना विभक्त्यष्टाङ्गसँय्युतम्।'
'सम्बोधनविभक्त्या यत् प्रचुरं पद्यपूर्वकम्।
विमुक्तपुनरामृष्टशब्दं स्याच्चक्रवालकम्॥'
अष्टभिर्वा चतुर्भिर्वा वाक्यैः स्कन्धसमन्विता॥
प्रतिस्कन्धं भिन्नवाक्य-रीतिर्देवनृपोचिता।
सर्वतो देवशब्दादिरवा भोगावली मता॥'
'वर्ण्यमानाङ्कविरुद-वर्णनप्रचुरोज्ज्वला।
वाक्याडम्बरसँय्युक्ता कथिता विरुदावली॥'
'ताराणां सङ्ख्यया पद्यैर्युता विश्वावली मता॥'
'रत्नानां सङ्ख्यया पद्यैर्युता रत्नावली मता।
पद्यैश्च पञ्चभिर्युक्ता प्रोक्ता पञ्चाननावली॥' इति।

प्रसङ्गवश विषय प्रभेदोंको दर्शाते हैं—यत इति। क्योंकि काव्यके बहुतसे भिन्न विषय प्रभेद हैं, जैसे स्वतन्त्र रूपसे वाक्यार्थ बोधनमें समर्थ एकमात्र श्लोकात्मक 'मुक्तक' संस्कृत, प्राकृत और अपभ्रंशमें रचित होनेसे तीन प्रकारका है, युग्म श्लोक रूप सन्दानितक एवं पद्यत्रयात्मक विशेषक, पद्यचतुष्क रूप कालापक, पद्य पञ्चकरूप कुलक, खण्डकाव्यात्मक पर्याय बन्ध, परिकथारूप अनेक वृत्तान्तवर्णन, फल पर्यन्त वृत्तान्त वर्णनात्मक सकल कथा, खण्ड कथा, सर्ग बन्धरूप अव्य महाकाव्य, नाटकादि दृश्य काव्य, गद्य प्रचुरात्मक आख्यायिका, कथा, और गद्य-पद्यात्मक चम्पू आदि अनेक विषयोंके प्रभेद हैं।

काव्यप्रभेदप्रदर्शनप्रयोजनमाचष्टे—

तदाश्रयेणापि सङ्घटना विशेषवती भवति।

तच्छब्देन काव्यभेदाः परामृश्यन्ते। विशेषवती भिन्ना।

तत्तत्काव्यप्रभेदरूपविषयभेदेनापि सङ्घटनाया भेदो भवतीति सारम्।

उपर्युक्त काव्य प्रभेद रूप विशेष विषयोंके भेदसे सभी संघटना विशेष प्रकारकी होती है।

तानेव भेदान् क्रमशो दर्शयति—

**तत्र मुक्तकेषु रसबन्धाभिनिवेशिनः कवेस्तदाश्रयमौचित्यम्। तच्च दर्शितमेव। अन्यत्र कामचारः।**

दर्शितं साम्प्रतमेव सङ्घटनानियामकप्रदर्शनप्रसङ्गेन। अन्यत्र कवेरसबन्धाभिनिवेशविरहस्थले।

यदि रसभावव्यञ्जकानि मुक्तकानि रचयितुमनाः कविः, तदाऽत्रापि रसभावानुसारिणी वक्त्राद्यनुरोधेन सङ्घटना व्यवस्था। नोचेत्, तत्रापि स्वाच्छन्द्यमिति भावः।

**उनमें पहले मुक्तकका विषय बतलाते हैं—तत्रेति। कवि यदि रसभावके अभिव्यञ्जक रूपसे मुक्तककी रचना करना चाहता हो, तब मुक्तकके औचित्यानुसार संघटना की जानी चाहिये, जिसको कि संघटना नियामकके प्रदर्शन प्रसङ्ग पर बतला चुके हैं, परन्तु सरस निबन्धनके लिये कविका अभिप्रायः नहीं हो, तो यथेच्छ (मनमानी) संघटना की जा सकती है।**

मुक्तकानां सूक्ष्मशरीरतया विभावादिसामग्रीसम्यक्संवलनासम्भवाद् रसबन्धाभिनिवेशस्तत्र कवेर्न प्रसिध्यतीत्यत आह—

**मुक्तकेषु हि प्रबन्धेष्विव रसबन्धाभिनिवेशिनः कवयो दृश्यन्ते।**

यथा प्रबन्धेषु सामग्रीसंवलनात् कवीनां रसबन्धाभिनिवेशः, तथैव प्रतिभाऽतिरेकभृतां तेषां मुक्तकेष्वपीति नाप्रसिद्धिरिति भावः।

**जिस प्रकार बड़े २ प्रबन्धोंमें सामग्रीके संघटनसे कविको रसबन्ध (निर्माण) में अभिनिवेश (अनुराग) होता है, वैसे ही मुक्तक मात्रमें भी अतिशय प्रतिभाशाली कविका रस बन्ध विषयक अभिनिवेश हो सकता है।**

प्रसिद्धिमेव दर्शयति—

**यथा ह्यमरुकस्य कवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव।**

मुक्तका इति पुंस्त्वं चिन्त्यम्। शृङ्गाररसस्यन्दिनः शृङ्गाररसस्य व्यञ्जका बाहुल्येन। प्रबन्धायमानाः कृशकायत्वेऽपि व्यङ्ग्यार्थविपुलाकारत्वेन प्रबन्धवदाचरन्तः। तथा हि तस्यैव—

'अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः,
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः।

हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः,
कथय सुकृती कोऽयं मुग्धे ! त्वयाऽद्य विलोक्यते ॥'

इति विभावादिसम्प्रत्यायनात् पूर्वरागविप्रलम्भद्योतकम् ।

'लिखन्नास्ते भूमिं वहिरवनतः प्राणदयितो
निराहारा सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने ! मानमधुना ॥'

इति चेर्ष्याविप्रलम्भव्यञ्जकं मुक्तकं प्रसिध्यति ।

एतयोर्व्यङ्ग्यविस्तरस्त्वनुनवमंकृततद्विवृतावलोकनीयः ।

जैसे अमरुक कविका शृङ्गार रसको व्यञ्जित करने वाला 'मुक्तक' छोटा होने पर भी अधिक व्यङ्ग्यार्थके होनेसे महाप्रवन्धकी तरह विख्यात है, जैसे-'अलसवलितैः' इस श्लोकमें नायकरूप आलम्बन विभावादि व्यङ्ग्य अर्थ की प्रतीति द्वारा पूर्वरागाख्य विप्रलम्भ शृङ्गारका द्योतक मुक्तक प्रसिद्ध है, एवं 'लिखन्नास्ते'-इस श्लोकमें ईर्ष्याख्यविप्रलम्भ शृङ्गारका व्यञ्जक मुक्तक प्रसिद्ध है ।

विशेषमाख्याति—

**सन्दानितकादिषु तु विकटनिबन्धौचित्यान्मध्यमसमासादीर्घसमासे एव सङ्घटने । प्रबन्धाश्रयेषु यथोक्तप्रबन्धौचित्यमेवानुसर्तव्यम् ।**

एवकारेणासमाससङ्घटनाया व्यवच्छेदः क्रियते । सन्दानितकादिषु पार्यन्तिकक्रियावाचकपदस्य दविष्ठतया वाच्यार्थप्रतीतावेव विलम्बाद् रसास्वादासम्भवेन केवलवन्धद्रढिमसम्पत्त्यै मध्यमसमासा-दीर्घसमासयोः सङ्घटनयोरेवाभ्युपगमः । प्रवन्धाश्रयेषु प्रवन्धान्तर्वर्तिषु तु सन्दानितकादिषु, यथोक्तं सम्प्रत्युक्तानुरूपं प्रवन्धौचित्यमेव, न तु वन्धद्रढिमानुकूल्यमनुसर्तव्यं, सङ्घटनानियामकत्वेनेति शेषः ।

सन्दानितकादिषु स्वतन्त्रेषु प्रवन्धदार्ढ्यानुसारिणी, प्रवन्धघटकेषु तु प्रवन्धानुसारिण्येव सङ्घटनेति सारम् ।

प्रवन्धान्तर्गतानां पद्यानां मिथः सम्वन्धेन मुक्तकं तत्र न सम्भवतीति न मन्तव्यम् । तेषां तत्र पार्यन्तिकसापेक्षत्वेऽपि वहुत्र शाब्दप्रतीतिजननपर्यन्तं, कुत्रचिद् रसास्वादं यावच्च स्वातन्त्र्योपलम्भान्मुक्तकत्वाभ्युपगमे वाधाभावात् । पूर्वापरनैरपेक्ष्येण रसचर्वणाप्रयोजकत्वस्यैव मुक्तकत्वात् ।

तथा हि मदीये राधापरिणये—

'उल्लङ्घ्य गौरवमुपेत्य वचो गुरूणामालीजनाननवरुध्य विरुध्य भीतेः ।
लज्जां विसृज्य च हरे ! भवदेकतानस्वान्ताऽन्तिकं सततमुद्यतते वताप्तुम् ॥' इति ॥

मेघदूते—

'तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी,
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां,
या तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः ॥' इति च ।

स्वतन्त्र सन्दानितक आदि स्थलमें केवल बन्ध दृढताके लिये मध्यम समास एवं दीर्घ समासात्मक संघटनाका ही अनुसरण करना चाहिये, परन्तु प्रबन्धान्तर्वर्ति सन्दानितक आदिमें प्रबन्धके अनुरूप ही यथासंभव संघटनाका आश्रयण करना उचित है, अर्थात् स्वतन्त्र सन्दानितक आदिमें बन्ध दार्ढ्योचित संघटनाका होना आवश्यक होता है, और प्रबन्ध घटक सन्दानितक आदिमें प्रबन्धोचित ही संघटना होनी चाहिये । सारांश यह है कि स्वतन्त्र सन्दानितकसे लेकर कुलक पर्यन्तमें असमासात्मक संघटना होने पर इतस्ततः दूरवर्त्ती क्रियादिके ढूढनेमें विक्षेप जनित शैथिल्य होनेसे वाच्यार्थमें ही प्रतीतिका पर्यवसान होकर रसतत्त्व चर्वणाके योग्य नहीं होता, अतः उक्त स्थलमें असमासात्मक संघटना वर्जित है ।

पर्यायबन्धे विशेषमाह—

**पर्यायबन्धे पुनरसमासा-मध्यमसमासे एव सङ्घटने । कदाचिदर्थौचित्याश्रयेण दीर्घसमासायामपि सङ्घटनायां परुषा ग्राम्या च वृत्तिः परिहर्तव्या ।**

पर्यायबन्धे प्रायः शृङ्गारस्य प्राधान्येन व्यङ्ग्यतेति तत्र दीर्घसमाससङ्घटनायाः परिहार्यता । अभ्युपगमस्तु रसान्तरे व्यङ्ग्ये वक्तृवाच्यौद्धत्ये, नीरसत्वे वा । परुषावृत्तिर्गौडीरीतिरेवेत्युक्तमेव ।

ग्राम्यावृत्तिस्तु—

'शेषैर्वर्णैर्यथायोगं ग्रथितां कोमलाख्यया ।
ग्राम्यां वृत्तिं प्रशंसन्ति काव्ये निष्णातबुद्धयः ॥' इत्युद्भटेन

लक्षिता पाञ्चाली रीतिरेव । तयोरुरीकरणे प्रकृतरसभङ्गप्रसङ्गादिति केचित् । परे तु रौद्रादेः कदाचिद् व्यङ्ग्यत्वे परुषायाः, सर्वत्र रसेषु ग्राम्यायाश्चानुकूल्यमेवेति चिन्त्यमिदमिति व्याहरन्ति ।

खण्ड काव्यात्मक पर्यायबन्धमें असमास एवं मध्यम समासात्मक संघटना होनी चाहिये, क्योंकि इस बन्धमें शृङ्गार रसके ही प्रधानतया आस्वादन होनेसे दीर्घ समासका वर्जन है, कदाचित् उद्धत अर्थादिके औचित्यानुसार दीर्घ समासात्मक संघटना होनेपर भी परुषावृत्ति एवं ग्राम्यावृत्तिका सर्वथा परित्याग करना चाहिये, क्योंकि इन दोनोंके मानने पर प्रकृत रस ही भग्न हो जायगा।

परिकथायां विशेषमाह—

**परिकथायां तु कामचारः, तत्रेतिवृत्तमात्रोपन्यासेन नात्यन्तं रसबन्धाभिनिवेशात्।**

नात्यन्तमित्यभिनिवेशोऽन्वेति। तेन यत्किञ्चित्तु तत्रापि स्यात्।

विचित्र प्रकारक अनेक वृत्तान्त वर्णनात्मक परिकथामें तो संघटनाका कामचार रहता है, क्योंकि इसमें इतिवृत्त (कथानक) मात्रके वर्णन होनेसे खास (विशेष) कर किसी रसविशेषके प्रति अत्यन्त आग्रह नहीं रहता है।

खण्डकथा-सकलकथयोर्विशेषमाह—

**खण्डकथा-सकलकथयोः प्राकृतप्रसिद्धयोः कुलकादिनिबन्धनभूयस्त्वाद् दीर्घसमासायामपि न विरोधः।**

कुलकादिष्वर्थप्रतीतिविलम्बो हि स्वाभाविकः, रसप्रवणता च नैव भूयसी। अपिनाऽसमास-मध्यमसमाससङ्घटनयोरनुमतिः क्वचित् सूच्यते।

प्रकृतिसे ही प्रसिद्ध उक्त खण्ड कथा एवं सकल कथामें कुलकादि निरूपणके आधिक्यसे अर्थप्रतीतिका विलम्ब होना स्वाभाविक है और रसप्रतिपादनार्थं अधिक अभिनिवेश भी नहीं रहता, इसलिये असमास, मध्यम समास और दीर्घसमासात्मक तीनों संघटनाओंका निर्माण किया जा सकता है।

तत्रापि विशेषमाह—

**वृत्त्यौचित्यं तु यथारसमनुसर्तव्यम्।**

प्रबन्धरसानुसारेण परुषाऽऽदिवृत्तीनामौचित्यमनुरोद्धव्यमेवेति सारम्।

परन्तु प्रबन्धगत रसके अनुसार परुषादि वृत्तियोंके औचित्यका ध्यान अवश्य रखना चाहिये।

महाकाव्ये नियममाह—

**सर्गबन्धे तु रसतात्पर्येण यथारसमौचित्यम्। अन्यथा तु कामचारः।**

तुनाऽभिनेयार्थं व्यवच्छिद्यते। अन्यथा रसतात्पर्यविरहे। महाकाव्यं कविर्यदि

रसनिवेशाभिप्रायेण कुर्यात्, तदा रसानुसारेणैव वृत्तीनां व्यवस्था, यदि तु रसमुपेक्ष्येतिवृत्तमात्रवर्णनतात्पर्येण कुर्यात्, तदा पोषणीयरसविरहेण वृत्तीनामनियम इति पर्यवसितम्।

सर्गबन्धात्मक महाकाव्यको यदि कवि रसनिवेशाभिप्रायसे रचता है, तो रसानुसार ही संघटनाकी व्यवस्था होनी चाहिये, किन्तु यदि रसकी उपेक्षा कर इतिवृत्त मात्रके वर्णनके तात्पर्यसे रचे, तो पुष्ट करने योग्य रसके नहीं रहनेसे संघटनात्मक वृत्तियोंकी भी कोई नियत व्यवस्था नहीं रहती, अपितु कामचार ही रहता है।

नन्वितिवृत्तवर्णनमात्रतात्पर्येण कृतं काव्यं न दृश्यत इत्यत आह—

**द्वयोरपि मार्गयोः सर्गबन्धविधायिनां दर्शनात्।**

द्वयोर्मार्गयोरिति सप्तमी। रसेषु तात्पर्यमितिवृत्तेषु वा यत्रेति मार्गद्वयम्। उभयत्र कविप्रवृत्तिदर्शनादुभयोरपि सम्भव इति सारम्।

तत्र रसतात्पर्येण कालिदासादे रघुवंशादि, कथामात्रतात्पर्येण भट्टजयन्तादेः कादम्बरीकथासारादि प्रसिद्धम्।

रसवर्णन एवं इतिवृत्त वर्णन इन दोनोंके तात्पर्यसे सर्गबन्ध रूप महाकाव्य निर्माणमें कवियोंकी प्रवृत्ति देखी जाती है, जैसे रस तात्पर्यसे कालिदासकृत रघुवंशादि और कथानकरूप इतिवृत्त मात्रके तात्पर्यसे भट्टजयन्त कृत कादम्बरी कथासारादि वर्णित हैं।

तयोर्मध्ये श्रेष्ठमाख्याति—

**रसतात्पर्यं साधीयः।**

साधीय इष्टम्, रसास्वादनगर्भोपदेशार्थमेव काव्यप्रवृत्तेः।

परन्तु उन दोनोंमें रस तात्पर्यसे रचित काव्य ही श्रेष्ठ माना जाता है, क्योंकि रसास्वादन करानेके लिये ही काव्यमें कवियोंकी प्रवृत्ति होती है।

दृश्यकाव्येषु नियममाचष्टे—

**अभिनेयार्थे तु सर्वथा रसबन्धेऽभिनिवेशः कार्यः।**

रसतात्पर्यविरहे दृश्यकाव्यस्याचमत्कारित्वेन स्वरूपहानिप्रसङ्गात्।

यदि नाटकादि दृश्य काव्यमें रस, तात्पर्य विषयीभूत न हो, तो विलक्षण चमत्कार रहित होनेसे उस काव्यका स्वरूप ही नष्ट हो जायगा, इसलिये विशेष करके दृश्य काव्यमें रस तात्पर्यसे ही कविकी प्रवृत्ति होनी चाहिये।

आख्यायिका-कथयोरथ नियममभिधातुमुपक्रममाणोऽग्रिमकारिकामवतारयति—

**आख्यायिका-कथयोस्तु गद्यनिबन्धबाहुल्याद्, गद्ये च छन्दोबन्धभिन्नप्रस्थानत्वादिह नियमे हेतुरकृतपूर्वोऽपि मनाक् क्रियते—**

प्रस्थानं मार्गरूपा रीतिरिति प्राक् व्याख्यातमेव। इह गद्ये, नियमे हेतुर्नियामकः, सङ्घटनाया इति शेषः। अकृतपूर्वोऽपि पूर्वं क्वचिदनुक्तोऽपि, मनागीषत्, सङ्क्षेपेणेति यावत् क्रियते साम्प्रतमुच्यते। यद्वा—इहेति क्रियत इत्यनेनान्वेति।

**आख्यायिका और कथामें अधिकांश गद्यभाग रहता है और गद्यमें छन्दोबन्धसे भिन्न ही मार्ग है, इसलिये गद्य विषयमें संघटनाके नियामकका कथन नहीं होने पर भी संक्षेपसे बतलाते हैं।**

**एतद् यथोक्तमौचित्यमेव तस्या नियामकम्।**
**सर्वत्र गद्यबन्धेऽपि च्छंदोनियमवर्जिते॥ ६४॥**

एतत् सम्प्रति पद्यकाव्यप्रस्तावे यथोक्तमुक्तमनतिक्रम्य वक्तृवाच्यप्रबन्धानामौचित्यमेव, न त्वन्यत् किमपि, छन्दोनियमवर्जिते 'वृत्तबन्धोज्झितं गद्यम्' इति लक्षणा च्छन्दोविहीने सर्वत्र गद्यबन्धे गद्यकाव्येऽपि तस्याः सङ्घटनाया नियामकमित्यर्थः।

विशेषानुक्तेस्तुल्यन्यायादुभयत्र सङ्घटनानियमहेतुस्तुल्य एवेति सारम्।

**पद्य काव्यके प्रकरणमें कथित वक्ता, वाच्य और प्रबन्धात्मक विषयका औचित्य ही छन्दोबन्ध नियम रहित सभी गद्य काव्यमें भी संघटनाका नियामक होता है, अर्थात् किसीका वहां पर विशेष उल्लेख नहीं होनेसे तुल्ययुक्त्या गद्य पद्य दोनों ही प्रबन्धोंमें तुल्य ही संघटनाका नियामक समझना चाहिये।**

तद् ब्रवीति वृत्तिकारः—

**यदेतदौचित्यं वक्तृवाक्यगतं सङ्घटनाया नियामकमुक्तम्, एतदेव गद्ये छन्दोनियमवर्जितेऽपि विषयापेक्षं नियमहेतुः।**

विषयः प्रबन्धस्तदपेक्षमौचित्यमेव। प्रबन्धौचित्यस्य वक्तृवाच्यौचित्याभ्यां पृथगुपादानं प्राधान्यं सूचयति।

**उक्ताशयको ही वृत्तिकार स्फुट करते हैं—**यदिति। **जो यह, वक्तृ-वाच्य एवं विषयगत औचित्य सङ्घटनाका नियामकतया प्रतिपादित किया गया है, वही उक्त त्रितयगत औचित्य, छन्दोबन्ध नियम रहित गद्य काव्यमें भी सङ्घटनाका नियामक होता है, परन्तु गद्यांश स्थलमें विशेषकर प्रबन्धात्मक विषयगत औचित्यके आधार पर ही सङ्घटना निर्भर रहती है।**

उपपादयति—

तथा हि-अत्रापि यदा कविः, कविनिबद्धो वा वक्ता रसभावरहितः, तदा कामचारः। रसभावसमन्विते तु वक्तरि पूर्वोक्तमेवानुसर्तव्यम्।

अत्र गद्यकाव्येऽपि 'पूर्वोक्तं वक्त्राद्यौचित्यम्।

गद्य काव्यमें भी जब कवि या कविनिबद्ध वक्ता रसभावरहित होता है, तब संघटनाका कोई नियन्त्रण नहीं रहता, परन्तु इन दोनोंके रसभाव युक्त होने पर पूर्वोक्त वक्तृत्वादिगत औचित्य ही संघटनाको नियन्त्रित करता है।

प्रबन्धौचित्यस्य प्राधान्यं दर्शयति—

तत्रापि वा विषयौचित्यमेव।

प्राधान्यादनुरोद्धव्यमिति शेषः।

उक्त तीनोंके औचित्यमें भी तत्तत् विषयरूप प्रबन्धगत औचित्य ही प्रधानतया संघटनाका नियामक होता है।

तदौचित्यमेव निर्वक्ति—

आख्यायिकायां तु भूम्ना मध्यमसमासा-दीर्घसमासे एव सङ्घटने।

भूम्ना बाहुल्येन। निबद्धव्ये इति शेषः।

आख्यायिकाओंमें तो प्रायः करके अधिकतर मध्यम समास और दीर्घसमासात्मक संघटनाको ही उपयोगमें लाना चाहिये।

तत्र हेतुमाह—

गद्यस्य विकटनिबन्धाश्रयेण च्छायावत्त्वात्।

गाढबन्धमेव हि गद्यं शोभते। नव्यास्तु चूर्णिकाप्रायमेव प्रशंसन्ति।

क्योंकि अत्यन्त सघन संगठित रूपसे रचित गद्य ही अधिक शोभाजनक होता है।

तस्य निमित्तमभिवत्ते—

तत्र च तस्य प्रकृष्यमाणत्वात्।

तत्र विकटनिबन्धे तस्य च्छायावत्त्वस्य प्रकृष्यमाणत्वादाधिक्यादित्यर्थः।

क्योंकि संगठित रचनाओंमें सहृदयोंको अतिशय चमत्कारका अनुभव होता है।

कथायामौचित्यमाह—

कथायां तु विकटबन्धप्राचुर्येऽपि गद्यस्य, रसबन्धोक्तमौचित्यमेवानुसर्तव्यम्।

'कथायां सरसं वस्तु' इत्याद्युक्ते रसौचित्यानुसरणमेव तत्र ज्यायः।

परन्तु कथाओंमें गद्यकी संगठित रचनाके बाहुल्य होने पर भी वन्धवृत्ति रसगत औचित्यके अनुसार ही संघटनाका निर्माण होना चाहिये।

चरमं पक्षं द्रढयति कारिकाकारः—

**रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता।**
**रचना, विषयापेक्षं तत्तु किञ्चिद्विभेदवत् ॥ ६५ ॥**

सर्वत्र पद्य इव गद्येऽपि रसबन्धोक्तमौचित्यं प्रागुक्तप्रबन्धरसौचित्यं संश्रिता-रचना सङ्घटना भाति। तद् रसौचित्यं तु पुनः विषयापेक्षं प्रवन्धौचित्यानुरोधि सत्, किञ्चिद् विभेदवदीषदेव, न त्वत्यन्तं विलक्षणं भवतीत्यर्थः।

सर्वत्र सङ्घटनायां रसौचित्यमादरणीयम्। न चैतावता विषयौचित्यस्यानादरः, तदनुरोधेनापि तस्या आवान्तरिक-यत्किञ्चिद्वैलक्षण्यदर्शनात्। किन्तु मुख्यं रसौचित्यमेवेति भावः।

ग्रन्थकार प्रवन्ध रसगत औचित्यका ही सर्वथा समर्थन करते हैं—रसबन्धेति। रसबन्धगत औचित्यको ही पद्य-गद्य सभी स्थलोंमें आश्रयण कर रचनात्मक संघटना अधिक चमत्कारजनक होती है, परन्तु कहीं पर रसगत औचित्य भी प्रवन्धगत औचित्यका अनुसरण कर कुछ विलक्षण जैसा हो जाता है, अर्थात् सभी जगह संघटनाओंके नियमनार्थ रसगत औचित्यका ही अनुसरण करना चाहिये, विषयगत औचित्यसे तो विरले ही स्थलमें संघटनाका कुछ आनुषङ्गिक वैलक्षण्य हो जाता है।

तद्व्यक्ति वृत्तिकृत्—

**अथवा पद्यवद् गद्यबन्धेऽपि रसबन्धोक्तमौचित्यं सर्वत्र संश्रिता रचना भाति। तत्तु विषयापेक्षं किञ्चिद्विशेषवत् भवति। न तु सर्वाकारम्।**

'स्त्रियो नरपतिर्वह्निर्विषं युक्त्या निषेवितम्।
स्वार्थाय यदि वा दुःख-सम्भारायैव केवलम् ॥'

इतिवद् वाशब्दोऽत्रपक्षे ज्यायस्त्वं सूचयति। पद्यवदिति सप्तम्यन्ताद्वतिः। सर्वाकारं सर्वथाऽत्यन्तमिति यावत्। तच्च क्रियाविशेषणम्।

सर्वथा वैलक्षण्ये तु तस्यापि मुख्यत्वमेव स्यादिति तात्पर्यम्।

वृत्तिकार उसीको स्पष्ट करते हैं—अथवेति। पद्यकी तरह गद्यमें भी प्रवन्ध-रसगत औचित्यका ही सभी जगह आश्रयण कर रचना अधिक रमणीय होती है,

किन्तु रसगत औचित्य भी कहीं पर विषयगत औचित्यका अनुसरण कर कुछ विलक्षण प्रतीत होने लगता है, न कि अत्यन्त विलक्षण प्रतीत होता, अन्यथा विषयगत औचित्य भी मुख्य हो जायगा।

तदेव दर्शयति—

तथा हि गद्यबन्धेऽप्यतिदीर्घसमासा रचना न विप्रलम्भशृङ्गार-करुणयोराख्यायिकायामपि शोभते।

सर्वत्रेति शेषः। यदि हि प्रबन्धौचित्यमेव मुख्यं स्यात्, तदाऽऽख्यायिकायामपि करुणविप्रलम्भयोर्दीर्घसमासैव सङ्घटना शोभेत, न च तथा। तस्माद् रसौचित्यमेव श्रेय इति सारम्।

क्योंकि गद्य प्रबन्धोंमें भी सभी जगह यदि रसगत औचित्यकी अपेक्षा प्रबन्धगत औचित्य ही संघटनाका मुख्य नियामक होता, तो आख्यायिकामें भी करुण-विप्रलम्भ शृङ्गारस्थलमें दीर्घ समासात्मक संघटना अधिक शोभती, परन्तु ऐसी बात नहीं देखी जाती, इसलिये सर्वथा रसगत औचित्यको ही संघटनाका नियामक मानना उचित है।

विशेषमाह—

नाटकादावप्यसमासैव घटना।

शोभत इति शेषः। नाटकादौ दृश्यकाव्ये। अपिना करुणादिव्यञ्जकश्रव्यकाव्यं परिगृह्यते।

नाटकादि दृश्यकाव्य एवं करुणव्यञ्जक श्रव्यकाव्यमें भी असमासात्मक संघटना ही विशेष शोभा वर्द्धक होती है।

पुनर्विशेषमाह—

रौद्रवीरादिवर्णने विषयापेक्षं त्वौचित्यं प्रमाणतोऽपकृष्यते प्रकृष्यते च।

प्रबन्धानुसारि यदौचित्यमुक्तं, तदपि रौद्रादिरसानुरोधेन क्वचित् प्रमाणान्न्यूनमधिकं च भवतीति सर्वथा रसौचित्यस्यैव प्राधान्यम्, प्रबन्धौचित्यादेस्तु तदनुयायित्वमिति भावः।

रौद्र-वीररसादिवर्णन स्थलमें प्रबन्धात्मक विषयगत औचित्य कहीं पर प्रमाण के अनुसार अपकृष्ट और कहीं पर उत्कृष्ट हो जाता है, इसलिये सर्वथा रसगत औचित्य ही संघटनाका मुख्य नियामक है और प्रबन्धगत औचित्य तो उसका अनुयायी होता है।

उपपादयति—

**तथा हि—आख्यायिकायां नात्यन्तमसमासा, स्वविषयेऽपि नाटकादौ नातिदीर्घसमासा चेति सङ्घटनाया दिगनुसर्तव्या।**

आख्यायिकायां स्वविषये करुणादावपि प्राधान्येन व्यङ्ग्ये, नात्यन्तमसमासैव, नाटकादौ स्वविषये रौद्रादावपि नातिदीर्घसमासा सङ्घटना भवति, विषयौचित्यस्यापि किञ्चिदनुरोद्धव्यत्वात्। इत्थं च प्रबन्धाद्यौचित्यसहकृतं रसौचित्यं मुख्यं सङ्घटनानियामकमिति फलितम्। किञ्च सङ्घटनाऽपि रसव्यञ्जिकेत्युपक्रान्तं निरूपितमिति द्रष्टव्यम्।

जैसे आख्यायिकामें प्रधानरूपसे करुणादि व्यङ्ग्य रसस्थलमें भी अत्यन्त असमासात्मक संघटना ही नहीं देखी जाती है, वैसे ही नाटकादिमें रौद्रादिरस स्थलमें भी नियमतः दीर्घसमासात्मक संघटना भी नहीं देखी जाती। इसमें विषयगत औचित्य ही मूल निदान मालूम पड़ता है, अतः प्रबन्धात्मक विषयगत औचित्यके साथ ही रसगत औचित्य, संघटनाका मुख्य नियामक होता है।

उपसंहरति—

'इति काव्यार्थविवेको योऽयं चेतश्चमत्कृतिविधायी।
सूरिभिरनुसृतसारैरस्मदुपज्ञो न विस्मार्यः॥' इति।

इत्येवंरूपः, चेतश्चमत्कृतिविधायी चमत्कारको योऽयं काव्यार्थानां विवेकः, अस्मदुपज्ञो वयमेवोपज्ञा आद्यज्ञातारो यस्य तादृशः, अनुसृतसारैस्तत्त्वान्वेषिभिः सूरिभिर्ध्वनिपाण्डित्यमिच्छद्भिर्न विस्मार्यो, नैव विस्मरणीय इत्यर्थः।

इह—चेत इत्याद्यपरिहार्यताम्, अनुसृतेत्यादि पक्षपातराहित्यम्, अस्मदित्याद्यात्मसम्भावनासुखेन विषयगौरवम्, ण्यत्प्रत्ययो विधानावश्यकत्वम्, चरमेतिश्च प्रकरणावसानं सूचयति।

टीकाकार उपसंहार करते हैं—इतीति। उक्तरीतिसे मैंने जो सहृदयोंके आह्लादकजनक काव्यार्थका विचार सर्वप्रथम मनन कर प्रस्तुत किया है, उसको तत्त्वानुसन्धान कर्त्ता ध्वनितत्त्व जिज्ञासु विद्वज्जन नहीं भूलें।

इत्थं सङ्घटनाया रसव्यञ्जकतां निरूप्य, प्रबन्धस्य रसव्यञ्जकतां सर्वसम्मतत्वेन प्रसिद्धामनिरूपयन् कविसहृदयव्युत्पत्तये तद्व्यञ्जनप्रकारमेवाभिदधतीः कारिका अवतारयति—

**इदानीमलक्ष्यक्रमव्यङ्ग्यो ध्वनिः प्रबन्धात्मा रामायणमहाभारतादौ प्रकाशमानः, प्रसिद्ध एव, तस्य तु यथा प्रकाशनं, तत्प्रतिपाद्यते—**

तस्य रसादिध्वनेः। तच्छब्देनान्तिमेन प्रकाशनप्रकारः परामृश्यते।

उक्तरीतिसे संघटनाका रसव्यञ्जकत्व निरूपण कर कथा संदर्भादि प्रबन्धोंका रसव्यञ्जकत्व निरूपणार्थ पहले रसव्यञ्जन प्रकारका प्रतिपादन करते हैं—इदानी-मिति। अब असंलक्ष्यक्रम व्यङ्ग्य रसादिध्वनिव्यञ्जक कथासंदर्भाद्यात्मक प्रबन्ध रामायणादिमें प्रसिद्ध ही है, परन्तु उस रसादि ध्वनिका जिस प्रकारसे अभिव्यञ्जन होता है, उस प्रकारको बतलाते हैं।

रसादिव्यञ्जनोपयोगिनः प्रकारानेवाह—

विभावभावानुभाव–सञ्चार्यौचित्यचारुणः।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ॥ ६६ ॥
इतिवृत्तवशायातां त्यक्त्वाऽननुगुणां स्थितिम्।
उत्प्रेक्ष्याप्यन्तराभीष्ट–रसोचितकथोन्नयः ॥ ६७ ॥
सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया।
न तु केवलया शास्त्र–स्थितिसम्पादनेच्छया ॥ ६८ ॥
उद्दीपनप्रशमने यथाऽवसरमन्तरा।
रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिनः ॥ ६९ ॥
अलङ्कृतीनां शक्तावप्यानुरूप्येण योजनम्।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम् ॥ ७० ॥

इह प्रबन्धस्य रसव्यञ्जकत्वे रसोचितकथायाः स्थापनं प्रथमम्, तत्राननुपयोग्यंशस्य हानम्, उपयोग्यंशस्य कल्पनं च द्वितीयम्, रसोपयोगिसन्धि–तदङ्गसन्निवेशनं तृतीयम्, उचितेऽवसरे रसस्योद्दीपनप्रशमनयोजनं चतुर्थम्, प्रबन्धसमाप्तिपर्यन्तमङ्गिरसानुसन्धानं पञ्चमम्, अलङ्काराणां रसोपयोगितया घटनं षष्ठं च कारणमेतत्कारिकानिकरेण क्रमशो दर्शितम्।

विभावः—'विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते।
विभावो नाम स द्वेधाऽऽलम्बनोद्दीपनात्मकः॥'

इत्याग्नेयोक्तलक्षणविभाव आलम्बनरूप उद्दीपनरूपश्च रत्यादिस्थायिभावकारणम्।

भावः—'रतिर्देवादिविषया व्यभिचारी तथाऽञ्जितः। भावः प्रोक्तः'

इति मम्मटलक्षितोऽपरिपुष्टः स्थायी, लब्धप्राधान्यो व्यभिचारी च रसाद्यन्य-

-तमः । इह 'स्थायीभाव उपनिबध्यमानः' इत्यग्रिमग्रन्थसंवादाय भावपदेनापरिपुष्टस्था-यिमात्रस्य ग्रहणमवगन्तव्यम् ।

अनुभावः—'अनुभावो विकारस्तु भावसंसूचनात्मकः' इति धनिकोदितलक्षणः स्थायि-कार्यविशेषः । व्यभिचार्यपरपर्यायः सञ्चारी—

'विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।
स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च तद्भिदाः ॥'

इति दर्पणप्रतिपादितलक्षणविभागो रसस्य पोषकः सहकारी च, तेषामौचित्येन प्रस्तुत-रसानुकूल्येन चारुणश्चमत्कारितया सुन्दरस्य वृत्तस्य पुराणादिप्रसिद्धस्य, उत्प्रे-क्षितस्य कविना स्वयं कल्पितस्य वा कथाशरीरस्येतिवृत्ताकारस्य विधिर्विधानं प्रब-न्धस्य रसादीनां व्यञ्जकत्वे प्रथमं निबन्धनं निमित्तं भवति । एतेन—

'परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः ॥
आक्षेपः कल्पितः कृच्छ्रादनुभावविभावयोः ॥
अर्थानौचित्यमन्यच्च' इति दर्पणोक्तरसदोषपरिहार उक्तः ।

इतिवृत्तवशेन कथाप्रसङ्गेनायातामुपस्थिताम्, अननुगुणां रसप्रतिकूलां स्थिति-मितिवृत्तांशं त्यक्त्वा, उत्प्रेक्ष्यापि स्वयं कल्पनां विधायापि, अन्तरा मध्ये, रसोचि-ताया रसानुगुणाया उन्नय ऊहस्तत्र द्वितीयं निबन्धनं भवति । तथा चोक्तं दर्पणे—

'अविरुद्धं तु यद्वृत्तं रसाभिव्यक्तयेऽधिकम् ।
तदप्यन्यथयेद् धीमान् न वदेद्वा कदाचन ॥'
'यत् स्यादनुचितं वस्तु नायकस्य रसस्य वा ।
विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत् ॥' इति ।

रसानामभिव्यक्त्यपेक्षया व्यञ्जनानुकूल्येन न तु-न पुनः केवलया शास्त्रस्थिति-सम्पादनेच्छया भरतादिप्रणीतशास्त्रीयसिद्धान्तानुसरणस्पृहामात्रेण, सन्धीनां मुख-प्रतिमुखगर्भविमर्शनिर्वहणाख्यानामन्यत्र लक्षितानां पञ्चानाम्, सन्ध्यङ्गानामुपक्षेप-परिकरप्रभृतीनां चतुःषष्टेर्घटनं योजनं तत्र तृतीयं कारणं भवति । तथा चोक्तं दर्पणे—

'चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः ।
कुर्यादनियते तस्य सन्धावपि निवेशनम् ॥
रसानुगुणतां वीक्ष्य रसस्यैव हि मुख्यता ।
रसव्यक्तिमपेक्ष्यैषामङ्गानां विनिवेशनम् ॥
न तु केवलया शास्त्र-स्थितिसम्पादनेच्छया ॥' इति ।

एतेन—'अतिविस्तृतिरङ्गस्य' इति तदुक्तरसदोषपरिहार उक्तः।

अन्तरा मध्ये, यथाऽवसरमुचितावसरे रसस्योद्दीपनं प्रशमनं च तत्र चतुर्थं कारणं भवति।

एतेन—'अकाण्डे प्रथनच्छेदौ' इति दर्पणोक्तरसदोषपरिहार उक्तः।

आरब्धविश्रान्तेः प्रबन्धस्यारम्भादवसानं यावदङ्गिनः प्रधानस्य रसस्यानुसन्धानमविस्मरणं पञ्चमं तत्र निबन्धनं भवति।

एतेन—'अङ्गिनोऽननुसन्धानम्' इति दर्पणोक्तरसदोषपरिहार उक्तः।

शक्तावलङ्कारयोजकप्रतिभायां सत्यामपि, अलंकृतीनामलङ्काराणामानुरूप्येण रसानुगुण्येन योजनं च षष्ठं तत्र निबन्धनं भवतीत्यर्थः।

'उत्प्रेक्ष्यः' इति पाठस्तु समन्वयासङ्गतेरुभयेन पौनरुक्त्याच्च परित्यक्तः। ल्यबुपपत्तिरावान्तरिकक्रियाऽध्याहारेण करणीया, समन्वयश्च दर्शितदिशेति ज्ञेयम्।

कथा संदर्भाद्यात्मक प्रबन्ध निम्न छः प्रकारोंसे रसादिका अभिव्यञ्जन करता है, जैसे (१) रसोचित कथाका उपन्यास (२) उनमें अनुपयोगी अंशका परित्याग और उपयोगी अंशका ग्रहण (३) रसोपयोगी सन्धियों और सन्ध्यङ्गोंका संनिवेशन (४) यथावसर रसके उद्दीपन एवं प्रशमनका योजन (५) प्रबन्धसमाप्ति पर्यन्त प्रधान रसका अनुसन्धानात्मक ध्यान और (६) रसोपयोगी अलंकारोंका विरचन। उक्तकारिकाओंका वाच्यार्थ इस प्रकार है—आलम्बन एवं उद्दीपनरूप विभाव तथा देवादिविषयक रत्यादिभाव, एवं रोमाञ्चादि अनुभाव और हास्यादि संचारी भावोंके औचित्यानुसार अत्यन्त चमत्कार जनकतया रमणीय पुराणादि प्रसिद्ध या कविकल्पित इतिवृत्तात्मक कथाका विधान करना ही प्रबन्धोंको रसादिके प्रति व्यञ्जक होनेमें प्रथम निमित्त होता है। कथाप्रसङ्गवश उपस्थित रसप्रतिकूल इतिवृत्तांशको छोड़कर उपयोगी अंशोंकी कल्पना कर कभी मध्यमें ही रसानुगुणका ऊहापोह करना रसव्यञ्जनमें द्वितीय निदान समझा जाता है रसोंकी अभिव्यक्तिकी अपेक्षासे (न कि केवल भरतादि मुनि प्रणीत शास्त्रानुसरणकी स्पृहा मात्रसे ही) मुख, प्रतिमुखादि पञ्चसन्धियों और उपक्षेपादि ६४ सन्ध्यङ्गोंका योजन करना रस व्यञ्जनमें तृतीय निदान है। बीचमें उचित अवसर पर रसका उद्दीपन एवं प्रशमन रस व्यञ्जनमें चतुर्थ कारण है। प्रबन्धरूप काव्यमें, आरम्भसे लेकर समाप्ति पर्यन्त प्रधान रसका अनुसन्धानात्मक ध्यान रखना पञ्चम हेतु होता है। अलङ्कार योजक प्रतिभाके रहने पर भी प्रस्तुत रसानुकूल अलङ्कारोंका ही योजना करना षष्ठ कारण समझा जाता है।

तदाह वृत्तिकृत्—

**प्रबन्धोऽपि रसादीनां व्यञ्जक इत्युक्तम्, तस्य व्यञ्जकत्वे निबन्धनं प्रथमं तावद् विभावभावानुभावसञ्चार्यौचित्यचारुणः कथाशरीरस्य विधिः यथायथं प्रतिपिपादयिषितरसभावाद्यपेक्षया य उचितो विभावो भावोऽनुभावः सञ्चारी वा, तदौचित्यचारुणः कथाशरीरस्य विधिर्व्यञ्जकत्वे निबन्धनमेकम्।**

एकमिति प्रथममित्यस्य विवृतिः। इतिवृत्तं प्रवन्धे तादृशमेव योजनीयं, यत्र प्रस्तुतरसानुगुणानां विभावादीनां सन्निवेशः स्यादिति भावः।

वृत्तिकार उसीका सार बतलाते हैं—प्रवन्ध इति। कथा सन्दर्भाद्यात्मक प्रवन्ध भी रसादिका व्यञ्जक होता है, यह बात पहले कह चुके हैं उसके द्वारा रसादि-व्यञ्जन करानेमें प्रथम मूल निदान यह है कि उक्त विभाव, भाव, अनुभाव और संचारीभावोंके औचित्यानुसार अत्यन्त रमणीय इतिवृत्तका वर्णन होना चाहिये अर्थात् काव्यात्मक प्रवन्धमें वैसा ही इतिवृत्तका निर्माण होना चाहिये जिसमें कि प्रस्तुत रसके अनुगुण ही विभावादिका यथोचित सन्निवेश सुव्यवस्थित हो।

तदेव पुनर्व्यष्ट्या प्रतिपादयति—

**तत्र विभावौचित्यं तावत् प्रसिद्धम्। भावौचित्यं तु प्रकृत्यौचित्यात्। प्रकृतिह्युत्तममध्यमाधमभावेन, दिव्यमानुषादिभावेन च विभेदिनी। तां यथायथमनुसृत्यासङ्कीर्णः स्थायीभाव उपनिबध्यमान औचित्यवान् भवति।**

प्रसिद्धं लोके भरतादिशासने च। तथा हि—शृङ्गारे प्रस्तुते नायिका नायकश्चालम्वनम्—

'ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः।
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति॥'

इति भरतोक्तेर्ऋतुमाल्यादीन्युद्दीपनानि, तदौचित्यम्। प्रकृतिश्चोत्तमामध्यमाऽधमेति त्रिविधा, पुनर्दिव्या मानुष्यदिव्या दिव्यमानुषी-दिव्यादिव्या चेति त्रिविधा। असङ्कीर्णः प्रतिकूलभावान्तरासम्पृक्तः।

उनमें विभावगत औचित्य तो प्रसिद्ध ही है, जैसे शृङ्गाररसमें नायक नायिका, आलम्बन एवं स्रक्, चन्दन, चन्द्रचन्द्रिका, कोकिल, कलरव, वसन्त, उद्यानादि उद्दीपन विभाव होता है। एवं वीरादिरसोंमें भी इसकी नियत व्यवस्था मानी हुई है। परन्तु देवादि विषयक रत्यादिभावोंका औचित्यज्ञान प्रकृतिगत औचित्यानुसार ही होता है। प्रकृति तो उत्तम, मध्यम और अधमके अनुसार तीन

प्रकारकी एवं दिव्या, मानुषी आदिके भेदसे तीन प्रकारकी होती है, उस प्रकृति का यथायोग्य अनुसरण कर विरोधी भावान्तरके सम्पर्कसे रहित होकर स्थायी-भाव काव्यघटकतया प्रयुज्यमान होता हुआ औचित्यशाली समझा जाता है।

अधमप्रकृतावुत्तमप्रकृत्युचितो दिव्यप्रकृतौ मानुषप्रकृत्युचितश्च रत्यादिभाव उपवर्ण्यमान औचित्यं नावहति, प्रत्युत प्रतिकूलतया वर्णनस्य वैतथ्यमुपस्थापयन् वैरस्यमादधातीत्याह—

अन्यथा तु केवलमानुषाश्रयेण दिव्यस्य, केवलदिव्याश्रयेण वा मानुषस्योत्साहादय उपनिबध्यमाना अनुचिता भवन्ति। तथा च केवलमानुषस्य राजादेर्वर्णने सप्तार्णवलङ्घनादिलक्षणा व्यापारा उपनिबध्यमानाः सौष्ठवभृतोऽपि नीरसा एव नियमेन भान्ति। तत्र त्वनौचित्यमेव हेतुः।

व्यापारास्तद्विषयकोत्साहाः। सौष्ठवभृतः सुन्दरा वर्णनप्रभावेणेति शेषः। तत्र नीरसत्वेन भाने। अनुचितत्वादेव सरसा अपि नीरसा इव प्रतीयन्त इति तात्पर्यम्।

अधम प्रकृतिमें उत्तम प्रकृति योग्य और दिव्यप्रकृतिमें मनुष्य प्रकृति योग्य रत्यादि भाव उपवर्ण्यमान हो, तो ठीक नहीं मालूम पड़ता है, प्रत्युत विरस ही हो जाता है। जैसे केवल मनुष्य राजादिके वर्णन स्थलमें सप्तसमुद्रोंका लङ्घनादिविषयक उपवर्ण्यमान उत्साहादि भाव, वर्णनके प्रभावसे मनोहर होने पर भी नियमतः नीरस ही प्रतीत होता है, अर्थात् अनुचित होनेके कारण ही सरस होता हुआ भी रसरहित ही प्रतीत होता है।

तत्राशङ्कते—

ननु नागलोकगमनादयः सातवाहनप्रभृतीनां श्रूयन्ते, तदलोकसामान्यप्रभावातिशयवर्णने किमनौचित्यं सर्वोर्वीभरणक्षमाणां क्षमाभुजामिति।

सातवाहनो नरपतिः पातालं जगामेतिवृत्तमन्यत्र प्रसिद्धम्। गोदावरीतीरस्थकुन्तलजनपदावयव–प्रतिष्ठानाह्वयनगरस्वामी (शाल) सातवाहनस्तदन्यो वाऽयमिति निर्णेतुं न शक्यते। अयमेव शकप्रवर्तको गाथासप्तशतीकृद् गुणाढ्यसेवितः शालिवाहन इति केचित्। क्षमाभुजां राज्ञाम्।

साधारणमनुष्यस्यापि राज्ञः प्रभावातिशयवर्णनवशादद्भुतचरितं यदि वर्ण्यते, तदा विशिष्टस्य तद्वर्णनेऽनौचित्यं सुतरामेव न स्यादिति भावः।

प्रश्न करते हैं—नन्विति। सातवाहन प्रभृति राजा पाताल गये थे, इस तरहके इतिवृत्तके अलौकिक प्रभावातिशयके वर्णनस्थलमें अखिल पृथिवीके भरण पोषण करनेवाले राजाओंके लिये क्या अनौचित्य ही होगा?

खण्डयति—

नैतदस्ति, न वयं ब्रूमो यत्प्रभावातिशयवर्णनमनुचितं राज्ञाम्, किन्तु-केवलमानुषाश्रयेण योत्पाद्यवस्तुकथा क्रियते, तस्यां दिव्यमौचित्यं न योजनीयम्। दिव्यमानुषायां तु कथायामुभयमौचित्ययोजनमविरुद्धमेव।

उत्पाद्यं कल्पनीयमेव, न तु पूर्वसिद्धं वस्तु यस्यां तादृशी या कथा, कल्पितेति-वृत्तमिति यावत्।

प्राचीनस्यासम्भाव्यवृत्तान्तस्य वर्णने चिररूढिर्द्रढयति लोकप्रत्ययम्, नवीन-स्य तस्य कल्पने तु तादृशस्खलनेन लोकानामप्रत्ययः स्यादेवेति तत्र प्रमादोऽनुचित इत्यत्रैव तात्पर्यमित्यभिसन्धिः।

उत्तर करते हैं—नैतदस्तीति। राजाओंके प्रभावातिशयके वर्णनको हम अनु-चित नहीं कहते, किन्तु केवल मनुष्यमात्रके आधार पर कल्पना द्वारा रचितवस्तु कथात्मक जो इतिवृत्त है, उसमें दिव्यगत औचित्यका उल्लेख नहीं होना चाहिये, परन्तु दिव्य-मानुष सम्बन्धी कथामें दिव्य मानुषगत औचित्यका अनुसरण करना दोषाधायक नहीं होता है।

उदाहरति—

यथा—पाण्ड्वादिकथा।

पाण्डुनरपतेः कुरुवंशोद्भवस्य दिव्यमानुषप्रकृतित्वादुभयौचित्ययोजनमप्यविरु-द्धम्। वस्तुतस्तु 'यथा—पाण्डवादिकथा' इति पाठः समीचीनः प्रतिभाति, पाण्डवेषु सवपुषो युधिष्ठिरस्य स्वर्गगतेः, भीमस्य दुर्योधनादिकृतगरलपायनानन्तरं पाथःपथेन नागलोकगतेः, सौगन्धिकहरणाय देवलोकगतेर्वा, गाण्डीविन उलूप्याः परिणयाय पातालगतेश्च भारतादौ प्रसिद्धत्वात्, पाण्डोस्तादृशालौकिकचरितस्याश्रुतत्वाच्च।

जैसे कुरुवंशोद्भव पाण्डु राजाके दिव्य मानुष प्रकृतिक व्यक्ति होनेसे उक्तउभय-गत औचित्यका अनुसरण विरुद्ध नहीं समझा जाता है।

ननु तर्हि सालवाहनचरिते कथं सङ्गतिरित्यत आह—

सातवाहनादिषु तु येषु यावदपदानं श्रूयते, तेषु तावन्मात्रमनुगम्य-मानमनुगुणत्वेन प्रतिभासते। व्यतिरिक्तं तु तेषामेवोपनिबध्यमानम-नुचितम्।

अपदानं प्राचीनप्रशस्तचरितम्, 'अपदानं कर्मवृत्तम्' इत्यमरकोशात्। अनु-गम्यमानं वर्ण्यमानम्। व्यतिरिक्तं तद्भिन्नमधिकम्। सातवाहनादिष्वित्याधारे सप्तमी, व्यापारात्मकस्य चरितस्य पुरुषाधेयत्वात्।

मानवेषु प्रसिद्धमलौकिकमपि चरितं यदि वर्ण्यते, न तावता वैतथ्यं प्रतिभातीति तद्वर्णनीयम् । तेष्वेवाप्रसिद्धालौकिकचरितवर्णने त्वसत्यताप्रतिभासो दुर्वार एव, तस्मात् परिहरणीयमिति तात्पर्यम् ।

सातवाहन आदि राजाओं में जहां तक प्रशस्त मानव योग्य चरित्र श्रूयमाण होगा, वहां तक ही उनका वर्ण्यमान चरित रसानुगुण प्रतीत होता है, परन्तु उससे अधिक रूपमें उन्हींका वर्ण्यमान चरित्रादि अनुचित ही प्रतीत होता है।

ननु यदि सौष्ठवं तत्रापि वर्णनवशेन स्यादेव, तर्हि किमनौचित्येनेत्यत आह—

तदयमत्र परमार्थः—

'अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा ॥'

अनौचित्यादृतेऽनौचित्यं विना रसभङ्गस्यान्यत् कारणं नास्तीति शेषः । प्रसिद्धं यदौचित्यं तस्य वन्धो योजनन्तु पुनः, रसस्य, परोत्कृष्टा, उपनिषत् प्रकाशनोपाय इत्यर्थः ।

रसभङ्गेऽनौचित्यमेव सर्वप्रधानं कारणम्, तेनासत्यत्वप्रतिभासात् । औचित्यं तु तथैव रसं प्रकाशयति, यथोपनिषत् परब्रह्मेत्यनौचित्यं सर्वथा परिहरणीयम्, औचित्यं त्वाकलनीयमित्याकूतम् ।

यदि वर्णनवश वहां भी रमणीयता प्रतीत हो, तो अनौचित्यका कथन अकिञ्चित् कर ही होगा, इस संशयको दूर करते हैं—अनौचित्येति । अनौचित्यसे बढ़कर रसभंगमें कोई दूसरा कारण नहीं है, और प्रसिद्ध औचित्यके उपन्याससे बढ़कर रसका प्रकाशक कोई भी दूसरा उत्तम उपाय नहीं है, अर्थात् रसभंगमें अनौचित्य ही प्रधान कारण है, क्योंकि उससे असत्यताका आभास ( झलक ) होने लगता है, परन्तु औचित्यतो उसी प्रकार रसको प्रकाशित करता है जिसप्रकार उपनिषद् ब्रह्मको प्रकाशित करती है, इसलिये अनौचित्यका सर्वथा परित्याग कर औचित्यका अनुसरण करना चाहिये ।

समर्थयति—

अत एव च भरते—प्रबन्धप्रख्यातवस्तुविषयत्वं प्रख्यातोदात्तनायकत्वं च नाटकस्यावश्यकर्तव्यतयोपन्यस्तम् ।

अत एव—कल्पिते वृत्तेऽनौचित्यस्य नितरां रसभङ्गप्रसङ्गप्रयोजकत्वादेव, भरते भरतमुनिप्रणीतनाट्यशास्त्रे-प्रबन्धे रामायणादौ प्रख्यातं वस्त्वितिवृत्तमाधिकारिकप्रा-

सन्निकर्षं विषयः प्रतिपाद्यं यत्र तत्त्वम् , प्रख्यात उदात्त उत्कृष्टो धीरोदात्तलक्षणान्वितो वा नायको यत्र तादृशत्वं च नाटकस्य, अवश्यकर्तव्यतयोपन्यस्तमुक्तमित्यर्थः ।

नाटके प्रसिद्धवृत्तान्तस्य प्रसिद्धतमरामादिधीरोदात्तनायकस्य वर्णने तन्माहात्म्यप्रकर्षेणानौचित्यप्रत्ययाभावाद् रसभङ्गाभात्र इत्याशयः ।

धीरोदात्तलक्षणं च दशरूपके यथा—

'महासत्त्वोऽतिगम्भीरः क्षमावानविकत्थनः ।
स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः ॥' इति ।

कविकल्पित इतिवृत्तमें अनौचित्यके अत्यन्त रसभङ्गजनक होनेसे ही भरतकृत नाट्यलक्षण शास्त्रमें रामायणादि प्रबन्धके प्रसिद्ध इतिवृत्तात्मक प्रतिपाद्य विषयका एवं जगद्विख्यात धीरोदात्त नायकका वर्णन नाटकादिमें अवश्य कर्तव्य रूपसे बतलाया गया है, अर्थात् नाटकमें प्रसिद्ध वृत्तान्त एवं अत्यन्त प्रसिद्ध राम आदि धीरोदात्त नायक वर्णनके माहात्म्यसे अनौचित्यका भान नहीं होनेसे रसका भङ्ग नहीं होता है ।

अवश्यकर्तव्यतायां हेतुमाह—

**तेन हि नायकौचित्यानौचित्यविषये कर्तव्ये कविर्न विमुह्यति ।**

रामादेर्महामहनीयमहिम्नाऽद्भुतमपि वर्ण्यमानं चरितं नानुचितं प्रतिभातीति भावः ।

इसलिए नायक गत औचित्यानौचित्यके विषयमें अपना कर्तव्य समझ कर कवि कभी भी प्रमाद नहीं करता है, अतः राम आदिके महनीय माहात्म्यसे अधिक मात्रामें अद्भुत रूपसे वर्ण्यमान भी चरित, अनुचित नहीं मालूम पड़ता है ।

कल्पितेतिवृत्तादिविषये आह—

**यस्तूत्पाद्यवस्तु नाटकादि कुर्यात् , तस्याप्रसिद्धानुचितनायकस्वभाववर्णने महान् प्रमादः ।**

यस्तु कविः । प्रमादोऽनवधानता स्खलनलक्षणा सम्भवतीति शेषः ।

अत एव—'इत्याद्यशेषमिह वस्तुविभेदजातं,
रामायणादि च विभाव्य बृहत्कथां च ।
आसूत्रयेत् तदनु नेतृरसानुगुण्या-
च्चित्रां कथामुचितचारुवचः प्रपञ्चैः ॥' इति धनिकेनाप्युक्तम् ।

नाटकादीत्यतद्गुणसंविज्ञानो बहुव्रीहिः, तेन प्रकरणादीनां कल्पनीयेतिवृत्तानामेव परिग्रहः । अन्यथा नाटकस्य ख्यातवृत्तत्वानुशासनादसङ्गतिरिति द्रष्टव्यम् ।

जो कवि कल्पित इतिवृत्तवाला नाटक आदिका निर्माण करता है, वह यदि अप्रसिद्ध एवं अनुचित रूपमें नायक आदिगत स्वभावका चित्रण करे, तो इस विषयमें उसका महान् प्रमाद समझना चाहिये।

ननु कल्पितेतिवृत्तेऽप्युत्साहादिनिबन्ध एवानौचित्यसम्भावना, न तु रत्यादिनिबन्ध इति सम्भोगशृङ्गारोपनिबन्धे वृत्तकल्पनायामपि न क्षतिरित्याशङ्कते—

**ननु यद्युत्साहादिभाव-वर्णने कथंचिद् दिव्यमानुष्याद्यौचित्यपरीक्षा क्रियते, तत् क्रियताम्, रत्यादौ तु किन्तया प्रयोजनम्? रतिर्हि भारतवर्षोचितेनैव व्यवहारेण दिव्यानामपिवर्णनीयेति स्थितिः।**

दिवि भवं दिव्यं, मनुष्ये भवं मानुष्यं चौचित्यम्। परीक्षा विवेकः। रतिरित्यादिना रत्यादिपरीक्षात्यागहेतुरुक्तः। स्थितिर्मर्यादा।

केवलमुत्साहादौ सुरमनुजयोर्भेदो भवति, न तु रतौ, प्रेम्णः सर्वत्र तुल्यरूपेणैव वर्णनीयत्वादिति सारम्।

कल्पित इतिवृत्तस्थलमें भी उत्साहादि भावके वर्णनमें अनौचित्यकी संभावना होने पर भी रत्यादि भावके वर्णन स्थलमें अनौचित्यकी संभावना न होनेसे दिव्य एवं मनुष्यगत औचित्यानौचित्यका विचार विमर्श करना व्यर्थ ही मालूम पड़ता है, क्योंकि देव, दानव, मानव सभी चेतनोंमें उत्साहादिका विशेष तारतम्य होने पर रत्यादि प्रेमका सभीमें तुल्य रूपसे ही वर्णनीय विषय होनेसे मनुष्योचित प्रेम व्यवहारके वर्णनसे ही देवादिगत प्रेमका भी दिग्दर्शन हो सकता है, इसतरह पूर्व पक्ष करते हैं—ननु इति।

खण्डयति—

**नैवम्, तत्रौचित्यातिक्रमे सुतरां दोषः। तथा हि-अधमप्रकृत्यौचित्येनोत्तमप्रकृतेः शृङ्गारोपनिबन्धने का भवेन्नोपहास्यता? त्रिविधं प्रकृत्यौचित्यं भारते वर्षेऽप्यस्ति शृङ्गारविषयम्।**

तत्र रतौ। का कीदृशी उपहास्यता न भवेत्? अपि तु सर्वविधाऽपि भवेदेव। त्रिविधमुत्तममध्यमाधमत्वेन नानाप्रकारम्।

अयं भावः-यथोत्साहो यथा देवानां न तथा मनुजानामित्युभयौचित्यभेदः, तथैव—'स्थैर्येणोत्तममध्यमाश्रयाणां नीचानां सम्भ्रमेण' इत्यादि भरतानुशासनाल्लोकानुभवाच्च यथा रतिरुत्तममध्यमप्रकृतीनां न तथाऽधमप्रकृतीनामिति रत्यौचित्येऽपि तारतम्यात् परीक्षणमावश्यकमेव।

उक्त पूर्व पक्षका खण्डन करते हैं—नैवमिति। रति भावके वर्णन स्थलमें औचित्यके परित्याग करने पर महान् दोष होगा, क्योंकि यदि अधमप्रकृतिकव्यक्तिके शृङ्गारका उत्तमप्रकृतिकव्यक्ति-वृत्तितया वर्णन किया जाय तो कितनी अभद्रता (भद्दापन) दिखाई देगी, उससे एक बड़े ही उपहासकी बात होगी, क्योंकि मनुष्योंमें भी उत्तमाधममध्यमके भेदसे अनेक प्रकारका शृङ्गारात्मक रतिभाव देखा जाता है, अर्थात् जैसे देव-मनुष्योंमें तुल्य उत्साह नहीं होता वैसे ही उत्तम मध्यम प्रकृतिक व्यक्तिगत रतिकी तरह अधमप्रकृतिक व्यक्तिकी रति नहीं होती, अतः रतिमें भी औचित्यके महान् तारतम्य होनेसे उसके औचित्यका भी विचार करना आवश्यक है।

तथाऽपि दिव्यौचित्यपरीक्षा तु रतावयुक्तैवेति शङ्कते—

यत्त्वन्यद् दिव्यमौचित्यम्, तदत्रानुपकारकमेवेति चेत्!

अतो न परीक्षणीयमिति भावः।

फिर भी रतिविषयक दिव्यव्यक्तिगत विलक्षण औचित्यका विचार करना प्रकृतानुपयोगी होनेसे व्यर्थ ही मालूम पड़ता है, इसतरह प्रश्न करते हैं—यत्त्विति।

खण्डयति—

न वयं दिव्यमौचित्यं शृङ्गारविषयमन्यत् किञ्चित् ब्रूमः, किं तर्हि? भारतवर्षविषये यथोत्तमनायकेषु राजादिषु शृङ्गारोपनिबन्धः, तथा दिव्याश्रयोऽपि शोभते। न च राजादिषु प्रसिद्धग्राम्यशृङ्गारोपनिबन्धनं प्रसिद्धं नाटकादौ। तथैव देवेषु तत् परिहर्तव्यम्।

दिव्याश्रय इति शृङ्गारोपनिबन्धस्य विशेषणम्।

उत्तममानवप्रकृत्यौचित्यमेव रतौ दिव्यौचित्यम्, न त्वन्यत् किमपि, तथा च तारतम्यस्य रतावपि सत्त्वम्। न चेत्यादि समर्थनम्। तत्–अप्रसिद्धग्राम्यशृङ्गारोपनिबन्धनम्।

नाटकादौ हि 'रतं तथा।' 'दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीडाकरञ्च यत्।' 'शयनाधरपानादि' 'एभिर्विवर्जितः' इति दर्पणोक्तग्राम्यसम्भोगशृङ्गारोपनिबन्धस्याभिनयानौचित्येन निषेधः।

खण्डन करते हैं—नेति। शृङ्गारविषयक दिव्यगत औचित्यको हम सबसे एक विलक्षण (निराला) नहीं मानते, अपितु उत्तम प्रकृति मानव राजादि नायकगत शृङ्गारविषयक औचित्यको ही रतिविषयक दिव्यगत औचित्य मानते हैं, क्योंकि जैसे राजादि उत्तम नायकके विषयमें असभ्य-जनग्राह्य स्तनमर्दन, अधरपान, दन्तक्षत,

नखक्षत, चुम्बनादि शृङ्गारका वर्णन किसी भी नाटकादिमें नहीं देखा जाता है क्योंकि अश्लील,अभद्रशृङ्गारका अभिनय करना निषिद्ध माना गया है, उसी तरह देवोंके विषयमें भी असभ्य ग्राम्य शृङ्गारका वर्णन सर्वथा त्याज्य ही समझा जाता है।

नन्वभिनयायोगात् सम्भोगस्य दृश्यकाव्य एव निषेधो, न तु श्रव्यकाव्येऽपीति कुतस्तद्बलेन रतिभेदकल्पनेत्याशङ्कते—

नाटकादेरभिनेयत्वादभिनेयस्य च सम्भोगशृङ्गाराविषयत्वात् तत्र परिहार इति चेत्,

परिहारो रतिभेदकल्पनसमर्थनस्य।

संभोगके अभिनय करनेमें अनुचित होनेसे दृश्यकाव्यमें ही उसका निषेध माना गया है, न कि श्रव्यकाव्यमें भी, अतः उसके बलसे आप रतिभेद-कल्पना का समर्थन नहीं कर सकते हैं इस तरह पूर्वपक्ष करते हैं।

निरस्यति—

न, यद्यभिनेयस्यैवंविषयस्यासह्यता, तत् काव्यस्यैवंविषयस्य सा केन (नि) वार्यते।

उपक्रमोपसंहारानुरोधाद् 'अभिनेयस्य' इति पठितम्। एवं विषयस्य सम्भोगविषयकस्य। असह्यताऽनौचित्येनामर्षणीयता। काव्यस्याभिनेयार्थभिन्नस्य श्रव्यस्य। केन निवार्यते, न केनापि। तथा च दृश्यवच्छ्रव्येऽपि काव्ये सम्भोगवर्णनमनुचितमेव।

उक्त पूर्वपक्षका खण्डन करते हैं—नेति। जैसे-संभोगविषयक अभिनय करना अनुचित होनेसे किसी भी तरह शिष्टजनोंका क्षम्य नहीं होता, वैसे ही अभिनेय से भिन्न संभोगविषयक श्रव्यकाव्यका वर्णन भी शिष्टजनोंका क्षम्य नहीं हो सकता अर्थात् दृश्य काव्यकी तरह श्रव्यकाव्यमें भी संभोगका वर्णन अनुचित ही है, अतः रतिभेद-कल्पना ठीक ही है।

उपसंहर्तुमुक्तमनुवदति—

तस्मादभिनेयार्थे च काव्ये यदुत्तमप्रकृते राजादेरुत्तमप्रकृतिभिर्नायिकाभिः सह ग्राम्यसम्भोगवर्णनं, तत् पित्रोः सम्भोगवर्णनमिव सुतरामसह्यम्। तथैवोत्तमदेवताविषयम्।

सम्भोगे ग्राम्यत्वमश्लीलत्वम्। पित्रोर्जनन्या जनकस्य च। उत्तमदेवता-राधाकृष्णादयः। तद्विषयमिति सम्भोगवर्णनविशेषणम्।

उपसंहार करनेके लिये उक्तार्थका अनुवाद करते हैं—तस्मादिति। इसलिये अभिनेयार्थक काव्यमें यदि उत्तमप्रकृतिक राजाओंका उत्तमप्रकृतिक नायिकाओंके

साथ अश्लील संभोगका वर्णन हो तो उसको माता-पिताके संभोग वर्णनकी तरह अत्यन्त ही अनुचित समझना चाहिये। इसीप्रकार उत्तमदेवताविषयक संभोगका वर्णन भी अत्यन्त अनुचित होता है।

नन्वेवमुत्तमप्रकृतिविषये किं सम्भोगश्रृङ्गारवर्णनमनुचितमेवेत्याशङ्कायामाह—

न च सम्भोगश्रृङ्गारस्य सुरतलक्षण एवैकः प्रकारः, यावदन्येऽपि प्रभेदाः परस्परप्रेमदर्शनादयः सम्भवन्ति। ते कस्मादुत्तमप्रकृतिविषये न वर्ण्यन्ते ?

यावदिति किन्त्वर्थकमव्ययम्। परस्परस्य प्रेम दर्शनं चादिर्येषामिति बहुव्रीहिः। आदिशब्देनालापसम्मेलनादीनां परिग्रहः।

सम्भोगश्रृङ्गारप्रकारेषूत्तमप्रकृतिविषये सुरतातिरिक्ता एव प्रकारा वर्णनीया इति सारम्।

तो क्या उत्तम प्रकृतिके विषयमें संभोग श्रृङ्गारका वर्णन करना सर्वथा अनुचित ही है? इस प्रश्नका उत्तर करते हैं—नचेति। संभोग श्रृङ्गारका केवल एक सुरत ही प्रकार नहीं है, अपितु दूसरे भी परस्पर प्रेमदर्शन-प्रियमधुर आलाप, मिलन आदि प्रकार हैं, इन प्रकारोंका ही उत्तम प्रकृतिके विषयमें वर्णन करना चाहिये अर्थात् उत्तम प्रकृतिके विषयमें सुरतातिरिक्त ही संभोग श्रृङ्गारका वर्णन करना उचित है।

पर्यवसितमाचष्टे—

तस्मादुत्साहवद् रतावपि प्रकृत्यौचित्यमनुसर्तव्यम्। तथैव विस्मयादिषु।

विस्मय आश्चर्यमपि सर्वेषां नैकस्यैव विषयस्योपलम्भेन, नैकविधश्च भवति।

इसलिये उत्साहकी तरह रतिविषयमें भी प्रकृतिगत औचित्यका अनुसरण करना चाहिये इसी तरह विस्मयादिमें औचित्यानौचित्यका विचार करना उचित है।

ननु कालिदासादिमहाकवीनां कुमारसम्भवादौ पार्वतीशिवादिसुरतक्रीडावर्णनं यद् दृश्यते, तस्य का गतिरित्यत आह—

यत्त्वेवंविधे विषये महाकवीनामप्यसमीक्ष्यकारिता लक्ष्ये दृश्यते, स दोष एव।

स इति विशेष्यवाचकदोषपदानुरोधेन पुंस्त्वनिर्देशः।

जो भी कालिदास प्रभृति कवियोंने कुमारसंभव आदिमें बिना विचारे ही पार्वती-शिव आदिविषयक सुरत क्रीडाका वर्णन किया है, वह भी अनुचित ही है।

ननु कथं न तेषां स दोषो लक्ष्यत इत्यतोऽभिधत्ते—

स तु शक्तितिरस्कृतत्वात् तेषां न लक्ष्यत इत्युक्तमेव।

स दोषः। उक्तं द्विपष्टितमकारिकाव्याख्यानावसरे।

परन्तु वह दोष कविकी प्रतिभापूर्ण वर्णनसे ढक जानेके कारण सहृदयोंको नहीं अखरता है यह एक दूसरी बात है, जो कि पहले भी कह चुके हैं।

इत्थं विभावभावौचित्यं प्रतिपाद्यानुभावौचित्यं समासेनाख्याति—

**अनुभावौचित्यं तु भरतादौ प्रसिद्धमेव।**

तत एवावसेयमिति भावः। सञ्चार्यौचित्यमपि तत एवावगन्तव्यमिति सूचनाय तदनुपादानं बोध्यम्। तदप्यावश्यकमेव। तथा हि—लज्जा यथोत्तमप्रकृतीनां, न तथाऽधमप्रकृतीनामिति तत्रापि तारतम्यमस्त्येवेति दिक्।

इसीतरह अनुभाव एवं संचारिभावगत औचित्यको भी भरत आदि रचित नाट्य-अलंकारादि शास्त्रसे जानना चाहिये क्योंकि जैसे उत्तमप्रकृतिक व्यक्तिको लज्जा होती है वैसे अधमप्रकृतिक व्यक्तिको नहीं होती, अतः उनमें भी तारतम्य प्रत्यक्ष सिद्ध है।

समासेनोपसंहरति—

**इयत्तूच्यते—भरतादिस्थितिं चानुवर्तमानेन महाकविप्रबन्धांश्च पर्यालोचयता, स्वप्रतिभां चानुसरता, कविनाऽवहितचेतसा भूत्वा विभावाद्यौचित्यभ्रंशपरित्यागे परः प्रयत्नो विधेयः।**

आदिशब्देन वात्स्यायनादिप्रणीतसाहित्यनिबन्धानां लोकवृत्तस्य च सङ्ग्रहः। महाकविप्रबन्धपर्यालोचनाल्लक्ष्यदर्शनेन नैपुण्यसम्पत्तिः। अवहितचेतस्त्वमप्रमादः। विभावादीनामौचित्यस्य भ्रंशो नाशस्तत्परित्याग औचित्यपरिग्रहे।

संक्षेपमें उपसंहार करते हैं—इयदिति। अन्तमें रचनाके विषयमें कवियोंके प्रति केवल इतना ही कहना पर्याप्त है कि कविगण, भरतादि प्रणीत साहित्य लक्षण-शैलीका अनुसरण करते हुए, महाकवियोंके प्रबन्धोंका अच्छी तरह परिशीलनके साथ २ अलौकिक प्रतिभा प्राप्त कर अत्यन्त सतर्कतापूर्वक विभावादिगत औचित्यको अपनानेके लिये पूर्ण यत्नशील बनें।

उक्तार्थे कारिकाकृत्सम्मतिं दर्शयति—

**औचित्यवतः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ग्रहो व्यञ्जक इत्यनेनैतत् प्रतिपादयति—यदितिहासादिषु रसवतीषु कथासु विविधासु सतीष्वपि, यत्तत्र विभावाद्यौचित्यवत् कथाशरीरं, तदेव ग्राह्यं, नेतरत्।**

ग्रहो ग्रहणम्। प्रतिपादयति कारिकाकृदिति शेषः। कारिकाऽऽनुपूर्वीमनादृत्य तत्प्रतिपाद्यं वस्त्वेव परामृष्टवानत्रेतिशब्देन। रसवतीषु कथास्वित्यत्र 'षष्ठी चाना-

-द्वरे' इति सूत्रेणानादरे सप्तमी। तेन विभावाद्यौचित्यशून्यान् सरसानपि कथांऽशाननादृत्य तद्वन्तमेव कथांऽशमाददीत कविरित्युच्यते। वस्तुतस्तु—विभावाद्यौचित्यरहिते रसवत्त्वं तथा न सम्भवति, तेषामेव रसप्रकाशकत्वात्।

औचित्यशाली ही प्रसिद्ध या कविकल्पित कथांशका वर्णन रसव्यञ्जक होता है, इसलिये यह सारांश निकला कि औचित्यसे बिलकुल रहित अत्यन्त सरस भी अनेकप्रकारक इतिहासादि कथाओंको छोड़कर कविको चाहिये कि विभावादिगत औचित्यसे युक्त कथांशको ही ग्रहण करनेका यत्न करे।

'यथादृष्टमेव मया निबद्धमिति नात्र मे दोषः' इति समाधानमपि वृत्त एव कथाशरीरे कथंचित् सम्भवति, न तु स्वकल्पिते। तस्मात् स्वकल्पिते तादृशस्खलनाद् बिभ्यता कविना नितरां सावधानेन भाव्यमित्युपदिशति—

वृत्तादपि कथाशरीरादुत्प्रेक्षिते विशेषतः प्रयत्नवता भवितव्यम्।

पूर्व निष्पन्न कथांशकी अपेक्षा स्वकपोलकल्पित कथांशके वर्णनमें कविको विशेष रूपसे सावधान रहना चाहिये।

कुत इत्याह—

तत्र ह्यनवधानात् स्खलतः कवेरव्युत्पत्तिसम्भावना महती भवति।

विभावाद्यौचित्यवदेव कथाशरीरं कथं न कल्पितमिति परानुयोगे किमुत्तरं दद्यादिति तात्पर्यम्।

क्योंकि स्वकल्पित विषयमें प्रमाद होनेसे कविकी बड़ी भारी भूल समझी जाती है अर्थात् पूर्वसिद्ध इतिवृत्त वर्णनमें किसी प्रकारकी अशुद्धि ( गलती ) होने पर दूसरेके सिर, दोष मढ़ देनेका चारा ( गुंजाइश ) रहने पर भी स्वकल्पित कथांशके वर्णनमें किसी भी प्रकारके अनौचित्य होने पर 'विभावादिगत औचित्यके अनुसार ही कथांशको क्यों नहीं रचा' इसतरह पूछे जाने पर कवि कुछ भी उत्तर नहीं दे सकते हैं।

तदेव सङ्क्षिप्योपदिशति—

परिकरश्लोकश्चात्र—

'कथाशरीरमुत्पाद्यवस्तु कार्यं तथा तथा।
यथा रसमयं सर्वमेवैतत् प्रतिभासते॥

उत्पाद्यवस्तूत्प्रेक्षितेतिवृत्तं कथाशरीरं कविना तथा तथा तेन तेन विभावाद्यौचित्यसमुद्भिन्नेन प्रकारेण कार्यम्। यथा सर्वमेवैतत् कथाशरीरं रसमयं प्रतिभासत इत्यर्थः।

तथा तथेति द्विरुक्तिः प्रकारवैचित्र्यमवधानदानावश्यकत्वं च सूचयति।

स्वकपोलकल्पित इतिवृत्तात्मक कथांशको विभावादिगत औचित्यानुसार कवि इसप्रकार रचे जिससे कि सारा ही कथांश अत्यन्त सरस प्रतिभासित हो।

कथाशरीरस्य रसमयत्वसम्पादनोपायमुपदिशति—

तत्र चाभ्युपायः सम्यग् विभावाद्यौचित्यानुसरणम्। तच्च दर्शितमेव।

दर्शितमनेनैव सन्दर्भेण।

विभावादिगत औचित्यका अनुसरण करना ही कथांशको सरस बनानेका परम उपाय है, यह भी उक्त रीतिसे दिखला चुके हैं।

प्रसङ्गादन्यदप्युपदिशति—

किंच—'सन्ति सिद्धरसप्रख्या ये च रामायणादयः।
कथाऽऽश्रया न तैर्योज्या स्वेच्छा रसविरोधिनी॥'

सिद्धो निष्पन्नास्वादात्मा, न तु साध्यो निष्पत्स्यमानास्वादो रसो येषु ते सिद्धरसाः शृङ्गारादयो, यद्वाऽयुर्वेदप्रसिद्धाः पारदादयः, तत्प्रख्यास्तन्निमित्तकख्यातिभाजस्तत्सदृशाश्च ये रामायणादयः कथानां रामादिवृत्तान्तानामाश्रयास्तद्बोधकत्वादायतनरूपा इतिहासाः सन्ति, तैः सह रसविरोधिनी स्वेच्छा न योज्येत्यर्थः।

स्वतो रसवतां रामायणादिप्रसिद्धेतिवृत्तानामन्यथाकरणे रसविरोधोऽपि सम्भवतीति स्वेच्छया न विधेयमिति भावः।

सहादिशब्दायोगेऽपि 'वृद्धो यूना' इत्यादिनिर्देशात् साहित्यविवक्षामात्रे तृतीया।

निष्पन्न आस्वादस्वरूप शृङ्गारादि रसहेतुक ख्यातिवाले जो रामायणादि-प्रबन्ध, रामादिगत वृत्तान्तके आधारभूत हैं उनके साथ रसविरोधिनी स्वेच्छा नहीं करनी चाहिये अर्थात् स्वतः सिद्ध सरस रामायणादि प्रसिद्ध इतिवृत्तको विपरीत कर देने पर प्रकृत रसका विरोध भी होगा, अतः मनमानी करना ठीक नहीं।

तमेवार्थं प्रमाणोपन्यासेन द्रढयति—

तेषु कथाऽऽश्रयेषु तावत् स्वेच्छैव न योज्या। यदुक्तम्—'कथामार्गे न चातिक्रमः।' स्वेच्छाऽपि यदि योज्या, तद् रसविरोधिनी न योज्या।

तत्र स्वेच्छाया योजने रसविरोधसम्भावनाया जागरूकत्वात्। उक्तं यशोवर्मणा रामाभ्युदयनाटक इति शेषः। कथामार्गे वृत्तप्रपञ्चेऽतिक्रमः स्वेच्छयोल्लङ्घनं च कविभिर्न विधीयतामित्यर्थः।

रामायणादि प्रसिद्ध कथाश्रयोंमें स्वेच्छाकारिता नहीं होनी चाहिये, कहा भी है कि वृत्तप्रपञ्चमें कविगण अपनी इच्छानुसार वृत्तमार्गका उल्लङ्घन नहीं करें

मनमानी वर्णन करने पर भी इस बातका पूरा ध्यान ( ख्याल ) रखना चाहिये कि वृत्त रसका विरोधी वर्णन नहीं होने पावे।

इत्थं विस्तरेणाद्यं कारणं निरूप्य द्वितीयं निरूपयति—

**इदमपरं प्रबन्धस्य रसाभिव्यञ्जकत्वे निबन्धनम्—इतिवृत्तवशायातां कथञ्चिद् रसाननुगुणां स्थितिं त्यक्त्वा, पुनरुत्प्रेक्ष्याप्यन्तराऽभीष्टरसोचितकथोन्नयो विधेयः।**

इदमुच्यमानम्। अपरं द्वितीयम्। अन्यद् व्याख्यातमेव।

प्रबन्धात्मक विषयोंका रसाभिव्यञ्जकत्वके प्रति एक और दूसरा कारण बतलाते हैं कि यदि कदाच इतिवृत्तवश रसप्रतिकूल रचना उपस्थित हो जाय तो उसको छोड़कर मध्यमें स्वकपोलकल्पित अर्थकी कल्पना कर अभीष्ट रसोचित कथाका उन्नयन करें।

उदाहरति—

**यथा–कालिदासप्रबन्धेषु। यथा च–सर्वसेनविरचिते हरिविजये। यथा च–मदीय एवार्जुनचरिते महाकाव्ये।**

कालिदासेन यथा रघुवंशमहाकाव्येऽजप्रभृतिनृपतिपरिणयादिवृत्तान्त इतिहासाद्यप्रसिद्धोऽपि रसानुगुण्येन स्वयमुत्प्रेक्ष्य सन्निवेशितः सुतरां रसं व्यनक्ति। तथैवान्यैरपि कथाभाग ऊहनीयः। हरिविजये तु–प्रियतमसत्यभामाप्रसादनोपयोगिपारिजातहरणादि। अर्जुनविजये च–पातालविजयादिवृत्तमितिहासप्रसिद्धमप्यभिनवया भङ्ग्या निबद्धं रसव्यञ्जने निदानं बोध्यम्।

जैसे कालिदास द्वारा रघुवंशमें अजप्रभृति राजाओंका विवाहादि वृत्तान्त इतिहास आदिमें अप्रसिद्ध होनेपर भी रसानुकूल कल्पनासे कविकल्पित अर्थके द्वारा वर्णित होकर रसको व्यक्त करता है, ऐसे ही सर्वसेनरचित हरिविजयमें सत्यभामाके प्रसादनोपयोगी पारिजातहरणादिका वर्णन है, एवं प्रकृत कविकृत अर्जुनचरित महाकाव्यमें वर्णन किया है।

तदेव युक्तमित्याह—

**कविना प्रबन्धमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम्। तत्रेतिवृत्ते यदि रसाननुगुणां स्थितिं पश्येत्, तां भङ्क्त्वाऽपि स्वतन्त्रतया रसानुगुणं कथाऽन्तरमुत्पादयेत्।**

उपनिबध्नता रचयता। सर्वात्मना सर्वथा। रसपरतन्त्रेण रसैकनिबन्धनप्रवणेन। भङ्क्त्वा विच्छिद्य, दूरीकृत्येति यावत्। उत्पादयेत् कल्पयेत्।

प्रबन्धकी रचना करते हुए कविको चाहिये कि बिलकुल रसमें तल्लीन हो जाय और यदि उस इतिवृत्तमें रसका प्रतिकूल भाग दिखाई पड़े तो उसे हटाकर स्वतन्त्रतापूर्वक रसानुकूल कथान्तरका उपन्यास करे ।

नतु स्वेच्छया तद्दूरीकरणे प्रक्रान्तेतिवृत्तभङ्ग आपद्यत इत्यत आह—

**न हि कवेरितिवृत्तमात्रनिर्वहणेन किञ्चित् प्रयोजनम्, इतिहासादेव तत्सिद्धेः ।**

इतिवृत्तमात्रस्य केवलकथानकस्य निर्वहणेनाविच्छिन्नसन्दर्भयोजनेन कवेर्न हि किञ्चित् प्रयोजनं फलं, सिध्येदिति शेषः । फलं चात्र महाकवित्वपदवीलाभः, सहृदयाह्लादनपुरस्सरोपदेशश्च । तौ च रससन्निवेशमन्तरेण सर्वथा दुरासदावेव । इतिवृत्तनिर्वहणस्य फलत्वं तु वक्तुं न युक्तम्, अन्यतलभ्यत्वात्, तदुक्तमितिहासादेवेति ।

स्वेच्छापूर्वक हटानेसे प्रस्तुत इतिवृत्तके भङ्ग होनेका संदेह नहीं करना चाहिये क्योंकि केवल इतिवृत्तको अक्षुण्ण बनाये रखनेसे कविका कोई भी काव्यनिर्माणका प्रयोजन सिद्ध नहीं होता इतिहासादिसे ही इतिवृत्तकी अक्षुण्णताका अनुसन्धान हो सकता है ।

तृतीयं कारणं निरूपयति—

**रसादिव्यञ्जकत्वे प्रबन्धस्य चेदमन्यन्मुख्यं निबन्धनम्—यत् सन्धीनां मुख-प्रतिमुख-गर्भावमर्श-निर्वहणाख्यानां, तदङ्गानां चोपक्षेपादीनां घटनं रसाभिव्यक्त्यपेक्षया ।**

यथा शरीरावयवसुसन्निवेशेनात्मन उत्कर्षः, तथैव सन्धि-सन्ध्यङ्गसुयोजनेन प्रबन्धव्यङ्ग्यरसस्येति ज्ञेयम् ।

सन्धि-तदङ्गानां निरूपणं दशरूपके यथा—

'बीज-बिन्दु-पताकाऽऽख्य-प्रकरी-कार्यलक्षणाः ।
अर्थप्रकृतयः पञ्च ता एताः परिकीर्तिताः ॥'
'अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ।
आरम्भ-यत्न-प्राप्त्याशा-नियताप्ति-फलागमाः ॥'
'अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः ।
यथासङ्ख्येन जायन्ते मुखाद्याः पञ्चसन्धयः ॥'
'अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति ।'
'मुखप्रतिमुखे गर्भः सावमर्शोपसंहृतिः ॥'

'मुखं बीजसमुत्पत्तिर्नानाऽर्थरससम्भवा ।'
'अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ॥
उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥
उद्भेदभेदकरणान्यन्वर्थान्यस्य लक्षणम् ।
लक्ष्यालक्ष्यतयोद्भेदस्तस्य प्रतिमुखं भवेत् ॥'
'बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश ।
विलासः परिसर्पश्च विधूतं शमनर्मणी ॥
नर्मद्युतिः प्रगमनं निरोधः पर्युपासनम् ।
वज्रं पुष्पमुपन्यासो वर्णसंहार इत्यपि ॥'
'गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः ॥
द्वादशाङ्गः'
'अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।
सङ्ग्रहश्चानुमानञ्च तोटकाधिवले तथा ॥
उद्वेगसम्भ्रमापेक्षाः'
'क्रोधेनावमृशेद् यत्र व्यसनाद्वा विलोभनात् ।
गर्भनिर्भिन्नबीजार्थः सोऽवमर्शः'
'तत्रापवाद-सम्फेटौ विद्रव-द्रव-शक्तयः ।
द्युतिः प्रसङ्गश्छलनं व्यवसायो विरोधनम् ॥
प्ररोचना विचलनमादानं च त्रयोदश ।'
'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ॥
ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ।'
'सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम् ॥
प्रसादानन्दसमयाः कृतिभाषोपगूहनाः ।
पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ॥' इति ।

सन्ध्यङ्गानां बाहुल्याद् विस्तरभिया लक्षणं नोक्तम् । सन्धयस्तदङ्गानि चेति-वृत्तावयवात्मकत्वेनार्थविशेषा रसव्यञ्जनोपयोगिनः सुतरां भवन्तीति बोध्यम् ।

**प्रबन्धका रसाभिव्यञ्जकत्वके प्रति तीसरा एक मुख्य कारण बतलाते हैं कि—**

**'मुख, प्रतिमुख, गर्भ, अवमर्श और निर्वहण नामकी पांच सन्धियां एवं उनके उप-**

क्षेप आदि ६४ अङ्गोंकी रचनासे रसकी अच्छी तरह अभिव्यक्ति होती है अर्थात् उक्त सन्धि और उनके अङ्ग इतिवृत्तके एक देशभूत अर्थ विशेष होनेके कारण रस व्यञ्जनमें अत्यन्त उपयोगी होते हैं।

उदाहरति—

यथा—रत्नावल्याम्।

'रत्नावली' नाटिकायां यथा प्रकृतवीररसव्यञ्जनोपयोगापेक्षयैव—

'आरम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ,
दैवे चेत्थं दत्तहस्तावलम्बे।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं, तथाऽपि,
स्वेच्छाकारी भीत एवास्मि भर्तुः॥' इति यौगन्धरायणोक्तस्वव्यापारदैवनिष्पत्तिरूपमुखसन्ध्यङ्गपरिन्यासादेः सन्निवेशस्तथैवान्यत्रापि कविना विधेयः।

जैसे रत्नावलीमें वत्सराजके अभ्युदयार्थ यौगन्धरायणके वक्ष्यमाण प्रयासका दैववश निष्पत्तिरूप परिन्यास आदि मुखसन्ध्यङ्गका सन्निवेश प्रकृत वीररस व्यञ्जनके उपयोगकी अपेक्षासे ही किया गया है। श्लोकार्थ निम्न प्रकार है—'यद्यपि मैंने राजाकी समुन्नतिके लिये ही यह व्यापार आरम्भ किया है और दैव की अनुकूलतासे उसकी सफलतामें भी किसी प्रकारका सन्देह नहीं है, तथापि उनके बिना विचारके केवल अपनी ही इच्छानुसार विचारसे आरम्भ करनेके कारण स्वामीसे मैं कुछ डर सा रहा हूं।

व्यतिरेकमाचष्टे—

न तु केवलं शास्त्रस्थितिसम्पादनेच्छया।

इदं 'न तु केवलया' इत्यत्र विवृतमेव।

एतदुच्यते—'इष्टस्यार्थस्य रचना वृत्तान्तस्यानपक्षयः।
रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम्॥
आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम्।
अङ्गानां षड्विधं ह्येतद् दृष्टं शास्त्रे प्रयोजनम्॥' इति

सन्ध्यङ्गप्रयोजनं व्याहरता महर्षिभरतेन सन्ध्यङ्गानां रसानुकूल्यावश्यम्भावस्यानुशासनाद् रसप्रतिकूलान्यपि केवलं तदनुशिष्टानीति गौरवादेव सन्धि-तदङ्गानि प्रबन्धेषु नैव निवेशनीयानि।

किन्तु भरतादि मुनि प्रोक्त सन्धि-तदङ्ग प्रयोजनके प्रतिपादक शास्त्रके केवल गौरव-संरक्षणार्थकी दृष्टिसे रसके सर्वथा प्रतिकूल सन्धि-तदङ्गोंकी रचना प्रबन्धोंमें कभी भी नहीं करनी चाहिये।

तथाऽऽचरणेऽनुपपत्तिं निदर्शयति—

**यथा वेणीसंहारे—विलासाख्यस्य प्रतिमुखसन्ध्यङ्गस्य प्रकृतरसनिबन्धानुगुणमपि द्वितीयेऽङ्के भरतमतानुसरणमात्रेच्छया घटनम्।**

वेणीसंहारे वीररसप्रधाननाटके—

'समीहा रतिभोगार्था विलास इति कथ्यते' इति दर्पणलक्षितो रत्याख्यभावहेतुभूतभोगविषयनायिकादिविषयकेच्छारूपो हि विलासः, प्रतिमुखसन्धिप्रथमाङ्गं नारायणभट्टेन प्रकृतवीररसानुगुण्यमनवेक्ष्यैव भानुमतीदुर्योधनयोर्योगे द्वितीयेऽङ्के केवलभरतानुशासनश्रद्धाजाड्येन यथा निवेशितो रसं न पुष्णाति, तथैव तादृशमन्यदपीति तत्परिहरणीयमित्याकूतम्।

**रसके प्रतिकूल सन्धि-तदङ्गोंके सन्निवेश करने पर कविकी एक बड़ी भारी भूल समझी जाती है इसको दर्शाते हैं—यथेति। वेणीसंहार नामक वीररस प्रधान नाटकमें रति संभोगविषयक अभिलाषारूप विलास नामक प्रतिमुखात्मक सन्ध्यङ्गका जो कि प्रकृत वीररसका बिल्कुल प्रतिकूल है उस पर ध्यान नहीं देकर ही भानुमती-दुर्योधनके मिलन प्रसङ्गमें कविने केवल भरतशास्त्रके प्रति अन्धश्रद्धा से प्रभावित होकर वर्णन किया है, जो कि सर्वथा अनुचित है।**

तुरीयं कारणं निरूपयति—

**इदं चापरं प्रबन्धस्य रसव्यञ्जकत्वे निमित्तम्, यदुद्दीपनप्रशमने यथाऽवसरं (निबध्येयातां) रसस्य।**

रसस्य रसादेर्यथावसरमुचितेऽवसरे, उद्दीपनमनुकूलतमविभावादिसंवलनपूर्वकं प्रकाशनात्मिका दीप्तिः, प्रशमनं तद्विघटनप्रयोज्यास्वादधाराविच्छेदनं च निबध्येयातां, कविनेत्यर्थः।

प्रकोष्ठघटकपाठः पूर्वापरसन्दर्भानुरोधेन कल्पितो वेद्यः।

पुनःपुनरुद्दीप्यमानो हि रसो वैरस्यमावहति। तदुक्तमाचार्य्यैः—

'गाढं ह्यनवरतपीडितो रसः सुकुमारतरमालतीकुसुमवज्झटित्येव म्लानिमवलम्बते' विशेषतस्तु शृङ्गारः। यदाह मुनिः—

'यद्वाम्याभिनिवेशित्वं यतश्च विनिवार्यते।
दुर्लभत्वं यतो नार्याः कामिनः सा परा रतिः॥' इति।

अत एवानवसरे रसस्योद्दीपनप्रशमने रसदोषत्वेनान्यत्र प्रतिपादिते। इहापि चानुपदम्—'अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम्' इत्यनेन वक्ष्यते।

काव्यात्मक प्रबन्धके रस-व्यञ्जनके प्रति चतुर्थ सहकारी कारणको बतलाते हैं—इदमिति। रसादिका यथोचित समय पर उद्दीपन करना अर्थात् अत्यन्त अनुकूल विभावादिका संघटनपूर्वक प्रकाशन करना एवं अनवसर पर उक्त विभावादिका विघटनपूर्वक अविच्छिन्न आस्वाद धाराका विच्छेद करना भी एक चतुर्थ सहकारी होता है।

उचितोद्दीपनप्रशमने रसस्योदाहरति—

यथा—रत्नावल्यामेव।

रत्नावलीप्रथमाङ्केऽनङ्गपूजाऽवसरे राजदर्शनानन्तरम्—'कहं अअं सो राआ उदअणो, जस्स अहं तादेण दिण्णा' (कथमयं स राजोदयनो, यस्याहं तातेन दत्ता) इति सागरिकाऽपराभिधरत्नावल्युक्त्या पूर्वराजशृङ्गारस्योद्दीपनमुचितावसरे विहितम्। ततस्तदङ्कान्ते वासवदत्ताऽऽख्यमहिष्या भयेन तत्स्थानात्तस्या निष्क्रमणस्योपन्यासेन तदुचितोपशमनं विहितम्। पुनर्द्वितीयाङ्कप्रवेशकान्ते-चित्रफलकोल्लेखेनोद्दीपनम्, ततोऽनुपदं पुनः सुसङ्गताप्रवेशोपन्यासेन तदुपशमनं चोपपादितमिति शृङ्गाररसव्यञ्जने प्रबन्धस्य सर्वमिदमाचरति साहायकमिति द्रष्टव्यम्।

जैसे रत्नावलीके प्रथमाङ्कमें मदनपूजनावसर पर राजाको देखकर सागरिकाने कहा—'क्या ये वही वत्सराज उदयन हैं, जिनके लिये मैं तातसे दे दी गयी हूं' इस उक्तिसे पूर्वरागात्मक शृंगारका उद्दीपन कविने उचित अवसर पर किया है, बादमें प्रथमाङ्कके अन्तमें ही वासवदत्ताके भयसे सागरिकाके वहांसे निष्क्रमणका उपन्यास कर कविने उचित अवसर पर ही उक्त रसका उपशमन भी किया है, इस तरह शृंगार रस-व्यञ्जनमें प्रबन्धके ये सभी सहायक होते हैं।

तुरीयकारणस्यावान्तरभेदं निरूपयति—

पुनरारब्धविश्रान्ते रसस्याङ्गिनोऽनुसन्धिश्च।

अनुसन्धिरनुसन्धानं स्मरणविशेषः। तेन भावादिप्राधान्ये तत्तदनुसन्धानमेवासमाप्ति तत्तद्व्यञ्जने निमित्तमवसेयम्। तद्व्यतिरेकश्चाङ्गयननुसन्धानलक्षणो रसदोषोऽन्यत्र दर्शितः।

उक्त चतुर्थ कारणका अवान्तर भेद बतलाते हैं—पुनरिति। आरम्भसे लेकर समाप्ति पर्यन्त प्रधान रसका स्मरणात्मक अनुसन्धान रखना भी रसाभिव्यक्तिमें सहकारी होता है।

उदाहरति—

यथा—तापसवत्सराजे।

नाटकमिदमिदानीं नोपलभ्यते, केनापि विन्ध्यशिखरिपरिसरग्रामे क्वचिदुप-

लब्धमिति केवलं श्रूयते, तस्मादेतद्विषये लोचनमेवानुसरामः । तथा च नाटकेऽस्मिन् वत्सराजनिष्ठा वासवदत्ताविषयिणी रतिरेव स्वविभावाद्यौचित्यान्मध्ये विप्रलम्भादिनानाभूमिका धारयन्त्यपि सर्ववृत्तान्तव्यापकत्वात् प्रबन्धेन व्यज्यमाना सामग्रीसमवधानाद् रसात्मत्वं, समस्तभूमिसाम्राज्योपलब्धिपूर्वकपद्मावतीसमधिगमगर्भिता वासवदत्ताप्राप्तिश्च पार्यन्तिकफलत्वं प्राप्नोति । तेन प्रधानश्रृङ्गाररसस्यान्तं यावदनुसन्धानमक्षतमेव तत्प्रकाशनप्रयोजकत्वमासादयतीति न तिरोहितम् ।

तत्र रतिव्यक्तेः प्रबन्धव्यापकता तु प्रथमेऽङ्के—'तद्वक्त्रेन्दुविलोकनेन, दिवसो नीतः प्रदोषस्तथा' इत्यादिना 'बद्धोत्कण्ठमिदं मनः किमथवा प्रेमासमाप्तोत्सवम्' इत्यन्तेन,

द्वितीयेऽङ्के—'दृष्टिर्नामृतवर्षिणी स्मितमधुप्रस्यन्दिवक्त्रं न किम्' इत्यादिना,

तृतीयेऽङ्के—'सर्वत्र ज्वलितेषु वेश्मसु भयादालीजने विद्रुते,
श्वासोत्कम्पविहस्तया प्रतिपदं देव्या पतन्त्या तया ।
हा नाथेति मुहुः प्रलापपरया मुग्धे वराक्या तथा,
शान्तेनापि वयन्तु तेन दहनेनाद्यापि दह्यामहे ॥' इत्यादिना,

चतुर्थेऽङ्के—'देवी स्वीकृतमानसस्य नियतं स्वप्नायमानस्य मे,
तद्गोत्रग्रहणादियं सुवदना यायात् कथं न व्यथाम् ।
इत्थं यन्त्रणया कथं कथमपि क्षीणा निशा जाग्रतो-
दाक्षिण्योपहतेन सा प्रियतमा स्वप्नेऽपि नासादिता ॥' इत्यादिना,

पञ्चमेऽङ्के विप्रलम्भेऽङ्कुरिते—
'तथाभूते तस्मिन्मुनिवचसि जातागसि मयि,
प्रयातेऽन्तर्गूढां रुषमुपगता मे प्रियतमा ।
प्रसीदेति प्रोक्ता न खलु कुपितेत्युक्तिविधुरं,
समुद्भिन्ना पीतैर्नयनसलिलैः स्थास्यति पुनः ॥' इत्यादिना,

षष्ठे चाङ्के—'त्वत्सम्प्राप्तिविलोभितेन मनसा प्राणा मया धारिताः' इत्यादिना च मुहुर्मुहुस्तत्प्रकाशनात् ।

जैसे तापस वत्सराजमें वासवदत्ता-विषयक वत्सराज उदयनकी रति ही निज विभावादिगत औचित्यके अनुसार बीचमें विप्रलम्भादि नाना आकारको धारण करती हुई भी समस्त वृत्तान्तमें व्यापक होनेसे प्रबन्ध द्वारा अभिव्यञ्जित होकर रसात्मत्वको प्राप्त कर लेती है अत एव सम्पूर्ण साम्राज्यकी प्राप्तिके साथ पद्मावती

की उपलब्धिपूर्वक वासवदत्ताकी प्राप्ति ही उसका अन्तिम फल बतलाकर कविने काव्यनिर्माणका अपना उक्तविषयक पूर्ण कौशल दर्शाया है ।

पञ्चमं कारणं निरूपयति—

**प्रबन्धविशेषस्य नाटकादे रसव्यक्तिनिमित्तमिदं चावगन्तव्यम्—यदलङ्कृतीनां शक्तावप्यानुरूप्येण योजनम् ।**

*अलङ्कृतीनामिति कर्मणि षष्ठी । तेनालङ्कारकर्मकं घटनमित्यर्थः । तच्च रसानुगुण्यमपेक्ष्यैव विधेयमित्याशयः ।* उदाहरणं तु—'कपोले पत्राली करतलनिरोधेन मृदिता' इत्यादि प्रागुक्तमेव, अलङ्काराणां रसपारतन्त्र्यात् ।

नाटकादि प्रबन्ध विशेषके रसाभिव्यञ्जनमें एक पञ्चम सहकारीको बतलाते हैं कि—रसानुगुण्यका विचार करते हुए प्रतिभाके प्राबल्य होने पर भी अलङ्कारोंका आनुरूप्यसे सन्निवेश करना चाहिये ।

एतदुक्तेः प्रयोजनं निगदति—

**शक्तो हि कविः कदाचिदलङ्कारनिबन्धने तदाक्षिप्ततयैवानपेक्षितरसबन्धः प्रबन्धमारभते, तदुपदेशार्थमिदमुक्तम् ।**

हि यतोऽलङ्कारनिबन्धने शक्तः कदाचिद् रसविषयकावधानध्वंसावसरे तदाक्षिप्ततयाऽलङ्कारव्यासङ्गेनैव, अनपेक्षितरसबन्धोऽकृतरसनिवेशापेक्षः, कविः प्रबन्धमारभते निर्माति, तस्योपदेशार्थमेवं विधेयमिति शिक्षणाय इदमुक्तम्, न तु स्वतस्तत्र सावधानानामन्यकवीनां कृत इत्यर्थः ।

क्योंकि जो प्रतिभाशाली कवि अलङ्कारके निर्माणमें व्यासक्त होकर कदाचित् रसविषयक अनवधान होने पर अलङ्कारके व्यासङ्गसे ही रसविशेषके निवेशकी अपेक्षा नहीं करके कविता बनाने लग जाता है, उसीको सतर्क करनेके लिये यह कहा है ।

*नन्वीदृशस्य कवेरप्रसिद्धेरपार्थकं कथनमित्यत आह—*

**दृश्यन्ते च कवयोऽलङ्कारनिबन्धनैकरसा अनपेक्षितरसाः प्रबन्धेषु ।**

अलङ्काराणां निबन्धन एकोऽद्वितीयो रसोऽनुरागो येषां तादृशाः, अत एवानपेक्षिता रसाः शृङ्गारादयो यैस्तथाभूताश्च कवयो दृश्यन्त इत्यर्थः । तादृशकवीनामप्युपलब्धेर्नास्त्यप्रसिद्धिरिति तात्पर्यम् ।

तथा च—'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः ।

कवीनां दर्शनं च काव्यद्वारा, यद्वा—'गायन्तं देवदत्तं शृणु' इतिवद्धर्ममात्रस्य दर्शनम् । वस्तुतस्तु—तस्यापि तादृशरचनयाऽनुमानमेव । चकारो हेतुत्वं प्रसिद्धिप्रद्धिमानं च सूचयति । तदुदाहरणन्तु—

'मध्ये व्योम स्फुरति सुमनोधन्वनः शाणचक्रं,
मन्दाकिन्या विपुलपुलिनाभ्यागतो राजहंसः।
अह्नश्छेदे त्वरितचरणन्यासमाकाशलक्ष्म्याः,
संसर्पन्त्याः श्रवणपतितं पुण्डरीकं सुधांऽशुः॥'

इति प्रदीपकर्तुरेव। तत्र च रूपकालङ्कारयोजनैकतानमनाः कविस्तथा रसं नापेक्षतेति चित्रकाव्यत्वं तस्येति स्वयं तेन स्पष्टमुक्तम्।

**क्योंकि ऐसे भी बहुतसे कवि देखे जाते हैं, जो कि रसकी ओर बिलकुल ही ध्यान नहीं देते हुए केवल अलङ्कारोंके निर्माणमें ही अद्वितीय अनुराग वाले होते हैं।**

न केवलमलक्ष्यक्रम एव प्रबन्धेन द्योत्यतेऽपि तु लक्ष्यक्रमोऽपीति दर्शयति—

**किंच—**

**'अनुस्वानोपमात्माऽपि प्रभेदो य उदाहृतः।**
**ध्वनेरस्य प्रबन्धेषु भासते सोऽपि केषुचित्॥ ७१॥'**

अस्य विवक्षितान्यपरवाच्यध्वनेरनुस्वानोपमात्मा संलक्ष्यक्रमोऽपि यः शब्दार्थशक्त्युद्भवत्वेन द्विविधः (वस्तुतस्त्रिविधः) प्रभेद उदाहृत उक्तः, सोऽपि न केवलमलक्ष्यक्रम एवं, केषुचिन्न तु सर्वेषु प्रबन्धेषु भासत इत्यर्थः।

**केवल असंलक्ष्यक्रम व्यङ्ग्य रसध्वनि ही काव्यात्मक प्रबन्धसे द्योतित नहीं होती, अपितु संलक्ष्यक्रमव्यङ्ग्य ध्वनि भी द्योतित होती है इसको दर्शाते हैं—** किञ्चेति। **विवक्षितान्यपरवाच्य ध्वनिका जो संलक्ष्यक्रमव्यङ्ग्यात्मक शब्दार्थोभय-शक्त्युद्भव तीन प्रकारकी ध्वनि उदाहृत है, वह भी (न कि केवल असंलक्ष्य क्रम ही) किन्हीं प्रबन्धोंमें भासित होती है।**

तदाह वृत्तिकृत्—

अस्य विवक्षितान्यपरवाच्यध्वनेरनुरणनरूपव्यङ्ग्योऽपि यः प्रभेद उदाहृतो द्विप्रकारः, सोऽपि प्रबन्धेषु केषुचिद् द्योतते।

केचित्तु—'द्योत्यो लक्ष्यक्रमः क्वचिद्' इत्यग्रिमकारिकायां पाठमवधार्य तत्पौनरुक्त्यपरिजिहीर्षया, पाञ्चजन्योक्तिषु नीरसत्वप्रसक्तिमपासितुम्, असंलक्ष्यक्रमप्रस्तावे संलक्ष्यक्रमविचारानौचित्यनिराकरणाय चास्याः कारिकायाः—'न केवलं प्रबन्धेन साक्षाद् व्यङ्ग्यो रसो, यावत् पारम्पर्येणापीति दर्शयितुमुपक्रमते—किञ्चेति' इत्यवतरणमुक्त्वा 'अनुस्वानोपमः शब्दशक्तिमूलोऽर्थशक्तिमूलश्च यो ध्वनेः प्रभेद उदाहृतः, स केषु प्रबन्धेषु निमित्तभूतेषु व्यञ्जकेषु सत्सु, व्यङ्ग्यतया स्थितः सन्

अस्येति रसादिध्वनेः प्रकृतस्य भासते। व्यञ्जकतयेति शेषः' इति व्याख्यां च विधाय 'वृत्तिग्रन्थोऽप्येवमेव योज्यः' इत्यादिशन्ति।

तत्र विचारयामः—अग्रिमकारिकायां वृत्तिनिर्णीतः 'अलक्ष्यक्रमः' इत्ययमेव पाठः। न च पौनरुक्त्यप्रसङ्गः, अत्र लक्ष्यक्रमस्योपादानात्। नापि पाञ्चजन्योक्तिषु नीरसत्वापत्तिः, तत्र वस्तुरूपसंलक्ष्यक्रमध्वनिसत्त्वकथनेनासंलक्ष्यक्रमासत्त्वस्याकथनात्। न हि देवदत्तस्तिष्ठतीत्युक्त्या यज्ञदत्तादिस्थितिनिषेधः प्रतीयते। तथा विवक्षायान्तु—'पञ्च पञ्च नखा भक्ष्याः' इत्यादौ स प्रतीयत एव। किन्त्विह तथाविवक्षायामेव प्रमाणविरहः। न वा मन्ये लक्ष्यक्रमोपन्यासे प्रकरणासङ्गतिः, प्रबन्धद्योत्यत्वेनालक्ष्यक्रमानन्तरमेतदुपादानस्यान्तराऽपि स्मृतिविषयत्वे सत्युपेक्षाऽनर्हत्वरूपप्रसङ्गसङ्गतिक्रोडीकरणेनासङ्गत्यभावात्।

तस्मात् तदनुरोधेन ग्रन्थान्यथायोजनमग्रिमकारिकाऽवतरणेऽनुपपत्त्या कल्पनं चापि नोचितम्। अत एव 'प्रबन्धेऽप्यर्थशक्तिभूः' इति प्रबन्धव्यङ्ग्यार्थशक्त्युद्भवरूपलक्ष्यक्रमध्वनेरुदाहरणं मम्मटोऽपि गृध्रगोमायुसंवादमेव व्याजहार। अन्यथा तत्र सङ्गच्छेत। 'लक्ष्यक्रमः' इति पाठेऽपि न पौनरुक्त्यम्, सुबादिव्यञ्जकविशेषप्रदर्शनप्रसङ्गेन तदुपादानात्।

वस्तुतस्त्वत्रोत्तरत्र कारिकायां चोभयविधस्यापि ध्वनेर्व्यञ्जकप्रकाशनमभिप्रेतम्। अत एवोभयत्रोभयं ध्वन्यत इति दर्शयिष्यामः। प्राधान्यानुरोधेन तु व्यपदेशोऽवगन्तव्य इति दिक्।

वृत्तिकार उसीको स्फुट करते हैं—अस्येति। विवक्षितान्यपरवाच्य ध्वनिका जो संलक्ष्यक्रमव्यङ्ग्यात्मक उक्त तीन प्रकारकी ध्वनि उदाहृत हुई है, वह भी कितनेही काव्य प्रबन्धोंमें द्योतित होती है।

उदाहरति—

**तद्यथा मधुमथनविजये—पाञ्चजन्योक्तिषु।**

मधुमथनविजयं नाम काव्यमनुपलब्धमेवेति लोचनमेवात्राप्यनुसरामः। तदुक्तमुदाहरणं यथा—'लीलादाढा गुध्यूढ्ढासअलमहिमण्डलसच्चिअ अज्ज।

कीस मुणालाहरतुज्ज आइ अङ्गम्मि॥' (अस्फुटेयं गाथा) 'इत्यादयः पाञ्चजन्योक्तयो रुक्मिणीविप्रलब्धवासुदेवाशयप्रतिभेदनाभिप्रायमभिव्यञ्जयन्ति। सोऽभिव्यक्तः प्रकृतरसस्वरूपपर्यवसायी' इत्याचार्याः। परे तु वस्तुध्वनिमिमं प्रबन्धव्यङ्ग्यमङ्गीकुर्वन्ति।

जैसे मधुमथन विजयमें पाञ्चजन्यने रुक्मिणी विरह पीड़ित कृष्णसे कहा है- हे भगवन्! लीलासे ही दांतोंके नोकसे भूमण्डलको वराह रूप धारण कर उठाने वाले आपके शरीरमें अत्यन्त हलका यह विसतन्तुका भूषण भी क्यों इतना भारी लग रहा है।

इस प्रकार पाञ्चजन्यकी उक्तियां रुक्मिणी विरह पीड़ित कृष्णके रुक्मिणी विषयक अभिलाषातिशयको अभिव्यक्त करती हैं और उक्त अभिलाषातिशय अभिव्यक्त होकर प्रकृत विप्रलम्भ श्रृङ्गारमें परिणत हो जाता है।

पुनरुदाहरति—

**यथा वा ममैव-कामदेवस्य सहचरसमागमे विषमबाणलीलायाम्।**

यौवनोक्तिष्विति शेषः। ममैव विषमबाणलीलायां कामदेवस्य सहचरैर्यौवनवसन्तमलयानिलादिभिः सह समागमे सतीति सम्बन्धः।

इहापि—'भिअवहण्डिअरोरो णिरङ्कुसो अविवेअरहिओ वि सविण वि तुमम्मि पुणोवन्ति अ ऋतन्ति पं मुसिम्मि' इत्यादयो यौवनोक्तयस्तत्तन्निजस्वभावव्यञ्जिकाः। 'स्वभावः प्रकृतरसपर्यवसायी' इति लोचनमेव गतिर्ग्रन्थानधिगमात्। 'स्वभावः' इत्यादितदीयग्रन्थयोजनं तु पूर्ववदेव।

विषमबाणलीलामें कामदेवके अपने परम मित्र-यौवन, वसन्त, और मलय पवनके साथ समागम होने पर यौवनने कामदेवसे कहा-मैं उच्छृङ्खल एवं निरंकुश, अविवेकी भलेही बनजाऊं, किन्तु स्वप्नमें भी आपके प्रति अनुरागको नहीं भूलूंगा इस प्रकारकी यौवनकी उक्तियां कामानुवर्तन आदि निज २ स्वभावोंको व्यक्त करती हैं और वह अनुवर्तनादि प्रकृत रसमें परिणत हो जाता है।

पुनरुदाहरति—

**यथा च—गृध्रगोमायुसंवादादौ महाभारते।**

महाभारते शान्तिपर्वणि। गृध्रस्य, गोमायोः श्रृगालस्य च संवादे उक्तौ। न तु तयोर्मिथः सङ्कथने।

तथा च मृतं बालमादाय श्मशाने दग्धुं समागतांस्तत्परिजनानपसारयितुं गृध्रो व्याहरति—

'अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले।
कङ्कालबहले घोरे सर्वप्राणिभयङ्करे॥
न चेह जीवितः कश्चित् कालधर्ममुपागतः।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी॥ इति।

गृध्रैर्गोमायुभिश्च सङ्कुले व्याप्ते, कङ्कालैरस्थिपञ्जरैर्बहले समुपचिते, घोरे भीषणे, सर्वप्राणिनां भयङ्करेऽस्मिन् श्मशाने युष्माभिः स्थित्वा अलं न किमपि फलं लप्स्यते। यत इह कालधर्मं मृत्युमुपागतः कश्चिज्जनः प्रियः सुहृद्वा द्वेष्यः शत्रुर्वा न च अभूदिति शेषः। यतः प्राणिनां सर्वेषां मरणोत्तरमीदृश्यपुनरावृत्तिरूपा गतिः स्वभावोऽस्तीत्यर्थः।

तथा च 'स्याच्छरीरास्थि कङ्कालः' इत्यमरः।

इह दिवैव पललं कवलयितुं समर्थस्य गृध्रस्योक्तौ—श्लोकद्वयात्मकप्रबन्धेन स्वतः सम्भविवाच्यवक्तृप्रकरणादिवैशिष्ट्यबलेन गृध्रसमवेतो मृतकपरिजनविसर्जनाभिलाषो वस्तु व्यज्यते।

तत्रैव गृध्रवाक्यमाकर्ण्य मृतकं परित्यज्य गन्तुं प्रवृत्तांस्तान् गोमायुर्वक्ति—

आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतम्।
बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम्।
गृध्रवाक्यात् कथं बाला! स्त्यजध्वमविशङ्किताः!॥' इति।

हे मूढाः! गृध्रेण प्रतारितत्वान्मूर्खाः! अयमादित्यः सूर्यः स्थितो न त्वस्तंगतो येन युष्माकं भीरपि भवेत्। तस्मात् साम्प्रतं मृते बाले स्नेहं कुरुत, न तु पलायध्वम्। न हि वो निष्फला स्थितिः यदयं राक्षसवेलात्मकः सन्ध्यारूपो मुहूर्त कालविशेषः, बहवो राक्षसभूतपिशाचाद्यावेशजन्या विघ्ना यत्र, तादृशोऽस्तीति शेषः। तत् कदाचन तदावेशनिवृत्तौ बालः, अपि जीवेज्जीवितो भवेदिति सम्भावयामि। हे अविशङ्किता निस्सन्देहाः! बाला मूढाः! कनकवर्णाभं सुवर्णगौरम्, अप्राप्तं यौवनं येन तादृशम्, अत एवापरित्याज्यममुं बालं गृध्रस्य वाक्यात् कथं त्यजध्वम्? युष्माकमासूर्यास्तमनं बालपरित्यागो नोचित इत्यर्थः॥

इहापि पूर्ववद् गोमायुवचनरूपप्रबन्धो वाच्यद्वारा तत्समवेतं मृतकपरिजनगमननिवर्तनाभिलाषं वस्तु व्यनक्तीति प्रबन्धस्य संलक्ष्यक्रमध्वनिव्यञ्जकता स्फुटैव। उभयत्र 'सत्वाभिप्रायो व्यक्तः शान्तरस एव परिनिष्ठिततां प्राप्तः' इत्याहुराचार्याः। कारिकाघटकोऽपिशब्दोऽसंलक्ष्यक्रमध्वनिं संगृह्णाति। तथा च—महाभारतं शान्तस्य रसस्य, रामायणं करुणस्य, वेणीसंहारं वीरस्य, हास्यार्णवप्रहसनं हास्यस्य, मदीयं राधापरिणयं च प्रबन्धरूपं श्रृङ्गारस्य व्यञ्जकमिति प्रसिद्धमेव।

अब तीसरा उदाहरण बतलाते हैं—यथा चेति। महाभारतके शान्ति पर्वमें गृध्र मृत बालकको लेकर श्मशानमें जलानेके लिये उपस्थित परिजनोंको कह रहा है—गीध और सियारोंसे व्याप्त एवं हड्डियोंसे भरे हुए सब प्राणियोंके लिये अत्यन्त भयंकर इस श्मशान भूमिमें ठहरनेसे कोई लाभ नहीं, क्योंकि मृत्युको प्राप्त कर कोई भी व्यक्ति चाहे प्रिय हो या अप्रिय हो, फिर जीवित नहीं होता, प्राणियोंकी गति ही ऐसी है अर्थात् मरकर कोई भी व्यक्ति दुबारा लौटकर नहीं आता। यहाँ पर दिनमें ही मांस खानेमें समर्थ गीधकी उक्तिसे उक्तश्लोकद्वयात्मक प्रबन्धोंने स्वतः संभवी वाच्यवक्तृ-प्रकरणादि वैशिष्ट्यके बलसे दिनमें ही मृतकको छोड़कर उसके परिजनको चले जानेके लिये गीधके अभिलाषको अभिव्यक्त किया है।

इत्थं वर्णेभ्य आरभ्य प्रबन्धं यावदुभयध्वनेर्व्यञ्जकेषु दर्शितेष्वसंलक्ष्यक्रमस्य वस्तुद्वारा पारम्पर्येण व्यञ्जकान् वदति—

'सुप्-तिङ्-वचन-सम्बन्धैस्तथा कारकशक्तिभिः।
कृत्-तद्धित-समासैश्च द्योत्योऽलक्ष्यक्रमः क्वचित् ॥ ७२ ॥'

सुपः स्वौजसादय एकविंशतिः, तिङस्तिप्तस्प्रभृतयोऽष्टादश, वचनान्येकवचनप्रमुखानि त्रीणि, सम्बन्धाः स्वस्वामिभावादयः षष्ठ्यर्थाः, तैस्तथा कारकशक्तिभिः कर्तृत्वादिभिः षड्भिः, कृतः कर्तृकर्मभावादिषु विहिता धातोः प्रातिपदिकत्वसम्पादकाः प्रत्ययाः, तद्धितास्त्वतलादयः, समासा अव्ययीभावादयः षड्विधाः, तैः, चकारान्निपाता अद्रव्यार्थाश्चादयः, उपसर्गाः क्रियायुक्ताः प्रादयः, काला भूतादयः, आदिशब्दात् प्रकृतयः सर्वनामानि, तैश्च, क्वचिदलक्ष्यक्रमो रसादिध्वनिर्द्योत्यो भवतीतिशेष इत्यर्थः।

अयं भावः—वर्णादिप्रबन्धान्तैः शब्दैर्यथा क्वचिद् विभावादीन् वाच्यान् बोधयित्वा तत्सम्बन्धेन साक्षाद्रसादिर्व्यज्यते, क्वचिच्च वाच्यार्थान् प्रतिपाद्य वस्तुरूपान् विभावादींश्च व्यञ्जनयाऽवगमय्य तत्सम्बन्धेन परम्परया रसादिर्व्यज्यते, तथैव तिङादिभिरपि साक्षात् परम्परया च रसादिर्व्यज्यते। तथा च वक्ष्यमाणेषु 'न्यक्कारः' इत्याद्युदाहरणेषु वस्तूनां साक्षाद् व्यङ्ग्यत्वेऽपि पर्यन्ते रसादावेव विश्रमः।

इस तरह वर्णोंसे लेकर महावाक्यात्मक प्रबन्धतक उभयविध ध्वनिव्यञ्जकोंका निरूपण कर वस्तुव्यञ्जन द्वारा असंलक्ष्यक्रम व्यङ्ग्य रसादिध्वनिके परम्परया व्यञ्जकोंका निरूपण करते हैं—सुबिति। सुप्-तिङ् विभक्ति, एकवचनादिप्रत्यय, स्वस्वामिभावादि सम्बन्ध, कर्तृत्वादिकारक, कृदन्त-तद्धित-समास, उपसर्ग,

निपात, और कालादिवाचक प्रकृति प्रत्ययादि शब्दोंसे कहीं असंलक्ष्यक्रम व्यङ्ग्य-रसादि ध्वनि द्योतित होती है।

तदाह वृत्तिकारः—

अलक्ष्यक्रमो ध्वनेरात्मा रसादिः, सुब्विशेषैस्तिङ्विशेषैर्वचनविशेषैः सम्बन्धविशेषैः कारकशक्तिभिः कृद्विशेषैस्तद्धितविशेषैः समासैश्चेति चशब्दान्निपातोपसर्गकालादिभिः प्रयुक्तैरभिव्यज्यमानो दृश्यते।

प्रयुक्तैर्लक्ष्यघटकीकृतैः। 'रसादिभिः' इति त्वपपाठः, रसादिनिष्ठव्यङ्ग्यताया एव प्रस्तुतत्वाद्, यथाश्रुते तु तन्निष्ठव्यञ्जकत्वस्यैव प्रतीतेः।

वृत्तिकार उक्तकारिकाशयको स्फुट करते हैं—अलक्ष्यक्रम इति। वर्णादिमहावाक्यान्त शब्दोंसे जैसे-कहीं विभावादि वाच्यार्थके बोधन द्वारा साक्षात् ही रसादि ध्वनित होता है एवं कहीं वाच्यार्थ प्रतिपादन कर वस्तुरूप विभावादिको व्यञ्जना द्वारा व्यक्त करते हुए परम्परया रसादि ध्वनित होता है, वैसे ही सुप्तिङ् आदिसे भी साक्षात् या परम्परया रसादि ध्वनित होता है।

उदाहरति—

**यथा—**

रामेणोपक्षिप्ते रक्षःकुलक्षये रावणः स्वमधिक्षिपति—

'न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः,
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।
धिग्धिक्छक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा,
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः॥'

हनुमन्नाटक—चतुर्दशाङ्कघटकं पद्यमिदम्। अयमेव, न त्वन्यः कश्चित्, हि निश्चयेन मे मम न्यक्कारो धिक्कारो निन्देति यावत्। यद्—अरयः शत्रवः सन्तीति शेषः, मादृशजगदेकवीरस्यैकोऽपि रिपुर्नोचितः, किंपुनर्बहवः। तत्रापि तेषु रिपुष्वपि, असौ रक्षोभक्ष्यत्वेन प्रसिद्धो मनुष्यः, तापसस्तपोमात्रबलः, न तु युद्धनिपुणो राजादिः। स तापसो रिपुरपि, अत्रैव मत्पुरस्तादेवः, न त्वन्यत्र कुत्रचिदरण्यादि-दुर्गमप्रदेशेषु, न केवलं तूष्णीं तिष्ठत्यपि तु राक्षसानां कुलं बालवृद्धस्त्रीपर्यन्तं निहन्ति निश्शेषेण मारयति, न त्वेकमपि मुञ्चति। तथाऽपि, अहो आश्चर्यम्, रावणो विश्रवसोऽपत्यं पुमान् पराक्रमातिरेकेण सकलजगतः क्रन्दयिता वा, मल्लक्षणो राजा जीवति, प्राणान् धारयति, न त्ववमानातिशयेन म्रियते योद्धुं पराक्रमते वा।

न केवलं मामेव धिक्, यावद्, शक्रजितं सुरेन्द्रस्य जेतारं मदात्मजं मेघनादमपि धिग्धिगस्तीति शेषः। प्रबोधितं प्रबोधनमायाससहस्रकृतं जागरणमस्त्यस्मिन्निति प्रबोधितवांस्तेन, प्रख्यातशौर्येण कुम्भकर्णेन मदनुजेनापि किं? न किमपि फलं साधितम्। स्वर्ग एव ग्रामटिकाऽल्पग्रामः, तस्य विलुण्ठनेन बलादात्मसात् करणेन, यद्वा-स्वर्गस्य ग्रामटिकावदनायासतो विलुण्ठनेन, वृथोच्छूनैर्व्यर्थपुष्टैरेभिर्विंशत्या सदा सन्निकृष्टैः प्रसिद्धवीर्यैर्वा मम भुजैः किं, न किमपि कृतमित्यर्थः।

तपोऽस्त्यस्मिन्निति विग्रहे 'अण् च' इति सूत्रेण तपश्शब्दादणि तापस इति। विश्रवश्शब्दादपत्यार्थेऽणि 'विश्रवसो विश्रवणरवणौ' इति सूत्रेण रवणादेशे वृद्धौ, यद्वा रावयति लोकानिति रौतेर्ण्यन्ताल्ल्युप्रत्ययो रावण इति। तथा च वाल्मीकीयरामायणोत्तरकाण्डे—

'यस्माल्लोकत्रयं चैतद् भावितं भयमागतम्।
तस्मात्त्वं रावणो नाम नाम्ना वीरो भविष्यसि॥' इति।

प्रपूर्वकाद् बुध्यतेर्ण्यन्ताद् बोधतेः केवलाद्वा भावक्तान्तान्मतुपि, क्तवतुप्रत्यये वा प्रबोधितवतेति। ग्रामशब्दादल्पार्थे 'तद्धिताः' इत्यधिकारसूत्रस्थवहुवचनसामर्थ्येनाप्युक्तेऽपि विहिते टिकच् प्रत्यये ग्रामटिकेति। आम्रेडितधिक्शब्दयोगे शक्रजितमिति द्वितीया। तृतीयायुगलन्तु गम्यमानक्रियां प्रति करणत्वविवक्षयैव। इहत्यव्यङ्ग्यविचरणमनुपदं वृत्तिं विवृण्वन्तः करिष्यामः।

उदाहरण बतलाते हैं—यथेति। रामके द्वारा राक्षस कुलके संहार होनेपर रावण दुःखी होकर अपनेको कोसता है—मेरे लिये यही एक धिक्कारकी बात है, जो मेरे भी शत्रु हैं (मेरे जैसे विश्ववीरका तो एक भी रिपु नहीं होना चाहिये था, अनेककी तो बात ही क्या) उनमें भी एक अकिञ्चन तापस मनुष्य (न कि कोई वीर राजा) वह तापस रिपु भी यहीं पर मेरे ही सामने (न कि किसी जङ्गलमें) केवल चुप ही नहीं बैठा है, अपितु राक्षसोंके समूह (बाल, वृद्ध, स्त्री पर्यन्त) को ही मार रहा है (एकको भी नहीं छोड़ता) फिर भी अत्यन्त ही आश्चर्यकी बात है, कि जगत को ही रुलानेवाला यह रावण जी रहा है (न कि मर जाता है, या युद्धार्थ उद्यत होता है) केवल मुझे ही धिक्कार नहीं है, अपितु इन्द्रजेता मेघनादको भी, अत्यन्त देरसे जागनेवाले वीर कुम्भकर्णसे ही क्या लाभ हुआ, छोटा गाम जैसे स्वर्गको लूटनेसे ही व्यर्थ गर्व करनेवाले इन हमारे भुजदण्डोंसे ही क्या लाभ हुआ अर्थात् कुछ भी लाभ नहीं हुआ।

वृत्तिकृद् व्यङ्ग्यं दर्शयितुमाचष्टे—

**अत्र हि श्लोके भूयसा सर्वेषामप्येषां स्फुटमेव व्यञ्जकत्वं दृश्यते।**

भूयसा बाहुल्येन। एषां सुवादीनाम्।

वृत्तिकार उक्त स्थलमें व्यङ्ग्यार्थका दिग्दर्शन कराते हैं—अत्रेति। इस श्लोकमें अत्यन्त बाहुल्य रूपसे सभी सुबादिशब्द स्फुट रूपमें ही व्यञ्जक दिखाई दे रहा है।

क्रमशो व्यङ्ग्यं दर्शयति—

**तत्र 'मे यदरयः' इत्यनेन सुप्-सम्बन्ध-वचनानामभिव्यञ्जकत्वम्।**

'मे' इत्यत्र ङस् विभक्तिः सुप्, अरिभिः सह वध्यघातकभावश्च सम्बन्धस्तदर्थः, 'अरयः' इति बहुवचनमेवकारश्च सम्भूय न्यक्कारान्तरासम्भवद्वारा स्वपराक्रमातिरेकम्, त्रैलोक्याद्वितीयविक्रमेण स्वेन सहैकस्यापि वध्यघातकभावानौचित्यं किंपुनर्बहूनामिति च सूचयन्ति।

क्रमशः व्यङ्ग्यार्थ दिखलाते हैं—तत्रेति। यहां पर ङस् विभक्ति, बहुवचन और एवकार सब मिलकर पराभवान्तरासंभव सूचन द्वारा स्वपराक्रमातिशयादिको अभिव्यक्त करता है।

तथा—

**'तत्राप्यसौ तापसः' इत्यत्र तद्धितनिपातयोः।**

व्यञ्जकत्वमिति शेषः। तद्धितस्तापसशब्देऽण्प्रत्ययः, निपातोऽपिशब्दः, एतौ चासाविति सर्वनाम्नोऽप्युपलक्षणम्। ते चातिविक्रान्तनृपतेः परिपन्थित्वस्य कथञ्चिदभ्युपगम्यत्वम्, तपोमात्रसाधनस्य युद्धानभिज्ञतया तदनौचित्यं, मानुष्येण भक्ष्यत्वं च व्यञ्जन्ति।

निहन्ति जीवतीत्यत्र तिङः, अत्रेत्यधिकरणत्वस्य राक्षसकुलमिति कर्मत्वस्य च कारकशक्तेर्व्यञ्जकत्वमित्यर्थः।

एतच्चैवकारस्य, 'नि' इत्युपसर्गस्य, जीवधातोः, 'अहो' इत्यव्ययस्य, रावणपदस्य चोपलक्षणम्। तथा च—मदनधिष्ठिते देशे यदि स तिष्ठेत्, अत्र स्थितोऽपि यदि तूष्णी भवेत्, अतूष्णीम्भावेऽपि राक्षसान् यदि न हन्यात्, कस्यचिदेकस्य हननेऽपि तत्कुलमामूलं यदि सम्प्रत्येव न विनाशयेत्, तथाभावेऽपि यदि त्रैलोक्याद्भुतविक्रमो रावणनामाऽहं प्राणान् न धारयेयम्, तदेतत् कथञ्चन संघटेत। न तु तथा, तदद्भुतमेवेदं मत्प्रख्यातशौर्यप्रतिकूलमखिलमापतितमित्याद्यनवधि व्यज्यते तैः।

**यहां पर अणूप्रत्यय, अपि शब्द, सर्वनाम तिङ् और उपसर्गादि सब मिलकर अतिविक्रमशाली राजाके विपक्षासंभव, एवं उनमें भी राक्षसोंके भक्षण योग्य अकिञ्चन तापस मनुष्य गत शत्रुत्वके अनौचित्यादिका अभिव्यञ्जक होता है।**

तथा—

'धिग्धिक् छक्रजितम्' इत्यादौ श्लोकार्धे कृत्तद्धितसमासोपसर्गाणाम् ।

श्लोकार्धे चरम इति शेषः । 'शक्रजितम्' इत्यत्र 'प्रबोधितवता' इत्यत्र च क्त—क्तवत्वोः कृतोः, 'ग्रामटिका' इत्यत्र टिकचस्तद्धितस्य, चरमचरणस्थ 'स्वर्ग' इत्यादिसमासस्य, 'प्रबोधित' इत्यादौ 'विलुण्टन' इत्यादौ प्र-निरूपयोरुपसर्गयोश्च व्यञ्जकत्वमित्यर्थः ।

इदमपि 'धिग्धिक्' इत्यव्ययस्य, शक्रशब्दस्य, 'प्रबोधित' इत्यादौ प्रेरणार्थकणिचः, स्वर्गे ग्रामटिकात्वारोपस्य, 'भुजैः' इति बहुवचनस्य चोपलक्षणम् । तथा हि—शक्नोत्यरीन् जेतुमिति व्युत्पत्त्या शक्रस्य दुर्जयत्वम्, शक्रं जितवानिति शक्रजिदिति क्विपा तद्विजयस्य कृतपूर्वत्वम्, तेन मेघनादस्य शौर्यप्रकर्षेण रामविजयसौकर्यम्, तदनाचरणे धिग्धिगिति वीप्सया तस्य गर्हणीयतमत्वम्, णिचा क्तवतुना प्रेत्युपसर्गेण च कुम्भकर्णजागरणे फलविशेषाशया बहुलाऽऽयासकरणम्, प्रबोधस्य भूतकालिकत्वेन सिद्धत्वम्, तस्य सर्वथा त्यक्तनिद्रत्वं च, ततः क्षुद्रतापसस्य झटिति विजेयत्वम्, किमा तदननुष्ठाने तत्सर्वनैष्फल्यम्, तेन निन्द्यताऽतिशयः, स्वर्गे ग्रामटिकात्वारोपेण सुजयत्वम्, व्युपसर्गेण लुण्टनस्य व्यापकतामुखेन स्वर्गस्य स्थूणामात्रावशेषत्वम्, बहुत्वेनोच्छूनत्वेन च भुजानामेकतमेनापि सुकरस्य तज्जयस्य, मिथः सहचरितैर्बहुभिरप्यकरणाद् वृथायुद्धकण्डूतिवहनाच्च व्यर्थत्वपुष्टत्वद्वारा वचनीयत्वप्रकर्षः, समस्तवाक्येन कुत्साऽऽधिवयेन स्वक्रोधोद्भवौचित्यम्, तेन रौद्ररसः । यद्वा· पुनर्युद्धोत्साहः, तेन वीररसश्च सूच्यते ।

स्थालीपुलाकन्यायेनैवैते व्यङ्ग्यार्थाः प्रदर्शिताः । सूक्ष्मेक्षिकायां तु निस्सीमानोऽत्र प्रतीयमानाः स्फुरन्तीत्युक्तमेव ।

**यहां पर कृत्तद्धित, समास, उपसर्ग आदि सभी मिलकर मेघनाद गत शौर्य प्रकर्ष सूचन द्वारा रामको जीतनेका शौकर्य होने पर भी, नहीं विजय कर सकनेसे निन्दातिशयका व्यञ्जक होता है, सम्पूर्ण वाक्यसे कुत्साधिक्य सूचन पूर्वक अत्यन्त क्रोध व्यञ्जन द्वारा अन्ततः रौद्र रस या युद्धोत्साह व्यञ्जन द्वारा वीररस अभिव्यञ्जित होता है।**

एतावद्व्यङ्ग्यावभासफलमभिदधाति—

**एवंविधस्य व्यञ्जकभूयस्त्वे च घटमाने, काव्यस्य सर्वातिशायिनी बन्धच्छाया समुन्मीलति ।**

एवंविधस्येति काव्यस्य विशेषणम् । भूयस्त्वं बाहुल्यम् । घटमाने सतीति शेषः । बन्धच्छाया संघटनासौन्दर्यम् । समुन्मीलति प्रकाशते ।

व्यञ्जकबाहुल्येन बहुव्यङ्ग्यावभासनात् प्रबन्धसौन्दर्यातिशयः प्रतीयत इत्यर्थः ।

इस तरह अत्यधिक व्यञ्जकोंके सङ्घटनसे काव्यका सर्वातिशायी सौन्दर्य प्रकाशित होता है अर्थात् व्यञ्जकोंके बाहुल्यसे अधिक व्यङ्ग्यद्योतन द्वारा काव्यका चमत्कारातिशय प्रतीत होता है ।

इदमेवार्थापत्त्या द्रढयति—

**यत्र हि व्यङ्ग्यावभासिनः पदस्यैकस्यैव तावदाविर्भावः, तत्रापि काव्ये काऽपि बन्धच्छाया, किमुत यत्र तेषां बहूनां समवायः ।**

व्यङ्ग्यावभासिनो व्यञ्जकस्य । एवशब्दोऽप्यर्थकः । काऽप्यनिर्वचनीया । बन्धच्छाया भवतीति शेषः । किमुत किंपुनः । तेषां व्यञ्जकपदानाम् । समवायः समुदायः ।

एकव्यञ्जकपदसद्भावेऽपि यदि चमत्कारोत्कर्षः प्रबन्धस्यानुभवसिद्धः, तर्हि तादृशबहुपदसद्भावे तु सुतरामित्यर्थः । तेन तत्र प्रबन्धशोभोत्कर्ष एव फलमिति सूचितम् ।

जब व्यङ्ग्य विशेषका एक भी व्यञ्जक पदके रहनेसे काव्यकी कुछ अलौकिक ही सुषमा बढ़ जाती है, तब जहां पर अनेक पद व्यञ्जक हैं, वहां की सुषमा कितनी होती होगी यह सहृदयजन स्वयं जान सकते हैं ।

बहुव्यञ्जकघटितमुदाहरणमाह—

**यथाऽत्रानन्तरोदितश्लोके ।**

श्लोके 'न्यक्कार' इत्यादौ । बहुव्यञ्जकसद्भावाद् बन्धस्य सुषमाऽतिशय इति शेषः ।

जैसे इसी 'न्यक्कार'-श्लोकमें बहुत व्यञ्जक शब्दोंके होनेसे अतिशय चमत्कार प्रतीत होता है ।

न्यक्कार इत्यादिपद्ये व्यङ्ग्यार्थान् समाहृत्य दर्शयति—

**अत्र हि 'रावण' इत्यस्मिन् पदेऽर्थान्तरसंक्रमितवाच्येन ध्वनिप्रभेदेनालंकृतेऽपि, पुनरनन्तरोक्तानां व्यञ्जकप्रकाराणामुद्भासनम् ।**

रावणस्य स्वयं रावण इत्युक्तेरनुचितत्वादत्र रावणपदस्य प्रागुक्तधर्मान्तरविशिष्ट-स्वार्थबोधकत्वादर्थान्तरसङ्क्रमितवाच्यो नाम ध्वनिः।

तस्य पूर्वोक्तनानाव्यञ्जकपदव्यङ्ग्यानां च सद्भावादिह छायाऽतिशयो भवतीति भावः।

यहां पर रावण द्वारा स्वनामोच्चारणके अनौचित्य होनेसे रावण शब्द 'जगत्को ही रुलानेवाले रावण रूप अर्थान्त संक्रमित वाच्य ध्वनिके व्यञ्जक होने पर भी अनन्तरोक्त अनेक व्यञ्जकोंके सांनिध्यसे अनिर्वचनीय चमत्कारका द्योतक होता है।

असम्भवापत्तिं वारयितुमाह—

**दृश्यन्ते च महात्मनां प्रतिभाविशेषभाजां बाहुल्येनैवंविधाः प्रकाराः।**

तावता नाप्रसिद्धिरिति भावः।

अत्यन्त तीव्र प्रतिभा (मस्तिष्क) वाले महापुरुषोंकी अलौकिक प्रतिभाके बदौलत अतिशय चमत्कार जनक उक्त प्रकारके व्यञ्जक पुञ्जोंसे घटित काव्यप्रकार प्रायः करके अधिक मात्रामें देखे जाते हैं।

उदाहरति—

**यथा महर्षेर्व्यासस्य—**

रचनाऽस्तीति शेषः।

**'अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः।**
**श्वश्वःपापीयदिवसा पृथिवी गतयौवना॥'**

अतिक्रान्तं व्यतीतं न तु कथञ्चन विद्यमानं सुखं यत्र तादृशाः, तथा प्रत्युपस्थितानि प्रतिकूलतयोपगतानि विद्यमानानि, न तु भूतानि दारुणानि भीषणानि दुःखानीति यावद् येषु तथाभूताः काला न तु तदंशभूतः कश्चन कालः, साम्प्रतं सन्तीति शेषः। किञ्च श्वः श्वः, प्रत्यग्रिमदिनं पापीयाः पातकिसम्बन्धिनस्तत्स्वामिका इति यावद् दिवसा यस्यां तादृशी, तथा वृद्धस्त्रीवद् गतं यौवनमुपभोगक्षमत्वं यस्यां तथाभूता च पृथिवी, वर्तत इत्यर्थः।

जैसे महर्षि व्यासने कहा है—आजकलका समय बिलकुल ही सुखके सम्पर्कसे रहित है और अत्यन्त भयंकर दारुण दुःखोंसे भरा हुआ है एवं पृथिवी भी उत्तरोत्तर अत्याचारादि पातकोंसे भरी हुई, गत यौवना वृद्धा स्त्री की तरह जीर्ण शीर्ण होकर शिथिल हो गई है।

अत्र श्लोके व्यञ्जकान् संगृह्णाति—

**अत्र कृत्तद्धितवचनैरलक्ष्यक्रमव्यङ्ग्यः 'पृथिवी गतयौवना' इत्यनेन चात्यन्ततिरस्कृतवाच्यो ध्वनिः प्रकाशितः।**

अतिक्रान्तोपस्थितगतेत्यादौ क्तरूपकृतः, पापीयेत्यत्र छप्रत्ययतद्धितस्य, काला इति बहुवचनस्य चात्र व्यञ्जकत्वम् । एतच्चान्येषामप्युपलक्षणम् । तथा हि—अतिक्रान्तेति भूतकालार्थकक्तप्रत्ययेन सुखस्य कदाचिदपि न वर्तमानत्वम्, तेन कालस्यातिभीषणत्वम्, उपस्थितेतिक्तेन दारुणदुःखानां प्राक्कालादेव सम्बन्धोऽनिराकरणीयत्वं च, गतेतिक्तेन पृथिव्या यौवनस्यापरावर्तनीयता, तया तस्या निस्सारत्वेन हेयता, दिवसानां पापिजनसम्बन्धबोधकेन छप्रत्ययेनापकर्षातिशयः, बहुवचनेन कालस्यानेकविधत्वमपरिहार्यत्वं क्लेशेन यापनीयत्वं च, श्वः श्व इति वीप्सिताव्ययेन पापीयदिवसत्वस्य पृथिव्या गतयौवनत्वस्य च कालव्यापकत्वम्, तैश्च सकलैर्निर्वेदमुखेन शान्तो रसो व्यज्यते । यौवनस्य जडायां पृथिव्यां बाधात् गतयौवनापदमुपभोगाक्षमत्वं लक्षयद्धेयतां व्यनक्ति, तेनात्रात्यन्ततिरस्कृतवाच्यो ध्वनिः ।

उक्त श्लोकमें व्यञ्जक पदोंका दिग्दर्शन कराते हैं—अत्रेति । यहां पर क्तप्रत्यय रूपकृत्, छप्रत्यय रूप तद्धित और 'कालाः' इस बहुवचनसे सर्वथा हमेशा सुखाभाव एव दुःखबहुल नानाविध अत्याचारादि कुकाण्ड जनित निर्वेदके व्यञ्जन द्वारा शान्त रस व्यक्त होता है ।

एवं पृथिवी गत यौवना इससे अचेतन पृथिवीमें यौवनावस्थाके बाध होनेसे वृद्धा स्त्री की तरह उपभोगाक्षमत्व लक्षित होकर अत्यन्त हेयता रूप व्यङ्ग्यात्मक अत्यन्त तिरस्कृत वाच्य ध्वनि प्रतीत होती है ।

उदाहरणान्तरं दातुं भूमिकामारचयति—

**एषां च सुबादीनामेकैकशः समुदितानां च व्यञ्जकत्वं महाकवीनां प्रबन्धेषु दृश्यते ।**

एषां कारिकायां प्रदर्शितानाम् । एकैकशः प्रत्येकं व्यस्तानामिति यावत्, समुदितानां समस्तानाम् ।

महाकवियोंके काव्योंमें इन पूर्वोक्त सुप्-तिङादि शब्दोंकी व्यञ्जकता प्रत्येककी अलग-अलग रूपसे एवं सम्मिलित रूपसे देखी जाती है ।

अथ समस्तानां सुबादीनामुदाहरणं प्रदर्श्य व्यस्तानां दर्शयन् प्रथमं सुबन्तस्योदाहरणमाह—

**सुबन्तस्य व्यञ्जकत्वं यथा—**

मेघदूते यक्षो जलदं वदति—

'तालैः शिञ्जावलयसुभगैः कान्तया नर्तितो मे,
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद् वः ।'

'तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-
मूले वद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ॥' इत्येतत्पद्यपूर्वार्धः ।

तयो रक्ताशोक-केसरवृक्षयोर्मध्ये, अनतिप्रौढवंशप्रकाशैस्तरुणवेणुप्रतिमप्रतिभैर्मणिभिर्मरकतरत्नैः, मूलेऽधोदेशे, वद्धा संघटिता, स्फटिकं तन्मयं फलकं पीठं यस्यास्तादृशी, काञ्चनी सुवर्णमयी वासयष्टिर्निवासदण्डोऽस्तीति शेषः । शिञ्जा भूषणध्वनिस्तत्प्रधानैर्वलयैः कङ्कणैः सुभगा रमणीया ये ताला अनेकविधकरतलवादनानि तैः, मे मम कान्तया कर्त्र्या, नर्तितो नटनं कारितः, वो युष्माकं मेघानां सुहृन्मित्रं नीलकण्ठो मयूरः, दिवसविगमे दिनान्ते यामध्यास्ते यत्र यष्ट्यां वसतीत्यर्थः ।

इह यच्छब्दस्योत्तरवाक्यघटकत्वेन पूर्ववाक्ये न तच्छब्दोपादानापेक्षा । तालैरिति वहुवचनसुवन्तस्य तालानामनेकविधत्वद्वारा यक्षपत्न्यास्तद्विज्ञतया सङ्गीतागमनैपुण्यस्य परम्परया विप्रलम्भश्रृङ्गारस्य च व्यञ्जकत्वम् ।

इनमें संमिलित रूपसे व्यञ्जकत्वका उदाहरणके रूपमें उक्त श्लोकको वताकर अलग २ रूपसे वतलाते हैं—सुवन्तेति । मेघदूतमें जलदके प्रति यक्ष कहता है—उस क्रीडा शैलके अशोक और केशर वृक्षके मध्यमें कच्चे वांस वृक्षके सदृश हरे २ मरकत मणियोंसे मूलभागमें जड़ी हुई एवं भूतलमें स्फटिक शंखमरमरकी विछी हुई फर्शोंसे वन्धी हुई चौकवाली सोनेकी छतरी है, जिस पर कङ्कण आदि भूषण ध्वनिसे अत्यन्त मञ्जुल तालयों द्वारा मेरी प्रेयसीसे नचाया जाता हुआ आपका प्रिय मित्र मयूर दिनान्तमें ( रातको ) वैठता है । यहां पर 'तालैः' इस वहुवचन सुवन्तसे तालयोंके अनेक प्रकारकत्वके प्रतिपादन द्वारा यक्ष नायिकाका अत्यन्त संगीत नैपुण्य अभिव्यञ्जित होकर विप्रलम्भ श्रृङ्गार सूचित होता है ।

व्यस्तस्य तिङन्तस्योदाहरणमाह—

तिङन्तस्य यथा—

अनुनयन्तं नायकं खण्डिता वदति—

'अवसर रोउं चिअ णिम्मिआइँ मा पुंस मे हअच्छीइं ।
दंसणमेत्तुम्मत्तेहिं जेहिं हिअअं तुह ण णाअम् ॥'
'अपसर रोदितुमेव निर्मिते मोत्पुंसय मे हताक्षिणी ।
दर्शनमात्रोन्मत्ताभ्यां याभ्यां हृदयं तव न ज्ञातम् ॥' इति च्छाया ।

शठ ! अपसर अनुनयं विहाय दूरं व्रज, रोदितुमश्रु मोक्तुमेव, न त्वसेचनकदर्शनानन्दमनुभवितुं विधात्रा दैवेन निर्मिते हते अभाग्योपहते मे ममाक्षिणी दृशौ

मा उत्पुंसय कृतकानुनयं रोदनबहुलीकरणेन नोच्छ्रने कुरु । दर्शनमात्रेण त्वदवलोकनेनैव, न तु व्यवहारसमीक्षणेनापि, उन्मत्ताभ्यां याभ्यां मदक्षिभ्यां तवैवंविधकपटोपन्यासपटु हृदयं चित्तं न ज्ञातमित्यर्थः ।

अत्रापसरेति तिङन्तेन प्रधानेन नायकविषयकरोषद्वारा तदपराधानाममर्षणीयता, मानवप्रयासवैयर्थ्यं मध्येकृत्य दैवकृतेरपरिवर्तनीयता च सूच्यते । एवं हत-मात्र-हृदयादिशब्दैस्तदनुयायितया हृदयज्ञमदर्शनानधिकारित्व-सौभाग्यविरह-व्यवहारविवेकव्यतिरेकशाठ्यमांसलत्वानि व्यज्यन्ते ।

तिङन्तका उदाहरण देते हैं—अपसरेति । खण्डिता नायिका खुशामदी नायकसे कहती है—हे शठ ! अनुनय छोड़कर तुम यहांसे चले जाओ, मुझे मत छेड़ो, केवल रोकर आंसू बहानेके लिये ही ब्रह्मा द्वारा बनाई गयीं मेरी इन अभागिन आँखोंको बनावटी अनुनयोंसे अधिक रुलाकर जादे मत दुःखाओ, जो आँखें दर्शन मात्रसे ही पगली सी होकर इस तरहके कपट पूर्ण वचन विन्यासमें अत्यन्त चतुर तेरे हृदयको भी नहीं जान सकीं । यहां पर 'अपसर' इस तिङन्तसे प्रधानतया नायक विषयक रोषके व्यञ्जन द्वारा उसके अपराधकी अक्षम्यता सूचित होती है ।

तस्यैवोदाहरणान्तरमाह—

यथा वा—

मार्गं रुन्धन्तं कान्तं भङ्ग्या सङ्केतस्थलं सूचयन्ती कृत्रिमरोषाविष्टा काचिदाचष्टे—

'मा पन्थं रुन्धीओ अवेहि बालअ ! अहोसि अहिरीओ ।
अम्हेअ णिरिच्छाओ शुण्णघरं रक्खिदव्वं णो ॥'

'मा पन्थानं रुधोऽपेहि बालक ! अहो असि अह्रीकः ।
वयं निरिच्छाः शून्यगृहं रक्षितव्यं नः ॥' इतिच्छाया ।

बालक ! प्रौढिमनापन्न ! अविवेकिन्निति यावत्, अपेहि मार्गाद् दूरं व्रज, पन्थानं मद्गमनमार्गं मा रुधो नावरुद्धं कुरु । अहो आश्चर्यम्, अह्रीको जनसमाजेऽपि धार्ष्ट्यविधानान्निर्लज्जस्त्वमसि । वयं निरिच्छाः सर्वथा स्पृहाशून्याः पराधीना वा स्मः, यतो नोऽस्माकं शून्यं साद्यन्तरहीनं गृहं रक्षितव्यं चौरादिभ्यः पालनीयं वर्तत इत्यर्थः ।

अत्र परस्परसापेक्षं वाक्यपञ्चकम्, अपेहीति तिङन्तेन प्रधानेन सहसम्भूय, अप्रौढत्वात्तरलस्त्वमसि, यदित्थं पथि लोकानां समक्षमेव रहस्यं प्रकाशयितुं चेष्टसे, अस्त्येव निर्जनत्वात् सङ्केतोचितं मे गृहम्, तत्रैव निभृतमागत्य स्वमनोरथं पूरय, अलमिदानीमतिप्रसङ्गेनेत्यादि सूच्यते ।

उसीका दूसरा उदाहरण बतलाते हैं—मा इति। रास्तेको रोकते हुए नायकको दूसरे ढङ्गसे संकेत स्थलको सूचित करती हुई नायिका कृत्रिम कोपकर कहती है— अये नादान! रास्तेसे अलग हटो, मुझे जाने दो, मत रोको, बड़े आश्चर्यकी बात है, कि लोगके सामने भी इतनी धृष्टता करते हुए तुम बड़े निर्लज्ज मालूम पड़ते हो; मैं पराधीन हूं, क्योंकि मुझे अपने बिलकुल शून्य गृहको चोरादिसे रखवाली करनी पड़ती है।

यहां पर परस्पर सापेक्ष उक्त पञ्चवाक्य 'अपेहि' इस प्रधानभूत तिङन्तके साथ मिलकर 'अप्रौढि वश तुम अत्यन्त चञ्चल मालूम पड़ते हो, जो कि इसतरह रास्तेमें इतने लोगोंके सामने ही रहस्यको खोलना चाहते हो, मेरा घर तो स्वयं ही अत्यन्त निर्जन होनेसे संकेतके योग्य है, मन हो तो वहीं पर आकर इच्छा भर अपना मनोरथ पूरा कर लेना अभी मत छेड़ो' इस अर्थको व्यक्त करता है।

षष्ठ्यर्थसम्बन्धस्य व्यञ्जकत्वमुदाहरति—

**सम्बन्धस्य यथा—**

काचित्प्रगल्भा प्रच्छन्नकामुकी पाणिगृहीत्या भीत्या निरन्तरमसन्निधाय विलासतृष्णया कदाचिदुपगतं कान्तं तर्जयति—

'अण्णत्त वच्च बालअ! अह्लाअन्त किसमलोएसि एअम्।
हो जाआभीरुआण तु-( ह्याण संबंधो ) विअ ण होइ॥'

'अन्यत्र व्रज बालक! तृष्णायमानः कथमालोकयस्येतत्।
भो जायाभीरुकाणां युष्माकं सम्बन्ध एव न भवति॥' इतिच्छाया।

बालक! प्रणयतारतम्यपरिच्छेदाप्रगल्भ! अदक्षिण! अन्यत्र व्रज न तु मदन्तिके तिष्ठ, तृष्णायमानो मद्दर्शनेनाधुना विलासतृष्णातरलितस्त्वं कथं केन प्रकारेण विवेकाभावेनेति यावत्, एतदिदानीमपि प्रीतिदार्ढ्यानुबन्धनं निरुपधिविलासवैशद्यं वा, आलोकयसि पश्यसि सम्भावयसीति यावत्, भोः कातर्यास्कन्दितप्रागल्भ्य! जायायाः पाणिगृहीत्या भीरुकाणां त्रस्तानां कुत्सितानां युष्माकं सम्बन्धोऽन्यप्रणयिनीसम्बन्ध एव न भवति नैव सम्भवतीत्यर्थः।

ये खलु पाणिगृहीत्या भ्रूभङ्गमात्रेण नितरां बिभ्यति, तेषां परकीयाप्रणयबन्धो दुर्घट इत्यभिसन्धिः।

इह बालकेति सम्बोधनेन विवेकराहित्यम्, तेन जायाभीरुकत्वेऽप्यन्यप्रणयौत्सुक्यायोग्यता, प्रणयतारतम्यपरिच्छेदाक्षमत्वं च, तृष्णायमान इत्यनेन भो इति सोल्लुण्ठसम्बोधनेन च वस्तुतत्त्वानभिज्ञत्वम्, जायाशब्देन सन्ततिजननमात्रकारण-

स्वद्वारा प्रणयादिशून्यत्वम्, तेन ततो भीतेरनौचित्यम् भीरुत्वेन नितान्तपारवश्यम्, तेन पुनःप्रणयभङ्गसम्भावना, तया तत्सम्बन्धाविधेयत्वम्, कुत्सार्थककप्रत्ययेन तद्विषयकेर्ष्याऽतिशयोऽवज्ञाप्रकर्षः प्रणयबन्धासम्भाव्यत्वं च व्यज्यते। तथा च जायाभीरुकाणामिति षष्ठ्यर्थसम्बन्धस्य तद्धितकप्रत्ययस्य च व्यञ्जकता स्फुटैव।

गाथेयमस्फुटत्वसूचकचिह्नेन मूलटीकयोरुपन्यस्ता, तथाऽपि यथामति कथञ्चिद् विवृता शोधिता च।

षष्ठ्यर्थ सम्बन्ध निष्ठ व्यञ्जकत्वका उदाहरण बतलाते हैं—सम्बन्धेति। कोई प्रगल्भा प्रच्छन्न कामुकी, विवाहिता स्त्रीके डरसे निरन्तर आनेमें असमर्थताके कारण अकस्मात् रति लालसासे उपस्थित नायकको फटकार रही है—हे भोले (नासमझ) बालक! यहां न ठहरो, दूसरी जगह चले जाओ, अभी मुझे देखकर विलासकी लोलुपतासे तरसता हुआ तू किस प्रकार रति होनेकी संभावना करता है। अये डरपोक! ब्याहीसे इतनी बुरी तरह डरनेवाले तेरे जैसे व्यक्तिका अन्य प्रणयिनीके साथ प्रेमका नाता किसी भी तरह सम्भव नहीं है।

यहां पर 'तृणायमान' इस पदसे नायिका द्वारा खिल्ली उड़ाई जानेसे नायक का बिलकुल वस्तु तत्त्वानभिज्ञत्व व्यक्त किया गया है, एवं 'जायाभीरुकाणां' इस पदसे कुत्सित भीरुत्वादि सूचन द्वारा पुनः प्रणयभङ्ग एवं ईर्ष्या और तिरस्काराति-शय व्यक्त होता है।

तदाह वृत्तिकारः—

**कृत-कप्रयोगेषु प्राकृतेषु तद्धितविषये व्यञ्जकत्वमावेद्यत एव।**

कृतः कस्य कप्रत्ययस्य प्रयोगो यत्र तेषु, तद्धितकप्रत्ययघटितेषु, प्राकृतेषु तद्धित-विषये व्यञ्जकत्वमावेद्यत आख्यायत एवेत्यर्थः।

कग्रहणं तद्धितान्तरस्याप्युपलक्षणम्।

इह 'जायाभीरुकाणाम्' इत्यत्र यथा कप्रत्ययस्य, तथाऽन्येषामपि तद्धितानां व्यञ्जकत्वमयत्नप्रतिपाद्यमेवेति तात्पर्यम्।

कुत्सार्थक तद्धित कप्रत्यय घटित उक्त प्रयोगमें उक्तार्थ व्यञ्जकता स्पष्ट ही प्रतीत होती है।

समासानां व्यञ्जकतां निर्ब्रवीति—

**समासानाञ्च वृत्त्यौचित्येन विनियोजने।**

व्यञ्जकत्वं ज्ञेयमिति शेषः। वृत्तिरुपनागरिकाऽऽदिः। चकारः सुबादिसङ्ग्राहकः। निपातानामित्यादिपङ्क्तिभागः पृथगेव योज्यः, मिथः सम्बन्धाभावात्, तदर्थस्य

कारिकाघटकचकारसङ्ग्रहीतत्वेनाप्राधान्याच्च । तथा च तत्र समासबहुलपरुषाऽऽदिवृत्तेरेव रौद्रादिरसव्यञ्जकताया उक्तपूर्वत्वात् तद्व्यञ्जन औचित्यमनुसरतां केवलानामपि समासानां निबन्धनत्वमवगन्तव्यम् ।

समास निष्ठ व्यञ्जकताका निर्वचन करते हैं—समासेति। रौद्रादि रस व्यञ्जनके प्रति समास बहुल परुषादि वृत्तियोंके यथोचित संघटन करनेमें सहायता करने वाला समासात्मक पद उक्त रसादिका व्यञ्जक होता है।

अथ कारिकायां स्फुटमुक्तान् व्यञ्जकानुदाहृत्य चकारसङ्ग्रहीतानुदाहरन् निपातानां व्यञ्जकत्वमुदाहरति—

**निपातानां व्यञ्जकत्वं यथा—**

निपातानां द्योतकत्वमन्यैरप्यङ्गीकृतमेव ।

विरही पुरूरवा वदति—

**'अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुस्सहो मे ।**
**नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥'**

विक्रमोर्वशीयचतुर्थाङ्के पद्यमिदम् । तयोर्वश्या प्रियया सार्धम् एकपदेऽकस्मादयं साक्षात् क्रियमाणः, वियोगो विरहः, मे मम सुदुस्सहो नितरामसह्य उपनत उपस्थितः। नवीनानां वारिधराणामुदयादुद्गमात्, निरातपत्वेनातपाभावेन, छाययेति यावत्, रम्यै रमणीयैः अहोभिर्दिवसैर्भवितव्यं भाव्यं चेत्यर्थः । समुच्चयोऽलङ्कारः ।

अतिदुस्सहः प्रेयसीविरहः काकतालीयन्यायेन वर्षासमयश्च प्राप्तस्तत्कथं जीवनं रक्षणीयमिति भावः ।

अत्र चकारद्वयेन विरहोपनमन-तादृशदिवसभवनयोः क्रिययोर्यौगपद्यं मेघच्छायोद्दीपनतमत्वं तन्मलिनदिवसानां दुर्यापत्वं विरहवेदनाया असह्यतोत्कर्षश्च सूच्यते । ततश्चात्र चकाररूपनिपातस्य व्यञ्जकता स्फुटैव ।

निपातोंका व्यञ्जकत्व दिखलाते हैं—अयमिति । उर्वशीके विरहसे पीड़ित होकर पुरूरवा दुःख प्रकट करता है—उस प्रेयसी उर्वशीके विरहसे उत्पन्न वेदना एकाएक आकर असह्य रूपसे सता रही है। और उस पर नूतन मेघोंके उद्गमसे आतपरहित अत्यन्त मादक समय भी उपस्थित होकर मुझे सता रहा है।

तदाह—

**इत्यत्र च-शब्दः ।**

निपातो व्यञ्जक इति शेषः । चकारद्वयसत्त्वेऽप्येकवचनं जात्यभिप्रायकम् ।

यहां पर निपातरूप चकारद्वयसे विरह वेदनाका असह्य उत्कर्ष एवं मेघाडम्बरका अत्यन्त उद्दीपकत्व अभिव्यक्त होता है।

निपातान्तरस्य व्यञ्जकतामुदाहरति—

यथा वा—

दुष्यन्तोऽनुशयानो ब्रवीति—

'मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु ॥'

अभिज्ञानशाकुन्तले तृतीयाङ्के पद्यमिदम्। मुहुर्भूयो भूयः, अङ्गुल्या तर्जन्या संवृत आच्छादितः—अधरो निम्न ओष्ठो यस्मिंस्तत्। प्रतिषेधस्य चुम्बननिषेधस्याक्षराणां मैवं कार्षीरित्यादिवर्णानां विक्लवेन धर्मप्राधान्यनिर्देशाद् वैक्लव्येन सङ्गमलज्जाऽतिरेकाद् व्यक्तानुच्चारणेनाभिरामम्—'नकारोऽलङ्कारो जयति मुखचन्द्रे मृगदृशः' इत्याद्युक्तेर्मनोहरम्, अंसे स्कन्धे वामाजनस्वभावाद् विवर्तितुं विवलितुं शीलमस्येति तादृशं, पक्ष्मले सुन्दरे अक्षिणी यस्याः—सा तथोक्ता, तस्याः शकुन्तलाया मुखं मया कथमपि चाटूवादिनानाप्रयासैः उन्नमितमूर्ध्वं नीतम्, चुम्बनार्हतां प्रापितम्, तु किन्तु ( पश्चात्तापे ) चुम्बितं नाभूदित्यर्थः।

स्वभावोक्तिकाव्यलिङ्गालङ्कारौ। चुम्बनमात्रलाभेनापि तदा कृतकृत्यता स्यात्, 'कामिनामधरास्वादः सुरतादतिरिच्यते' इति प्रसिद्धेरित्यभिप्रायः।

निपातान्तरका व्यञ्जकत्व दिखलाते हैं—मुहुरिति। राजा दुष्यन्त पश्चात्ताप कर रहे हैं—बार २ अङ्गुलियों द्वारा ढके हुए अधरोष्ठसे एवं चुम्बन निषेध सूचक वर्णोंके स्पष्ट अनुच्चारणसे संगम जन्य लज्जाके मारे देखनेमें अत्यन्त मनोहर, एवं कन्धे तरफ घुमाए हुए सुन्दराक्षीके मुखको चूमनेके लिये कितने ही अनुनयादि नर्म वचनों द्वारा ऊँचा तो उठा लिया, पर चूम नहीं पाया।

इह तु—शब्दो निपातः पश्चात्तापातिशयं, स च चुम्बनस्य दौर्लभ्यं व्यनक्ति, तदाह—

अत्र तु-शब्दः।

यहां पर तु शब्द पश्चात्तापातिशयके व्यञ्जन द्वारा दुर्लभ चुम्बनत्वको व्यक्त करता है।

ननु निपातानां द्योतकत्वं तु प्रसिद्धमेव, तत्कुतस्तदिदानीं समर्थ्यत इत्यत आह—

निपातानां प्रसिद्धमपीह द्योतकत्वं रसाद्यपेक्षयोक्तमिति द्रष्टव्यम्।

स्वातन्त्र्येण प्रयोक्तुमशक्यत्वाल्लिङ्गसङ्ख्याविरहाच्च निपातानां वस्तुव्यञ्जकत्वं यद्यपि वैयाकरणादिनये प्रसिद्धम्, किन्तु रसादिव्यञ्जकत्वं त्वप्रसिद्धमेवेति तदर्थोऽयं प्रयास इत्याशयः। निपातोदाहरणेषु रसव्यञ्जकता तु पूर्ववद्विभावाद्युपस्थापन-मुखेनैव बोध्या।

चकारादि निपातोंका द्योतकत्व प्रसिद्ध होने पर भी रसादि व्यञ्जकत्व अप्रसिद्ध है, अतः उनके व्यञ्जकत्वका दिग्दर्शन कराया गया है।

इत्थं निपातानां व्यञ्जकत्वमुदाहृत्योपसर्गाणां छन्दसां च स्थालीपुलाकन्याये-नोदाहरति—

**उपसर्गाणां व्यञ्जकत्वं यथा—**

दुष्यन्तः कण्वाश्रमं वर्णयति—

**'नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः,**
**प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।**
**विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-**
**स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दलेखाऽङ्किताः॥'**

अभिज्ञानशाकुन्तले प्रथमाङ्के पद्यमिदम्। शुकाः कीरा गर्भेऽन्तर्येषां तानि कोटराणि तरुविवराणि येषां तानि तथोक्तानि, तेषां मुखेभ्योऽग्रभागेभ्यो भ्रष्टाः पतिता नीवारास्तृणधान्यानि, यतः सन्तीति शेषः। तथा—इङ्गुदीफलभिदस्तापसत-रुफलचूर्णकाः, अत एव प्रकर्षेण स्निग्धाश्चिक्कणा उपलाः प्रस्थाः क्वचित् सूच्यन्ते प्रकाश्यन्त एव। किञ्च विश्वासस्य नात्र कश्चन हनिष्यतीति विश्रम्भस्योपगमादुदया-दभिन्नाऽस्खलिता गतिर्येषां, तादृशा मृगा हरिणाः शब्दं रथध्वनिं सहन्ते न त्वन्यत्र पलायन्ते। च पुनर्वल्कलानां कषायीकृततरुत्वचां शिखाभ्योऽञ्चलांशेभ्यो निष्यन्दो जलस्रावस्तेन या लेखास्ताभिरङ्किताश्चिह्निताः तोयाधारपथा जलाशयमार्गाः सन्ति, तस्मादिदमृषीणामाश्रमपदमस्तीत्यर्थः। 'वाटः पथश्च मार्गश्च' इति त्रिकाण्डशेषः।

अत्र स्वभावोक्ति—समुच्चयावलङ्कारौ। उपसर्गः प्रशब्द उपलानां स्निग्धतां बोधयन्निङ्गुदीफलानां सरसताऽतिशयं परम्परया शान्तरसं च सूचयति।

उपसर्गोंका व्यञ्जकत्व उदाहरण द्वारा बतलाते हैं–नीवारा इति। जैसे–शुकोंके घोसलेमें बैठे हुए सुग्गोंके बच्चेके मुखसे गिरे हुए धान कण वृक्षोंके नीचे बिखरे पड़े हैं, कहीं कहीं इंगुदीके फल तोड़नेसे चिकने पत्थर दिखाई दे रहे हैं, यहांके रहनेवाले मृगोंको विश्वास हो गया है कि हमें कोई मारेगा नहीं, इसलिये ये अपनी

साधारण चाल चलते हुए हमारे रथका शब्द सहनकर रहे हैं, जल स्थानको जाने वाले मार्ग भी वल्कलकी छोरसे गिरनेवाले पानीसे चिह्नित हो रहे हैं। यहां (प्रस्निग्धा) पर प्र उपसर्ग पत्थरोंकी अतिशय स्निग्धताको व्यक्त करता हुआ इंगुदीफलोंकी सरसताका द्योतक होकर शान्तरसको सूचित करता है।

छन्दसो व्यञ्जकत्वमुदाहरति—

'मदमुखरकपोतमुन्मयूरं प्रविरलवामनवृक्षसन्निवेशम्।
वनमिदमवगाहमानभीमं व्यसनमिवोपरि दारुणत्वमेति॥

मदेन मुखराः कलरवकारिणः कपोताः पारावता यत्र तत्, तथा—उत्सुका मयूरा यत्र तादृशम्, तथा प्रकर्षेण विरलोऽनिविडो वामनानां खर्वाणां वृक्षाणां सन्निवेशो यस्मिंस्तथाभूतं वनमिदं व्यसनं पानाद्यासक्तिः, तदिव अवगाहमानानां प्रविशतां सेवमानानां च भीमं श्वापदाद्याक्रान्तत्वाद् दुरायतिमूलत्वाच्च भयानकम्, उपर्यग्रे, परिणामे च दारुणत्वं घोरत्वमेति प्राप्नोतीत्यर्थः।

तथा च 'व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु' इति मेदिनी। 'अथ वामने। न्यङ्नीचखर्वह्रस्वाः स्युः' इत्यमरः।

अथ—'पर्यन्ते र्यौ तथैव शेषं त्वौपच्छन्दसिकं सुधीभिरुक्तम्'।

इति भट्टकेदारलक्षितस्यौपच्छन्दसिकच्छन्दसो वस्तुव्यञ्जनद्वारा भयानकरस-व्यञ्जकत्वमवसेयम्।

छन्दका व्यञ्जकत्व बतलाते हैं—मद इति। मदसे अत्यन्त चञ्चल होकर कलरव करते हुए कबूतर एवं उन्मद मयूरोंसे मुखरित तथा छोटे २ विरल वृक्षोंसे युक्त यह बीहड़ जंगल, सरावपानादि दुर्व्यसनकी तरह प्रवेश करनेवालोंके लिये हिंसक जानवरोंसे व्याप्त होनेके कारण आरम्भमें अत्यन्त भयानक और अन्तमें दुःखद परिणाम वाला मालूम पड़ता है। यहां पर औपच्छन्दसिक छन्द उक्त वस्तुके व्यञ्जन द्वारा भयानक रसका व्यञ्जक है।

सङ्कलय्य तदाचष्टे वृत्तिकृत्—

इत्यादौ प्रशब्दस्यौपच्छन्दसिकस्य च व्यञ्जकत्वमधिकं द्योतते।

द्योतते प्रकाशत इत्यर्थः। पूर्वत्र श्लोके प्रशब्दस्य परत्रौपच्छन्दसिकच्छन्दसश्च व्यञ्जकत्वं क्रमेणावगन्तव्यम्।

वृत्तिकार उक्त दोनों उदाहरणोंको संकलन कर बतलाते हैं—'नीवाराः'—इसमें प्र उपसर्ग और 'मद'—इसमें औपच्छन्दसिक छन्द स्फुट रूपसे ही क्रमशः शान्त एवं भयानक रसका व्यञ्जक होता है।

उपसर्गविषये विशेषमाह—

द्वित्राणां चोपसर्गाणामेकत्र पदे यः प्रयोगः, सोऽपि रसव्यक्त्यनुगुणतयैव निर्दोषः।

द्वौ वा त्रयो वा द्वित्रास्तेषाम्। चतुराद्युपसर्गसन्निवेशस्तु दुष्टः। द्वित्राणामपि रसव्यञ्जनोपयोगित्व एव निर्दोषता।

दो तीन उपसर्गों तक भी यदि व्यञ्जक रूपसे एक पदमें प्रयुक्त हों, तो रस व्यञ्जनमें उपयोगी होनेसे निर्दोष समझे जाते हैं।

अनेकोपसर्गनिर्दोषत्वमुदाहरति—

यथा—'प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन् द्राक्' इत्यादौ—

भट्टमयूरकविकृतसूर्यशतकघटकपद्यभागोऽयम्।

'जन्तूंस्तन्तून् यथा याननतु वितनुते तिग्मरोचिर्मरीचीन्।
ते सान्द्रीभूय सद्यः क्रमविशददशाशादशाली विशालं,
शश्वत् सम्पादयन्तोऽम्बरममलमलं मङ्गलं वो दिशन्तु ॥'

इत्ययमवशिष्टांशः पद्यस्य। इह समुद्वीक्ष्येति समुद्वीनामुपसर्गाणां समुदायः—सम्यगुच्चैर्विशेषेण दर्शनं बोधयन् भगवतः सूर्यस्य जन्तुविषयकानुकम्पाऽऽधिक्यं तद्विषयकरतिभावं च व्यनक्तीत्यदोषः।

रस व्यञ्जक अनेक उपसर्गोंके निर्दोषत्वका उदाहरण बतलाते हैं—यथेति। कवि सूर्यकी स्तुति करता है—दुपट्टेके समान रात्रिके अन्धकारके हट जाने पर आवरण रहित जन्तुओंको भलीभाँति देखकर दयासे द्रवित होते हुए सूर्य भगवान् जिन किरण रूप विशाल तन्तुओंको फैलाते हैं, वे सब (किरणतन्तु) तुरत ही सघन होकर क्रमशः दशों दिशाओंमें विशालरूपसे परिणत होते हुए सफेद अम्बरको करनेवाले, आपका मंगल करें। यहाँ पर सम्-उद्-वी ये तीनों उपसर्ग सम्यग उच्च रूपसे विशेष दर्शनको बतलाते हुए भगवान् सूर्यके प्राणिविषयक अनुकम्पातिशयको सूचित कर सूर्यदेव विषयक रतिभावको अभिव्यञ्जित करते हुए निर्दोष माने जाते हैं।

पुनरुदाहरति—

'यथा वा—'मनुष्यवृत्त्या समुपाचरन्तम्।'

'स्वबुद्धिसामान्यकृतानुमानाः।
योगीश्वरैरप्यसुबोधमीशं,
त्वां बोद्धुमिच्छन्त्यबुधाः कुतर्कैः ॥' इति श्लोकावशेषः।

अत्र समुपाचरन्तमिति समुपाङामुपसर्गाणां सन्निपातः सम्यगुपांशु आसमन्तान्मानवस्वरूपेणेशचरणमभिदधज्जन्तुसन्तानानुग्रहोत्कर्षं वस्तु तद्विषयकरतिभावं च व्यनक्तीति पूर्ववददुष्टत्वम्।

दूसरा उदाहरण दर्शाते हैं—यथा वेति। कोई भक्त भगवान्‌की स्तुति करता है–हे प्रभो! योगिजनोंसे भी अगम्य अपार महिमावाले आपको मनुष्य जैसे आचरण करते हुए देखकर मूर्खलोग कुतर्कोंसे अपनी सामान्य बुद्धि द्वारा ही माप (अन्दाज लगा) कर सुलभमें ही जान लेना समझते हैं।

यहां पर 'सम्, उप, आङ्' इन तीन उपसर्गोंका प्रयोग सम्यग् निकटमें ही भली भांति मनुष्य सदृश व्यवहारको कहते हुए अपनी सन्तान रूप प्राणियों पर अतिशय अनुग्रहेच्छाको व्यक्त कर भगवद्विषयक रतिभावको प्रकाशित करता है।

पुनरुदाहरति—

**'यः स्वप्ने सदुपानतस्य' इत्यादौ च।**

प्रक्षिप्तः श्लोकांशोऽयम्, प्राचीनव्याख्यातृभिरगृहीतत्वात्। इहाप्युपाङित्युपसर्गयुगयोगः प्राग्वदुप—समीपे, आ—समन्तान्नतस्योपागतस्येत्यभिदधदुपस्थितेः सर्वतोमुखतया समीचीनतां रसादींश्च सूचयतीत्यदुष्टत्वम्। रसादिव्यञ्जकता चैषां परम्परयैवेति न विस्मरणीयम्।

उदाहरणान्तर बतलाते हैं—य इति। यहां पर 'उप, आङ्' इन दो उपसर्गोंका प्रयोग समीपमें सम्यग् अवसरपर उपस्थित रूप अर्थको कहते हुए आगमनकी समीचीनताको व्यक्त कर यथायोग्य रसादि को सूचित करता है।

एवं निपातानामपि द्वित्राणामेकत्रोपनिपाते व्यञ्जकताऽपेक्षया निर्दोषत्वमुदाहरति—

**निपातानामपि तथैव।**

द्वित्राणामेकत्र पदे प्रयोगो रसादिव्यक्त्यानुगुण्येन निर्दोष इति शेषः।

वैसेही दो तीन निपात भी रसादिके व्यञ्जकके रूपमें प्रयुक्त हों तो निर्दोष समझे जाते हैं।

इन्द्रो मदनं वदति—

**यथा—'अहो बतासि स्पृहणीयवीर्यः' इत्यादौ।**

कुमारसम्भवतृतीयसर्गे श्लोकोऽयम्।

'सुराः समभ्यर्थयितार एते, कार्यं त्रयाणामपि विष्टपानाम्।

चापेन ते कर्म न चातिहिंस्रम्' इत्यादिर्मोऽशः श्लोकस्य।

अत्र अहो बतेति निपातद्वयं क्रमेणाश्चर्यमामन्त्रणं चाभिदधानं मदनवीर्यस्यालौकिकत्वमुखेनाद्भुतरसं प्रकाशयतीति नैव दुष्टम्।

जैसे इन्द्र कामदेवसे कहते हैं—हे कामदेव ! ये देवगण प्रार्थी होकर उपस्थित हैं, यह ( असुरोंका संहार करना ) तीनों भुवनोंका कार्य है और तुम्हारे चापसे ही पूरा होने वाला यह कार्य अत्यन्त हिंसाजनक भी नहीं है, ओहो ? तुम बड़े स्पृहणीय पराक्रम वाले हो।

यहां पर 'अहो, बत' इन दो निपातोंका प्रयोग क्रमशः आश्चर्य एवं कोमल आमन्त्रणको कहता हुआ मदनके अलौकिक पराक्रमको व्यक्त कर अद्भुत रसको प्रकाशित करता है।

पुनरुदाहरति—

**यथा वा—**

साधुव्यसनादसाधून्नतेश्च दूयमानः कश्चिदभिदधाति—

'ये जीवन्ति न मान्ति ये स्ववपुषि प्रीत्या प्रनृत्यन्ति ये,
प्रस्यन्दिप्रमदाश्रवः पुलकिता दृष्टे गुणिन्यूर्जिते।
हा धिक् कष्टमहो ! क यामि शरणं तेषां जनानां कृते,
नीतानां प्रलयं शठेन विधिना साधुद्विषः पुष्यता ॥' इत्यादौ।

ऊर्जिते महीयसि, गुणिनि गुणवति जने, दृष्टे सति, ये सज्जना जीवन्ति सुखेन जीवनं धारयन्ति, ये त एव स्ववपुषि स्वात्मनि न मान्ति प्रमोदाधिक्येन शरीरोत्साघात् सम्मातुं न शक्नुवन्ति, तथा प्रस्यन्दि निपतत् प्रमदाश्रु—आनन्दाश्रु येषां तादृशाः पुलकिता जातरोमाञ्चाश्च ये प्रीत्या सज्जनदर्शनजन्यानन्देन प्रकर्षेण नृत्यन्ति। साधुद्विषः सज्जनद्वेषिणोऽसाधून् पुष्यता पुष्टान् कुर्वता, अत एव शठेन क्रूरेण विधिना दैवेन, प्रलयं विनाशं विपदं वा नीतानां, तेषां जनानां कृते क शरणं यामि कुत्र कं रक्षकं प्रपद्ये, हा धिक् ! कष्टं महान् क्लेश इत्यर्थः।

इह हा धिगित्यनन्तरौ निपातौ विधिं प्रत्यसूयां तदाचरणविचारणया निर्वेदं च व्यङ्क्त इत्यदुष्टौ।

उदाहरणान्तर दर्शाते हैं—ये इति। सज्जनके दुःख और असज्जनके सुखसे दुःखी होकर कोई व्यक्ति कह रहा है—महागुणवान् व्यक्तिको सुखी सम्पन्न देखकर जो सज्जन अत्यन्त सुखी होते हुए आनन्दके मारे नाचने लगते हैं और रोमाञ्चित होकर हर्षका आंसू बहाने लगते हैं, फिर भी महात्माओंके द्रोही जनोंको ही उन्नत

करने वाले क्रूर विधातासे अत्यन्त सताये जाते हुए उन सज्जनोंके लिये मैं किसकी शरणमें जाऊँ, यह एक बड़े दुःखकी बात है।

यहां पर 'हा, धिक्' इन दो निपातोंका प्रयोग महापुरुषोंके श्लाघातिशयको और दैवकी असमीक्ष्यकारिताको अभिव्यक्तकर निर्वेदातिशयको प्रकाशित करता है।

प्रसङ्गसङ्गत्या पदपौनरुक्त्यस्यापि क्वचिद् दोषानावहत्वेन विच्छित्तिकारित्व-मुदाहर्तुं वक्ति—

**पदपौनरुक्त्यं च व्यञ्जकत्वापेक्षयैव कदाचित् प्रयुज्यमानं शोभामावहति।**

व्यञ्जकत्वविरहे पदपौनरुक्त्यं तु दोष एव। एतच्च विहितानुवादादीनामप्यु-पलक्षणम्।

तदुक्तं दर्पणे—न दोष इत्यधिकृत्य—'कथितं च पदं पुनः।
विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि।
दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने।
अर्थान्तरसङ्क्रमितवाच्ये हर्षेऽवधारणे॥' इति।

कहीं पर पदका पौनरुक्त्य भी यदि रस व्यञ्जकतया प्रयुज्यमान हो तो दोषावह नहीं होता, प्रत्युत चमत्कार जनक ही होता है।

उदाहरति—

**यथा—**

**'यद्वञ्चनाहितमतिर्बहुचाटुगर्भं कार्योन्मुखः खलजनः कृतकं ब्रवीति।**
**तत्साधवो न न विदन्ति विदन्ति किन्तु कर्तुं वृथा प्रणयमस्य न पारयन्ति॥'**

इत्यादौ।

वञ्चनायां सज्जनस्य प्रतारणायाम्, आहिता निहिता मतिर्येन सः, कार्योन्मुखः स्वार्थसाधनतत्परः खलजनो यद् बहून्यनेकविधानि चाटूनि मिथ्याप्रशंसनानि गर्भे मध्ये यस्य, तादृशं कृतकं कृत्रिममतात्त्विकं ब्रवीति, साधवः सज्जनाः, तद् न विदन्ति न जानन्ति, न, अपि तु विदन्ति, किन्तु अस्य खलजनस्य प्रणयं बाह्यप्रीतिं वृथा निष्फलं कर्तुं न पारयन्ति, न हि शक्नुवन्तीत्यर्थः।

खलानां वचनोपचारवचनतत्त्वं जानन्तोऽपि सन्तः स्वाभाविकसौजन्यपरवशा-स्तदनुकूलमेवाचरन्तीति सारम्।

अत्र 'नन्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वम्' इत्यभियुक्तोक्तेः 'न विदन्ति न' इत्येतदुक्त्यैव तदर्थस्य लभ्यत्वे पुन'र्विदन्ति' इति पदोपादानमज्ञत्वव्यावृत्तिखेमुन

सतामन्यवैलक्षण्येनाव्यभिचारेण वा तदभिज्ञत्वं द्योतयतीति पदपौनरुक्त्येऽपि न दुष्टतेति स्पष्टम्। 'पदग्रहणं च वाक्यादेरपि यथासम्भवमुपलक्षणम्' इत्याचार्याः। तत्र वाक्यस्य पौनरुक्त्योदाहरणं यथा रत्नावल्याम्—

'द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।

आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः॥ इत्येतदनन्तरम्—

'कः सन्देहः'—'द्वीपादन्यस्मादपि' इत्यादिवाक्यं पुनरुपात्तमवश्यमीप्सितलाभं व्यनक्तीति तत्रैव व्यक्तत्वाददुष्टम्।

उसका उदाहरण देते हैं—यदिति। जो दुष्टजन, सज्जनोंको ठगनेमें लगे हुए अनेकों अनुनय (खुशामद) की बातें करनेवाले स्वार्थ साधनमें ही लगे रहते हैं, उनकी पोल पाल (ढोंग) साधुजन नहीं जानते ऐसी बात नहीं है, अपि तु जानते ही हैं, किन्तु उनके बनावटी प्रेमको निष्फल नहीं कर पाते, अर्थात् सज्जन लोग दुष्टोंकी वञ्चना पूर्ण वचन रचना चातुरीको जानते हुए भी स्वाभाविक सौजन्य वश उनकी ढोंगको नहीं खोलकर तदनुकूल ही वरतते हैं।

यहाँ पर नञ् द्वयसे प्रकृतार्थके दाढर्य बोधन द्वारा सज्जनोंमें वस्तु परेखनेकी विलक्षण निपुणता अभिव्यक्त होती है, अतः नञ् पदका पौनरुक्त्य दोषाधायक नहीं होता।

प्रसङ्गाद् भूतादिकालस्य व्यञ्जकतामुदाहरति—

**कालस्य व्यञ्जकत्वं यथा—**

कश्चित् प्रोषितः प्रवसन् प्रवत्स्यन वा ब्रवीति। तमेव वा दयिता निगदति—

**'समविसमणिव्विसेसा समन्तओ मन्दमन्दसंआरा।**

**अइरा होइन्ति पहा मणोरहाणं पि दुल्लङ्घा॥'**

'समविषमनिर्विशेषाः समन्ततो मन्दमन्दसञ्चाराः।

अचिराद् भविष्यन्ति पन्थानो मनोरथानामपि दुर्लङ्घाः॥' इतिच्छाया।

समा अनिम्नोन्नता, विषमा निम्नोन्नता भूमयो निर्विशेषा जलैर्गर्तानां पूरणात् समाना यत्र ते, तथा समन्ततः परितो मन्दमन्दः पिच्छिलत्वात् स्खलनभयादतिमन्थरः सञ्चारोऽध्वगानां सञ्चलनं येषु तादृशाः पन्थानो मार्गाः, मनोरथानामभिलाषाणामपि का कथा मानवचरणानाम्, दुर्लङ्घा दुःखेन लङ्घितुं योग्या दुर्गमा इति यावत्, अचिरादाश्वेव भविष्यन्तीत्यर्थः।

प्रत्यासीदति जलदसमय प्रवासो नोचितः, वार्ताहारकादेरपि सञ्चरणासम्भवादिति भावः।

अत्राकारान्तः पथशब्दो न तु छायालेखकनिर्दिष्टः पथिन् शब्दः, तस्यापि 'वाटः पथश्च मार्गश्च' इति त्रिकाण्डशेषेण मार्गार्थेऽनुशिष्टत्वाद् 'रथा' इत्यनुप्रासानुरोधेन तथैव कल्पयितुमुचितत्वात्। वृत्तिकारमनुसरता मयाऽपि यथादृष्टमेव विवृतम्। भविष्यन्तीतिपदघटक-स्यविकरणविशिष्टतिङ्प्रत्ययस्य भविष्यत्कालबोधकस्य भविष्यन्नित्याशंसामात्रविषयोऽपि वर्षाकालो यदि नितरां मन्मथोन्माथकृत्, तर्हि सुतरां प्रत्यासीदन्निति वस्तुमुखेन प्रवासहेतुकविप्रलम्भश्रृङ्गाररसपोषणव्यञ्जनयोः कारणत्वम्। एवं 'गच्छ गच्छसि चेत् कान्त!' इत्यादौ, 'गताः क्षणेनास्फुटितेक्षणा मम' इत्यादौ चावसेयम्।

प्रसङ्ग वश भूतादिकालका व्यञ्जकत्व बतलाते हैं—कालस्येति। कोई परदेशी प्रस्थान करते समय नायिकासे कहता है, या नायिका ही नायकसे कहती है—समतल एवं उच्चावच, सारे ही रास्तेकी भूमि वर्षा द्वारा प्लावित हो जानेसे एक सरीखी दिखाई देनेवाली होगी, चौतरफ पिच्छिल भूमि हो जानेके कारण फिसल जानेके भयसे राहीगण थाम थाम कर चलेंगे, मालूम पड़ता है कि बहुत जल्दी ही रास्ते मनोरथसे भी लांघने योग्य नहीं रह जायेंगे, पांवसे लांघनेकी तो बात ही दूर रही, अर्थात् वर्षात समयके निकट आजानेसे प्रवास करना उचित नहीं, क्योंकि सन्देश ले जानेवालेका भी जाना आना बन्द हो जायगा।

यहां पर भविष्यत्काल बोधक स्यप्रत्यय घटित तिङन्त पद आसन्न वर्षाकालके मन्मथोन्माद व्यञ्जन द्वारा प्रवास हेतुक विप्रलम्भ श्रृंगारको अभिव्यक्त करता है।

तदाह—

अत्र 'अचिराद् भविष्यन्ति पन्थानः' इत्यत्र भविष्यन्तीत्यस्मिन्पदे प्रत्ययः कालविशेषाभिधायी रसपरिपोषहेतुः प्रकाशते। अयं हि गाथाऽर्थः प्रवासविप्रलम्भश्रृङ्गारविभावतया विभाव्यमानो रसवान्।

विप्रलम्भश्रृङ्गारोऽत्र प्रवासमूलकः। तद्विभावता च गाथाऽर्थस्योद्दीपनत्वेन। विभावनञ्च पुनःपुनरनुसन्धानात्मिका चर्वणैव। तिङ्वदिह सङ्ख्याकारकादीनामपि व्यञ्जकत्वमंशांशकल्पनया पृथगवगन्तव्यम्।

वृत्तिकार उक्ताशयको स्फुट करते हैं—अत्रेति। 'भविष्यन्ति' पद घटक भविष्यत्काल बोधक स्यप्रत्यय, आसन्न वर्षाकालके सूचन द्वारा प्रवास मूलक विप्रलम्भ श्रृङ्गारको पुष्ट करता है, अर्थात् प्रकृत श्लोकार्थके चर्वण करनेसे विप्रलम्भ श्रृङ्गार अधिक उद्दीपित होता है।

अंशांशकल्पनयैव पदावयवप्रत्ययस्य व्यञ्जकतामुदाहृत्य तादृशप्रकृतेरुदाहर्तुमाह—

**यथाऽत्र प्रत्ययांशो व्यञ्जकः, तथा क्वचित्प्रकृत्यंशोऽपि दृश्यते।**

व्यञ्जक इति शेषः।

जैसे पदघटक प्रत्ययांश रसादिका व्यञ्जक होता है, वैसे ही पदघटक प्रकृत्यंश भी रसव्यञ्जक होता है।

उदाहरति—

**यथा—**

दरिद्रचरस्य सुदामनाम्नः कृष्णसखस्य विचित्रां सम्पदमकस्मादवलोकयन् कश्चिदाह—

**'तद्गेहं नतभित्ति, मन्दिरमिदं लब्धावगाहं दिवः,**
**सा धेनुर्जरती, चरन्ति करिणामेता घनाभा घटाः।**
**स क्षुद्रो मुसलध्वनिः, कलमिदं सङ्गीतकं योषिता-**
**माश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः॥'**

नता जीर्णतया पतनोन्मुखी भित्तिर्यस्य तादृशं तत् स्मृतिमात्रगोचरभूतं नकुल-मूषकादिमृदाकीर्णं गेहं गृहम् आसीदिति शेषः। दिव आकाशस्य लब्धोऽवगाह आलोडनं येन तादृशं गगनचुम्बि पुनरिदं पुरःस्थितमद्भुतं मन्दिरम्, अस्तीति शेषः। सा स्मर्यमाणाऽकर्मण्या जरती जीर्णा धेनुर्गौः आसीदिति शेषः। पुनर्घनाभा मेघनी-लाः करिणां हस्तिनाम्, एताः पुरोवर्तमाना लक्ष्मीलक्षणभूता घटाः सङ्घटितपङ्क्तय-श्चरन्ति। स निःस्वतामात्रे श्रोतव्यः क्षुद्रो दारिद्र्यव्यञ्जकत्वात्तुच्छो मुसलस्य धान्य-कुट्टनजन्मा ध्वनिः शब्द आसीदिति शेषः, इदं श्रूयमाणं योषितामङ्गनानां कलं मधुरं समृद्धजनकलत्रश्रव्यं सङ्गीतकं गानं भवतीति शेषः। अयं द्विजो दिवसैस्त्रिचतुरैरेव दिनैः, न तु पक्षैर्मासैर्वर्षैर्वा, इयतीमेतावतीमसम्भावनीयां भूमिं संपत्प्रतिष्ठाम्, समा-रोपितो भगवता श्रीकृष्णेन प्रापितोऽभूदित्याश्चर्यमित्यर्थः।

अल्पीयसैव कालेनैतावान् विपर्यासः सम्भावनाऽतिगोऽद्भुतावह इति सारम्।

अत्र दिवसैरित्येतत्पदावयवदिवसरूपप्रकृतिभागो मासादिव्यावर्तनेन कालाल्पतां द्वारीकृत्य संपदोऽसम्भाव्यत्वेनाश्चर्यजनकतां व्यनक्ति।

उदाहरण बतलाते हैं—तद्गेहमिति। अत्यन्त दरिद्र सुदामाकी सम्पत्ति देखकर कोई कहता है—कहां वह पहलेकी टूटी फूटी दीवारोंकी झोपड़ी थी और कहां यह आज आकाश चुम्बी महलोंकी अटारी दीख रही है, कहां वह बुढ़िया गाय थी और

कहां ये काले बादलके समान झुण्डके झुण्ड हाथी झूम रहे हैं, कहां वह मूसलकी क्षुद्र ध्वनि और कहां यह सुनाई देनेवाला युवतियोंका मधुर गान, आश्चर्य है, इन थोड़े ही दिनोंमें इस दरिद्र ब्राह्मण (सुदामा) की इतनी अच्छी हालत हो गई। यहां पर 'दिवसैः' इस पदघटक प्रकृत्यंश, अत्यल्पकालमें ही आश्चर्यजनक इतनी सम्पदाओंके निर्माणके व्यञ्जन द्वारा अत्यन्त असंभाव्यमानताको अभिव्यञ्जित करता है।

तदाह—

अत्र श्लोके 'दिवसै' रित्येतस्मिन् पदे प्रकृत्यंशोऽपि द्योतकः।

इस श्लोकमें 'दिवसैः' इस पदका एक देशभूत दिवस रूप प्रकृत्यंश भी उक्तार्थ का व्यञ्जक होता है।

अपिशब्दलभ्यमर्थं समुच्चिनोति—

सर्वनाम्नां च व्यञ्जकत्वं यथाऽत्रैवानन्तरोक्ते श्लोके।

अनन्तरोक्ते 'तद्गेहम्' इत्यादिश्लोके। सर्वनाम्नां तदिदमादीनाम्। व्यञ्जकत्वं बोध्यमिति शेषः। इह स्मृत्यात्मकबुद्धिविषयवाचकेन सर्वनाम्ना तत्पदेन नतभित्तीति प्रकृत्यंशसाहाय्येन गेहस्यातिदौरवस्थ्यं सूच्यते। तेन केवलेन तु कदाचिद् गेहस्य स्मृतिप्रयोजकं शोभनतमत्वमपि सूच्यते। एवं नतभित्तिशब्दमात्रेणापि गेहस्य दुरवस्थाऽतिशयसूचनं दुष्करमेवेति द्वयोरेव व्यञ्जकता। इत्थमिदं शब्देनानुभवविषयार्थवाचकेन विशेषणवाचकसहकृतेन मन्दिरस्योत्कर्षः, जरतीपदसध्रीचीनेन तच्छब्देन गोरकर्मण्यता, विशेषणवाचकपदोपोद्बलितेनैतच्छब्देन करिघटायाः संपत्प्रकर्षालङ्कारत्वम्, क्षुद्रशब्दसंवर्धितेन तच्छब्देन दारिद्र्यव्यञ्जकतया मुसलध्वनेस्तुच्छताऽऽधिक्यम्, कलपदानुप्राणितेनेदंशब्देन सङ्गीतस्य मनोरमतामुखेन समृद्धिलक्षणत्वं सूच्यत इति सर्वत्र सम्भूय सूचकत्वं ज्ञातव्यम्। तदिदंशब्दौ पुनः स्मरणानुभवविषययोरर्थयोरतिवैलक्षण्यं सूचयतः।

इसी श्लोकमें 'तत्, इदम्', इत्यादिसर्वनामासे भी स्मृति विषयीभूत एवं अनुभव विषयीभूत उक्तार्थोंका अति वैलक्षण्य एवं आश्चर्य सूचित होता है।

उक्तमर्थं युक्त्या द्रढयति—

अत्र सर्वनाम्नामेव व्यञ्जकत्वं हृदि व्यवस्थाप्य कविना क्वेत्यादिशब्दप्रयोगो न कृतः।

यदीह सर्वनाम्नां व्यञ्जकत्वं न स्यात्, तदा 'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्'

इत्यादिवत् प्राचीननवीनगेहादीनां वैषम्यातिशयबोधनाय क्वशब्दद्वयं कविरवश्यं प्रयुञ्जीत । तद्व्यतिरेकदर्शनादपि निश्चीयत एवेदमिति भावः ।

उक्त सर्वनामाके व्यञ्जकत्वको मनमें रखकर ही कविने इस श्लोकमें 'क्व' इत्यादि शब्दोंका प्रयोग नहीं किया, अन्यथा प्राचीन एवं नवीन गेहादिका अतिशय वैषम्य सूचनार्थं क्व शब्दद्वयका अवश्य प्रयोग करता ।

उपसंहरति—

**अनया दिशा सहृदयैरन्येऽपि व्यञ्जकविशेषाः स्वयमुत्प्रेक्षणीयाः ।**

साकल्येन व्यञ्जकानां निर्देशः कर्तुं न शक्यत इति दिङ्मात्रं दर्शितम् । व्यङ्ग्यविशेषतर्कणप्रकारशिक्षा प्रागेव दत्तेति साम्प्रतं व्यञ्जकविशेषमात्रमुपात्तम् ।

मैंने तो उक्त रीतिसे व्यञ्जकोंका दिग्दर्शन मात्र कराया है, इसलिये चतुर कवियोंको चाहिये कि दूसरे भी व्यञ्जकविशेषोंका स्वयं ऊहापोह कर लें ।

ननु प्राक् पदस्य वाक्यस्य रचनायाश्च व्यञ्जकत्वं यदुक्तम्, तावतैव तद्घटकतिङादेरपि कृतकृत्यता, तद्विरहे तेषां तद्रूपताऽसम्भवादिति पौनरुक्त्यशङ्कामपाकरोति ।

**एतच्च सर्वं पदवाक्यरचनाद्योतनोक्त्यैव गतार्थमपि वैचित्र्येण व्युत्पत्तये पुनरुक्तम् ।**

नैपुण्यात्मिका व्युत्पत्तिर्विनेयानामंशांशविभागपूर्वकतन्निरूपणेनाधिकं सम्भवतीति भावः ।

यह सब यद्यपि पद वाक्यरचनाकी द्योतन प्रकारोक्तिसे ही गतार्थ हो जाता है, तथापि छात्रोंकी व्युत्पत्ति वर्द्धनार्थ एक एक अंशांशोंका अलग २ निरूपण किया गया है ।

उक्तमनभिप्रेतमर्थं व्यवच्छिनत्ति—

**न तु चार्थसामर्थ्याक्षेप्या रसादय इत्युक्तम् ।**

न त्वित्यस्योक्तमित्यनेनान्वयः । प्रकृत्यन्तानां व्यञ्जकत्वोक्तेर्नायमभिप्रायः, यद् रसादयः सर्वत्रार्थसामर्थ्याक्षेप्या वाच्यवृत्तिव्यञ्जनाजन्यबोधविषया इति सारम् ।

रस आदि सभी व्यङ्ग्य पदार्थ, वाच्यार्थवृत्ति व्यञ्जनाजन्य बोध विषय ही होते हैं, अतः उक्त प्रकृति पर्यन्त शब्दोंका व्यञ्जकत्व कथन असंगत है, यह सन्देह नहीं करना चाहिये ।

तथाऽभ्युपगमे को दोष इत्यत आह—

**तथा च सुबादीनां व्यञ्जकत्वकथनमनन्वितमेव ।**

स्यादिति शेषः ।

अयमाशयः—यदि वाचकत्वमन्तरेण व्यञ्जकत्वं न स्यात्, तर्हि निसर्गादवाचकानां तिङादीनामिदानीमेवोक्तं व्यञ्जकत्वमसङ्गतं स्यात्।

क्योंकि यदि वाचकताके बिना व्यञ्जकता नहीं होगी तो, स्वभावतः अवाचक तिङादिका पूर्वोक्त व्यञ्जकत्व कथन ही असंगत हो जायगा।

प्रागुक्तमपि स्मारयति—

**उक्तमत्र पदानां व्यञ्जकत्वोक्त्यवसरे।**

अत्रास्मिन्नेव ग्रन्थे। पदानामपि वाक्यशक्तिवादिनां मतेऽवाचकत्वाद् व्यञ्जकत्वं दुर्घटम्। अवाचकानां च गीतशब्दानां, गुणव्यञ्जकानां च स्पर्शादिवर्णानां तादृशामेव व्यञ्जकत्वे कोऽपरः प्रकार इति विभावनीयम्।

यत्र क्वचिदर्थविशेषाद्वेष्या अपि रसादयः, तत्रापि सहकारितया शब्दस्य व्यञ्जकत्वमर्थादायातमेव, तादृशार्थविशेषबोधस्य तादृशशब्दमन्तरेण भवितुमशक्यत्वात्। अत एवोक्तं दर्पणकृता—

'शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः।
एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता॥' इति।

इसी ग्रन्थमें पदोंके व्यञ्जकत्व कथनके अवसर पर उपर्युक्त सारा विषय कह चुके हैं, अन्यथा वाक्यशक्ति पक्षमें पदोंके अर्थ स्मारक मात्र होनेके कारण अवाचक होनेसे व्यञ्जकत्व ही दुर्घट हो जायगा।

तदाह—

**किञ्चार्थविशेषाद्वेष्यत्वेऽपि रसादीनां तेषामर्थविशेषाणां व्यञ्जकशब्दाविनाभावित्वाद् यथा प्रदर्शितं व्यञ्जकस्वरूपपरिज्ञानं विभज्योपयुज्यत एव।**

विभज्येति प्रदर्शितमित्यनेनान्वेति। व्यञ्जकस्वरूपस्य व्यञ्जकतालक्षणस्य परिज्ञानं परिचयस्तत्कारणं वा।

अर्थानां व्यञ्जकत्वप्रदर्शनप्रस्तावे तत्सहकारिणां शब्दानामपि विभागेन तत्प्रदर्शनमुपयोग्येव, न त्वसमञ्जसमित्याकूतम्।

कहीं पर रसादिके अर्थविशेषवृत्ति व्यञ्जनाका प्रतिपाद्य विषय होने पर भी उन अर्थविशेषोंका बोध, व्यञ्जक शब्दोंके बिना नहीं हो सकता है, अतः उन पूर्वोक्त व्यञ्जक शब्दोंका भी विभाग पूर्वक निर्वचन करना उपयुक्त ही है।

इहांशिकीं प्राचीनसम्मतिमाचष्टे—

**शब्दविशेषाणां तत्रान्यत्र च चारुत्वं यद् विभागेनोपदर्शितम्, तदपि तेषां व्यञ्जकत्वेनैवावस्थितमित्यवगन्तव्यम्।**

शब्दविशेषाणां स्रक्चन्दनादिशब्दानाम्। तत्र पदव्यञ्जकत्वोक्त्यवसरे। अन्यत्र भामहादिग्रन्थेषु। तेषां शब्दानां व्यञ्जकत्वेनैव हेतुनाऽवस्थितं स्थितम्।

इदमुक्तं भवति—स्रक्चन्दनादिरूपेषु शृङ्गाराङ्गवाचकेषु शब्दविशेषेषु विच्छित्तिविशेषाधायकत्वं शृङ्गारे विद्यते, बीभत्सादौ च नैवेति पूर्वैरस्माभिश्चाभिहितम्। तन्मूलजिज्ञासायां व्यञ्जनैव पुरः स्फुरति, यतः शृङ्गारे व्यङ्ग्ये तद्व्यञ्जकत्वेन तेषु चारुत्वम्, बीभत्सादिषु तु तद्व्यञ्जनप्रतिबन्धकत्वेनाचारुत्वमिति शब्दानां विभागेनाङ्गीकृतं चारुत्वमप्यन्यथाऽनुपपत्त्या स्वोपपादिकां तत्तच्छब्दानां व्यञ्जकतामापादयति, न तु केवलमस्माभिः प्रथमं प्रकटितेयं सरणिः।

स्रक् चन्दनादि शब्द विशेषोंका जो भामह आदि कवि प्रोक्त ग्रन्थोंमें और पद व्यञ्जकत्वोक्तिके अवसर पर विभाग पूर्वक रमणीयत्व प्रतिपादित किया गया है, वह रमणीयत्व भी शब्दनिष्ठ व्यञ्जकत्वकी दृष्टिसे ही समझना चाहिये, अर्थात् श्रृंगाराङ्गवाचक स्रक् चन्दनादि शब्दविशेषोंमें श्रृंगारके प्रति ही चमत्काराधायकत्व है, बीभत्सादिके प्रति नहीं है, इसका मूल निदान शब्दनिष्ठ व्यञ्जना ही है, इसीलिये श्रृंगारके व्यङ्ग्य रहने पर ही इन शब्दोंमें चारुता प्रतीत होती है, अन्य बीभत्सादिमें तो अचारुता ही प्रतीत होती है।

ननु यदि तादृशशब्दानां व्यञ्जकत्वनिबन्धनमेव चारुत्वम्, तर्हि यत्र न व्यञ्जकता, तत्रापि कथं चारुत्वं प्रतीयत इत्याशङ्कां निरस्यति—

**यत्रापि न तत् प्रतिभासते, तत्रापि व्यञ्जके रचनाऽन्तरे यद् दृष्टं सौष्ठवं तेषां प्रवाहपतितानां तदेवाभ्यासादपोद्धृतानामप्यवभासत इत्यवस्थातव्यम्।**

तद् व्यञ्जकत्वं तेषां शब्दानाम्। प्रवाहपतितानामसमीक्ष्य भूयोऽन्यत्र प्रयुज्यमानानाम्। तत् सौष्ठवम्। अभ्यासात् पौनःपुन्येन प्राचीनपरिचयात्। अपोद्धृतानां पृथगवगतानाम्। अवस्थातव्यं नियमेनाङ्गीकर्तव्यम्।

अयं भावः—स्रक्चन्दनादिशब्देषु शृङ्गारव्यञ्जकरचनाऽन्तर्गतेषु यत्र क्वचिद् व्यञ्जकत्वस्य वास्तविकस्य विरहः, सौष्ठवस्य च सद्भावः, तत्र शृङ्गारव्यञ्जकस्य-सङ्घटनाघटकानां तेषामन्यत्र यद् व्यञ्जकत्वं सादृश्यमहिम्ना त एवेमे शब्दा इति

-तत्वप्रत्यभिज्ञया तस्यैवारोपेण सौष्ठवनिर्वहणम्, न तु सर्वथा व्यञ्जकत्वविरहेण। तथा च चारुत्वं व्यञ्जकत्वं च समनियतमिति बोद्धव्यम्।

यदि स्रक् चन्दनादि शब्दोंमें व्यञ्जकत्व प्रयुक्त ही चारुताकी प्रतीति मानी जाय, तो जहां व्यञ्जकता नहीं रहने पर भी चारुता प्रतीत होती है, उसकी किस तरह संगति होगी, इसका समाधान करते हैं—यत्रापीति। जिस बीभत्सादि काव्यमें विद्यमान स्रक्चन्दनादि शब्द, वास्तविक रसका व्यञ्जक नहीं है, किन्तु शृङ्गार काव्यकी तरह रमणीयताकी झलक होती है, वहां पर शृङ्गार रस व्यञ्जक रचनान्तर्गत स्रक्चन्दनादि गत सादृश्यके भानसे ही आपाततः रमणीयताका आभास मात्र होता है, इसलिये व्यञ्जकत्वके साथ चारुताका साहचर्य व्यभिचरित नहीं होता।

अन्यथाऽनुपपत्तिमभिधत्ते—

**कोऽन्यथा तुल्ये वाचकत्वे शब्दानां चारुत्वविषयो विशेषः स्यात्।**

अन्यथा व्यञ्जकतायाश्चारुत्वनियामकत्वानङ्गीकारे।

व्यञ्जकत्वनिबन्धन एव शब्दानां चारुत्वे विशेष इति भावः।

यदि व्यञ्जकता चारुताका नियामक न हो, तो शब्दोंके सभी जगह समान ही वाचकत्व होनेसे रमणीयताकी विशेषता ही नष्ट हो जायगी, इसलिये शब्दोंमें व्यञ्जकत्व प्रयुक्त ही चारुताका भान समझना चाहिये।

ननु नासौ विशेषो व्यञ्जकत्वनिबन्धनः, अपि त्वपूर्वः सहृदयैरेव वेद्यः कश्चिदित्याशङ्कां विकल्पद्वयकल्पनेन खण्डयति—

**अन्य एवासौ सहृदयसंवेद्य इति चेत्, किमिदं सहृदयत्वं नाम? किं रसभावानपेक्षकाव्याश्रितसमयविशेषाभिज्ञत्वम्? उत रसभावादिमयकाव्यस्वरूपपरिज्ञाननैपुण्यम्?**

असौ विशेषः शब्दानामिति शेषः। रसभावानपेक्षं तद्व्यञ्जकत्वेनाविवक्षितं यत् काव्यम्, तदाश्रितस्तादृशकाव्याङ्गपदार्थविषयको यः समयविशेषो विलक्षणनियमः तस्य सम्यग् ज्ञातृत्वम्, इति प्रथमः प्रश्नरूपो विकल्पः। उतेत्यादिना द्वितीय उक्तः। सहृदयत्वे रसभावज्ञानं प्रयोजकं न वेति सारम्। साधीयांस्त्वियन्तिमः कल्प इत्यनुपदं स्फुटीभविष्यति।

रमणीयता जनक शब्दोंकी विशेषता, व्यञ्जकत्व प्रयुक्त नहीं है, अपि तु सहृदय वेद्य कुछ विलक्षण ही वह (विशेषता) पदार्थ है, इस प्रश्नको विकल्पद्वय कल्पना द्वारा खण्डन करते हैं—अन्य इति। यदि आपके मतमें सहृदय वेद्य ही वह विशेषता है, तो पहले यह प्रश्न उठता है कि सहृदयता ही कौनसा पदार्थ है? क्या वह

( सहृदयत्व ) रसभाव ज्ञान रहित, काव्य सम्बन्धी नियम विशेषका अभिज्ञत्व है ? या रसभाव ज्ञान सहित, काव्य स्वरूपाभिज्ञताका कौशल ही वह ( सहृदयत्व ) पदार्थ है ? अर्थात् रसभाव ज्ञान, सहृदयताका प्रयोजक है, या नहीं।

प्रथमं विकल्पं दूषयति—

पूर्वस्मिन् पक्षे तथाविधसहृदयव्यवस्थापितानां शब्दविशेषाणां चारुत्वनियमो न स्यात्। समयान्तरेणान्यथाऽपि व्यवस्थापनसम्भवात्।

पूर्वस्मिन् पक्षे—सहृदयत्वस्य रसाद्यनभिज्ञत्वरूपत्वे। तादृशेन रसाद्यनभिज्ञेन सहृदयेन व्यवस्थापितानाम् 'अयमेव शब्दश्चारुरयं न चारुः' इति कृतनियमानाम्, शब्दविशेषाणां चारुत्वस्य नियमो व्यवस्था न स्यात्। कुत इति चेत्- पुनः समयान्तरेण तद्भिन्नसहृदयस्यान्यसिद्धान्तेन। अन्यथा चारोरचारुत्वेनाचारोश्च शब्दस्य चारुत्वेन व्यवस्थापनस्य नियमनस्य सम्भवादित्यर्थः।

अयं भावः—अद्वितीयास्वादात्मकत्वेन वस्तुतश्चारुत्वनियामको रसादिः, तेन तदभिज्ञसहृदयेन तदनुसारं विहिता चारुत्वव्यवस्था स्थेयसी साधीयसी च सम्भवति। तदनभिज्ञेन तु स्वैरं यं कञ्चिदंशमादाय व्यवस्थाकरणस्याङ्गीकारे तु चारुत्वमव्यवस्थितं स्यात्, परकृतांशान्तरानुसारि-यादृच्छिकव्यवस्थाऽन्तराणामपि सम्भवात्।

उनमें प्रथमकल्प माननेपर चारुताको नियन्त्रित करनेके लिये तादृश रसाद्यनभिज्ञ सहृदयों द्वारा प्रयुक्त शब्दविशेषोंका चारुत्व ही व्यवस्थित नहीं हो सकेगा, क्योंकि दूसरे सहृदयोंके विभिन्न दृष्टिकोणसे विपरीत ( चारुको अचारु और अचारु को चारु ) भी व्यवस्थाकी जा सकती है, अर्थात् अलौकिक आस्वादात्मक रसादि ही रमणीयताका नियामक होता है, अतः तादृश रसाभिज्ञसहृदयों द्वारा की गयी चारुत्व-व्यवस्था ही सुव्यवस्थित एवं चिरस्थायी हो सकती है, रसानभिज्ञ सहृदयों द्वारा इच्छानुसार की गयी व्यवस्था तो अस्त व्यस्त ही हो जायगी।

द्वितीयकल्पमनुमत्योपपादयति—

द्वितीयस्मिंस्तु पक्षे रसज्ञतैव सहृदयत्वमिति। तथाविधैः सहृदयैः संवेद्यो रसादिसमर्पणसामर्थ्यमेव नैसर्गिकं शब्दानां विशेष इति व्यञ्जकत्वाश्रय एव तेषां मुख्यं चारुत्वम्।

तथाविधैः रसाद्यभिज्ञैः। रसादीनां समर्पणं सम्यक् प्रकाशनम्। तदनुकूलं सामर्थ्यं व्यञ्जना शक्तिः शब्दानां तदेव नैसर्गिकमकृत्रिमं विशेषो वैलक्षण्यं चारुत्वमिति यावत्। इति हेतोः व्यञ्जकत्वस्य व्यञ्जनाया आश्रय आश्रयणे, एव, न त्वभिधाऽऽदीनामपि। तेषां शब्दानां मुख्यं चारुत्वं विशेष इति सम्बन्धः।

इहाश्रयशब्दस्य भावसाधनत्वस्वीकारेऽन्वयः सङ्गच्छते। न त्वधिकरणसाधनः प्रथमान्त आश्रयशब्दः, व्यञ्जकत्वरूपचारुत्वस्य तदाश्रयत्वासम्भवात्। यद्वा-व्यञ्जकत्वाश्रयाणामिति व्यञ्जकत्वाधिकरणीभूतशब्दविशेषणत्वेन षष्ठ्यन्तपाठोऽन्वयाबाधादुपपद्यते। एवमेवानुपदं 'वाचकत्वाश्रयस्तु' इत्यत्रापि शब्दविशेषणतयैव 'वाचकत्वाश्रयाणाम्' इति पाठ एव समीचीनतमः।

द्वितीय कल्प मानने पर रसाभिज्ञत्व ही सहृदयत्व पदार्थ फलित होता है, अतः रसाभिज्ञ सहृदयोंके संवेद्य रसादिका प्रकाशक व्यञ्जना सामर्थ्य ही शब्दोंकी स्वाभाविक विशेषता है, इसलिये व्यञ्जकताके आश्रयण करने पर ही शब्दोंमें मुख्य चारुता प्रतीत होती है।

नन्वेवं व्यञ्जनाविरहे सर्वथा वाचकानां शब्दानां चारुत्वाभाव उक्तो भवतीत्याह—

**वाचकत्वाश्रयस्तु प्रसाद एवार्थापेक्षायां तेषां विशेषः। अर्थानपेक्षायान्त्वनुप्रासादिरेव।**

अर्थोऽत्र वाच्यः।

अयमाशयः—व्यञ्जकत्वाभाववन्तोऽपि द्विविधा हि शब्दाश्चारुत्वमाश्रयन्ति। एके, वाच्यार्थबोधप्रयोज्यचमत्कारवन्तः, तेषु झटिति वाच्यार्थबोधकत्वविशेषरूपः प्रसादगुण एव विशेषः। अपरे, वाच्यार्थनैरपेक्ष्येण नानाजातीयस्वरूपसन्निवेशप्रयोज्यचारुत्वभाजः, तेषु तादृशस्वरूपसन्निवेशलक्षणोऽनुप्रासयमकादिः शब्दालङ्कार एव विशेषः। किन्तूभयत्रापि तत्र—

'पुरः सुरीणां भण केव मानवी,
न यत्र तास्तत्र तु शोभिकाऽपि सा॥'

इति न्यायेनैव चारुत्वं कल्प्यते, व्यञ्जनाविरहेऽपि प्रसन्नायाः रचनायाः कियतश्चमत्कारस्यानुभवात्। वास्तविकस्य तु तस्य व्यञ्जकत्वाभावेऽसम्भव एवोक्तः।

व्यञ्जकताके अभावस्थलमें भी दो प्रकारके शब्द चारुतागुण विशिष्ट होते हैं—उनमें प्रथम शब्द तो वाच्यार्थ बोध जनित चमत्कारशाली होते हैं, जिनमें कि झटिति वाच्यार्थ बोधजनकत्व रूप प्रसाद गुण, विशेष रूपसे भासित होता है और दूसरे शब्द, वाच्यार्थकी अपेक्षा रहित केवल नाना प्रकारक शब्दस्वरूप सन्निवेश मात्र प्रयुक्त रमणीयताशाली होते हैं, जिनमें कि तादृश शब्दस्वरूप सन्निवेशात्मक अनुप्रास-यमकादि शब्दालङ्कार ही विशेष रूपसे चमत्कारजनक होता है।

अथ 'उपायांश्चिन्तयन् प्राज्ञो ह्यपायमपि चिन्तयेद्' इति न्यायेन रसादिव्यञ्जने विरोधिनोऽपि दर्शयितुमुपक्रमं कृतवतीं कारिकामवतारयति वृत्तिकारः—

**एवं रसादीनां व्यञ्जकस्वरूपमभिधाय, तेषामेव विरोधिरूपं लक्षयितुमिदमुपक्रम्यते—**

कारिकाकारेणेति शेषः। रसादीनां ये व्यञ्जका वर्ण-पद-वाक्यादयः, तेषां स्वरूपमित्थमुक्त्वा, तेषां रसादीनामेव ये प्रतीतिप्रतिवन्धकतया विरोधिनः, तेषां रूपमिति योजना।

**रसादि व्यञ्जनके प्रति विरोधीभूत पदार्थोंको दर्शानेकी भूमिका रचते हैं—** एवमिति। रसादिके व्यञ्जकोंका स्वरूप दर्शाकर उन्हींके विरोधी पदार्थोंको लक्षित करनेके लिये आरम्भ करते हैं।

**'प्रबन्धे मुक्तके वाऽपि रसादीन्बन्धुमिच्छता।**
**यत्नः कार्यः सुमतिना परिहारे विरोधिनाम् ॥ ७३ ॥'**

वाशब्दः समुच्चयार्थकः। प्रबन्धे संघटनाविशेषे, मुक्तके प्रागुक्तलक्षणे वाऽपि रसादीन् बन्धुं सन्निवेशयितुं व्यञ्जयितुमिति यावत्, इच्छता सुमतिना कविना, विरोधिनाम् 'विरोधिरससम्बन्धि-' इत्यादिनाऽनुपदं वक्ष्यमाणानां परिहारे निराकरणे यत्नः कार्य इत्यर्थः।

**प्रबन्ध काव्यमें या मुक्तक काव्यमें रसादिको अभिव्यञ्जित करनेकी इच्छा करनेवाले मतिमान् कवियोंको चाहिये कि विरोधी पदार्थोंको छोड़ देनेके लिये पूर्ण यत्न करे।**

तदाह—

**प्रबन्धे मुक्तके वाऽपि रसभावनिबन्धनं प्रति, आदृतमनाः कविर्विरोधिपरिहारे परं यत्नमादधीत।**

**प्रबन्ध काव्यमें या मुक्तक काव्यमें सरस काव्य रचनाके प्रति विशेष रुचि रखनेवाले कविगण रसके विरोधी पदार्थोंको छोड़ देनेके लिये पूरा ध्यान दे।**

तादृशयत्नाकरणे का हानिरित्यत आह—

**अन्यथा त्वस्य रसमयः श्लोक एकोऽपि सम्यङ् न सम्पद्यते।**

विरोधिभी रसादिनिवन्धनस्य व्याहननात्।

**अन्यथा ( विरोधी पदार्थोंके परिहारार्थं यत्न नहीं करने पर ) विरोधी पदार्थोंके द्वारा प्रस्तुत रसके प्रतिवन्ध हो जानेसे एक भी सरस काव्य अच्छी तरह निष्पन्न नहीं हो सकेगा।**

हेयज्ञानाभावे हानासम्भवाद् रसादिप्रतीतिविरोधीन्यपि लक्षयितुं कारिकामवतारयति—

**कानि पुनस्तानि विरोधीनि ? यानि यत्नतः कवेः परिहर्तव्यानीत्युच्यते—**

परिहरणीयविरोधिविषयकजिज्ञासानिवृत्तय उच्यत इति सारम् ।

ननु 'विभावभावानुभावसञ्चार्यौचित्यचारुणः' इत्यादि यदुक्तम् , तत एव व्यतिरेकमुखेनैतदप्यवगंस्यते, मैवम्—व्यतिरेकेण हि तदभावमात्रं प्रतीयते, न तु तद्विरुद्धम् । तदभावमात्रं च न तथा दूषकं, यथा तद्विरुद्धम् । पथ्यानुपयोगो हि न तथा व्याधिं जनयति, यद्वदपथ्योपयोगः ।' इत्याचार्याः ।

हेय वस्तुके ज्ञान न होनेसे विरोधी पदार्थोंका परित्याग नहीं हो सकता है, इस लिये विरोधियोंका निर्वचन करते हैं—कानीति। कौनसे वे विरोधी पदार्थ हैं, जिनका परित्याग करना कवियोंके लिये अत्यन्त आवश्यक समझा जाता है, यह विषय आगे कह रहे हैं।

**'विरोधिरससम्बन्धि-विभावादिपरिग्रहः ।**
**विस्तरेणान्वितस्यापि वस्तुनोऽन्यस्य वर्णनम् ॥ ७४ ॥**
**अकाण्ड एव विच्छित्तिरकाण्डे च प्रकाशनम् ।**
**परिपोषं गतस्यापि पौनःपुन्येन दीपनम् ।**
**रसस्य स्याद् विरोधाय वृत्त्यनौचित्यमेव च ॥ ७५ ॥'**

एतत् सर्वं पट्षष्ट्यादिकारिकापवकविवरणे वर्णितमेवेति सङ्क्षेपादेवेह विव्रियते । विरोधिनो रसस्य सम्बन्धिनां विभावादीनां परिग्रहो रसस्य विरोधाय स्यादिति सम्बन्धः । पूर्वं 'विभावभावानुभाव-' इत्यादिश्लोकेन रसादिप्रतीतिसाधकं यदुक्तम्, अत्र तत्प्रतिकूलं श्लोकार्धेनामुना कथितम् । विस्तरेणान्वितस्य विस्तीर्णस्यापि, अन्यस्य प्रकृतरसायनङ्गस्य वस्तुन इतिवृत्तस्य वर्णनं रसादिप्रतीतौ विरोधीति पूर्ववत् । अनेनाप्यर्धश्लोकेन तत्र 'इतिवृत्तवशायाताम्' इत्यादिश्लोकद्वयोक्तरसादिप्रकाशकविरुद्धमुक्तम् । अकाण्ड एवानवसर एव रसादेर्विच्छित्तिर्विच्छेदः, अकाण्डे रसादेः प्रकाशनं च विरोधीति प्राग्वत् । अयमपि श्लोकार्धः 'उद्दीपनप्रशमने' इत्यादिपद्यार्थप्रतिपादितविरोधि बोधयति । परिपोषं गतस्यापि रसस्य पौनःपुन्येन दीपनमपि रसस्य विरुद्धमेव । 'रसस्यारब्धविश्रान्तेः' इत्यादिपद्यार्थोक्तविरु-

द्वमयमपि पदार्थः प्रतिपादयति। वृत्तीनामनौचित्यं च रसादीनां प्रतीतौ विरोधाय स्यात्। एषोऽपि श्लोकार्धः 'अलंकृतीनाम्' इत्यादिश्लोकार्धप्रत्यायितप्रतिकूलमेव प्रतिपादयतीति वोध्यम्।

निम्न पांच प्रकारके विरोधी पदार्थ प्रकृतरसके विरोधी होते हैं। (१) विरुद्ध रस सम्बन्धी विभावादिका वर्णन, (२) प्रस्तुत रसादिसे सम्बद्ध होने पर भी अत्यन्त विस्तृत रूपसे इतिवृत्त (इतिहास) का वर्णन, (३) अनवसरमें ही रसादि का विच्छेद कर देना अथवा असमयमें ही उसका प्रकाशन करना, (४) रसादिके परिपुष्ट होनेके बाद भी उसका बार बार उद्दीपनकरना। (५) व्यवहार या वृत्तियोंके अनौचित्यका वर्णन।

कारिकाः क्रमेण विवृणोति वृत्तिकृत्—

**प्रस्तुतरसापेक्षया विरोधी यो रसः तस्य सम्बन्धिनां विभावानुभावव्यभिचारिणां परिग्रहो रसविरोधहेतुरेकः सम्भावनीयः।**

वृत्तिकार उक्त पांचों प्रकारके विरोधियोंका वर्णन करते हैं—प्रस्तुत इति। प्रस्तुत रसकी अपेक्षा विरोधी जो रस है, उसके विभाव, अनुभाव एवं संचारिभावों का वर्णन, प्रकृत रसादि-प्रतीति प्रतिवन्धका प्रथम कारण समझा जाता है।

तत्र विरोधिरसविभावपरिग्रहमुदाहरति—

**तत्र विरोधिरसविभावपरिग्रहो यथा—शान्तरसविभावेषु तद्विभावतयैव निरूपितेष्वनन्तरमेव श्रृङ्गारादिवर्णने।**

शान्तश्रृङ्गाररसयोर्हि सामानाधिकरण्ये विरोधः तदीयस्थायिभावयोः शमरत्योरेकत्रानवस्थानात्। यथा निसर्गशान्ताश्रयत्वेनोदासीनस्य हरस्य, श्रृङ्गाराश्रयीभूतनायकत्वेन वर्णने 'हरस्तु किञ्चित् परिलुप्तधैर्यः' इत्यादिना कुमारसम्भवतृतीयसर्गे। तत्र कथानकानुरोधेन तथावर्णनमिति कथञ्चित् परिहारे तु तापसादिविषयकमुदाहरणान्तरमूह्यम्। इदमालम्वनमात्रस्योदाहरणम्। उद्दीपनस्य तु दर्पणोक्तम्-'मानं मा कुरु तन्वङ्गि ? ज्ञात्वा यौवनमस्थिरम्।' इतिश्रृङ्गारविरुद्धशान्तरसोद्दीपनयौवनास्थैर्यनिवेदनपरिग्रहादवगन्तव्यम्। हास्यश्रृङ्गारयोर्वीराद्भुतयो रौद्रकरुणयोर्भयानकवीभत्सयोर्नालम्बनकृतो विरोध इति शान्तश्रृङ्गारयोरेवोपादानम्।

उनमें सर्वप्रथम विरोधी रसके विभाव वर्णनका उदाहरण बतलाते हैं—तत्रेति। जैसे—शान्त रसके आलम्बन या उद्दीपन विभावके रूपसे नायकादि विभावोंके वर्णनके बादमें तुरत ही श्रृङ्गाररसके विभावरूपमें ही उक्त नायकका वर्णन करनेसे प्रस्तुत रसकी प्रतीति रुक जाती है—यथा प्रकृतशान्तरसके आलम्बनभूत शिवजीका

शृङ्गाररसके आलम्बन रूपसे ही कुमारसंभवमें—'हरस्तु किञ्चित्'—इत्यादिस्थलमें वर्णन किया गया है, एवं प्रस्तुत शृङ्गाररसके विरोधीभूत शान्तरसके उद्दीपन रूप से यौवनकी विनश्वरताका—'मानं मा कुरु' इत्यादि स्थलमें वर्णन किया गया है।

प्रथमविरोधिद्वितीयांशमुदाहरति—

विरोधिरसभावपरिग्रहो यथा—प्रियं प्रति प्रणयकलहकुपितासु कामिनीषु वैराग्यकथाभिरनुनये।

विरोधिरसस्य यो भावो व्यभिचारी, तस्य परिग्रहोऽपि प्रकृतरसव्यञ्जनविरोधीति शेषः। विरोधिरसस्थायिपरिग्रहे तु प्रकृतरसस्थायिन एवानुत्थानमिति दूरे विरोधवार्ता। न चैवं व्यभिचारिणि तस्यानियतत्वात्।

इदमिहावगन्तव्यम्—

'प्रसादे वर्तस्व प्रकटय मुदं सन्त्यज रुषं, प्रिये! शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं, न मुग्धे! प्रत्येतुं प्रभवति गतः कालहरिणः॥'

इति चन्द्रकवेः काव्ये प्रकृतविप्रलम्भशृङ्गाररसविरोधिनश्शान्तरसस्य स्थायी निर्वेदः शमो वा, तत्पोषकवैराग्यकथाकदम्बके न यद्यपि परिगृहीतः, किन्तु न स्थायित्वेन, अपि तु व्यभिचारित्वेनेति न रतेरुत्थानासम्भवः। स्थायित्वेन तत्परिग्रहे तु तदसम्भव एवेति प्रागेवोक्तम्। स्थायिव्यभिचार्युभयसाधारणभावपदं स्थायिनोऽपि क्वचिद् व्यभिचारित्वेन परिग्रहमिह सूचयति।

केचित्त्विदमपि 'मानं मा कुरु' इत्यादिवदुद्दीपनोदाहरणमेव वैषम्ये बीजाभावादिति वदन्ति।

विरोधीरसके संचारीभावके वर्णनका उदाहरण बतलाते हैं—विरोधीति। जैसे प्रियके प्रति प्रणय-कलहमें कुपित मानिनीको वैराग्य चर्चाद्वारा मनानेका वर्णन करनेमें। यथा—नायक प्रेयसीको मनाता है—'प्रिये! प्रसन्न हो जाओ, हर्ष प्रकट करो और क्रोधको छोड़ दो, मेरे सारे अङ्ग सूखे जा रहे हैं, उनको अपने वचनामृतसे सींचो, समस्त सुखोंके आधारस्वरूप अपने मुखको जरा सामने करो, अयि मुग्धे! कालरूप मृग एक बार चले जाने पर फिर नहीं लौटता इस तरह वैराग्य चर्चासे प्रणयकलह कुपित मानिनीके प्रति नायकका अनुनय, शृङ्गार विरोधी होनेसे परित्याज्य है।

तत्तृतीयांशमुदाहरति—

विरोधिरसानुभावपरिग्रहो यथा—प्रणयकुपितायां प्रियायामप्रसीदन्त्यां नायकस्य कोपावेशविवशस्य रौद्रानुभाववर्णने।

रौद्रानुभाव ओष्ठदंशनतर्जनपादप्रहारादिः। नायकस्य तदाचरणं वर्णितं हि नितरां रसभङ्गाय जायते।

विरोधी रसके अनुभाव वर्णनका उदाहरण दर्शाते हैं—विरोधीति। जैसे प्रणय-कलहमें रुठी हुई मानिनीके प्रसन्न न होने पर कोपाविष्ट नायकके ओष्ठदंशन-तर्जन-पादप्रहारादि रूप रौद्रानुभावोंके वर्णन करनेसे शृङ्गार रसका भंग हो जाता है।

द्वितीयरसविरोधहेतूदाहरणमाचष्टे—

अयं चान्यो रसभङ्गहेतु—र्यत् प्रस्तुतरसाद्यपेक्षया वस्तुनोऽन्यस्य कथञ्चिदन्वितस्यापि विस्तरेण कथनम्। यथा—विप्रलम्भशृङ्गारे नायकस्य कस्यचिद् वर्णयितुमुपक्रान्तस्य कवेर्यमकाद्यलङ्कारनिबन्धरसिकतया महता प्रबन्धेन पर्वतादिवर्णने।

सर्वथा प्रकृतासम्बद्धस्येतिवृत्तस्य वर्णनमसम्भवमिति कथञ्चिदन्वितस्येति वस्तुनो विशेषणमुक्तम्। परम्परया सम्बद्धस्येति तदर्थः। तादृशवस्तुनः प्रसङ्गादल्पमेव वर्णनमुचितं भवति, विपुलं तु प्रकृतमपि तिरोदधद् वक्तुरनवधेयवचनतामापादयद् विच्छित्तिं विच्छिनत्ति। उपक्रान्तस्येति नायकविशेषणम्। सुकुमारतरे विप्रलम्भ-शृङ्गारे हि 'विप्रलम्भे विशेषतः' इत्यनेन प्राङ्निषिद्धस्य यमकादेर्निवेशमभिनिवेशव-शेन कुर्वतः कवेरनतिप्रासङ्गिक-नगनगरनदीवर्णनाद्यनुपयोगादनुचितमेव। यथा वा काश्मीरमेण्ठकविरचितहयग्रीववधनाटके—नेतारं विष्णुं विहाय प्रतिनायकस्य हयग्रीवदैत्यस्य जलकेलि-वनविहारादीनां विस्तरेण वर्णने।

यह दूसरा रस भङ्गका हेतु है कि, प्रकृत रससे किसी प्रकार सम्बद्ध होने पर भी रस भिन्न किसी अन्य वस्तुका बृहद्रूपसे वर्णन करना, जैसे किसी नायकके विप्रलम्भ शृङ्गारका वर्णन आरम्भ कर कविका यमकादि अलंकारकी रचनाके अनुरागसे अत्यन्त विस्तारके साथ गिरि काननादिका वर्णन करने लग जाना, जैसे हयग्रीववध नाटकमें विष्णुरूप नायकको छोड़कर हयग्रीव रूप प्रतिनायकके जलकेलि-वनविहारादिका वर्णन किया गया है।

तृतीयं द्विशाखमुदाहरति—

अयं चापरो रसभङ्गहेतुरवगन्तव्यो यदकाण्ड एव विच्छित्ती रसस्या-काण्डे च प्रथनम्। तत्रानवसरे विरामो यथा—नायकस्य कस्यचित् स्पृह-णीयसमागमया नायिकया कयाचित् परां परिपोषपदवीं प्राप्ते शृङ्गारे, विदिते च परस्परानुरागे समागमोपायचिन्तोचितं व्यवहारमुत्सृज्य स्वतन्त्रतया व्यापारान्तरवर्णने। अनवसरे च प्रकाशनं रसस्य यथा—

प्रवृत्ते प्रवृद्धविविधवीरसंक्षये कल्पसंक्षयकल्पे सङ्ग्रामे, देवप्रायस्यापि तावन्नायकस्यानुपक्रान्तविप्रलम्भशृङ्गारस्य निमित्तमुचितमन्तरेणैव शृङ्गार-कथायामवतारवर्णने।

स्पृहणीयो गुणातिरेकेण कमनीयः समागमो यस्या इति बहुव्रीहिः। शृङ्गारश्चात्र पूर्वरागविप्रलम्भलक्षणः, समागमस्यानिष्पत्तेः। परस्परानुराग उभयोरनुरागे विदित उभाभ्यामवगते सतीति शेषः।

उभयोरनुरागावगम एव हि रसपरिपोषो, न त्वेकतरस्य, समागमोपायस्य चिन्ताऽनुसन्धानं तदुचितो व्यवहारश्च दूतीप्रेषणपत्रलेखनादिः। व्यापारान्तराणि तद-नुयोगिकव्यक्त्यन्तरसम्बन्धीनि। यथा रत्नावल्यां चतुर्थेऽङ्के—बाभ्रव्यागमने रत्ना-वलीं विस्मृत्य वत्सराजेन विजयवर्मणो व्यापारश्रवणे। तत्र नायिकाया नितान्तम-परामर्शाद् रसविच्छेदोऽनवसरे। यथा वा भवभूतेर्वीरचरिते—श्रीरामपरशुरामयो-रुपक्रममाणे सङ्ग्रामे 'कङ्कणमोचनाय गच्छामि' इति श्रीरामस्योक्तौ। सा हि राम-चन्द्रासामर्थ्यसंशयं जनयन्ती प्रकृतं वीररसं विच्छिनत्ति।

प्रकर्षेण वृद्धो विविधानां वीराणां सम्यक् क्षयो यत्र तस्मिन् कल्पसंक्षयकल्पे प्रलयसदृशे। देवप्रायत्वकथनेन नायकस्य धीरोदात्ततयाऽनुचितोपन्यासपराङ्मुख-शीलता सूच्यते। अयोग्यत्वात् तदानीमुपक्रान्तो विप्रलम्भशृङ्गारो येन तस्येति नायकविशेषणम्। निमित्तेत्यादिनोचितनिमित्तापतने दोषाभावः प्रकाश्यते। यथा वेणीसंहारे द्वितीयेऽङ्के—भानुमतीदुर्योधनसमागमे। तत्र विलासनाम्नि प्रतिमुख-सन्ध्यङ्गे, सङ्ग्रामे प्रारब्धे तत्सन्नाहमुपेक्ष्य दुर्योधनस्यासामयिकः शृङ्गारोपन्यासः प्रकृतवीररसविच्छेदं जनयति।

यह भी एक और तीसरा रसभंगका हेतु है कि, अनवसरमें ही रसको समाप्त कर देना, या अनवसरमें ही उसका विस्तार करने लगना।

उनमें अनवसरमें रसविच्छेदका उदाहरण बतलाते हैं—तत्रेति। जैसे किसी नायकका, जिसका समागम उसको अभीष्ट है, ऐसी प्रेयसीके साथ श्रृंगार रसके अत्यन्त परिपुष्ट होने योग्य उपायका चिन्तन-व्यापार नहीं कर, स्वच्छन्द रूपसे किसी दूसरे व्यापारका वर्णन करने लग जाना, जैसे रत्नावलीमें वाभ्रव्यके आने पर सागरिकाको भूलकर वत्सराज द्वारा विजय वर्माके व्यापार श्रवणका वर्णन किया गया है।

अनवसरमें रसके प्रकाशनका उदाहरण बतलाते हैं—अनवसर इति। जैसे सृष्टि प्रलयके समान नाना वीरोंके संहारक भीषण संग्रामके प्रारम्भ हो जाने पर

विप्रलम्भ शृङ्गारके प्रसङ्गके विना एवं विना किसी उचित कारणके ही रामचन्द्र जैसे देवपुरुषका भी शृङ्गार कथामें पड़ जानेके वर्णन करनेमें रसभङ्ग हो जाता है, यथा वेणीसंहारके दूसरे अङ्कमें संग्राम छिड़ जाने पर भी भानुमती और दुर्योधनके शृङ्गारका वर्णन किया गया है।

दोषद्वितीयांशसमाधिमाशङ्क्य खण्डयति—

**न चैवंविधे विषये दैवव्यामोहितत्वं कथापुरुषस्य परिहारः, यतो रसबन्ध एव कवेः प्राधान्येन स्ववृत्तिनिबन्धनं युक्तम्।**

एवंविधेऽनुचितोपन्यासात्मके विषये कथापुरुषस्य नायकस्य दैवव्यामोहितत्वं दैवकृतव्यामोहेनैव तेनैवं कृतमिति परिहारः समाधिश्च न भवितुमर्हति, यतो नेह नेतुरनौचित्यं विविच्यते, यस्य दैवव्यामोहः परिहारो भवेत्। किन्तु कवेः, स च न दैवव्यामोहभाक्, कविना तु रसनिबन्धैकतानेनैव भाव्यमित्यसकृदादिष्टमिति दोषोऽसमाधेय एव। स्ववृत्तिनिबन्धनं प्रबन्धघटनम्।

इस प्रकारके अनुचित उपन्यासात्मक विषयमें कथानायकके दैव व्यामोहसे उक्त दोषका परिहार नहीं हो सकता है, क्योंकि रस-निर्माण ही कवि की प्रवृत्तिका प्रधान कारण होता है।

ननु तर्हीतिवृत्तवर्णनमनपेक्षितत्वादप्रयोजकमेवेत्यत आह—

**इतिवृत्तवर्णनं तदुपाय एवेत्युक्तं प्राक्—'आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः' इत्यादिना।**

तदुपाय एव प्रतीयमानरसादिप्रतीतिसाधनमेव। न त्वप्रयोजकम्, न वा प्रधानोद्देश्यम्।

इतिवृत्त ( इतिहास ) का वर्णन तो उसका उपायमात्र ही होता है, यह विषय 'आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः' इत्यादिसे पहले ही कह चुके हैं।

उक्तं समर्थयन्नुपसंहरति—

**अत एव चेतिवृत्तमात्रवर्णनप्राधान्येऽङ्गाङ्गिभावरहितरसभावनिबन्धेन च कवीनामेवंविधानि स्खलितानि भवन्तीति रसादिरूपव्यङ्ग्यतात्पर्यमेवैषां युक्तमिति यत्नोऽस्माभिरारब्धो, न ध्वनिप्रतिपादनमात्राभिनिवेशेन।**

अत एव—रसाद्यास्वादस्य काव्यप्रधानोद्देश्यत्वादेव। अङ्गाङ्गिभावः प्रधानाप्रधानभावः। स्खलितानि दोषाः। अभिनिवेश आग्रहः।

इदमाकूतम्—वृत्तान्तमात्रवर्णनाभिनिवेशिनः कवयः कदाचिद् रसभावादीनां काव्यमुख्योद्देश्यप्रतीतिविषयाणामङ्गाङ्गिभावमविविच्यैव प्रवर्तमाना महतीस्त्रुटीः कुर्व-

न्ति, तद्रसाद्यास्वादस्यैव मुख्योद्देश्यताख्यापनेन तासां निरासार्थमेवायं मे प्रयासः न तु ध्वनिप्रपञ्चप्रतिपादनाग्रहेण ।

उक्त विषयका उपसंहार द्वारा समर्थन करते हैं—अत एवेति । इसलिये केवल इतिहासका मुख्य रूपसे वर्णन होने पर अप्रधान और प्रधानका विचार किये बिना ही रस और भावका विवेचन करनेसे कवियोंकी इस प्रकारकी बड़ी भूलें हो जाया करती हैं, अतः रसादि-व्यङ्ग्य-तत्परता ही उनके लिये उचित है, इसी आशयसे ही हमने ध्वनि-निरूपणका प्रयत्न प्रारम्भ किया है, न कि केवल ध्वनिके प्रतिपादनके आग्रहसे ही ।

तुरीयं रसभङ्गहेतुमाचष्टे—

**पुनश्चायमन्यो रसभङ्गहेतुरवधारणीयो यत् परिपोषं गतस्यापि रसस्य पौनःपुन्येन दीपनम् ।**

अवधारणीयो निश्चेयः । परिपोषः स्वीयविभावादिसामग्रीसंवलनादास्वादप्रकर्षः । दीपनं प्रकाशनमास्वादनमिति यावत् ।

फिर यह एक चौथा रस भंगका हेतु समझना चाहिये कि, रसके अपनी विभावादि सामग्रीके संवलनसे आस्वादात्मक परिपुष्टिको प्राप्त हो जाने पर भी बार बार उसका उद्दीपन ( आस्वादन) करना ।

निदर्शनदर्शनेनोपपादयति—

**उपभुक्तो हि रसः स्वसामग्रीलब्धपरिपोषः पुनः पुनः परामृश्यमाणः परिम्लानकुसुमकल्पः कल्पते ।**

तेन हि सहृदयानां महद् वैमुख्यं सम्भवति । उदाहरणन्तु कुमारसम्भवचतुर्थसर्गे रतिविलापे—करुणरसस्य पुनःपुनर्दीप्तिरित्यन्यत्र स्फुटम् ।

क्योंकि अपनी विभावादि सामग्रीसे परिपुष्ट और उपभुक्त रस बार बार स्पर्श करनेसे कुम्हलाये हुए पुष्पके समान मलिन हो जाता है ।

पञ्चमं रसभङ्गकारणमाह—

**तथा वृत्तेर्व्यवहारस्य यदनौचित्यम् , तदपि रसभङ्गहेतुरेव ।**

यं प्रति यस्य यादृश आचारः समुचितः, तदन्यथाकरणमपि हि सहृदयाननुचितत्वाद् विमुखीकरोत्येव । इदमेवान्यत्रोक्तानां प्रकृतिविपर्ययादिरसभङ्गहेतूनामप्युपलक्षणम् । 'वृत्त्यनौचित्यमेव च' इति कारिकाघटकयोः 'एव-च' शब्दयोर्वृत्तौ 'अप्येव' शब्दाभ्यां प्रतिनिर्देशः ।

तथा यह एक पांचवा जो व्यवहारका अनौचित्य है, वह भी रसभङ्गका हेतु होता है ।

उदाहरति—

**यथा—नायकं प्रति नायिकायाः कस्याश्चिदुचिताङ्गभङ्गिमन्तरेण स्वयं सम्भोगाभिलाषकथने ।**

अङ्गभङ्गिः शृङ्गारचेष्टा, विभ्रम इति यावत् ।

विभ्रमेणैव रिरंसाप्रकाशनं रमणीनां चमत्कृतिमादधाति, कण्ठतः प्रकाशनन्तु ग्राम्यतां प्रकाशयद् रसभङ्गाय जायते । ननु स्वयन्दूत्याः का गतिः ? तयाऽपि व्यञ्जनयैव तत्प्रकाशनात् ।

जैसे नायकके प्रति किसी कामान्ध नायिकाकी उचित शृङ्गार-चेष्टाओं ( हाव-भाव ) के विना स्वयं ( स्पष्ट ही ) संभोगाभिलाषको प्रकट करनेसे रसभङ्ग हो जाता है, क्योंकि हाव-भावसे ही युवतियों द्वारा संभोगेच्छा प्रकट करनेसे अधिक आनन्द-रसास्वाद प्रतीत होता है ।

लक्ष्यानुरोधेन वृत्तिपदार्थं पुनरन्यथा व्याख्याति—

**यदि वा वृत्तीनां भरतप्रसिद्धानां कैशिक्यादीनां, काव्यालङ्कारान्तरप्रसिद्धानामुपनागरिकाऽऽद्यानां वा यदनौचित्यमविषये निबन्धनम्, तदपि रसभङ्गहेतुः ।**

भरतप्रसिद्धानां तत्प्रणीतनाट्यशास्त्रोक्तानाम् । कैशिक्यादीनां कैशिकी-सात्वती-भारत्या-रभटीनाम् ।

तत्र कैशिकीलक्षणं यथा दर्पणे—

'या श्लक्ष्णनेपथ्यविधानचित्रा, स्त्रीसङ्कुला पुष्कलनृत्यगीता ।
कामोपभोगप्रभवोपचारा, सा कैशिकी चारुविलासयुक्ता ॥' इति ।

सात्वतीलक्षणं यथा नाट्यशास्त्रे—

'या सत्त्वजेनेह गुणेन युक्ता, न्यायेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा, सा सात्त्वती नाम भवेत्तु वृत्तिः ॥' इति ।

भारतीलक्षणं यथा तत्रैव—

'या वाक्प्रधाना पुरुषप्रयोज्या, स्त्रीवर्जिता संस्कृतवाक्ययुक्ता ।
स्वनामधेयैर्भरतैः प्रयुक्ता, सा भारती नाम भवेत् तु वृत्तिः ॥' इति ।

आरभटीलक्षणं यथा शृङ्गारतिलके—

'या चित्रयुद्धभ्रमशस्त्रपातमायेन्द्रजालप्लुतिलङ्घिताढ्या ।
ओजस्विगुर्वक्षरबन्धगाढा, ज्ञेया बुधैः साऽऽरभटीति वृत्तिः ॥' इति ।

तासामुत्पत्तिश्च यथा भरतानुशासने—

'ऋग्वेदाद् भारती वृत्तिर्यजुर्वेदात्तु सात्त्वती ॥
कैशिकी सामवेदाच्च शेषा चाथर्वणी तथा ॥' इति ।

काव्यालङ्कारान्तरप्रसिद्धानामुद्भटाद्युदीरितानाम् । उपनागरिकाऽऽद्यानाम्–उपनागरिका–परुषा–कोमलानाम् ।

तासां क्रमेण लक्षणं यथोद्भटालङ्कारे—

'सरूपसंयोगयुतां मूर्ध्नि वर्गान्त्ययोगिभिः ।
स्पर्शैर्युतां च मन्यन्त उपनागरिकां बुधाः ॥' इति ।
'शषाभ्यां रेफसंयोगैष्टवर्गेण च योजिता ।
परुषानाम वृत्तिः स्याद् ह्लह्याद्यैश्च संयुता ॥' इति ।
'शेषैर्वर्णैर्यथायोगं कथितां कोमलाख्यया ।
ग्राम्यां वृत्तिं प्रशंसन्ति काव्येष्वादृतबुद्धयः ॥' इति च ।

अथवा भरतमुनि प्रसिद्ध–कैशिकी, सात्त्वती, भारती, तथा आरभटी इन चार वृत्तियोंका या दूसरे काव्यालङ्कारमें प्रख्यात उपनागरिका, परुषा और कोमला इन तीन वृत्तियोंका जो अनौचित्य अर्थात् यदि अविषयमें निबन्धन किया जाय तो वह भी रसभङ्गका पांचवां हेतु होता है ।

उपसंहरन्नुपदिशति—

**एवमेषां रसविरोधिनामन्येषां चानया दिशा स्वयमुत्प्रेक्षितानां परिहारे सत्कविभिरवहितैर्भवितव्यम् ।**

सत्कविभिः सत्कवीभवितुमिच्छद्भिः ।

इस तरह इन पूर्वोक्त पांचों रसविरोधियोंका और इसी मार्गसे स्वकीयमस्तिष्कद्वारा परिज्ञात अन्य रसभङ्गकारणोंका परित्याग करनेमें कवियोंको अधिक सतर्क रहना चाहिये ।

अत्र रसादिप्राधान्यबोधकश्लोकान् क्रमेणाभिदधदाह—

परिकरश्लोकाश्चात्र—

तत्र प्रथमेन रसादीनां काव्ये मुख्योद्देश्यत्वमाख्याति—

'मुख्या व्यापारविषयाः सत्कवीनां रसादयः ।
तेषां निबन्धने भाव्यं तैः सदैवाप्रमादिभिः ॥'

तेषां रसादीनाम् । तैः सत्कविभिः । अप्रमादिभिः सावधानैः ।

उक्त विषयोंके संग्रह-श्लोक निम्न प्रकार हैं—सुकवियोंके काव्यनिर्माण विषयक व्यापारके मुख्य उद्देश्य रसादि ही हैं, इसलिये उनके निबन्धनमें उन सत्कवियोंको हमेशा प्रमाद-रहित ( सतर्क ) रहना चाहिये ।

प्रमादे दोषं दर्शयति—

'नीरसस्तु प्रबन्धो यः सोऽपशब्दो महान् कवेः ।
स तेनाकविरेव स्यादन्येनास्मृतलक्षणः ॥'

स नीरसः प्रबन्धो नीरसकाव्यरचना कवेर्महानपशब्दो दुर्यशस्तज्जनकमिति कार्यकारणभावेनायुर्घृतमितिवल्लक्षणा । स कविस्तेन तादृशप्रबन्धरचनेन, अकविः अप्रशस्तकविः, परिपालितसदाचार एव हि सुगृहीतनामा भवतीति सिद्धान्तेन अन्येन स्वभिन्नेनानुचिताचरणान्न स्मृतं लक्षणं नाम यस्य तादृश एव स्यादित्यर्थः । 'अपशवो वाऽन्ये गवाश्वेभ्यः' इत्यादिवदकविरित्यत्राप्राशस्त्यं नञर्थः ।

तदुक्तम्—'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥' इति ।

कविका जो नीरस काव्य प्रबन्ध है, वह उसके लिये महान् निन्दा सूचक अपशब्द है, उस नीरसकाव्यसे वास्तवमें वह कवि ही नहीं हो सकता, क्योंकि कविरूपमें उसका कोई नाम भी याद नहीं करता है ।

ननु कुमारसम्भव—रत्नावली-वेणीसंहारादि प्रबन्धकानां प्राचां सरणिमेवानुसरन्नर्वाचीनः कविः किमिति गर्हणीयः स्यादित्यत आह—

'पूर्वे विशृङ्खलगिरः कवयः प्राप्तकीर्तयः ।
तान् समाश्रित्य न त्याज्या नीतिरेषा मनीषिणा ॥'

पूर्वे प्राचीनाः कालिदासादयः । विशृङ्खलगिरः प्रतिभाऽतिरेकोन्मीलितप्रतिबद्धमधुररुचिरकविताप्रवाहाः । तैर्यदि कुत्रचित् स्खलितम्, तर्हि तदीयकवित्वचारिमवैभवेन तत् समाहितं भवति, न तु तद्दृष्टान्तेन नवीनैरपि स्खलनीयम्, तस्य समाधातुमशक्यत्वादिति भावः ।

उक्त नियमोंके विना ही स्वच्छन्द रचना करनेवाले जो प्राचीन कवि विख्यात

हो गये हैं, उनसे यदि कोई त्रुटि हो गई तो उनके उदाहरणोंको लेकर मतिमान् नूतन कविको यह नीति ( उक्तनियम ) नहीं छोड़नी चाहिये क्योंकि उन ( कालिदासादि ) के कवित्वकी चारुताके बदौलत त्रुटिका समाधान हो जाता है।

नायं मयैवोत्प्रेक्षितो न्यायः, किन्त्वादिकवीनामपि तात्पर्यगोचरीभूत एव स इत्याह—

'वाल्मीकिव्यासमुख्याश्च ये प्रख्याताः कवीश्वराः।
तदभिप्रायबाह्योऽयं नास्माभिर्दर्शितो नयः॥' इति।

तस्मादिह सर्वथा सावधानैः कविभिर्भाव्यमिति भावः।

क्योंकि वाल्मीकि, व्यास प्रभृति जो जगत प्रसिद्ध कवीश्वर हुए हैं, उनके अभिप्रायके विपरीत हमने यह नीति निर्द्धारित नहीं की है, अपितु ये सारे नियम उनके अभिप्रायके अनुकूल ही हैं, अतः यदि कोई कवि स्वतन्त्र रचना करके भी प्रसिद्ध हो चुके हैं, तो कवि होनेके इच्छुक नूतन कविको उनकी स्वतन्त्रताका अनुकरण नहीं करना चाहिये।

इत्थं सामान्येन रसादिविरोधिनः परिहाराय परिगणय्य प्रतिप्रसवं वक्ति—

'विवक्षिते रसे लब्धप्रतिष्ठे तु विरोधिनाम्।
बाध्यानामङ्गभावं वा प्राप्तानामुक्तिरच्छला॥ ७६॥'

विवक्षिते प्रस्तुते रसे लब्धप्रतिष्ठे सामग्रीसमवधानेन प्राप्तपरिपोषे सति, वाध्यानां प्रस्तुतरसेन तदङ्गेन वाऽभिभवितुं शक्यानाम्, अन्यत्राङ्गभावमप्रधानत्वं स्वभावादथवाऽऽरोपात् प्राप्तानां वा विरोधिरसानाम्, उक्तिरुपादानमच्छला, निर्दोषेत्यर्थः।

इस प्रकार साधारणतः विरोधियोंके परिहारका नियम बतलाकर उसके अपवादरूपमें जहां विरोधियोंका साथ २ वर्णन भी हो सकता है, उन स्थितियोंका निरूपण करते हैं—विवक्षिते इति। प्रस्तुत प्रधान रसके सामग्रीसमवधानसे परिपुष्ट हो जाने पर तो बाध्यरूप या अङ्गरूपताको प्राप्त विरोधियोंका वर्णन भी दोषाधायक नहीं होता है।

तदाह—

**स्वसामग्रीलब्धपरिपोषे तु विवक्षिते रसे विरोधिनां विरोधिरसाङ्गानां बाध्यानामङ्गभावं वा प्राप्तानां सतामुक्तिर्निर्दोषा।**

तुना प्रकृतरसस्यापरिपुष्टत्वे, बाध्यानामङ्गभावं प्राप्तानां वा विरोधिरसानामुक्तिर्व्यवच्छिद्यते।

अयमभिप्रायः—यथा सप्ताङ्गराज्यदृढमूलस्य राज्ञोऽनतिप्रयासाभिभवनीयेनानुचरीभूतेन वा द्विषता संसर्गो हानिमापादयितुमनर्हः, तथैव स्वानुकूलविभावादिपरिपुष्टस्य प्रकृतरसस्य बाध्येनाङ्गभूतेन वा विरोधिरसाङ्गेनेति तत्कथनमपि नानुचितम् । तदुक्तं दर्पणे—'सञ्चार्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः' इति ।

विवक्षित प्रधानरसके अपनी सामग्रियोंके बदौलत परिपुष्ट हो जानेपर विरोधी रसोंके अङ्गोंका बाध्यरूपमें या अङ्गभावको प्राप्त रूपमें वर्णन करनेसे कोई दोष नहीं होता है ।

बाध्यत्वं विरोधिरसाङ्गानां विवृणोति—

**बाध्यत्वं हि विरोधिनां शक्याभिभवत्वे सति, नान्यथा ।**

अभिभवितुमशक्यत्वे तु बाधकत्वमेव, दुर्बल एव हि रिपुर्बाध्यो भवति, न तु समकक्षः प्रबलो वेति तात्पर्यम् ।

क्योंकि विरोधी रसाङ्गोंकी बाध्यता, उनके अभिभवका सम्भव होने पर ही हो सकती है, अन्यथा नहीं, अर्थात् अभिभवके योग्य नहीं होने पर तो वह बाधक ही होता है, क्योंकि दुर्बल ही शत्रु दबाया जा सकता है, समकक्ष या प्रबल नहीं दबाया जा सकता ।

कुतस्तदुक्तिर्निर्दोषेत्यत आह—

**तेषामुक्तिः प्रस्तुतरसपरिपोषायैव सम्पद्यते ।**

बाध्यमानेन वैरिणाऽनुस्रियमाणस्य नेतुरुत्कर्ष एव, नापकर्ष इति भावः ।

इसीलिये उन विरोधी रसाङ्गोंका बाध्यरूपमें वर्णन, प्रस्तुत रसका परिपोषक ही होता है, क्योंकि शत्रुओं द्वारा अनुगमन करनेसे प्रधान नेताका उत्कर्ष ही होता है, अपकर्ष नहीं होता ।

अङ्गत्वेऽपि तदुक्तेरदोषत्वमभिदधाति—

**अङ्गभावं प्राप्तानां च तेषां तावदुक्तावविरोध एव ।**

पूर्वरिपोरप्यनुचरीभावे स्वामिनः प्रकर्षस्यैव दर्शनादित्याकूतम् । अङ्गताप्राप्तिश्च तेषां क्वचित् स्वभावात्, क्वचिच्चारोपादिति पुरस्तादुदाहरणाभ्यां स्फुटमवसेयम् ।

अङ्गरूपताको प्राप्त हो जाने पर तो विरोध ही समाप्त हो जाता है, क्योंकि भूतपूर्व रिपुके भी अनुचर हो जाने पर स्वामीका उत्कर्ष ही देखा जाता है ।

उन विरोधी रसाङ्गोंकी अङ्गत्व-प्राप्ति भी कहीं स्वाभाविक और कहीं आरोपित रूपसे होती है, उनमें स्वाभाविक अङ्गभूत विरोधियोंके ही वर्णन करनेमें कोई दोष नहीं है ।

उदाहरति—

**यथा—विप्रलम्भशृङ्गारे व्याध्यादीनां तदङ्गानामेवादोषो, नातदङ्गानाम् ।**

तत्पदेन प्रस्तुतरसपरामर्शः । अङ्गानामुपकारिणाम् । तदङ्गानामित्यनन्तरम् 'उक्तौ' इत्यनुषज्यते ।

यथा विप्रलम्भशृङ्गारे प्राधान्येन विवक्षिते लब्धपरिपोषे च सति, त्रयस्त्रिंशति निर्वेदादिषु परत्र दर्शितेषु व्यभिचारिभावेषु सामान्यतया सर्वरसाङ्गेषु—

व्याधिप्रभृतीनाम्—'अभिलाषश्चिन्ता स्मृतिगुणकथनोद्वेगसम्प्रलापाश्च ।
उन्मादोऽथ व्याधिर्जडता मृतिरिति दशात्र कामदशाः ॥'

इत्युक्तानां दशानामत्रत्यकामदशानामन्यत्रोक्तस्वरूपाणां तदनुरूपाणामन्येषां वा तदुपयोगितया तदङ्गानां कथनं न दोषाय भवति ।

तल्लक्षयन्तु—'पाण्डुक्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदन्तः ॥' इत्यादि ।

व्यभिचारिणामप्यनुपकारिणामौग्र्यजुगुप्सादीनामुपादानन्त्वनुपकारकत्वात् प्रतिबन्धनोपस्थापकत्वाच्च 'दोषावहमेवेति भावः ।

**जैसे सामान्यतः रसोंके प्रति निर्वेदादि ३३ व्यभिचारी भावोंके होने पर भी जो व्याधि ग्लानि आदि विप्रलम्भ शृङ्गारके विरोधी करुण रसके अङ्ग हैं, उन्हें विप्रलम्भ शृङ्गारमें भी स्वाभाविक अङ्ग होनेके कारण उक्त शृङ्गारमें उनका वर्णन करनेमें कोई दोष नहीं है, किन्तु जिन आलस्य, उग्रता, जुगुप्सा आदि व्यभिचारी भावोंका शृङ्गारमें स्वाभाविक अङ्गभाव (उपकारकत्व) नहीं है, अपितु करुण रसमें ही अङ्गभाव (उपकारकत्व) है, उनका विप्रलम्भ शृङ्गारमें वर्णन करना दोषाधायक ही होता है।**

तत्रापि विशेषमाख्याति—

**तदङ्गत्वे च संभवति मरणोपन्यासो न न्याय्यः ।**

तदङ्गत्वे विप्रलम्भशृङ्गारोपकारकत्वे ।

अयं भावः—यद्यपि व्यभिचार्यन्यतमं मरणमपि 'सर्व एव शृङ्गारे व्यभिचारिणः' इत्युक्तनयेन विप्रलम्भशृङ्गारस्याङ्गं भवत्येव, तथाऽपि केवलतदङ्गत्वेन तदुपादानं नोचितम्, वक्ष्यमाणहेतोः । अपि तु सम्भावितं स्पृहितं पुनरासन्नप्रत्युज्जीवनं चैव मरणं वर्णनीयम् । तदुक्तं दर्पणे—

'रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते ।

जातप्रायन्तु तद्वाच्यं चेतसाऽऽकाङ्क्षितं तथा ।
वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः ॥' इति ।

**परन्तु उन व्याधि आदि अङ्गोंमें भी मरण रूप अङ्गके उस विप्रलम्भ शृङ्गारका अङ्ग हो सकने पर भी उसका वर्णन करना उचित नहीं है ।**

तत्र हेतुमभिधाति—

**आश्रयविच्छेदे रसस्यात्यन्तविच्छेदप्राप्तेः ।**

आश्रयस्य नायिकादेर्विच्छेदे विनाशे सति तद्वृत्तिरतेरपि नाशात् तत्स्थायिकस्य रसस्यात्यन्तविच्छेदस्य प्राप्तेः सम्भवादित्यर्थः तस्मान्मरणं न वर्णनीयमिति भावः ।

**क्योंकि उसके आधारभूत नायिकादि आलम्बन विभावके ही उच्छेद हो जानेसे तद्वृत्ति रतिके भी नष्ट हो जानेके कारण रसका अत्यन्त उच्छेद हो सकता है ।**

ननु मरणवर्णनं कुतो निषिध्यते ? तत्र शृङ्गारविच्छेदेऽपि, करुणस्य शोकस्थायिकस्यास्वादो भविष्यत्येव, न हि सहृदयानां शृङ्गार एव निर्बन्ध इत्याशङ्क्य समादधाति—

**करुणस्य तु तथाविधे विषये परिपोषो भविष्यतीति चेद्, न, तस्याप्रस्तुतत्वात्, प्रस्तुतस्य च विच्छेदात् ।**

चस्त्वर्थकः । भवतु तत्र करुणास्वादः, किन्तु तदुद्देश्येन सहृदयानामप्रवृत्तेः स नैव विवक्षित इति तेन काऽर्थसिद्धिः, यदि प्रवृत्त्युद्देश्यस्य विप्रलम्भास्वादस्य विनाश एव स्यादिति सारम् ।

**यदि आप यह कहें कि ऐसे स्थलमें करुण रसकी परिपुष्टि होनेसे रसका अत्यन्त उच्छेद नहीं होता तो यह कहना भी उचित नहीं है, क्योंकि करुण रस प्रधान रूपसे प्रकृतमें प्रस्तुत नहीं है, जो विप्रलम्भ शृंगार प्रकृतमें प्रस्तुत है, उसका अत्यन्त विच्छेद हो जाता है ।**

ननु तर्हि करुणस्य कुत्रापि किमुद्देश्यत्वं नास्त्येव ? इत्यत आह—

**यत्र तु करुणस्यैव काव्यार्थत्वम्, तत्राविरोधः ।**

'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरकोशानुशासनादर्थशब्दोऽत्र प्रयोजनार्थकः । तेन यत्र करुणरसप्रधाने काव्ये करुणस्यैव काव्यार्थत्वं काव्यप्रवृत्तिप्रयोजनत्वं, प्राधान्येन प्रस्तुतत्वमिति यावत्, तत्रालम्बनवर्णनेऽविरोधः, क्षत्यभावादित्यर्थः ।

हां इतना अवश्य कह सकते हैं, कि जहां करुण रस ही काव्यका प्रधान रूपसे अभिप्रेत रहता है, वहां मरण पर्यन्त वर्णनमें भी कोई क्षति नहीं होती।

ननु शृङ्गारे प्रस्तुते सर्वथा मरणवर्णननिषेधेन तस्य शृङ्गारव्यभिचारितैव नश्यति, तथा च 'शृङ्गारे सर्व एव व्यभिचारिणः' इति सिद्धान्तस्य का दशेत्यत आह—

**शृङ्गारे वा मरणस्यादीर्घकालप्रत्यापत्तिसम्भवे कदाचिदुपनिबन्धो नात्यन्तविरोधी।**

वाशब्दोऽप्यर्थकः। अदीर्घकालेनाचिरेण प्रत्यापत्तेः प्रत्यावर्तनस्य मृतव्यक्तिप्रत्युज्जीवनस्येति यावत्, सम्भवे सति, शृङ्गारेऽपि मरणस्योपनिबन्धः, कदाचिद् यदि विच्छित्तिविशेषपोषणमपरित्यजन् कविर्मरणं गौणतया वर्णयितुं कुशलः, तर्हि नात्यन्तं विरोधीत्यर्थः।

न हि शृङ्गारे सर्वाकारं मरणोपन्यासो निषिद्धः, किन्तूक्तभङ्गित्रयमन्तरेणैव।

अत एव—'दयितस्य गुणाननुस्मरन्ती शयने सम्प्रति या विलोकिताऽऽसीत्।
अधुना खलु हन्त! सा कृशाङ्गी गिरमङ्गीकुरुते न भाषिताऽपि॥' इति

जगन्नाथेन जातप्रायम्,

'रोलम्बाः परिपूरयन्तु हरितो झङ्कारकोलाहलै-
र्मन्दं मन्दमुपैतु चन्दनवनीजातो नभस्वानपि।
माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चमं,
प्राणाः सत्वरमश्मसारकठिना गच्छन्तु गच्छन्त्वमी॥' इत्यन्येन

चेतसाऽऽकाङ्क्षितम्, महाश्वेतापुण्डरीकवृत्तान्ते बाणभट्टेनाचिरजातप्रत्युज्जीवनं च शृङ्गारे तद्वर्णितमेव।

'जीवस्योद्गमनारम्भो मरणं परिकीर्त्तितम्' इति व्यभिचारिलक्षणप्रसङ्गेन मरणं लक्षयत आरम्भशब्दं प्रयुञ्जानस्य प्रदीपकृतोऽप्यत्रैव स्वरसः।

नव्यास्त्वन्तिममुदाहरणं करुणविप्रलम्भस्य मन्यत इत्यन्यत्र स्फुटम्।

यदि प्रस्तुत शृंगारमें मरण वर्णनका सर्वथा निषेध ही है, तो उसका शृङ्गारमें व्यभिचारित्वप्रतिपादन ही व्यर्थ हो जायगा, अतः पक्षान्तर बतलाते हैं—शृङ्गार इति। अथवा शृङ्गारमें जहां शीघ्र ही मृतनायकादिके प्रत्युज्जीवन द्वारा फिर समागम हो सकनेका सम्भव हो ऐसे स्थान पर मरणका वर्णन भी अत्यन्त विरोधी नहीं होता।

जसे पण्डितराज जगन्नाथने जातप्राय मरणका निम्न प्रकार वर्णन किया है— सखी कहती है—प्रियके गुणोंका स्मरण करती हुई जो अभी शय्या पर लेटी हुई दिखाई पड़ती थी, हा ! अत्यन्त खेदकी बात है कि वह कृशाङ्गी अब पूछी जाने पर भी कुछ नहीं बोलती है ।

इसी प्रकार किसी अन्य कविने स्वचित्तसे आकांक्षित मृत्युका निम्न प्रकार वर्णन किया है-कोई विरहिणी नायिका कहती है-ये भौंरे गण अपनी झङ्कृतियोंके कोलाहलसे दिशाओंको भर दें, मलयाचल चन्दन वनके पवन धीरे धीरे बहें, आम्र वृक्षों पर वसन्त ऋतुकी मादकतासे उन्मत्त होकर कोयल गण केलि क्रीडाके लिये कामोद्दीपन करनेवाले पञ्चम रागमें आलाप करें और वज्रके समान अत्यन्त कठोर मेरे भी ये प्राण बहुत शीघ्र ही चले जांय। इसी तरह बाणभट्ट कविने महाश्वेता-पुण्डरीकके वृत्तान्तमें अचिर जात पुनरुज्जीवनका वर्णन किया है ।

अन्यथा तु विरुद्ध एवेत्याह—

**दीर्घकालप्रत्यापत्तौ तु तस्यान्तरा प्रवाहविच्छेद एवेत्येवंविधेतिवृत्तोपनिबन्धनं रसबन्धप्रधानेन कविना परिहर्तव्यम् ।**

अन्तरा मध्ये । प्रवाहस्यास्वादधाराया विच्छेदः स्याच्चिरादालम्बननाशात् ।

रसबन्धः प्रधानं यस्येति बहुव्रीहिः । कवेर्विशेषणमिदं तादृशबन्धपरिहारस्यावश्यविधेयतां बोधयति ।

विरोधिनामङ्गतांप्राप्तिरियं स्वाभाविक्येव व्याख्याता, तद्विपरीतरूपाऽऽरोपिता तु स्वयमूहनीयेति ग्रन्थकारेण नोक्ता ।

किन्तु जहां बहुत दीर्घ कालके बाद फिर समागम हो सकनेका सम्भव हो, वहां तो मध्यमें ही अविच्छिन्न रस प्रवाहका विच्छेद हो जाता है, इसलिये रसनिष्ठ कवि को इस प्रकारके इतिवृत्तका वर्णन छोड़ देना चाहिये, अर्थात् प्राचीन कवि परम्पराओंसे १. 'जातप्राय, २. मनसे आकांक्षित एवं ३. अचिर प्रत्यावर्तन युक्त' इन तीन रूपोंमें ही मरणका श्रृङ्गारमें वर्णन करना चाहिये, इनसे भिन्न रूपमें मरणका वर्णन उचित नहीं है ।

इत्थं विरोधिनां बाध्यत्वोक्तावेकः, द्विविधायामङ्गत्वप्राप्तौ च द्वाविति त्रीनपि प्रकारान् निरूप्य क्रमेणोदाहरति—

**तत्र लब्धप्रतिष्ठे तु विवक्षिते रसे विरोधिरसाङ्गानां बाध्यत्वेनोक्तावदोषो यथा—**

उर्वशीं दृष्टवान् पुरूरवा विमृशति—

'क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा,

दोषाणां प्रशमाय नः श्रुतमहो ! कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा,
चेतः ! स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं पास्यति ॥'

पद्यमिदं विक्रमोर्वश्यां चतुर्थेऽङ्केऽधिकं क्वचित्पठितम् ।

इह–अकार्यं वेश्याऽऽसक्तिः क्व ! शशलक्ष्मणश्चन्द्रस्य कुलं च क्व ! इत्युभयोः सहानवस्थित्या महावैषम्यमिति शान्तरसव्यभिचारी वितर्कः प्रकाशितः ।

भूयः पुनरपि, साऽलौकिकसौन्दर्योर्वशी मया दृश्येत, केन प्रकारेण दृष्टा स्यादित्यौत्सुक्येन शृङ्गारसञ्चारिणा प्रतीतेन विरोधिरसव्यभिचारी स बाध्यते ।

नोऽस्माकं दोषाणां चाञ्चल्यप्रमादादीनां प्रशमाय प्रध्वंसाय श्रुतं शास्त्रश्रवणमस्तीति शेष इति प्रतीतया शान्तसञ्चारिण्या मत्या तद् बाध्यते ।

अहो आश्चर्यम् ! कोपे प्रणयरोषेऽपि किं पुनरन्यदा ?, तस्या मुखं कान्तं मनोरममासीदिति द्योतिता शृङ्गाराङ्गं स्मृतिस्तामपि बाधते ।

इत्थमाचरन्तं माम्, अपगतं कल्मषं पापं येभ्यस्ते निष्पापाः, तथा कृते सदाचारे धीर्येषां तादृशा महात्मानो विद्वांसः, किं वक्ष्यन्ति किं कथयिष्यन्तीति सूचिता शान्तव्यभिचारिणी शङ्का तां बाधते ।

स्वप्नेऽश्रुतादृष्टचरपदार्थदर्शकदशाविशेषेऽपि, का कथा जाग्रत्सुषुप्तिदशयोः ?, सा प्रेयसी दुर्लभेति द्योतितेनाभीष्टाप्राप्तिमूलकदैन्येन शृङ्गाराङ्गेन सा बाध्यते ।

हे चेतश्चित्त ! स्वास्थ्यं स्थैर्यमप्रमादं वा, उपेहि प्राप्नुहीति प्रतीतया शान्ताङ्गधृत्या तदपि बाध्यते ।

कः खलु धन्यः पुण्यवान्, न त्वहमिवाधन्यः, युवा तस्या अधरं पास्यतीति प्रकाशिता शृङ्गारसञ्चारिणी चिन्ता धृतिमपि बाधत इतिपर्यन्ते शृङ्गार एव विश्रान्तेरवान्तरे तदविरोधिशान्ताङ्गानां वितर्कादीनामुपनिबन्धोऽपि न दोषावहः, विरोधिनां बाधितत्वात् ।

**विरोधी रसाङ्गोंके १. बाध्यरूप, २. स्वाभाविक अङ्गभाव एवं ३. समारोपित अङ्गभाव' इन तीनोंमें सर्वप्रथम, प्रधान रसके सर्वथा परिपुष्ट हो जाने पर बाध्यरूपसे विरोधी रसाङ्गोंके वर्णनमें दोषाभावका उदाहरण द्वारा प्रतिपादन करते हैं—तत्रेति ।**

**अप्सराओंके साथ उर्वशीके स्वर्ग चले जानेपर विरहसे उत्कण्ठित पुरूरवाके मन में उत्पन्न होते हुए अनेक प्रकारके विमर्शोंका यथाक्रम वर्णन किया गया है—जैसे**

'कहां यह अनुचित कर्म और कहां मेरा उज्ज्वल चन्द्रवंश'? इनदोनोंके महान् वैषम्य सूचन द्वारा शान्त रसका व्यभिचारी वितर्क प्रकाशित हो रहा है, वादमें 'क्या वह फिर कभी देखनेको मिलेगी'? यह श्रृंगारका औत्सुक्य प्रतीत हो रहा है, अनन्तर 'अरे मैंने तो कामक्रोधादि दोषोंको दमन करनेवाले शास्त्रोंका श्रवण किया है' इस प्रकार शान्तरसकी संचारिणी मति प्रतीत होती है, तब, 'कोप करने पर भी कैसा सुन्दर उसका मुख लगता था' इस प्रकार श्रृङ्गारका संचारी स्मरण प्रतीत होता है, वादमें 'मेरे इस आचरणको देखकर धर्मात्मा विद्वान् लोग क्या कहेंगे'? यह शान्त रसका व्यभिचारी सन्देह प्रकाशित हो रहा है, अनन्तर 'वह तो अब स्वप्नमें भी नहीं मिलेगी' इस प्रकार श्रृङ्गारका व्यभिचारी दैन्य प्रतीत होता है, तब 'अरे चित्त धैर्य धारण करो' यह शान्त रसकी संचारीभूत धृति प्रतीत होती है, वादमें 'न जाने कौन ऐसा अत्यन्त भाग्यशाली युवक उसके अधर रसका पान करेगा'? इस प्रकार अन्तमें श्रृङ्गार रसका संचारीभाव चिन्ता प्रतीत होती है।

यहांपर पर्यवसानमें विप्रलम्भ श्रृङ्गारके ही परिपुष्टतया आस्वादन होनेसे श्रृङ्गार के विरोधी करुण रसके अङ्गभूत-वितर्क, मति, शङ्का और धृति रूप व्यभिचारी भावोंके, उक्त श्रृङ्गारके व्यभिचारी-औत्सुक्यादिसे वाध्य हो जानेके कारण उनका वर्णन प्रकृतमें दोषाधायक नहीं होता।

प्रथमप्रकारमेव पुनरुदाहरति—

**यथा वा—पुण्डरीकस्य महाश्वेतां प्रति प्रवृत्तनिर्भरानुरागस्य द्वितीय-मुनिकुमारोपदेशवर्णने।**

पुण्डरीकस्य श्वेतकेतुमुनिसुतस्य। महाश्वेतां हंसाभिधगन्धर्वराजतनूजाम्। प्रवृत्त उत्पन्नो निर्भरोऽतिशयितोऽनुरागः प्रेमा यस्येति विग्रहः। द्वितीयमुनिकुमारस्य कपिञ्जलनाम्नस्तत्सुहृदः। कर्तरि षष्ठी।

तत्र हि प्रस्तुतविप्रलम्भश्रृङ्गारस्य विरोधिनः शान्तस्याङ्गभूतवैराग्यविभावा यद्यपि भूयो निर्दिष्टाः, तथाऽपि पर्यवसाने श्रृङ्गारोऽविच्छिन्न एव स्थितः, वाधितास्ते च तमुपकुर्वन्त्येवेति तदुपनिवन्धस्य व्यक्तमदुष्टत्वम्।

अथवा कादम्बरीमें जैसे गन्धर्व राजकन्या महाश्वेताके प्रति पुण्डरीकके अत्यन्त आसक्त हो जाने पर कपिञ्जल नामक द्वितीय मुनि कुमारके उपदेश वर्णनमें दर्शाये गये शान्त रसके अङ्गभूत वैराग्य आदिके प्रधानभूत श्रृङ्गार रसके अङ्गोंसे वाधित हो जानेसे उनका वर्णन दोषाधायक नहीं होता है।

अथ द्विधाविभक्ताया अङ्गत्वप्राप्तेः प्रथमं स्वाभाविकाङ्गत्वप्राप्तिलक्षणं प्रकारम-

दोषनिबन्धनमुदाहरति—

स्वाभाविक्यामङ्गभावप्राप्तावदोषो यथा—

वर्षासु विरहिणीदशां कश्चिदाह—

'भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥' इत्यादौ ।

एष श्लोको द्वितीयोद्द्योत एव व्याख्यातः । अत्र भ्रम्यादीनां प्रस्तुतविप्रलम्भविरोधिकरुणपोषकत्वेऽपि, प्रकृते स्वभावादेव विप्रलम्भपोषकत्वेनाङ्गत्वप्राप्तावुपादानं न दोषायेति बोध्यम् ।

**विरोधी रसाङ्गोंके स्वाभाविक अङ्गरूपता प्राप्त होने पर अदोषताका उदाहरण बतलाते हैं**—स्वाभाविक्यामिति । **जैसे 'मेघरूप सर्पसे उत्पन्न विष ( जल और जहर ) विरहिणी स्त्रियोंको चक्कर, बेचैनी आलस्य, प्रमाद, अचैतन्य, मूर्च्छा, मोह, शरीरखिन्नता और मरण उत्पन्न कर देता है'।**

**यहां पर करुण रसके पोषक व्याधिके अनुभावरूप भ्रमि आदिके विप्रलम्भ शृङ्गारमें भी सम्भव होनेसे स्वाभाविक अङ्गभाव होनेके कारण दोष नहीं होता है।**

आरोपिताङ्गताप्राप्तावदोषत्वमुदाहरति—

समारोपितायामप्यविरोधो यथा—

विरहव्यसनं निगूहन्तीं प्रियसखी व्याहरति—

'पाण्डुक्षामम्' इत्यादौ ।

'पाण्डुक्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि ! हृदन्तः ॥' इति पूर्णः श्लोकः ।

हे सखि ! तव पाण्डु पिशङ्गं तथा क्षामं कृशं वदनम् , सरसं सानुरागं भुक्तवस्तुरसयुक्तं च हृदयम् , अलसमालस्ययुतं वपुश्शरीरञ्च ( कर्तृ ) हृदन्तर्हृदयमध्ये क्षेत्रियरोगं देहान्तरचिकित्स्यमसाध्यं वा व्याधिं प्रेमाणं गदं च नितान्तमावेदयति; सूचयतीत्यर्थः ।

तथा च—'क्षेत्रियं क्षेत्रजतृणे परदाररतेऽपि च ।
अन्यदेहचिकित्साऽर्हेऽसाध्यरोगे च दृश्यते ॥' इति विश्वः ।

क्षेत्रियरोगो राजयक्ष्मादिः प्रियानुरागश्च । तयोस्तत्त्वमप्रतिकार्यतयैव ।

इह राजयक्ष्मादिकार्यतया करुणानुभावत्वे प्रसिद्धेषु पाण्डुत्वादिषु, स्वभावात् प्रकृतविरुद्धरसाङ्गेष्वपि श्लेषमहिम्ना प्रस्तुतविप्रलम्भाङ्गत्वारोपात् तत्कथनेऽपि न दोषः ।

प्रकाशकारादयस्तु—पाण्डुत्वादयो यथा करुणस्याङ्गानि, तथैव विप्रलम्भस्या-पीत्युभयसाधारणतयैव तदुक्तौ न विरोध इत्याचक्षते ।

**समारोपित अङ्गभावमें भी दोषाभावका उदाहरण बतलाते हैं—**समारोपेति। **विरह व्यथाको छिपाती हुई विरहिणीसे प्रियसखी कहती है—हे सखि! तुम्हारा मुरझाया हुआ पीलासा चेहरा, एवं सरस हृदय और आलस्य भरा शरीर, ये तीनों तुम्हारे हृदयस्थित अत्यन्त असाध्य रोगको सूचित करते हैं, यहां पर करुण रसके अनुभाव रूपसे प्रसिद्ध पाण्डुत्वादि व्याधि चिह्नोंमें स्वभावतः विप्रलम्भ श्रृङ्गारके विरुद्ध करुण रसके अङ्गत्व होने पर भी श्लेष वश श्रृङ्गारमें भी नायिकामें उनका आरोप कर वर्णन किया गया है, इसलिये उनकी श्रृङ्गारके प्रति समारोपित अङ्गता होनेसे श्रृङ्गारमें करुणोचित व्याधिका यह वर्णन दोषाधायक नहीं होता।**

प्रायस्तामेवारुचिं विचिन्त्य पुनरुदाहरति—

**यथा वा—'कोपात् कोमललोलबाहुलतिकापाशेन' इत्यादौ ।**

प्रागेव व्याख्यातमिदं पद्यम् । इह प्रकृतविप्रलम्भप्रतिकूलरौद्ररसाङ्गानां कोप-बन्धनताडनानाम्, बाहुलतिकैव पाश इति रूपकबलाद् रौद्रस्य सामग्र्यभावाद-निष्पत्तेरारोपितायां विप्रलम्भाङ्गतायामुक्तिर्न दोषायेति द्रष्टव्यम् ।

**समारोपित अङ्गताकाही दूसरा उदाहरण बतलाते हैं—**यथावेति । **इसका भावार्थ पृ० १४८ में बतला चुके हैं। वहीं देख लें। यहां पर 'कोप, बन्धन एवं ताडन रूप रौद्र रसके अनुभावोंको रूपकालंकारके बलसे श्रृङ्गारमें आरोप कर और श्रृंगार रसके भङ्ग हो जानेके भयसे उनका अत्यन्त निर्वाह न करनेसे ही उक्त रौद्रके अङ्गोंकी श्रृंगारके प्रति समारोपित अङ्गता होती है, अतः श्रृङ्गारमें उनका वर्णन दोष रहित होता है।**

इत्थं द्विविधे अङ्गत्वप्राप्ती उदाहृत्य तृतीयामन्यविधामुदाहर्तुमाचष्टे—

**इयं चाङ्गभावप्राप्तिरन्या, यदाऽऽधिकारिकत्वात् प्रधान एकस्मिन् वाक्यार्थे रसयोर्भावयोर्वा परस्परविरोधिनोर्द्वयोरङ्गभावगमनम्, तस्या-मपि न दोषः ।**

अन्या तृतीयाऽङ्गताप्राप्तिः, चतुर्थश्चाविरोधप्रकारः । आधिकारिकत्वमधिकृतत्वं प्रस्तुतत्वमिति यावत् । तच्च प्राधान्ये मूलम् ।

परस्परविरोधिनोऽपि रसद्वयस्य भावद्वयस्य वा प्रस्तुतत्वाद् वाक्यार्थप्रधानी-भूतमन्यं प्रत्यङ्गता प्राप्ता भवति, तत्र पराङ्गत्वेनास्वतन्त्रयोस्तयोर्न विरोध इति तृतीये-यमङ्गताप्राप्तिरित्याशयः । तदुक्तं भट्टमम्मटेन—

'अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम्' इति ।

अब एक तृतीय अङ्गरूपता प्राप्तिका उदाहरण बतलाते हैं—इयमिति । यह एक दूसरे ढङ्गकी तृतीय अङ्गरूपताप्राप्ति है कि जहां आधिकारिक ( प्रस्तुत ) होनेसे एक प्रधान वाक्यार्थके प्रति परस्पर विरुद्ध दो रसों या भावोंकी अङ्गता प्राप्त हो, उस ढङ्गकी अङ्गतामें भी विरोधी रसाङ्गोंके वर्णनमें दोष नहीं होता है ।

उदाहरति--

यथोक्तम्—'क्षिप्तो हस्तावलग्नः' इत्यादौ ।

उक्तमित्यत्र द्वितीयोद्द्योत इत्यनुषज्यते । अत्र प्रधानीभूतत्रिपुरारिप्रभावातिशयाङ्गत्वं प्राप्तवतोर्विरोधिनोरपि शृङ्गारकरुणयोर्न विरोध इत्युक्तमेव । एवं भावद्वयाविरोधलक्ष्यमप्यूहनीयम् ।

जैसा कि पृ० १०२ में 'क्षिप्तोहस्त—'इत्यादिमें कह चुके हैं । वहीं देख लें । यहां पर प्रधानीभूत त्रिपुरारिके भक्त्यतिशयके प्रति अङ्गताको प्राप्त होनेसे परस्पर विरोधी होने पर भी करुण और विप्रलम्भ शृङ्गारके वर्णनमें विरोध नहीं होता ।

अविरोधबीजं जिज्ञासमानः पृच्छति--

कथमविरोध इति चेत् ?,

उत्तरयति—

द्वयोरपि तयोरन्यपरत्वेन व्यवस्थापनात् ।

अन्यपरत्वेन । पराङ्गत्वेन अस्वातन्त्र्यमेव विरोधनिवृत्तौ हेतुः ।

यथा मिथोविरुद्धयोरपि सेवकयो राज्ञोऽनुरोधेन भिया वा विरोधाभावः,' तद्वदिहापीति भावः ।

वहां क्यों विरोध नहीं होता ? इस प्रश्नका यह उत्तर है कि उन दोनों ( करुण और विप्रलम्भ शृङ्गार) के, शङ्कर निष्ठ प्रभावातिशय मूलक भक्तिके प्रति अङ्गभावको प्राप्त हो जानेसे ही विरोध नहीं होता, जैसे परस्पर विरुद्ध दो सेवकोंका भी राजाके अनुरोधसे या भयसे विरोध नहीं होता है ।

नन्वनुचराभ्यां विरुद्धाभ्यां स्वामिन एवानुकूलमाचर्यते, न तु परस्परस्य मिथस्तु तयोर्विरोधो जागर्त्येव । तथा च कथमिह विरोधनिवृत्तिरित्याशङ्क्य समाधत्ते—

अन्यपरत्वेऽपि विरोधिनोः कथं विरोधनिवृत्तिरिति चेत् , उच्यते-विधौ विरुद्धसमावेशस्य दुष्टत्वं, नानुवादे ।

विधौ विधेयत्वे । अनुवाद उद्देश्यत्वे । समावेशः, सामानाधिकरण्येनावस्थितिः ।

यद्यपि स्वभावजविरोधस्य स्वभावनिवृत्तावेव निवृत्तिसम्भव इति तदसम्भवात् साऽप्यसम्भाव्यैव, किन्तु विरोधिनोः सहविधानासम्भवाद् विधेयतायामेव दोषः, उद्देश्यतायान्तु विरुद्धयोरप्यप्राधान्येनास्वतन्त्रयोः समावेशस्य दर्शनाद् विरोधनिवृत्तिः सुवचेति भावः।

दूसरेके अङ्ग होने पर भी स्वाभाविक इन दो विरोधी रसोंका विरोध कैसे निवृत्त होता है? इस सन्देहका यह उत्तर है कि दो विरोधी पदार्थोंके एक साथ विधान होनेका सम्भव नहीं होनेसे विधि अंशमें ही दो विरोधियोंके समावेश करनेमें दोष होता है, अनुवादमें नहीं।

तामेवोदाहरति—

यथा—

'एहि गच्छ, पतोत्तिष्ठ, वद मौनं समाचार।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः॥' इत्यादौ।

पञ्चतन्त्रघटकं पद्यमिदम्। धनिनो मनुष्याः, (अर्थिनं प्रति) त्वम्, एहि आगच्छ, पत भूमाविति शेषः, पुनः—उत्तिष्ठ, तथा वद स्वाभीष्टं ब्रूहि पुनर्मौनं समाचर तूष्णीम्भावमवलम्बस्व, एवमित्थं प्रकारेण व्याहरन्तः, आशा धनलाभतृष्णैव ग्रहः सूर्यादिः पूतनादिर्वा, तेन ग्रस्तैः अभिभूतैः, अर्थिभिर्याचकैः, क्रीडन्तीत्यर्थः।

तथा च—'ग्रहो निग्रहनिर्बन्धग्रहणेषु रणोद्यमे।
सूर्यादौ पूतनादौ च सैंहिकेयोपरागयोः॥' इति विश्वः।

धनिनां लोभाभिभूता याचका अवमानपात्राणि क्रीडासाधनानि च भवन्तीति तात्पर्यम्। इहागमनगमनादीनां मिथोविरुद्धानामपि विधेयीभूतधनिक्रीडनोद्देश्यतया ऽस्वातन्त्र्येण यथा विरोधाभावः, तथैव 'क्षिप्तः' इत्यादौ करुणश्रृङ्गारयोरपीति भावः।

जैसे—धनियोंकी आशा-तृष्णा रूपग्रहोंके चक्करमें फंसे हुए याचकोंके साथ धनी लोग आओ, जाओ, पड़ जाओ, उठ खड़े हो जाओ, बोलो, चुप रहो, इस प्रकार कह कर खेल करते हैं, अर्थात् कभी कुछ कभी कुछ मनमानी बात बनाते हुए मनोविनोदके लिये उनको खिलौना बना रखा है।

यहां पर यद्यपि 'एहि' और 'गच्छ' ये दोनों विरोधी हैं, इसी प्रकार 'पत' 'उत्तिष्ठ' एवं 'वद' और 'मौनं समाचार' ये सभी विरोधी हैं, तथापि इनका यहां विधान नहीं किया गया है, अपितु याचकोंके साथ धनिकोंके व्यवहारका अनुवाद मात्र किया गया है, अतः दोष नहीं है।

तदाह—

अत्र हि विधिप्रतिषेधयोरनूद्यमानत्वेन समावेशे न विरोधः, तथेहापि भविष्यति।

अयमाशयः—'गच्छ, मा गम इति ब्रवीति' इत्यादावनुवादे यद्यपि गमनागमने विधिनिषेधरूपत्वान्मिथोविरुद्धे, तथाऽपि तयोरुद्देश्ययोरविधेयतया समावेशः। विधावेव हि विरोधो नानुवादे। विधौ विरोधे हि 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति, इत्यादिवदुभयोः प्रमाणानुप्राणितत्वे सति विकल्पः- विरुद्धयोरुभयोर्युगपद् विधातुमशक्यत्वात्, अन्यथात्वविधानमेव। अनुवादे तूभयोरप्यप्राधान्येनाबलत्वाद् विरोधे हृदि जागरूकेऽपि तत्कार्य्यानुत्पादः। एवं प्रकृतेऽनूद्यमानयोः श्रृङ्गारकरुणयोर्न विरोधः।

यहां पर (एहि गच्छ–) जैसे विधि और निषेधके केवल अनुवाद मात्ररूपमें समावेश करनेसे दोष नहीं होता है, वैसे ही 'क्षिप्तो हस्त–' इस स्थलमें भी समझना चाहिये।

प्रकृते सङ्घटयति—

श्लोके ह्यस्मिन्नीर्ष्याविप्रलम्भश्रृङ्गार—करुणवस्तुनोर्न विधीयमानत्वम्, त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वात्, तदङ्गत्वेन च तयोर्व्यवस्थानात्।

ईर्ष्याविप्रलम्भो मानहेतुकविप्रलम्भः। वस्तुत्वं च केवलान्वयित्वाद् रसेऽपि तिष्ठति। विधीयमानत्वं विधेयता। वाक्यार्थत्वं तद्बोधप्राधान्यम्। तयोर्विप्रलम्भकरुणयोः।

वस्तुतस्तु तत्र निदर्शनोपस्थापितः श्रृङ्गारः करुणस्याङ्गमिति न तयोः समकक्षतेत्यन्यत्र स्फुटम्।

इस (क्षिप्तो हस्त–) श्लोकमें ईर्ष्या विप्रलम्भ और करुणरस विधीयमान नहीं हैं, और त्रिपुरारि शिवके प्रभावातिशयके मुख्य वाक्यार्थ होनेसे एवं उक्त दोनों रसोंको उसके अङ्ग रूपमें स्थित होनेसे उनका परस्पर विरोध नहीं होता।

ननूद्देश्यविधेयभावो वाच्यदशामायेव विविच्यते, न तु व्यङ्ग्यताऽऽपत्तौ, तत्राऽन्यनैरपेक्ष्यात्। रसादयस्तु व्यङ्ग्या एवेत्यसकृदुक्तमिति कथं तेषामुद्देश्यत्वाभ्युपगमेन प्रकृते विरोधपरिहार इत्याक्षिप्य समादधाति—

न च रसेषु विध्यनुवादव्यवहारो नास्तीति शक्यं वक्तुम्, तेषां वाक्यार्थत्वेनाभ्युपगमात्।

न चेति वक्तुमित्यनेनान्वेति। तेषां रसादीनाम्।

इदमुच्यते—वाक्यार्थता यथा वाच्यस्य, तथैव व्यङ्ग्यस्यापीति कुतो न वाच्यवद् व्यङ्ग्येऽप्युद्देश्यविधेयभावविचारः। किञ्च प्रधानत्वेन विधेयताऽप्रधानत्वेन तूद्देश्यतेति रसादीनामपि क्वचिदप्राधान्येनोद्देश्यता नासम्भविनी।

रसोंमें विधि और अनुवादका व्यवहार नहीं होता है, यह नहीं कह सकते, क्योंकि उन रसोंको वाक्यार्थ रूपसे ही स्वीकार किया जाता है।

तदेव समर्थयति—

**वाक्यार्थस्य वाच्यस्य च यौ विध्यनुवादौ तौ तदाक्षिप्तानां रसानां केन वार्येते।**

चकारः प्रक्षिप्तः प्रतिभाति, तदर्थस्यात्रानन्वितत्वेनाविवक्षितत्वात्। वाक्यार्थबोधप्राधान्याप्राधान्यनिबन्धने विधेयोद्देश्यत्वे वाच्यार्थस्य यदि निर्णीते एव, तर्हि, तदनुसारं ततो व्यज्यमानस्यापि ते निर्णीते एवेति सारम्।

वाच्य रूप वाक्यार्थमें जो विधि और अनुवादरूपता रहती है, उस विधि अनुवाद रूपताको उस वाच्यार्थसे आक्षिप्त रसादिमें कौन रोक सकता है, अर्थात् जब वाच्यार्थमें विधि और अनुवाद रूपता रह सकती है, तब व्यङ्ग्य रसादिमें वह क्यों नहीं रह सकती ?

ननु रसादीनां काव्यवाक्यप्रतिपाद्यत्वरूपकाव्यार्थत्वस्य सर्वसम्मतत्वाभावादुद्देश्यविधेयत्वयोरसम्भव इति कथं विरोधपरिहार इति शङ्कित्वा निरस्यति—

**यैर्वा साक्षात् काव्यार्थता रसादीनां नाभ्युपगम्यते, तैस्तेषां तन्निमित्तता तावदवश्यमभ्युपगन्तव्या। तथाऽप्यत्र श्लोके न विरोधः।**

ते काव्यस्य साक्षाद्वाच्या विभावादयो निमित्तानि सहकारिणो येषां ते तन्निमित्ता रसादयः तेषां भावस्तत्ता। अत्र 'क्षिप्तः' इत्यादौ श्लोके।

अथवा जो व्यक्ति रसादिको साक्षात् काव्यका अर्थ नहीं मानते हैं, उनको भी रसादिमें काव्यार्थ व्यङ्ग्यता अवश्य माननी होगी, इतनेसे ही 'क्षिप्तो हस्तावलग्न'—इस श्लोकमें विरोध दूर हो जाता है।

उपपादयति—

**यस्मादनूद्यमानाङ्गनिमित्तोभयरसवस्तुसहकारिणो विधीयमानांशाद् भावविशेषप्रतीतिरुत्पद्यते, ततश्च न कश्चन विरोधः।**

यस्माद्धेतोः—अनूद्यमानान्युद्देश्यीक्रियमाणानि यान्यङ्गानि रसाद्युपकारकाणि

विभावादीनि, तन्निमित्तं तद्धेतुकं यदुभयं द्वयं विप्रलम्भकरुणरूपं रसवस्तु रसतत्त्वं, तस्य सहकारिणः, सहकारिकारणादुपकारकाद्वा, विधीयमानांशाद् विधेयीभूतशाम्भवशराग्निकृतदुरितदाहरूपाद्, भावविशेषस्य त्रिपुररिपुविषयकरतिलक्षणस्य, प्रतीतिरास्वाद उत्पद्यत एव, ततश्च न कश्चन विरोध इति सन्दर्भसङ्गतिः ।

लोचनावधारिता प्रेयोऽलङ्कारस्य प्रतीतिस्त्वत्र न भवति, शिवविषयकरतिभावस्यैव सर्वतोऽत्र प्राधान्याद्; भावाप्राधान्य एव तदङ्गीकरणात् । किन्तु यद्यलङ्कारे पक्षपातः, तर्हि शृङ्गारकरुणयोरङ्गत्वाद् रसवदलङ्कारो निर्णीयताम् ।

**क्योंकि अनूद्यमान रसाङ्गभूत हस्ताक्षेपादिसे प्रतीत होने वाले करुण रस और विप्रलम्भ शृङ्गार रूप रस वस्तुके सहकारको प्राप्त कर विधीयमान जो शिवशराग्निजनित दुरितदाह है, उससे देवादि विषयक रतिभाव रूप शिवप्रतापातिशयमूलक भक्तिकी प्रतीति उत्पन्न होती है, अतः कोई विरोध नहीं है ।**

उक्तार्थे प्रसिद्धिं दर्शयति—

दृश्यते विरुद्धोभयसहकारिणः कारणात् कार्य्यविशेषोत्पत्तिः ।

विरुद्धमुभयं सहकारि सहायकं यस्येति बहुव्रीहिः, तस्मात् कारणात् कार्यविशेषस्यौदनादिरूपस्योत्पत्तिः, हि यतो दृश्यते, तस्मान्नात्र विरोध इत्यन्वयः ।

इदमेतेन सन्दर्भेण बोध्यते—ये तावद् रसादीनां वाच्यत्वाभावादुद्देश्यविधेयभावं नाङ्गीकुर्वन्ति, तेषां मते रसादीनामनुवाद्यत्वविरहादधुना व्यवस्थापितो विरुद्धयोः सह समावेशो न घटते, तस्मात् किञ्चिदुपायान्तरमवश्यमिह तदर्थमवलम्बनीयम् । तच्चेदम्—यथा जलस्य शैत्यं वह्नेरुष्णत्वं च मिथो विरुद्धमपि सम्भूय तण्डुलानामोदनरूपं कार्यं जनयितुं सहकरोति, तथैव निमित्तभूतहस्तक्षेपाद्यनुभावसूचितः करुणो विप्रलम्भश्च परस्परं विरुद्धावपि मिलित्वा शाम्भवशराग्निजनितदुरितदाहस्य, त्रिपुररिपुप्रभावातिशय— तद्विषयकरतिरूपभावोभयव्यञ्जनात्मककार्यं जनियितुं सहकरोतीति स्वीकरणीयम् । ततश्च मिथोविरुद्धयोरपि द्वयोः सहकारिकारणयोरेककार्यजनकता नासम्भविनी । न हि सहकारिणां विरोधः कार्योत्पत्तिं प्रतिबध्नाति, जलवह्न्योर्विरोध इवौदनोत्पत्तिम् । यौगपद्येन सामानाधिकरण्यं तु क्वचिदुभयोः पारवश्यात्, क्वचन मिथोऽङ्गाङ्गिभावात्, कुत्रचिदवच्छेदकभेदेन व्यवस्थानादवगन्तव्यम् ।

**क्योंकि जल और अग्नि रूप परस्पर विरुद्ध शीतोष्णके सहयोगको प्राप्त किये हुए तण्डुलादि मुख्य कारणसे ओदन रूप कार्य विशेषकी उत्पत्ति देखी जाती है ।**

नन्वेवं परिहारस्य सर्वत्र सम्भवाद् विरोधः कुत्र स्यात्, किंरूपश्च स्यादित्याशङ्कायामाह—

**विरुद्धफलोत्पादनहेतुत्वं हि युगपदेकस्य कारणस्य विरुद्धत्वम्, न तु विरुद्धोभयसहकारित्वम्।**

विरुद्धं यत्फलं कार्यं तदुत्पादनहेतुत्वम्। विरुद्धं मिथःप्रतिकूलमुभयं सहकारि यस्य तत् तथा, तस्य भावस्तत्त्वम्।

न ह्येकमेव कारणमेकदैव विरुद्धं कार्यं जनयितुं क्षमते, न हि सलिलं सहैव तापं क्लेदं च जनयति, कालभेदेन तु वह्निसम्पृक्तं सत् तापं, स्वतस्तु क्लेदमपि जनयत्येवेति विरुद्धकार्य्यस्य युगपदुत्पादकत्वमेव कारणस्य विरुद्धत्वं प्रसिध्यति। सहकारिविरोधेन तद्विरुद्धत्वाङ्गीकारे तु, प्रागुक्तौदनोत्पत्तिर्न घटते। तस्मात् सहकारिविरोधेन नात्र विरोधो, न वा कारणविरोधस्याप्रसिद्धिरित्याकूतम्।

**इतने माननेसे विरोधके महत्त्वको सर्वथा अकिञ्चित्कर नहीं समझना चाहिये, अर्थात् तावता विरोधका महत्त्व नहीं घटता, क्योंकि एक कारणका एक साथ विरुद्ध कार्योंके उत्पादनका हेतुत्व मानना ही विरुद्ध है, न कि दो विरोधियोंको उस प्रधान कारणके सहकारी माननेमें कोई विरोध है।**

ननु श्रव्यकाव्येऽभिनयाभावाद् विरुद्धयोरप्यर्थयोः समावेशे न दोषः, अभिनयमात्रशरणे दृश्यकाव्ये गमनागमनादिविरुद्धार्थाभिनयः कथं स्यादित्याशङ्क्य समाधत्ते—

**एवं विरुद्धपदार्थविषयः कथमभिनयः प्रयोक्तव्य इति चेत्, अनूद्यमानैवंविधवाच्यविषये या वार्ता साऽत्रापि भविष्यति।**

अनूद्यमानमभिधेयीभवद् एवंविधं परस्परविरुद्धरूपं वाच्यं यत्र, तादृशो यो विषयस्तत्र प्रागुक्ते 'एहि गच्छ' इत्यादौ या वार्ता यः समाचारः प्रतीकार इति यावत्, साऽत्रापि 'क्षिप्तः' इत्याद्यभिनेयकाव्येऽपि भविष्यतीत्यर्थः।

अयं भावः—'एहि गच्छ' इत्यादावनूद्यमानयोर्गमनागमनाद्योर्विरुद्धार्थयोर्यथा क्रमशोऽवगमः, तथैव 'क्षिप्तः' इत्यादौ तादृशयोः करुणविप्रलम्भयोरभिनयोऽपि बोद्धव्यः, तुल्यन्यायात्। न हि तत्रापि युगपदेवोभयोः प्रतीतिः, विषयभेदेन भिन्नयोर्ज्ञानयोरयौगपद्यनियमात्। अथवाऽत्र प्रतीयमानेषु महेश्वरविषया रतिः प्रधानम्, तत्पोषकतया तस्य प्रभावातिशयोऽङ्गम्, तस्यापि पोषणात् करुणः, तस्यापि च 'कामीव' इत्युपमोपस्थापितो विप्रलम्भशृङ्गार इति साक्षादनुपकारकत्वाद् विप्रकृष्टस्य

विप्रलम्भशृङ्गारस्य लेशतः कश्चित्कोऽभिनयः 'साऽश्रुनेत्रोत्पलाभिः' इति पर्यन्तं प्राधान्येन करुणव्यञ्जकाभिनयस्य न विरुद्धः, यतस्तद्व्यङ्ग्यस्य विप्रलम्भस्य बलवत्त्वविरहादङ्गत्वमेव, न तु विरोधक्षमत्वम् ।

इस प्रकार श्रव्यकाव्यमें करुण और विप्रलम्भका विरोध परिहार करने पर भी नाटकादि दृश्य काव्यमें इस प्रकारका परस्पर विरुद्ध पदार्थ विषयक अभिनय कैसे करना चाहिये ? इस प्रश्नका यह उत्तर है कि इस प्रकारके 'एहि, गच्छ, पत, उत्तिष्ठ' इत्यादि विरुद्ध अनूद्यमान पदार्थके विषयमें अभिनयका जो प्रकार अपनाया जाय, वही प्रकार 'क्षिप्तो हस्तावलग्नः' यहां पर भी अपनाना चाहिये। फलितार्थ यह हुआ कि 'क्षिप्तोहस्त–' इत्यादिमें शिवके प्रभावका प्रकाशन करनेमें करुण रसके अधिक उपयोगी होनेसे वह अधिक प्राकरणिक है, परन्तु विप्रलम्भके तो उपमाके बलसे द्योतित होने पर भी शिवके प्रभावातिशय प्रकाशनमें उपयोगी नहीं होनेसे वह दूरस्थ हो जाता है, इसलिये उसका अधिक अभिनय नहीं करके करुण रस पोषक अभिनयका ही अधिक मात्रामें प्रदर्शन करते हुए कार्यक्रमको समाप्त करना चाहिये, जिससे कि शिवजीका प्रभावातिशय द्योतित हो।

उपसंहरति—

एवं विध्यनुवादनयाश्रयेणात्र श्लोके परिहृतस्तावद् विरोधः ।

नयो नीतिर्मतमिति यावत् । तावच्छब्दः परिहारस्य प्राथम्यं बोधयति ।

इस प्रकार विधि और अनुवादकी नीतिका अवलम्बन कर 'क्षिप्तो हस्तावलग्नः' इस श्लोकके विरोधका परिहार किया गया।

विरोधपरिहारस्यापरमपि प्रकारं दर्शयति—

किञ्च नायकस्याभिनन्दनीयोदयस्य कस्यचित् प्रभावातिशयवर्णने, तत्प्रतिपक्षाणां यः करुणो रसः, स परीक्षकाणां न वैक्लव्यमादधाति । प्रत्युत प्रीत्यतिशयनिमित्ततां प्रतिपद्यते इत्यतस्तस्य कुण्ठशक्तिकत्वात् तद्विरोधविधायिनो न कश्चिद्दोषः ।

अभिनन्दनीयः श्लाघ्य उदय उन्नतिर्यस्येति विग्रहः । तत्प्रतिपक्षाणां प्रतिनायकप्रभृतीनाम् । रसे तत्सम्बन्धिता च तदालम्बनकत्वेन । परीक्षकाणां विवेचनाकुशलानां सहृदयानाम् । वैक्लव्यमुद्वेगः । आधानं जननम् । तस्य तत्रत्यकरुणस्य । कुण्ठा सामग्रीसमवधानवैधुर्यान्मन्दा शक्तिर्यस्य स तादृशः, तस्य भावस्तत्त्वं, तस्मात् । 'तद्विरोधविधायिनः' इत्यस्य करुणविशेषणवाचकत्वे तु स चासौ विरोध

इति विग्रहः, सत्त्वेऽपीति शेषश्च । नायकालम्बनकप्रधानीभूतरसविशेषणपरत्वे तु तस्य विरोध इति विग्रहः, शब्दानुकर्षश्च प्राग्वदेव ।

अयमाशयः--विपक्षालम्बनत्वेनोपनिबद्धः करुणो रसो भयानक इव नेतुः प्रभावप्रकर्षपोषकत्वेन तदालम्बनकवीररसं पुष्णात्येव न तु विरुणद्धि, स्वसामग्री-विरहेण क्षीणशक्तिकत्वात् 'अशक्तस्तस्करः साधुः' इति न्यायात् ।

उदाहरणन्तु--'कुरबक ! कुचाघातक्रीडासुखेन वियुज्यसे,
बकुलविटपिन् ! स्मर्तव्यं ते मुखासवसेचनम् ।
चरणघटनाशून्यो यास्यस्यशोक ! सशोकता-
मिति निजपुरत्यागे यस्य द्विषां जगदुः स्त्रियः ॥' इति ।

अत्र हि कुचाघातादिपदव्यङ्ग्याङ्गभूतश्रृङ्गारपोषितः करुणरसो व्यङ्ग्यं वर्णनीय-नृपप्रभावातिशयं पुष्यत्येवेति न क्षोभो लभते पदमेतद्भावकानां चेतसि सचेतसामिति विभावनीयम् ।

किसी प्रशंसनीय अत्यन्त उत्कृष्ट नायकके प्रभावातिशयके वर्णन स्थलमें उस नायकके रिपुओंके विषयमें जो करुण रस द्योतित होता है, वह विवेक शील प्रेक्षकों को व्याकुल नहीं करता, अपितु अतिशय हर्षका ही कारण बनता है, इसलिये उस विरोधी करुणके चित्तद्रुति रूप स्वकार्योत्पादनमें कुण्ठित शक्ति हो जानेसे कोई दोष नहीं होता ।

उपसंहरति--

**तस्माद् वाक्यार्थीभूतस्य रसस्य भावस्य वा विरोधी यो रसः, स रस-विरोधीति वक्तुं न्याय्यः, न त्वङ्गभूतस्य कस्यचित् ।**

कस्यचिद् रसस्य भावस्य वा । एतेन प्रधानीभूतं भावं शङ्करप्रभावाधिक्यं वाऽविरु-न्धतः श्रृङ्गारस्य करुणस्य वा निबन्धेऽपि प्रकृतश्लोके रसविरोधविरहाद्दोषाभावो दर्शितः ।

इसलिये वाक्यार्थके प्रधानीभूत रस या भावके विरोधीको ही रस विरोधी कहना उचित है, नकि किसी अप्राधानीभूत रसके विरोधीको रस विरोधी कहना ठीक है, इससे यह भी सूचित होता है कि 'क्षिप्तो हस्तावलग्नः-' इस श्लोकमें शिव प्रभावातिशय या तद्विषयक रतिभावके अविरोधीभूत उक्त श्रृंगार। या करुणके निबन्धनमें भी कोई दोष नहीं है ।

इदानीं प्रधानरसादिविरोधिनो निवेशेऽपि दोषाभावं प्रकारान्तरेण व्याहरति--

**अथवा वाक्यार्थीभूतस्यापि कस्यचित् करुणरसविषयस्य तादृशेन श्रृङ्गारवस्तुना भङ्गिविशेषाश्रयेण संयोजनं रसपरिपोषायैव जायते ।**

प्रधानीभूतं करुणं विरुन्धतः शृङ्गारस्यापि, यदि—अग्राम्यतया चमत्कारिण्या रीत्या सन्निवेशः क्रियते, तदा स नैव दोषं जनयति, किन्तु पुष्णात्येव रसमिति सारम्। तथा च प्रकृते शाम्भवशराक्रमणदर्शनेन शृङ्गाराङ्गभूतः प्राचीनः प्रणयकलहवृत्तान्तः स्मर्यमाणः साम्प्रतं प्रनष्टः शोकमुद्दीपयन् करुणविभावतामेव गच्छतीति तदुपयोगित्वे कुतो विरोधः।

पूर्वमें करुण और विप्रलम्भको अन्यका अङ्ग मानकर विरोधको दूर किया है, अब श्रृंगारको करुणका ही अङ्ग मानकर विरोधका परिहार करते हैं—अथवेति। प्रधानीभूत करुण रसके किसी विषयको उसी प्रकारके विरोधी भूत श्रृंगार विषयके साथ कुछ विलक्षण ही ढङ्गसे जोड़ देनेपर वह प्रकृत रसका पोषक ही हो जाता है।

तदेव हेतुतां दर्शयन्नभिदधाति—

**यतः प्रकृतिमधुराः पदार्थाः शोचनीयतां प्राप्ताः प्रागवस्थाभाविभिः संस्मर्यमाणैर्विलासैरधिकतरं शोकावेगमुपजनयन्ति।**

शोचनीयताप्राप्तौ हेतुस्तेषां विनाशः।

क्योंकि स्वाभाविक सुन्दर पदार्थ शोचनीय अवस्थाको प्राप्त होकर पूर्वावस्थामें अनुभूत सौन्दर्यके स्मरणसे और भी अधिक शोकावेगको उत्पन्न करता है।

उदाहरति—

**यथा—**

युधिच्छिन्नं भूरिश्रवसो भुजं विलोक्य तदङ्गना विलपन्ति—

**'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।**
**नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥' इत्यादौ।**

भारतस्त्रीपर्वघटकं पद्यमिदम्। अयं पुरो दृश्यमानः (अस्माकम्) रशनायाः काञ्च्याः, उत्कर्षी सुरतारम्भ ऊर्ध्वमाकर्षकः, पीनयोः स्तनयोर्विमर्दनो विशेषेण मर्दनकारकः, नाभिरूरुजघनं च नाभ्यूरुजघनं स्पृशति तच्छीलः, नीव्या वसनग्रन्थेर्विस्रंसनो मोचकः स तथा प्रागसकृदनुभूतः करो भुजोऽस्तीत्यर्थः।

अत्र शृङ्गारानुकूलरशनाकर्षकत्वादिप्राचीनविलासस्मरणव्यङ्ग्योऽपि शृङ्गारः साम्प्रतं तत्स्मरणस्य शोकातिशयजनकतयोपयोगात् करुणस्याङ्गम्। शोकस्यैव विश्रान्तिधामतया करुणस्यैव प्राधान्यम्।

जैसे महाभारतके युद्धक्षेत्रमें मृत भूरिश्रवाके कटकर अलग पड़े हुए हाथको देखकर उसकी पत्नी विलाप करती है—संभोग कालमें करधनीको हटानेवाला,

उन्नत कुचोंको मर्दन करनेवाला, नाभि, जंघा और नितम्बको छूनेवाला और नीवी बन्धनको खोलनेवाला यह प्राणनाथका वही भुज है ।

यहां पर भूरिश्रवाके मर चुकनेसे करुण रस प्रधान रूपसे प्रतीत होता है, और पूर्वानुभूत शृङ्गार विषयक स्मरण तो उसका और अधिक उद्दीपक होनेसे अङ्ग बन जाता है ।

प्रकृते सङ्गमयति—

तदत्र त्रिपुरयुवतीनां शाम्भवः शराग्निरार्द्रापराधः कामी यथा व्यवहरति, तथा व्यवहृतवानित्यनेनापि प्रकारेणास्त्येव निर्विरोधत्वम् ।

उपमानोपमेयभावोपन्यासोऽत्र शृङ्गारस्य करुणाङ्गतां प्रकाशयति । अपिशब्दोऽपरमपि त्रिपुररिपुप्रभावातिशयाङ्गत्वप्राप्तिलक्षणविरोधाभावप्रकारं समुच्चिनोति ।

इसलिये यहां पर तुरत (ताजा) अपराध करनेवाला कामुक व्यक्ति जिस प्रकार व्यवहार करता है, उसी प्रकार शिवजीके शराग्निने त्रिपुर युवतियोंके साथ व्यवहार किया, इस प्रकारसे भी (स्मर्यमाण कामुक व्यवहारके करुण पोषक होनेसे) विरोध नहीं प्रतीत होता, क्योंकि शिवजीके शराग्निकी चेष्टाओंके अवलोकनसे पूर्वानुभूत प्रणय कलह वृत्तान्तकी स्मृति शोकका उद्दीपक बनकर करुणको और परिपुष्ट करती है ।

पर्यन्ते 'क्षिप्तः' इत्यादिश्लोके दोषाभावं निगमयति—

तस्माद् यथा यथा निरूप्यते, तथा तथाऽत्र दोषाभावः ।

प्रतीयत इति शेषः ।

इसलिये इस विषयमें जितनी ही अधिक गहराई तक विचार करते हैं, उतना ही अधिक दोषाभाव प्रतीत होता है ।

ईदृशान्यन्यान्यपि विरोधाभावोदाहरणानि सन्तीति बोधयितुमाह—

इत्थञ्च ।

इत्थमङ्गत्वप्राप्त्या । अस्य च निर्विरोधत्वेऽन्वयः ।

चाटुकारो राजानं व्याहरति—

'क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः,
पादैः पातितयावकैरिव पतद्बाष्पाम्बुधौताननाः ।
भीता भर्तृकरावलम्बितकरास्त्वद्वैरिनार्योऽधुना,
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥'

इत्येवमादीनां सर्वेषामेव निर्विरोधत्वमवगन्तव्यम् ।

हनुमत्कविकृतखण्डप्रशस्तौ पठ्यतेऽयं श्लोकः। हे राजन्! अधुना त्वया विजिते पत्यौ, त्वद्वैरिणां नार्यो वनिताः, क्षताः कुशडिम्भैर्विद्धा कोमलाश्चाङ्गुलयो याः, ताभ्यो गलत् क्षरद् रक्तं शोणितं येषु तादृशैः, अत एव पातितो निहितो यावकोऽलक्तको यत्र, तादृशैरिव पादैश्चरणैः (करणैः) सदर्भाः सकुशाः स्थलीरकृत्रिमवनभूमी विवाहवेदीश्च क्रामन्त्यश्चरन्त्यः, पतद्भिर्बन्धुजनविरहोद्भूतशोकावेगाद् धूमाक्षिसम्पर्याँगाच्च प्रस्रवद्भिर्बाष्पाम्बुभिरश्रुभिः, धौतं प्रक्षालितमाननं यासां तथाभूताः, भीता रिपुर्मामद्राक्षीदिति परिणेता नात्यनुरक्तोऽभूदिति च त्रस्ता, भर्तुः पत्युर्वरस्य च करेणावलम्बिता धृताः करा हस्ता यासां तादृश्यः, पुनरपि भूयोऽप्युद्यन् जायमानो विवाहो यासां ता इव दावाग्निं वनवह्निं विवाहहोमानलं च परितो भ्रमन्ति पलायिता लाजहोमपराश्च सञ्चरन्तीत्यर्थः।

विवाहाङ्गभूतलाजहोमकाले वधूनामेवं समुदाचारः।

अत्र प्रधाने राजविषयकरतिभावे मिथोविरुद्धयोरपि करुणशृङ्गारयोरङ्गभावेन विरोधनिवृत्तिः। साम्प्रतिकशोचनीयदशावर्णनात् करुणः प्राचीनविवाहावस्थावर्णनाद् शृङ्गारश्चांशतः प्रतीयमानौ रतावङ्गतां प्राप्ताविति द्रष्टव्यम्।

दूसरे भी इस प्रकारके विरोधाभावके उदाहरण हैं यह विषय उपसंहार द्वारा बतलाते है—इत्थञ्चेति। जैसे कोई चाटुकार राजासे कहता है—घायल हुई अत्यन्त सुकुमार अङ्गुलियोंसे रुधिर टपकाती हुई अत एव मानो महावर लगे हुए पादों द्वारा, कुशांकुरसे नुकीली भूमि पर चलती हुई, एवं गिरते हुए आंसुओंसे मुखको प्रक्षालित किये हुए, तथा भयभीत होनेसे पतियोंके हाथमें हाथ पकड़ाए हुए, तुम्हारे रिपुओंकी पत्नियां इस समयमें फिर विवाहके लिये, उद्यत सी होती हुई दावाग्निके चौतरफ घूम रही हैं।

यहां पर विवाहका स्मरण, रिपुस्त्रियोंके वर्तमान कालिक विपत्तिमूलक शोक स्थायी भावका उद्दीपन विभाव बनकर अतिशय शोकको द्योतित करता है, इस प्रकारके सारे उदाहरणोंमें विरुद्ध रूपसे प्रतीत होनेवाले रसादिमें विरोधाभाव समझना चाहिये।

इयता प्रबन्धेन 'अङ्गभावं वा प्राप्तानामुक्तिरच्छला' इति कारिकाऽवयवानुकूलार्थः सुनिरूपित इत्युपगमयन्नुपसंहरति—

एव तावद् रसादीनां विरोधिरसादिभिः समावेशासमावेशयोर्विषयविभागो दर्शितः।

तावच्छब्दः प्राथम्यं बोधयन्नेतत्प्रसङ्गे वक्तव्यस्य सावशेषतां सूचयति।

इस प्रकार रसादिके विरोधी रसादिके साथ समावेश एवं असमावेशके विषय का विभाग दर्शाया गया।

तमेवावशिष्टमंशं दर्शयितुं कारिकामवतारयति—

**इदानीं तेषामेकप्रबन्धनिवेशने न्याय्यो यः क्रमस्तं प्रतिपादयितुमुच्यते—**

तेषां रसादीनां क्रम इति सम्बन्धः। पूर्वं मिथोविरुद्धानां रसादीनां विरोधनिवृत्तिप्रकार उक्तः, साम्प्रतं तेषां सौमनस्यमेकत्र सन्निवेशपरिपाटी प्रकटीक्रियत इत्यपौनरुक्त्यं कथञ्चित् कल्पनीयम्।

अब उन रसोंके एक प्रबन्ध काव्यमें समावेश करनेके लिये जो उचित व्यवस्था है, उसका प्रतिपादन करते हैं, अर्थात् पूर्वमें परस्पर विरुद्ध रसादिका विरोध निवृत्ति प्रकार कहा था, अब उनका सौमनस्यपूर्वक एकत्र सन्निवेश क्रम कहते हैं।

**'प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने।**
**एको रसोऽङ्गीकर्तव्यस्तेषामुत्कर्षमिच्छता॥ ७७॥'**

प्रबन्धानां श्रव्यदृश्यकाव्यानां नानारसानां निबन्धने सन्निवेशने, प्रसिद्धे भरताद्याचार्यनिरूपितत्वात् प्रख्याते सत्यपि, तेषामुक्तप्रबन्धानामुत्कर्षं सौन्दर्याधिक्यम्, इच्छता कविना, एकस्तेषामेव रसानामन्यतमः कश्चिद् रसः अङ्गीकर्तव्यः, प्रधानतया निबन्धनीय इत्यर्थः।

श्रव्य एवं दृश्य काव्यात्मक प्रबन्धोंके अनेक रसोंका सन्निवेश भरतादिसे प्रतिपादित होनेके कारण प्रसिद्ध होने पर भी उन रसोंकी उत्कृष्टताको चाहनेवाले कविको चाहिये कि किसी एक रसको अवश्य प्रधान बनावे।

तदाह—

**प्रबन्धेषु महाकाव्यादिषु नाटकादिषु वा विप्रकीर्णतयाऽङ्गाङ्गिभावेन वा बहवो रसा उपनिबध्यन्त इत्यत्र प्रसिद्धौ सत्यामपि, यः प्रबन्धानां छायाऽतिशयमिच्छति, तेन तेषां रसानामन्यतमः कश्चिद् विवक्षितो रसोऽङ्गित्वेन निवेशयितव्य इत्ययं युक्ततरो मार्गः।**

प्रकारवाचिनावादिशब्दौ तत्सजातीयानि सकलानि श्रव्यकाव्यानि दृश्यकाव्यानि च बोधयतः।

यत्तु-'महाकाव्यादिष्वित्यादिशब्दः प्रकारेणाभिनेयान् भेदानाह, द्वितीयस्त्वभिनयान्' इति कैश्चिदभिहितम्, तन्न, अभिनयस्य प्रबन्धत्वाभावात् तत्साजात्यविरहात्। विप्रकीर्णताऽऽपणपुरुषवन्मिथोनैरपेक्ष्येणावस्थितिः। अङ्गाङ्गिभावश्च सापेक्ष्येण।

अत्र रसानां विप्रकीर्णता प्रबन्धनायक-प्रतिनायक-पताकानायक-प्रकरीनायक-नायिकाप्रभृत्यालम्बनकत्वेन। अङ्गाङ्गिभावस्तु प्रबन्धनायकमात्रालम्बनकत्वेन। विवक्षित एव रसोऽङ्गी विधेयो, न तु यः कश्चनाविवक्षितोऽपि। तस्मिन्नङ्गिनि, प्रस्तुते चाङ्गे, राजातिचारिणि भृत्ये, भृत्यानुचारिणि च राजनीव, सुषमाऽपकर्षः प्रतीयेत।

यद्यपि पर्यायबन्धप्रभृतिकाव्येषु रसानां विप्रकीर्णत्वादेकरसस्याङ्गित्वं भवति, किन्तु—महाकाव्यादिष्वेकरसाङ्गित्वस्यैवच्छायाऽतिशयजनकत्वादयमेव मार्गः श्रेयानिति युक्ततरपदघटकस्तरप्प्रत्ययः प्रत्याययति। प्रबन्धान्तरेषु रसानां विप्रकीर्णतया निवेशोऽपि सौन्दर्यहेतुरिति युक्त एव। महाकाव्यादिषु पुनरङ्गाङ्गिभावेनैव तेषां निवेशनं सुषमां पुष्यतीति सैव रीतिरुचिततरेति तथैव विधेयं निवेशनमित्युपदिश्यते क्रमः।

भागवतादि श्रव्य महाकाव्यमें या नाटकादि दृश्य काव्यमें नायक, प्रतिनायक आदि वृत्तितया बिखरे हुए रूपमें गौणमुख्य रूपसे अनेक रसोंका निरूपण किये जानेकी परिपाटी होने पर भी जो कवि काव्यके अत्यधिक सौन्दर्यको चाहता है, उसे चाहिये कि उन रसोंमें से किसी एक स्वाभिलषित रसको ही प्रधान रूपसे समाविष्ट करे, यही सबसे अधिक उत्तम मार्ग है।

वेद्यान्तरस्पर्शशून्यस्वप्रकाशाखण्डस्वरूपस्य रसस्य रसान्तरेण सह समावेशोऽपि दुर्घटः, दूरेऽङ्गाङ्गिभावः, स्वसामग्रीप्राप्तपरिपोषस्य कस्यचिदप्यङ्गत्वायोगादेकस्याङ्गित्वासम्भवादित्याशङ्कां समाधातुं कारिकाऽवतरणं रचयति—

**ननु रसान्तरेषु बहुषु प्राप्तपरिपोषेषु सत्सु, कथमेकस्याङ्गिता न विरुध्यत इत्याशङ्क्येदमुच्यते—**

क्षीणसम्पद्राजवदपुष्ट एव रसोऽङ्गं कस्यापि भवितुमर्हति, कस्याप्यङ्गत्वाभावेऽङ्गिता पुनर्गगनकुसुमप्रायैव, सर्वेषां समबलत्वादित्याशयः।

दूसरे भी अनेकों रसोंके एक साथ परिपुष्टि प्राप्त होने पर उनमें किसी एकरसका ही प्रधान होना अनुचित क्यों नहीं होगा, इस प्रश्नका समाधान करते हैं—

**'रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः।**
**नोपहन्त्यङ्गितां सोऽस्य स्थायित्वेनावभासिनः॥ ७८॥'**

प्रस्तुतस्य प्रबन्धेष्वितिवृत्तव्यापकत्वेन प्रक्रान्तस्य, स्थायित्वेन पुनःपुनर्जायमानानुसन्धानगोचरीभावात् प्रधानत्वेनावभासिनोऽङ्गिनो रसस्य यो रसान्तरैर्लब्धपरिपोषैरपि प्राबन्धिकयत्किञ्चिदितिवृत्तावयवव्यापकत्वेनाङ्गभूतैः रसैः सह समावेशः, सोऽस्याङ्गिनो रसस्याङ्गितां नोपहन्ति, किन्तु पुष्णात्येवेत्यर्थः।

प्रस्तुत प्रधान रसका अन्य रसोंके साथ जो समावेश, वह आद्यन्त स्थायी रूपसे प्रतीत होनेवाले इस प्रधान रसके प्राधान्यका विघातक नहीं होता है ।

तदाह—

प्रबन्धेषु प्रथमतरं प्रस्तुतः सन् पुनःपुनरनुसन्धीयमानत्वेन स्थायी यो रसः, तस्य सकलसन्धिव्यापिनो रसान्तरैरन्तरालवर्तिभिः समावेशो यः, स नाङ्गितामुपहन्ति ।

प्रस्तुतस्य स्थायित्वं स्वस्य तदभावथाङ्गिताविघाताभावे निमित्तम् । सन्धयो मुखादयः पञ्चेतिवृत्तांशरूपा लक्षिता एव ।

'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।

प्रधानस्योपकारे हि तथा भूयसि वर्तते ॥' इति मीमांसासिद्धान्तानुरूपं स्वसामग्रीसंवलनलब्धपरिपोषा अप्यांशिकेतिवृत्तव्यङ्ग्याः स्वप्रकाशतां चमत्कारातिरेकाश्रयतां च गता इति स्वयमङ्गिनोऽपि रसाः प्रबन्धव्यापकेतिवृत्तव्यङ्ग्यत्वेनाङ्गिभूतस्य रसस्योपस्कारकत्वेनाङ्गतामेव यान्ति, न त्वङ्गितां विहन्तीति सारम् ।

श्रव्य या नाटकादि दृश्य काव्योंमें अन्य रसोंकी अपेक्षा सर्वप्रथम उपस्थित और बार बार उपलब्ध होनेवाला जो स्थायी रस है, सम्पूर्ण काव्यमें व्याप्त उस रसके मध्य मध्यमें आनेवाले रसोंके साथ जो सन्निवेश है, वह उसकी प्रधानताका विघातक नहीं होता है ।

इदमेवानुकूलनिदर्शनदर्शनेन स्थापयितुं कारिकामवतारयति—

एतदेवोपपादयितुमुच्यते—

उपपादनञ्च दृष्टान्तप्रदर्शनेन बोध्यम् ।

'कार्यमेकं यथा व्यापि प्रबन्धस्य विधीयते ।
तथा रसस्यापि विधौ विरोधो नैव विद्यते ॥ ७९ ॥'

यथा प्रबन्धस्य व्यापि लक्षिष्यमाणाधिकारिकवस्तुरूपत्वेन व्यापकमेकं कार्य्यं बीजबिन्दुप्रभृतिलक्षणं विधीयते कविना निबध्यते, तथैव व्यापकत्वेनैकस्य रसस्य विधौ निबन्धने विरोधोऽङ्गभूतरसैः सह तस्येति शेषः, नैव विद्यते वर्तत इत्यर्थः ।

अयं भावः—द्विविधं हि वस्तुरूपमितिवृत्तं भवति, किञ्चिदाधिकारिकं किञ्चित् प्रासङ्गिकञ्च । तदुक्तं दर्पणे—

'इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते ।
आधिकारिकमेकं स्यात् प्रासंगिकमथापरम् ॥

अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः ।
तस्येतिवृत्तं कविभिराधिकारिकमुच्यते ॥'
'अस्योपकरणार्थन्तु प्रासङ्गिकमितीष्यते ॥' इति ।

तद्विशेषरूपाश्चार्थप्रकृतयः पञ्च । तदप्युक्तं तत्रैव—
'बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ।
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ॥'
'अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति ।
फलस्य प्रथमो हेतुर्बीजं तदभिधीयते ॥'
'अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ।'
'व्यापिप्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ॥'
'प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ।'
'अपेक्षितं तु यत्साध्यमारम्भो यन्निबन्धनः ॥
समापनन्तु यत्सिद्ध्यै तत्कार्यमिति सम्मतम् ॥'

तत्र बीजबिन्दुरूपमाधिकारिकं वृत्तं पताकाप्रकरीकार्यात्मकैः प्रासङ्गिकवृत्तैरवान्तरे क्वचित् क्वचित् सङ्कीर्यते, न तु सर्वथा व्याप्यते—
'आगर्भादाविमर्शाच्च पताका विनिवर्तते ।

कस्माद् ? यस्मान्निबन्धोऽस्याः परार्थः परिकीर्त्यते ॥' इति भरतानुशासनात् पताकादेर्मध्य एव विरामात्, तथैव प्रबन्धव्यङ्ग्यतया प्रधानीभूतो रस आवान्तरिकप्रबन्धकिञ्चिदंशव्यङ्ग्यै रसैः सङ्कीर्णोऽपि, व्याप्तो न भवतीति स्वीयं प्राधान्यमङ्गित्वलक्षणं न जहाति, प्रत्युत तैरुपस्क्रियत एवेति न विरोधः ।

इसीका उपपादन करनेके लिये बतलाते हैं—कार्यमिति । जैसे प्रबन्ध काव्यमें आद्योपान्तमें रहनेवाला एक प्रधान विषय होता है और अवान्तरके छोटे मोटे अनेक विषय उसको परिपुष्ट करते हैं, वैसे ही रस विधानमें भी एक प्रबन्धव्यापी प्रधान रसको परिपुष्ट करनेके लिये अवान्तर अङ्गभूत रसोंके समावेश करनेमें विरोध नहीं होता, अर्थात् दो प्रकारका वस्तुरूप इतिवृत्त होता है, एक आधिकारिक और दूसरा प्रासङ्गिक, उनमें फल पर अपना आधिपत्य रखनेवाला याने प्रधान फल भोक्ता प्रभुके इतिवृत्तको आधिकारिक इतिवृत्त कहते हैं, जो कि प्रधान समझा जाता है और उसको पुष्ट करनेवालेको प्रासङ्गिक इतिवृत्त कहते हैं, अतः उन दोनोंमें स्वामि-सेवक भाव होनेसे विरोधका कोई सम्भव नहीं रहता ।

तदाह—

**सन्ध्यादिमयस्य प्रबन्धशरीरस्य यथा कार्यमेकमनुयायि व्यापकं कल्पते, न च तत् कार्यान्तरैर्न सङ्कीर्यते, न च तैः सङ्कीर्यमाणस्यापि तस्य प्राधान्यमपचीयते, तथैव रसस्याप्येकस्य सन्निवेशे क्रियमाणे विरोधो न कश्चित्। प्रत्युत प्रत्युदितविवेकानामनुसन्धानवतां सचेतसां तथाविधे विषये प्रह्लादातिशयः प्रवर्तते।**

सन्धयो मुखादयः। आदिशब्देनोपक्षेपादीनां पञ्चषष्टेस्तदङ्गानाङ्ग्रहणम्। स्वरूपार्थे मयट्। अनुयायि निर्वहणं यावदनुगामुकं बीजविन्दुरूपम्। सङ्कीर्यतेऽङ्गाङ्गिभावेन सम्बध्यते। अपचीयते ह्रसते। तथैव–अङ्गभूतरसान्तरसङ्कीर्णत्वेन। रसस्यैकस्य प्राधान्येनेति शेषः। प्रत्युदितो विवेकः सदसद्विचारो येषामिति बहुव्रीहिः। अनुसन्धानं स्मृतिविशेषः। तच्च रसानामङ्गाङ्गिभावप्रयोज्यविरोधनिवृत्तिहेतुकचमत्काराधानप्रकर्षविषयकम्। तथाविधे विषये तापसवत्सराजादिप्रबन्धांशे।

एतावता दृष्टान्तदर्शनेन रसानामङ्गाङ्गिभावो वर्णनीयेतिवृत्ताधीन इति सूचितम्।

जैसे मुख, प्रतिमुख, गर्भ, विमर्श, और निर्वहण रूप पञ्च सन्धियोंसे युक्त नाटकादि प्रबन्धकाव्यमें आद्योपान्त निरन्तर विद्यमान एक प्रधान भूत आधिकारिक वस्तुकी रचना की जाती है और वह आधिकारिक इतिवृत्त दूसरे प्रासङ्गिक इतिवृत्तोंसे संकीर्ण नहीं होता हो यह बात नहीं है, अर्थात् प्रासङ्गिक इतिवृत्तोंसे आधिकारिक इतिवृत्तका सम्बन्ध होना अनिवार्य्य रहता है, परन्तु उनसे सम्बन्ध होने मात्रसे भी आधिकारिक इतिवृत्तका प्राधान्य घट नहीं जाता है, इसी प्रकार दूसरे अनेक अङ्गभूत रसोंके साथ प्रधानभूत एक रसका मुख्यरूपसे समावेश करनेमें कोई विरोध नहीं होता है, प्रत्युत विवेकशील एवं वस्तुतत्त्वको परेखनेवाले सहृदयोंको इस प्रकारके विषयोंमें अतिशय आनन्द ही होता है।

अथ विरुद्धरससमावेशप्रकारान् दर्शयितुं कारिकाया अवतरणमाह—

**ननु येषां रसानां परस्परविरोधः, यथा—वीरशृङ्गारयोः, शृङ्गारहास्ययोः, रौद्रशृङ्गारयोर्वीराद्भुतयोर्वीररौद्रयो रौद्रकरुणयोः शृङ्गाराद्भुतयोर्वा तत्र भवत्वङ्गाङ्गिभावः। तेषां तु स कथं भवेद्, येषां परस्परं बाध्यबाधकभावः; यथा—शृङ्गारबीभत्सयोर्वीरभयानकयोः शान्तरौद्रयोः शान्तशृङ्गारयोर्वा, इत्याशङ्क्येदमुच्यते—**

इदमुच्यते—द्विधा हि विरोधो रसयोः, कयोश्चित् सामानाधिकरण्यासहिष्णुत्वेन,

कयोर्वाधनोन्मूल्योन्मूलकभावेन। तत्र येषां प्रथमप्रकारेण विरोधः; तेषां तु क्वचन कथञ्चन समावेशे विरोधनिवृत्तिरपि सम्भवति। तथा हि—मिथोविरुद्धयोरपि शृङ्गारवीरयो रुक्मिणीद्रौपदीस्वयंवरादौ युद्धनयपराक्रमादिभिः कान्ताऽधिगमे रत्युत्साहयोः स्थायिनोः समावेशात् तत्प्रकृतिकयोस्तयोरैकाधिकरण्यम्। एवं हास्यस्थायिनो हासस्य शृङ्गारे व्यभिचारितयोपयोगादङ्गाङ्गित्वेनैव शृङ्गारहास्ययोः समावेशः। तत्र हास्यं यद्यप्यपुरुषार्थस्वभावम्, तथाऽपि शृङ्गाराङ्गत्वेनैव तस्यातिरञ्जकतयाऽऽरोपितपुरुषार्थस्वभावत्वम्। तथा दारुणप्रकृतिकदैत्यदानवाद्यालम्बनकशृङ्गारस्योपलम्भबाहुल्येन रौद्रशृङ्गारयोरपि सामानाधिकरण्यम्। वीरप्रकृतिके लोकविस्मायकपराक्रमातिशयशालिनि विस्मयोत्साहस्थायिकयोरद्भुतवीरयोरपि समावेशः। निसर्गक्रोधने वीरे भीमसेनादौ रौद्रवीरयोर्मिथोऽविरुद्धक्रोधोत्साहप्रकृतिकयोरङ्गाङ्गिता। क्रूरप्रकृतिकजनविहितदारुणकृत्यजन्यशोकसमुपलम्भेन रौद्रकरुणयोः सापेक्षत्वम्। रत्नावलीघटकैन्द्रजालिकवृत्तान्तवद् रत्युत्पादवाध्यर्यजनकेतिवृत्तसम्भेदाच्छृङ्गाराद्भुतयोश्चाप्रतिकूलता।

येषां पुनर्द्वितीयेन प्रकारेण विरोधः, तेषां कथमङ्गाङ्गिभावः, स्थायिभावयोः परस्परोपमर्दकत्वात्। तथा हि—रतिमुच्छिद्यैव जुगुप्सा, उत्साहमुन्मूल्यैव भयम्, शममुद्धूयैव क्रोधो रतिश्च प्रवर्तत इति स्फुटस्तत्प्रकृतिकरसयोर्बाध्यबाधकभावः।

रसोंमें दो प्रकारका विरोध होता है, एक 'वध्यघातक भाव विरोध' और दूसरा 'सह अनवस्थान विरोध' उनमें जिन रसोंका परस्पर वध्य घातक भाव विरोध नहीं है, अपितु सहानवस्थान स्वरूप ही विरोध है, जैसे वीर और शृङ्गारका संग्राम, नीति, बहादुरी आदिसे कन्यारत्नके हरण करनेमें, शृङ्गार और हास्यका, रौद्र और शृङ्गारका, वीर और अद्भुतका, रौद्र और करुणका या शृङ्गार और अद्भुतका, यथा रत्नावलीमें ऐन्द्रजालिकके वर्णन प्रसङ्गमें, उनका परस्पर अङ्गाङ्गिभाव होनेमें कोई मुझे क्षोद क्षेम ( आपत्ति ) नहीं है, भले ही हो सकता है, परन्तु जिनका परस्परमें वध्य घातक भाव स्वरूप विरोध है, उनका वह अङ्गाङ्गिभाव किस तरह होगा, जैसे शृङ्गार और वीभत्समें एक नायिका रूप आलम्बनमें रति और जुगुप्साका वाध्य वाधक भाव विरोध है, एवं वीर और भयानकमें उत्साह और भयका आधारैक्यमें वध्य घातक भाव विरोध है, एवं शान्त और रौद्रमें नैरन्तर्य और विभावैक्यका वाध्यवाधक भाव विरोध है, या शान्त और शृङ्गारमें विभावैक्य और नैरन्तर्यका विरोध है, इस प्रश्नका उत्तर करते हैं—

इत्थं चैकत्र समावेशे न विरोधः, विरोधे च नाङ्गाङ्गिभाव इत्यविरोधकथनमनु-

चितमित्याशङ्कां समाधातुं कारिकामाह—

**'अविरोधी विरोधी वा रसोऽङ्गिनि रसान्तरे।**
**परिपोषं न नेतव्यस्तथा स्यादविरोधिता॥ ८०॥**

एक रसके प्रधान होने पर उसके अविरोधी अथवा विरोधी किसी भी रसकी अत्यन्त परिपुष्टि नहीं करनेसे उनका विरोध दूर हो सकता है।

स्फुटं व्याचष्टे वृत्तिकारः—

**अङ्गिनि रसान्तरे शृङ्गारादौ प्रबन्धव्यङ्ग्ये सति, अविरोधी विरोधी वा रसः परिपोषं न नेतव्यः।**

'षष्ठी चानादरे' इतिपाणिनिसूत्रेणानादराधिक्ये व्यङ्ग्येऽङ्गिनीति सप्तमी, तेन परिपुपोषिषितरसभिन्नं प्रबन्धेन व्यङ्ग्यं शृङ्गारादिरसमनादृत्य तदविरुद्धस्तद्विरुद्धो वाऽङ्गरसो न पोषणीयः, तेन प्रकारेण प्रधानाप्रधानयो रसयोरविरोधः स्यादिति कारिकाऽर्थः।

प्रधानीभूतरसापेक्षयाऽविरुद्धोऽप्यङ्गभूतो रसस्ततोऽपि पुष्टः क्रियमाणः स्पर्धालुतया प्रधानसुषमामवश्यमपकर्षेत्, किं वक्तव्यं विरुद्धस्य, तस्मात् तावानेवाङ्गरसस्य पोषो विधेयो यावताऽङ्गिनमुपकुर्यात् स्पर्धां च न स्प्रष्टुमर्हेत्। एवं ह्यविरुद्धवत् प्रागुक्तो विरुद्धोऽप्यपरिपुष्टीकृतोऽङ्गभूतो रसो न प्रधानं विरोद्धुमीष्ट इति न कश्चन दोष इति भावः।

प्रधानभूत शृङ्गारादि रसके काव्य व्यङ्ग्यतया अभिप्रेत होने पर उसके अविरोधी या विरोधी रसका अत्यन्त परिपोषण नहीं करना चाहिये।

अङ्गरसस्य परिपोषः कथं परिहर्तव्य इत्याकाङ्क्षायां प्रकारत्रयं क्रमेण वदन् प्रथमं प्रकारमादावाख्याति—

**तत्राविरोधिरसस्याङ्गिरसापेक्षयाऽत्यन्तमाधिक्यं न कर्तव्यमित्ययं प्रथमः परिपोषपरिहारः।**

तत्र तेषु परिपोषपरिहारप्रकारेषु। अविरोधिरसस्याङ्गभूतस्य। नैतावताऽङ्गरसस्य पोषणं निषिध्यते, किन्त्वङ्गिप्राधान्योपमर्दकमाधिक्यमात्रमिति पुरस्तादुपसंहारे स्फुटं वक्ष्यति।

उन अङ्ग रसोंके परिपोषणका परिहारक्रम तीन प्रकारोंसे हो सकता है, जिनमें प्रथम परिहार प्रकार बतलाते हैं—तत्रेति। उनमें अविरोधी अप्रधान रसका अङ्गीभूत प्रधान रसकी अपेक्षा अतिशय आधिक्य रूपमें सूचन नहीं करना चाहिये।

अङ्गरसस्य न्यूनतायामेव सर्वाभिमतायामाधिक्यमात्रमिह कुतो निरुध्यते ?

एवं ह्युभयोः साम्यमङ्गस्यैवानुमतं भवतीत्याक्षेपं निराकरोति—

**उत्कर्षसाम्येऽपि तयोर्विरोधासम्भवात् ।**

तयोरङ्गाङ्गिरसयोर्भावसन्धिवदुत्कर्षस्य साम्येऽपि चिच्छित्त्यनुच्छेदाद् विरोधस्यासम्भवः, यतस्तेनाधिक्यमात्रं व्यवच्छिन्नमिति योजना ।

वेद्यान्तरसम्पर्कशून्यापरिच्छिन्नस्वप्रकाशरसस्य तादृशरसान्तरेण सह सम्पर्कासम्भवादुत्कर्षसाम्यं कथं सम्भवतीति चेत्, उच्यते—अङ्गाङ्गिभावेऽपीत्थमसम्भवे यथा रसपदं तद्योग्यस्थायिपरं व्याख्यायते, तथैवात्रापि बोध्यम् । किञ्च पृथगंशद्वयव्यङ्ग्यत्वे निरपेक्षयोरपि साधर्म्यसद्भावात् साम्यं नासम्भवीत्यवधातव्यम् ।

**उन दोनों अङ्गाङ्गीभूत रसोंके भावसन्धिकी तरह बराबर उत्कर्ष हो जाने पर भी चमत्कारोच्छेदका अनुभव नहीं होनेसे विरोधका संभव नहीं है ।**

साम्यमुदाहरति—

**यथा**

प्रेयसीपरिदेवनसमुदितानुकूल्यनिर्धार्यमाणस्य समरतूर्यघोषश्रवणसमुज्जृम्भ्यमाणयुद्धयात्रोत्साहस्य वीरस्य दशां कश्चिद्वर्णयति—

**'एकन्तो रुअइ पिआ अण्णन्तो समरतूरणिग्घोसो ।**
**णेहेण रणरसेण अ भडस्स दोलाइअं हिअअम् ॥'**

'एकतो रोदिति प्रियाऽन्यतः समरतूर्यनिर्घोषः ।
स्नेहेन रणरसेन च भटस्य दोलायितं हृदयम् ॥' इतिच्छाया ।

एकत एकत्र गृहे प्रिया प्रेयसी, न तु भार्यैव, युद्धे भाविनिधनाऽऽशङ्कया रोदिति, अन्यतोऽन्यत्र युद्धभूमौ समराय वीरानुत्तेजयितुं तूर्याणां ताड्यमानपटहादिवाद्यानां निर्घोषो निनदो भवतीति शेषः । तथा च भटस्य वीरस्य स्नेहेन प्रियाप्रेम्णा रणरसेन युद्धोत्साहेन च हृदयं मनो दोलायितं हिन्दोलामारूढमेकतरकर्तव्यावधारणाक्षममिति यावद् भवतीत्यर्थः ।

तथा च—'तुरं तु तूर्यं स्यात्ताड्यमानास्तु पटहादयः' इति त्रिकाण्डशेषः ।

इह स्नेहपदप्रतिपाद्यरतिस्थायिकशृङ्गारस्य, रणरस-भटपदोपस्थाप्योत्साहस्थायिकस्य वीरस्य च दोलायितपदबोध्यमुत्कर्षसाम्यमपि यथा न दोषमावहति, तथैवान्यत्रापि बोध्यम् ।

मुक्तकमात्रे समप्राधान्यं न तु प्रबन्धेऽपीति केनचिदुक्तं त्वाचार्यैरेव रत्नावली-घटकनिदर्शनोपन्यासेन खण्डितम् ।

दो रसोंके साम्यका उदाहरण बतलाते हैं—यथेति। एक ओर प्रेयसी रो रही है और दूसरी ओर संग्राम कालिक बाजेका नाद हो रहा है, इसलिये स्नेह और युद्धोत्साहसे वीरका हृदय कम्पायमान हो रहा है। यहां पर शृङ्गार और वीरके साम्य होने पर कोई विरोधी नहीं है।

पुनरुदाहरति—

यथा वा—

'कण्ठाच्छित्त्वाऽक्षमालावलयमिव करे हारमावर्तयन्ती,
कृत्वा पर्यङ्कबन्धं विषधरपतिना मेखलाया गुणेन ।
मिथ्यामन्त्राभिजापस्फुरदधरपुटव्यञ्जिताव्यक्तहासा,
देवी सन्ध्याऽभ्यसूयाहसितपशुपतिस्तत्र दृष्टा तु वोऽव्यात्' इत्यत्र ।

हारं मुक्तामालां कण्ठाच्छित्त्वा गलादुत्तार्य, अक्षमालावलयमिव स्फटिकलघुस्रजमिव करे धृत्वा, आवर्तयन्ती सञ्चालयन्ती मेखलाया रशनाया गुणेन सूत्रेण (तद्रूपेण) विषधरपतिना सर्पराजेन वासुकिना, पर्यङ्कबन्धं ध्यानोचितासनविशेषबन्धं कृत्वा, मिथ्या यो मन्त्रस्याभिजापो जपनं तेन स्फुरन् योऽधरपुटस्तेन व्यञ्जितः प्रकाशितोऽव्यक्तो गूढो हासो यस्यास्तादृशी, सन्ध्यायां तन्नामकसपत्न्यामभ्यसूयया हसितोऽनुकृतोऽनुकरणोपहासलक्षीकृत इति यावत्, पशुपतिः शिवो यया तथाभूता, तत्र शिवसन्ध्योपासनास्थले दृष्टा तटस्थैरवलोकिता तु देवी पार्वती वो युष्मानव्यात्, पायादित्यर्थः ।

अत्र 'पर्यङ्कबन्धश्च वीरासनम्' इति मल्लिनाथः । तल्लक्षणन्तु—

'एकं पादमथैकस्मिन् विन्यस्योरौ च संस्थितम् ।
इतरस्मिंस्तथैवोरुं वीरासनमुदाहृतम् ॥' इति ।

प्रमदाकृतिं सन्ध्यां शिवः स्वीकृतवानिति पुरातनी वार्ता । अत एव पार्वत्यास्तत्रासूया । तद्व्यङ्ग्यविप्रलम्भशृङ्गारस्य सपरिकरमन्त्रजपादिव्यङ्ग्यशान्तस्य चोत्कर्षसाम्यं पूर्ववदविरोधे पर्यवस्यति ।

दो रसोंके साम्य होने पर भी विरोधाभावका दूसरा उदाहरण बतलाते हैं—यथावेति। कण्ठसे हारको निकाल कर हाथमें जपमालाकी तरह फेरती हुई, नागराजके बदले मेखलासूत्रसे पर्यङ्क बन्ध आसन लगाकर झूठ मूठ (यों ही बनावटी)

मन्त्र जपके कारण हिलते हुए अधरोष्ठसे अभिव्यक्त मन्दहासको प्रकट करती हुई, सन्ध्या नामक सौत ( सपत्नी ) के प्रति ईर्ष्या वश शिवजीकी हँसी ( खिल्ली ) उड़ाती हुई देखी गयी देवी पार्वती तुम्हारी रक्षा करे।

यहां पर प्रकृत ईर्ष्याख्य विप्रलम्भका और उसके विरोधीभूत मन्त्र जपादि व्यङ्ग्य शान्त रसका साम्य होने पर भी विरोध नहीं है।

अथ द्वितीयं परिपोषप्रकारं निरूपयति—

**अङ्गिरसविरुद्धानां व्यभिचारिणां प्राचुर्येणानिवेशनम्। निवेशने वा क्षिप्रमेवाङ्गिरसव्यभिचार्यनुवृत्तिरिति द्वितीयः।**

अनुवृत्तिरनुसन्धानम्। अङ्गरसोपकारिणोऽपि प्रधानरसपरिपन्थिनो व्यभिचारिभावा निवेशनीयाः, किन्तु लेशत एव न तु बाहुल्येन। तथा निवेशिता हि प्रधानास्वादं कदाचिद् व्यवदध्युरित्येका कोटिः। कदाचनाङ्गरसास्वादानुरोधेन प्राचुर्येणापि निवेश्येरंश्चेत्, तर्हि, प्रधानरसपोषकव्यभिचारिणां सत्वरमेवानुसन्धानं विधेयम्, येन तदास्वादप्रकर्षापचयो न स्यादितीयं द्वितीया कोटिरिति समुदितोऽयं द्वितीयः प्रकार इत्यर्थः।

इह व्यभिचारिणां प्राचुर्येण निवेशाभावेऽङ्गरसापरिपोष एव प्रथमकोटिदोष उत्तरकोटिमुत्थापयति, उत्तरकोटौ तद्विरहात् सिद्धान्तता। अत एव वाशब्दोऽत्र न विकल्पार्थकः। 'अन्यथा प्रकारद्वयं स्यात्' इत्याचार्याः।

उदाहरणन्तु 'कोपात्' इत्यादिः प्रागुक्तः श्लोकः। तत्र हि प्रधानीभूतश्रृङ्गारस्थायिरतिप्रतिकूलस्याङ्गभूतरौद्रस्थायिक्रोधपोषकव्यभिचार्यमर्षस्य 'बद्ध्वा दृढम्' इत्यादिना भूयो निवेशेऽपि, द्रुतमेव 'रुदत्या हसन्' इत्यादिना रत्यनुकूलेनेर्ष्यौत्सुक्यहर्षानुसन्धानं विहितमिति न प्रधानास्वादापकर्षः।

अब अङ्गभूत रसोंके परिपोषका दूसरा परिहार प्रकार बतलाते हैं—अङ्गीति। अङ्गीभूत रसके विरोधी होने पर भी, अङ्ग रसोपकारक व्यभिचारी भावोंका अधिक मात्रामें निवेश न करना, या विरोधी रसके व्यभिचारी भावोंका निवेश करने पर भी उनको शीघ्र ही अङ्गीभूत रसके व्यभिचारी भाव रूपमें परिणत कर देना, यह दूसरा परिहार प्रकार है।

तृतीयं प्रकारं निरूपयति—

**अङ्गत्वेन पुनःपुनःप्रत्यवेक्षा परिपोषं नीयमानस्याप्यङ्गभूतस्य रसस्येति तृतीयः प्रकारः।**

परिपोषं नीयमानस्याप्यङ्गभूतस्य रसस्याङ्गत्वेन पुनःपुनःप्रत्यवेक्षेति सम्बन्धः।

'निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्' इत्यलङ्कारप्रकरणोक्ता सरणिरिह स्मरणीया। तापसवत्सराजे—वत्सराजस्य पद्मावतीविषयकसम्भोगशृङ्गार इहोदाहरणमित्याचार्याः।

अब परिपोष-परिहारका तीसरा प्रकार बतलाते हैं—अङ्गत्वेनेति। अङ्गभूत रस की परिपुष्टि करने पर भी बार बार उसकी अङ्गताको सुरक्षित रखनेका ध्यान रखना। जैसे वत्सराज उदयनके पद्मावती विषयक संभोग शृङ्गारका तापस वत्सराजमें वर्णन किया गया है।

उपसंहरति—

**अनया दिशाऽन्येऽपि प्रकारा उत्प्रेक्षणीयाः।**

प्रकाराः परिपोषपरिहारस्य। ते च—विभावादीनां प्रकर्षातिशयानाधानम्, प्रधानरसप्रतिकूलानामनुन्मीलनम्, तदुन्मीलनेऽपि प्रधानरसपोषकैरेव तदुपोद्वलनम्, प्रधानानुकूलविभावादीनां पोषणेऽपि तेषामङ्गत्वेन तस्य चाङ्गित्वेनानुसन्धानम्, इत्यादयः स्वयमूहनीयाः।

इस शैलीसे दूसरे परिहार प्रकारोंका भी स्वयं ऊहापोह कर लेना चाहिये।

इत्थं प्रधानरसस्याविरोधिनां विषयेऽभिधाय, विरोधिविषये दोषपरिहारमभिदधाति—

**विरोधिनस्तु रसस्याङ्गिरसापेक्षया कस्यचिन्न्यूनता सम्पादनीया।**

कस्यचिदङ्गभूतस्य। न्यूनताऽपरिपुष्टता। न्यूनो ह्यङ्गभूतोऽङ्गिनं बलीयांसं बाधितुं न शक्नुयादित्याशयः।

इस तरह प्रधान रसके अविरोधी जो रस उसके विषयमें परिहार प्रकार बतला कर विरोधी रसके विषयमें परिहार प्रकार बतलाते हैं—विरोधिन इति। अङ्गीभूत प्रधान रसकी अपेक्षा उसके विरोधीभूत अप्रधान रसकी न्यूनता कर देनी चाहिये, जिससे कि वह, बलवान् प्रधान रसकी प्रतीतिको नहीं बाध सके।

उदाहरति—

**यथा शान्तेऽङ्गिनि शृङ्गारस्य, शृङ्गारे वा शान्तस्य।**

न्यूनता सम्पादनीयेति शेषः।

जैसे शान्त रसके प्रधान होने पर शृङ्गारकी या शृङ्गार रसके प्रधान होने पर शान्त रसकी न्यूनता कर देनी चाहिये।

तत्र शङ्कते—

**परिपोषरहितस्य कथं रसत्वमिति चेत्।**

परिपोषस्त्वास्वादपदवीप्राप्तिः। तदभावे च रसत्वाभावो रसनधर्मयोगिन्येव रसत्वाङ्गीकारादिति तात्पर्यम्।

परिपुष्टिको प्राप्त किये बिना रसका रसत्व ही कैसे बनेगा? इस प्रकार यदि पूर्वपक्ष किया जाय तो—

समाधत्ते--

**उक्तमत्राङ्गिरसापेक्षयेति।**

अङ्गिरसादप्यधिकपुष्टोऽङ्गरसो न विधेयो, न तु सर्वथाऽपुष्ट एवेत्यभ्युपगमे न दोषः।

इसका उत्तर यह है कि—अङ्गीभूत प्रधान रसकी जितनी परिपुष्टि की जाय, उतनी परिपुष्टि उसके विरोधी रसकी नहीं करनी चाहिये, लेकिन स्वयं होनेवाले साधारण परिपोषणमें तो कोई क्षति नहीं है।

तदेवोपपादयति--

**अङ्गिनो हि रसस्य यावान् परिपोषः, तावांस्तस्य न कर्तव्यः, स्वगतस्तु सम्भविपरिपोषः केन वार्यते।**

तस्याङ्गरसस्य। स्वगतोऽङ्गरसवृत्तिः। सम्भवी प्रधानरसाप्रतिकूलः। अङ्गिरसाप्रतिकूलेऽङ्गरसपरिपोषे न नो विद्वेष इत्यभिसन्धिः।

उक्त बातका ही उपपादन करते हैं—अङ्गिन इति। अर्थात् प्रधान रसका जितना परिपोषण हो उतना अप्रधान रसका परिपोषण नहीं करना चाहिये, परन्तु उसके यों ही होनेवाले साधारण परिपोषणमें मुझे कोई क्षोद क्षेम (आपत्ति) नहीं है।

उक्तमर्थं द्रढयन् कारिकाचरमांशं विवृणोति--

**एतच्चापेक्षिकं प्रकर्षयोगित्वमेकस्य रसस्य बहुरसेषु प्रबन्धेषु रसानामङ्गाङ्गिभावमनभ्युपगच्छताऽप्यशक्यप्रतिक्षेपमित्यनेन प्रकारेण विरोधिनामविरोधिनां च रसानामङ्गाङ्गिभावेन समावेशे प्रबन्धेषु स्यादविरोधिता।**

बहवो रसा यत्र तेषु प्रबन्धेषु रसानामपरिच्छिन्नविश्रामधामत्वान्न्यूनाधिक्यानौचित्यादङ्गाङ्गिभावमनभ्युपगच्छताऽस्वीकुर्वताऽपि, एतदुच्यमानमङ्गिरसानाम्, आपेक्षिकमङ्गरसापेक्षया निर्धारितम्, प्रकर्षयोगित्वमुत्कर्षः, न शक्यः प्रतिक्षेपो निरासोऽस्वीकार इति यावद् यस्य तादृशं स्वीकार्यमेव, इति हेतोरनेनोच्यमानेनाङ्गपरिपोषपरिहारप्रकारद्वयेन विरोधिनामविरोधिनां च रसानामङ्गाङ्गिभावेन प्रबन्धेषु समावेशेऽविरोधिता विरोधाभावः स्यादित्यन्वयः।

अयं भावः—ये च स्वप्रकाशत्वेनान्यनिरपेक्षाणां वेद्यान्तरस्पर्शशून्यानामन्यैः सह मिथोऽपि चोपकार्योपकारकभावं नोररीकुर्वन्ति, अन्यसङ्कीर्णत्वे रसास्वादस्य ब्रह्मास्वादसब्रह्मचारित्वव्याघातसम्भवात्। तैरपि बहुरसव्यञ्जकेषु प्रबन्धेषु भूयोंऽशव्यङ्ग्यत्वेन व्यापकतया कस्यचन रसस्य प्रकर्षादङ्गित्वम्, कस्यचित् स्तोकांशव्यङ्ग्यतयाऽपकर्षादङ्गत्वमभ्युपेयमेवेत्यकामैरपि तैः रसानामङ्गाङ्गिभावोऽयमभ्युपेत एव। अन्यथा वृत्तान्तसङ्गतिरपि तेषां दुर्घटैव।

अनेक रसवाले प्रबन्धोंमें रसोंके परस्पर अङ्गाङ्गिभावको नहीं माननेवाले व्यक्ति भी प्रधान रसको अधिक और अन्य रसको कम, इस आपेक्षिक उत्कर्षका खण्डन नहीं कर सकते हैं, अतः इस प्रकारसे भी प्रबन्धोंमें अविरोधी एवं विरोधी रसोंके अङ्गाङ्गिभाव द्वारा समावेश करने विरोध दूर हो सकता है।

उपसंहरति—

**एतच्च सर्वं येषां 'रसो रसान्तरस्य व्यभिचारीभवति' इति निदर्शनं, तन्मतेनोच्यते।**

निदर्शनं मतम्, दृष्टान्तरूपार्थानन्वयात्।

इदमाकूतम्—यत्र प्रबन्धेषु बहवो रसाः समवयन्ति, तेषु यस्य रसस्यास्वादप्रकर्षोऽनुभूयते स रसः स्थायी भवति, अवशिष्टाश्च रसाः सञ्चारिणो भवन्ति। तथा चोक्तमभियुक्तैः—

'बहूनां समवेतानां रूपं यस्य भवेद्बहु।
स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणो मताः॥' इति।

समवेतानामेकप्रबन्धव्यङ्ग्यानां रसानां मध्ये यस्य रसस्य बहु–आधिकारिकवस्तु-व्यापकं रूपमास्वादो भवति, स रसः स्थायी प्रधानमङ्गीति यावत् मन्तव्यः, शेषाः प्रासङ्गिकवस्तुमात्रव्यापका अपकृष्टास्वादा रसाः सञ्चारिणोऽङ्गानि मता इति तदर्थः। अत एव भागुरिरपि—'किं रसानामपि भाववत् स्थायिसञ्चारिता? इत्याशङ्क्य, बाढमस्ति' इति स्वयमूरीचकार।

इममेव—

'अङ्गं बाध्योऽथ संसर्गी यद्यङ्गी स्याद्रसान्तरे।
नास्वाद्यते समग्रं तत् ततः खण्डरसः स्मृतः॥' इति वदंश्चण्डीदासोऽपि खण्डरसनाम्ना व्यवजहार।

इत्थं स्थायिनो रसस्य प्राधान्यादङ्गिता, सञ्चारिणान्त्वङ्गतेति स्फुटं रसानामङ्गाङ्गिभावं ये मन्यन्ते, तन्मतानुसारिणीयमुक्तिः ।

जो व्यक्ति एक रसको दूसरे रसके प्रति व्यभिचारी याने अङ्ग होनेका सिद्धान्त मानते हैं, उनके मतमें ये सारी बातें कही गई हैं, अर्थात् जिन प्रबन्धोंमें बहुतसे रस एकत्रित होकर प्रतिभासित होते हैं और उन रसोंमें जिस रसका आस्वाद प्रकर्ष प्रतीत होता है, वह रस स्थायी और शेष रस संचारी होते हैं ।

रसानामङ्गाङ्गिभावमनभ्युपगच्छतां मते सङ्गतिमाह—

मतान्तरे तु रसानां स्थायिनो भावा उपचाराद् रसशब्देनोक्ताः, तेषामङ्गत्वे निर्विरोधित्वमेव ।

ये तु रसानामङ्गाङ्गिभावं प्रागुक्तयुक्त्याऽस्वीकुर्वन्त उक्ताभियुक्तकारिकाघटकरसपदं रसनधर्मवति भावे लाक्षणिकं मत्वा, भावानामेव स्थायिसञ्चारितयाऽङ्गाङ्गिभावमङ्गीकुर्वन्ति, तन्मते 'रसान्तरसमावेशः प्रस्तुतस्य रसस्य यः' इत्यादिकारिकाविवरणस्थरसपदान्यपि भावलाक्षणिकान्येवावसाय सन्दर्भसङ्गतिः करणीयेत्यभिसन्धिः ।

परन्तु जो व्यक्ति रसका रसान्तरमें अङ्गत्व नहीं मानते उनके मतमें रसोंके स्थायी भाव ही उपचार द्वारा रस शब्दसे व्यवहृत होते हैं और उन स्थायी भावोंका अङ्गत्व तो निर्विरोध है अर्थात् जो व्यक्ति रसोंका अङ्गत्व नहीं मानते हैं, उनको भी स्थायी भावोंको अङ्ग माननेमें कोई आपत्ति नहीं है ।

इत्थं विरोध्यविरोधिसाधारणाविरोधोपायोपादानमुपसंहरन् विरोधिविषयकाविरोधोपायं दर्शयितुं कारिकामवतारयति—

एवमविरोधिनां विरोधिनां च प्रबन्धस्थेनाङ्गिना रसेन समावेशे साधारणमविरोधोपायं प्रतिपाद्येदानीं विरोधिविषये तं प्रतिपादयितुमिदमुच्यते—

तच्छब्दोऽविरोधोपायं परामृशति—

इस प्रकार प्रबन्ध वृत्ति मुख्य रसके साथ उसके अविरोधी एवं विरोधी रसोंके समावेशमें साधारण रूपसे विरोध परिहारका उपाय बतलाकर अब विशेष रूपसे विरोधी रसके विषयमें ही उस विरोध परिहारोपायका प्रतिपादन करनेके लिये आगे कहते हैं—

'विरोधैकाश्रयो यस्तु विरोधी स्थायिनो भवेत् ।
स विभिन्नाश्रयः कार्यस्तस्य पोषेऽप्यदोषता ॥ ८१ ॥'

प्रधान रसका जो रस ऐकाधिकरण्य रूपसे विरोधी हो उसको अलग अलग आश्रयमें कर देना चाहिये, ऐसा कर देनेसे उसके परिपोष करने पर भी कोई दोष नहीं होता।

कारिकां विवृणोति—

**ऐकाधिकरण्यविरोधी नैरन्तर्यविरोधी चेति द्विविधो विरोधी। तत्र प्रबन्धस्थेन स्थायिनाऽङ्गिना रसेनौचित्यापेक्षया विरुद्धैकाश्रयो यो विरोधी, यथा-वीरेण भयानकः, स विभिन्नाश्रयः कार्यः। तस्य वीरस्य य आश्रय कथानायकः, तद्विपक्षविषये सन्निवेशयितव्यः। तथासति च तस्य विरोधिनोऽपि यः पोषः, स निर्दोषः। विपक्षविषये हि भयातिशयवर्णने नायकस्य नयपराक्रमादिसम्पत्सुतरामुद्द्योतिता भवति।**

वृत्त्यनुरोधेन कारिकायां 'विरुद्धैकाश्रय' इति पाठः स्थापितः। विरुद्ध एक आश्रयो यस्येति बहुव्रीहिः। विरोधप्रकारद्वयं च प्रागेव व्याख्यातम्। विरोधनिर्धारकमौचित्यम्। सम्पादतिशयः।

यो हि स्थायी रसो विरोधिना स्थायिना सहैकस्मिन्नधिकरणे स्थातुं न शक्नोति, विभिन्नाश्रयो व्यधिकरणः कार्यः। एवं सति तस्य विरोधिनोऽपि रसस्य पृथगाश्रयस्य पोषेऽप्यदोषतैव न तु दोषः, वैयधिकरण्ये सति क्वचित्तस्यापि प्रकृतरसपोषकत्वात्। यथा-वीरः स्थायी भयानकेन सहैकाश्रये स्थातुमक्षमः, उत्साहभीत्योरेकाधिकरणस्थत्वासम्भवाद्, इति प्रबन्धेषु नायके वीरः प्रतिनायके च भयानको निबद्धव्यः। तथा च प्रतिपक्षिणो भयेन नेतुर्वीरोचितनीतिविक्रमयोरुत्कर्ष एव सूच्यत इति व्यधिकरणो विरोध्यपि भयानको वीरस्य पोषकः, तेन पोषकस्य तस्य पुष्टावपि स्थायिनो न हानिरिति सारम्।

**विरोधी दो प्रकारके होते हैं—१. ऐकाधिकरण्य विरोधी और २. नैरन्तर्य विरोधी। इनमेंसे प्रबन्धवृत्ति प्रधान रसकी दृष्टिसे जो विरोधी दूसरा प्रधान रस एकाधिकरणमें नहीं ठहर सकता हो जैसे-वीरके साथ भयानक, उसको दूसरे आश्रयमें कर देना चाहिये, अर्थात् वीर रसका जो आश्रयभूत नायक है, उसके प्रतिपक्ष (प्रतिनायक) में भयानक रसका समावेश करना चाहिये। ऐसा कर देने पर उस विरोधीभूत भयानकके परिपोषण करनेमें भी कोई दोष नहीं होता, बल्कि शत्रु विषयक भयके अतिशय वर्णन करनेसे नायक की नीति और पराक्रम आदिका उत्कर्ष ही सूचित होता है।**

उदाहरति—

**एतच्च मदीये 'ऽर्ज्जुनचरिते' ऽर्ज्जुनस्य पातालावतरणप्रसङ्गे वैशद्येन प्रदर्शितम् ।**

अर्ज्जुनचरितं नाम काव्यम् । तत्र हि पातालनिलयानां प्रतिपक्षिणाम्—

'समुत्थिते धनुर्ध्वनौ भयावहे किरीटिनो-

महानुपप्लवोऽभवत् पुरे पुरन्दरद्विषाम् ॥' इत्यादिना भीतिवर्णने-

नार्जुनस्य नेतुर्वीरता प्रकाश्यत एव, न त्वपकृष्यत इति ज्ञेयम् ।

यह विषय मेरे 'अर्जुन चरित' नामक काव्यमें अर्जुनके पाताल गमनके प्रसङ्गमें विशद रूपसे दिखलाया गया है। जैसे-'वीर अर्जुनके अत्यन्त भयंकर धनुष टङ्कार होने पर पातालमें छिपे हुए प्रतिपक्षियोंके नगरमें अत्यन्त आतङ्क छा गया' इस प्रकार शत्रु विषयक भयके वर्णनसे नायक अर्जुनकी वीरता ही प्रकाशित होती है कायरता प्रकाशित नहीं होती।

उपसंहरति—

**एवमैकाधिकरण्यविरोधिनः प्रबन्धस्थेन स्थायिना रसेनाङ्गभावागमने निर्विरोधित्वं यथा, तथा तद्दर्शितम् ।**

उक्त रीतिसे प्रबन्ध वृत्ति प्रधान रसके साथ ऐकाधिकरण्य रूपसे विरोधी रसका जिस प्रकार अङ्गभाव होकर विरोध परिहार हो सकता है, वह प्रकार दिखलाया गया।

द्वितीयविरोधिसमावेशं दर्शयितुं कारिकामवतारयति—

**द्वितीयस्य तु तत् प्रतिपादयितुमुच्यते—**

द्वितीयस्य नैरन्तर्यविरोधिनः । तत्—निर्विरोधित्वम् ।

अब जिन रसोंके निरन्तर (लगातार) सन्निवेशमें विरोध होता है, उन नैरन्तर्य विरोधियोंके भी विरोध परिहार प्रकारको आगे बतलाते हैं—

**'एकाश्रयत्वे निर्दोषो नैरन्तर्ये विरोधवान् ।**

**रसान्तरव्यवधिना रसो न्यस्यः सुमेधसा ॥ ८२ ॥'**

यो रसो येन रसेन सहेति शेषः, एकाश्रयत्वे सामानाधिकरण्ये, निर्दोषो निर्विरोधः, किन्तु नैरन्तर्येऽव्यवधानस्थितौ विरोधवान् भवेत् । स रसः सुमेधसा सुमतिना कविना प्रबन्धे रसान्तरेणोभयाप्रतिकूलेनान्यरसेन व्यवधिर्व्यवधानम्, तेन न्यस्यो निवेशनीय इत्यर्थः ।

जिन रसोंके एक आश्रयमें वर्णन करनेमें कोई विरोध नहीं है, किन्तु अव्यवहित रूपसे सन्निवेश करनेमें विरोध आता है, उन दोनोंके मध्यमें अविरोधी रसके वर्णन द्वारा व्यवधान करके बुद्धिमान् कविको उन रसोंका वर्णन करना चाहिये।

तदाह वृत्तिकृत्—

**यस्पुनरेकाधिकरणत्वे निर्विरोधो, नैरन्तर्ये तु विरोधी, स रसान्तरव्यवधानेन प्रबन्धे निवेशयितव्यः।**

एष च रसविरोधपरिहारो न प्रबन्धमात्रे, यावन्मुक्तकादिष्वपि भवत्येव। अत एवाग्रिमकारिकायाम्—'एकवाक्यस्थयोरपि' इत्याद्युदाहरिष्यते।

वृत्तिकार उक्ताशयको ही स्फुट करते हैं—यः इति। जो रस एक अधिकरणमें विरोधी नहीं हैं, लेकिन निरन्तर रूपसे रहनेमें विरोधी हैं, उनका दूसरे अविरोधी रससे व्यवधान करके प्रबन्धमें निबन्धन करना चाहिये।

उदाहरति—

**यथा—शान्तशृङ्गारौ 'नागानन्दे' निवेशितौ।**

अयमभिप्रायः—ययोर्हि रसयोरव्यवधानेन निवेशनमेव विरोधमूलम्, तयोरन्तरा कश्चनोभयानुकूलो रसो विरोधनिवृत्तये निवेशनीयः। यथा-हर्षदेवकृतनागानन्दनाटके-जीमूतवाहनस्य नेतुः—

'रागस्यास्पदमित्यवैमि न तु मे ध्वंसीति न प्रत्ययः' इत्यादिना मुखसन्धिमारभ्य परोपकारनिमित्तशरीरार्पणलक्षणनिर्वहणसन्धि यावच्छान्तस्य, तद्विरुद्धस्य मलयवतीविषयकानुरागमूलकशृङ्गारस्य च मध्ये 'अहो गीतम्' 'अहो वादित्रम्' इति तत्तपोभङ्गार्थशक्रप्रहिताप्सरस्सङ्गीतप्रशंसनेनोभयानुकूलोऽद्भुतरसो निवेशित इत्युभयोरविरोधः। तथाऽन्यत्रापि प्रबन्धे विधेयम्।

जैसे—नागानन्द नाटकमें शान्त और शृङ्गारके बीचमें दोनोंके अविरोधी अद्भुत रसके समावेश द्वारा व्यवधान करके उन दोनोंका समावेश किया गया है, अर्थात् जिन दो रसोंके अव्यवधानसे निरूपण करनेमें विरोध आता है, उन दोनोंके मध्यमें उभयानुकूल किसी एक रसका विरोध दूर करनेके लिये सन्निवेश करना चाहिये।

ननु तदैवेदं विरोधपरिहारविवेचनं सङ्गच्छेत, यदि शान्तो नाम रसः कश्चित् प्रसिद्धः स्यात्। तमेव तु कियन्तो न मन्यन्ते, सकलसहृदयानुभवगोचरत्ववैधुर्यात्, 'तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम्' इत्यभियुक्तोक्तेस्तत्त्वज्ञानादिजन्यात्मावज्ञानलक्षणनिर्वेदस्थायिकत्वेनास्वाद्यत्वाभावात्, सत्त्वेऽपि धार्मिकभावप्राधान्येन वीर एवा-

न्तर्भावयितुं शक्यत्वाच्चेत्याक्षेपं परिहरति--

**शान्तश्च तृष्णाक्षयसुखस्य यः परिपोषः, तल्लक्षणो रसः प्रतीयत एव ।**

तृष्णानां सर्वविधविषयसमीहानां क्षयेण सर्वतो निवृत्तिरूपेण निरोधेन यत्सुखं, तद्रूपं वा यत्सुखं, स्वमात्रविश्रान्तिजन्याह्लादः, तस्य यः परिपोष आस्वादपदवीप्राप्तिः, तल्लक्षणस्तद्रूपः शान्तो रसः प्रतीयतेऽनुभूयत एव सहृदयैरिति नाप्रसिद्ध इत्याकूतम् ।

शान्तरसस्वरूपनिर्णायकमतान्तराणि चान्यतोऽवसेयानि ।

यत्तु-'तृष्णानां विषयाणां यः क्षयः सर्वतो निवृत्तिरूपो निरोधः' इति केचिद् व्याचक्षते, तन्न, भोग्यपदार्थविषयकचित्तवृत्तिविशेषरूपाणां तृष्णानामेव दुःखकारणत्वेन, तन्निरोधस्यैव सुखमयत्वाद्, विषयाणां निरोधस्य कर्तुमशक्यत्वाच्च ।

कुछ लोग शान्त रसको अलग रस नहीं मानते और नागानन्दको शान्त रस प्रधान नाटक नहीं मानकर दयावीर रस प्रधान ही मानते हैं, इसलिये ग्रन्थकार उनका खण्डन करके शान्त रसको अलग रस ही बतलानेके लिये आगे प्रसङ्ग उठा रहे हैं—शान्तश्चेति। तृष्णाके क्षयसे उत्पन्न सुखकी जो परिपुष्टि तत्स्वरूप शान्तरस अवश्य प्रतीत होता है, अर्थात् सहृदय जनवेद्य आह्लाद विशेष रूप शान्त रसका अपलाप नहीं किया जा सकता है ।

इममर्थं प्राचीनसम्मतिप्रदर्शनेन द्रढयति--

**तथा चोक्तम्—'यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम् ।**
**तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥'**

लोके भूलोके, यत् कामसुखमभीष्टप्राप्तिजन्यं सुखम् , दिवि स्वर्गे भवं दिव्यं च महत् मर्त्यसुखादधिकतमं यत् सुखम् , अस्तीति शेषः । एते द्वे सुखे तृष्णाक्षयसुखस्य वैतृष्ण्यजन्याह्लादविशेषस्य, षोडशीं कलां नार्हतः, किंतु ततोऽतितरां न्यूने इत्यर्थः ।

कहा भी है—यच्चेति। भूलोकमें अभीष्ट प्राप्ति जन्य जो लौकिक सुख है और जो अलौकिक महान् दिव्य सुख है, ये दोनों, तृष्णाक्षयजन्य जो कुछ अनिर्वचनीय सुख होता है, उसकी सोलहवीं कलाके बराबर भी नहीं हो सकते हैं ।

ननु तर्हि सर्वैः सहृदयैः शृङ्गारादिवत् कथं न प्रतीयत इत्याशङ्कां समादधाति--

**यदि नाम सर्वजनानुभवगोचरता तस्य नास्ति, नैतावताऽसावलोकसामान्यमहानुभावचित्तवृत्तिविशेषवत् प्रतिक्षेप्तुं शक्यः ।**

प्रतिक्षेप्तुं निरसितुम् ।

अयं भावः—सर्वैः सहृदयैर्नास्वाद्यत इति हेतोः शान्तो रसो नास्त्येवेति वक्तुं न शक्यते, यतो यः सर्वानुभवविषयो न भवति, स नास्त्येवेति दुर्वचम्, तथासति सर्वजनानुभवागोचरस्येश्वरस्याप्यसत्त्वं प्रसज्येत, तादृशो महानुभावजनचित्तवृत्तिविशेषो वाऽसन् मन्येत। किञ्च न ह्यन्येपि रसाः सकलहृदयानुभवगोचराः, किन्तु सहृदयेष्वपि तत्तद्रसस्थायिवासनावत एव कस्यचन तत्तद्रससाक्षात्कारस्य सर्वानुमतत्वम्। शान्तस्य तु स्थायी निरुक्तलक्षणो निर्वेदः, तद्वासना तु सर्वैः सांसारिकैरसुलभेति शान्तस्यास्वाददौर्लभ्यप्रयोज्योऽभावो न वाच्यः, जन्मान्तरीयापरिमितसुकृतपरिपाकविजृम्भितनिर्वेदसंस्काराणां कियतांचन तदनुभवस्यापलपितुमशक्यत्वात् ।

तथा—'न यत्र दुःखं न सुखं न चिन्ता, न द्वेषरागौ न च काचिदिच्छा ।
रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु समप्रमाणः ॥' इतिदर्शनात्

परमहंसदशामात्रानुभवनीयस्य सुखाद्यतिरिक्तस्य व्यभिचार्यादिसम्मेलनानर्हत्वात्तद्विधुरस्य शान्तस्यास्वादविरहाच्च रसत्वमिति न वाच्यम्, शान्तप्रकृतिकैः पारमहंस्यातिरिक्तदशायामप्यनुभाव्यत्वात्, सुखाभावकथनस्य वैषयिकसुखाभावपरत्वेनोक्ततृष्णाक्षयसुखरूपतायास्तस्याक्षतत्वात्, परमात्माद्यालम्बन-पुण्याश्रमाद्युद्दीपन-रोमाञ्चाद्यनुभाव-हर्षादिव्यभिचारिभावसम्मेलनस्य सद्भावाच्च ।

तदुक्तम्—'युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः ।
रसतामेति तदस्मिन् सञ्चार्यादेः स्थितिर्न विरुद्धा ॥' इति ।

केचित्तु—आत्मावज्ञालक्षणं विषयवैतथ्यप्रत्ययात्मकं वा निर्वेदमनत्यास्वाद्यं व्यभिचारिणमवसाय—'शमो निरीहावस्थायां स्वात्मविश्रामजं सुखम्' इत्युक्तलक्षणं शममेव शान्तरसस्थायिनं मन्यन्ते ।

अपरे—निर्वेदोपजीवनेनैव शमप्रवृत्तिदर्शनान्निर्वेदस्यैवोपजीव्यत्वेन स्थायितां निश्चिन्वन्तीत्यन्यत्र विस्तरः ।

सभी व्यक्तिको उस विलक्षण शान्त रस सम्बन्धी सुख विशेषका अनुभव क्यों नहीं होता ? इसका समाधान करते हैं—यदिनामेति । यदि वह ( शान्त रस ) सर्वसाधारण व्यक्तिके अनुभवका विषय नहीं है, तो इतने मात्रसे ही असाधारण महानुभावोंके अनुभवसिद्ध चित्तवृत्ति विशेष रूप शान्त रसका अपलाप नहीं किया जा सकता है ।

अन्ते शङ्कितं वीरे शान्तस्यान्तर्भावं खण्डयति—

न च वीरे तस्यान्तर्भावः कर्तुं युक्तः, तस्याभिमानमयत्वेन व्यवस्थापनात्। अस्य चाहङ्कारप्रशमैकरूपतया स्थितेः।

तस्य वीररसस्य। अभिमानमयत्वादाहोपुरुषिकामूलकत्वात्। अस्य शान्तरसस्य। अहङ्कारप्रशमैकरूपतया स्थितेः सर्वविधाहङ्कारनिवृत्तिरूपेण विजृम्भमाणत्वात्।

तदुक्तं दर्पणे—'निरहङ्काररूपत्वाद् दयावीरादिरेष नो ॥' इति।

एष शान्तरसः।

और वीर रसमें भी उसका अन्तर्भाव करना उचित नहीं है, क्योंकि वीर रसको अहंभावमूलक माना गया है और अहंकार की प्रशमावस्थामें शान्त रसकी स्थिति होती है।

उक्तान्यथाभावे दोषमाह—

तयोश्चैवंविधविशेषसद्भावेऽपि यद्यैक्यं परिकल्प्यते, तद्वीररौद्रयोरपि तथाप्रसङ्गः।

तयोर्वीरशान्तयोः। एवंविधविशेषस्य अभिमान-सर्वथातदभावरूपस्य। तथाप्रसङ्ग ऐक्यकल्पनाऽऽपत्तिः, वैधर्म्यसद्भावस्य तुल्यत्वात्। वीररौद्रयोर्धर्मार्थोपकारकत्वसाधर्म्याद्विरोधाभावाच्च।

इसलिये उन वीर और शान्त रसोंमें इस प्रकारके (अहंकार और अहंकाराभाव रूप) भेद होने पर भी यदि ऐक्य माना जाय तो तुल्य युक्तिसे वीर और रौद्र रसको भी एक ही मानना पड़ेगा।

विशेषमुपदिशन्नुपसंहरति—

दयावीरादीनां च चित्तवृत्तिविशेषाणां सर्वाकारमहङ्काररहितत्वेन शान्तरसप्रभेदत्वम्, इतरथा तु वीरप्रभेदत्वमिति व्यवस्थाप्यमाने न कश्चिद् विरोधः।

दयावीरादीनामुत्साहादिस्थाय्यात्मकत्वेन चित्तवृत्तिविशेषरूपता। शान्तरसप्रभेदत्वं, न तु शान्तस्यैव तत्रान्तर्भावः, तस्य तु—

'स्वं स्वं निमित्तमासाद्य शान्तादुत्पद्यते रसः।
पुनर्निमित्तापाये तु शान्त एव प्रलीयते ॥' इत्युक्तेरुपजीव्यत्वात्।

इतरथाऽहङ्कारसाहित्ये। आदिशब्देन दानवीर-धर्मवीर-युद्धवीर-सत्यवीर-देवताविषयकरतिभावप्रभृतीनामवगमः।

एतेन विषयदोषदर्शनजन्यजुगुप्सां शान्तस्थायिभावं निश्चित्य बीभत्से तदन्तर्भावं व्यवहरन्तोऽपि परास्ताः।

दयावीर आदिके उत्साहादि स्थायि भाव होनेसे चित्तवृत्तिविशेष यदि सब प्रकारके अहंकारोंसे रहित हों तो उसको शान्त रसका एक प्रभेद कह सकते हैं, अन्यथा ( अर्थात अहंकारमय चित्तवृत्ति विशेषके होने पर ) तो वीर रसका प्रभेद होगा, इस तरहकी व्यवस्था करनेसे उनमें किसी प्रकारका विरोध नहीं होता।

पर्यवसितमाचष्टे—

**तदेवमस्ति शान्तो रसः, तस्य चाविरुद्धरसव्यवधानेन प्रबन्धे विरोधिरससमावेशे सत्यपि निर्विरोधत्वम्। यथा—प्रदर्शिते विषये।**

अस्ति, न तु कथञ्चिदपि प्रतिक्षेप्तुंशक्यते। प्रदर्शिते विषये—नागानन्दादौ।

अब ग्रन्थकार उपसंहार द्वारा शान्तरसका स्थापन करते हैं-तदेवमिति। इस प्रकार शान्त रस सिद्ध हुआ और उसके विरोधी रसके समावेश रहने पर भी दोनोंके अविरुद्ध रससे व्यवधान कर देनेसे प्रवन्धमें विरोधी रसके सन्निवेशमें कोई दोष नहीं होता, जैसा कि ऊपर 'नागानन्द' नाटकके विषयमें दिखला चुके हैं।

उक्तमर्थं द्रढयितुं कारिकामवतारयति—

**एतदेव स्थिरीकर्तुमिदमुच्यते—**

स्थिरीकरणन्तु शिष्यबुद्धौ।

उक्त विषयको ही स्थिर करनेके लिये आगे कह रहे हैं—

**'रसान्तरान्तरितयोरेकवाक्यस्थयोरपि।**
**निवर्तते हि रसयोः समावेशे विरोधिता॥ ८३॥'**

हि यतः, एकवाक्यस्थयोरेकवाक्यव्यङ्ग्ययोरपि रसान्तरेणानुकूलेनान्यरसेन अन्तरितयोः कृतव्यवधानयोर्विरुद्धयो रसयोर्विरोधिता निवर्त्तते, तस्मादेकप्रवन्धव्यङ्ग्यविरुद्धरसयोरपि तादृशरसान्तरव्यवहितयोर्विरोधो निवर्तत एवेति निश्चितमित्यर्थः।

एक प्रवन्धमें परस्पर दो विरोधी रसोंके रहने पर भी दोनोंके अविरोधी अन्य रससे व्यवधान कर देने पर दोनों विरोधी रसोंके एक जगह समावेश करनेमें विरोध दूर हो जाता है।

तदाह—

**रसान्तरव्यवहितयोरेकप्रबन्धस्थयोर्विरुद्धयोर्विरोधिता निवर्तत इत्यत्र न काचिद् भ्रान्तिः, यस्मादेकवाक्यस्थयोरपि रसयोरुक्तया नीत्या विरुद्धता निवर्तते।**

उक्ता नीतिरनुकूलरसान्तरव्यवधानीकृतिः।

अनुकूल दूसरे रससे व्यवधान हो जाने पर एक वाक्यमें वर्तमान परस्पर दो विरोधी रसोंका विरोध भी हट जाता है, इस विषयमें किसी प्रकारकी भ्रान्ति नहीं समझनी चाहिये, क्योंकि एक वाक्य वृत्ति भी दो विरुद्ध रसोंका उपर्युक्त व्यवस्थासे विरोध समाप्त हो जाता है।

एकवाक्ये तादृशरसयोर्विरोधनिवृत्तिमुदाहरति—

**यथा—**

युद्धे सद्योनिधनमासाद्य स्वर्गतानां वीराणां विषये कश्चिदाह—

'भूरेणुदिग्धान् नवपारिजात-मालारजोवासितबाहुमध्याः।
गाढं शिवाभिः परिरभ्यमाणान्, सुराङ्गनाऽऽश्लिष्टभुजान्तरालाः॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान्।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः॥
विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम्।
निर्दिश्यमानाल्ललनाऽङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन्॥'

इत्यादौ।

नवपारिजातमालाया रजसा परागेण वासितं सुरभीकृतं बाह्वोर्मध्यं वक्षो येषां ते, तथा सुराङ्गनाभिरप्सरोभिः, आश्लिष्टमालिङ्गितं भुजयोरन्तरालं मध्यं येषां तादृशाः, तथा चन्दनवारीणां सेको यत्र यतो वा, तैः सुगन्धिभिः कल्पलतादुकूलैः कल्पवृक्षजपट्टवसनैः संवीजिताः कृतपवनाः, तथा विमानपर्यङ्कतले व्योमयानस्थपर्यङ्कोपरि, निषण्णा उपविष्टाः, वीरास्तदानीम् अमरत्वप्राप्त्यनन्तरम्, भूरेणुदिग्धान् पृथ्वीरजःपूर्णान्, शिवाभिः क्रोष्ट्रीभिर्गाढं परिरभ्यमाणान्, भक्षितुमालिङ्ग्यमानान्, सशोणितैः रुधिरवद्भिः, स्फुरद्भिः सञ्चलद्भिः, क्रव्यभुजां नवमांसभक्षकाणां गृध्रादीनां खगानां पक्षैः, उपवीज्यमानान्, युद्धभूमौ पतितान्, ललनानामङ्गुलीभिः 'अयं भवतो देहः' इत्येवं निर्दिश्यमानान् प्रदर्श्यमानान्, स्वदेहान् कुतूहलाविष्टतया साश्चर्यं सप्रमोदश्चापश्यन्नित्यर्थः।

तथा च—'शिवा गौरी शिवा क्रोष्ट्री' इति क्षपणकः।

इह विशेषकत्वाच्छ्लोकत्रयात्मकैकवाक्ये 'भूरेणुदिग्धान्' इत्यादिदेहविशेषणैरन्तराऽन्तरा बीभत्सः, नवपारिजातेत्यादिभिर्वीरविशेषणैः क्रमेण शृङ्गारश्च व्यज्यते। तौ च मिथोविरुद्धौ, तेन तयोर्विरोधपरिहाराय मध्ये युद्धभूमिनिपतन-तज्जन्यस्वर्ग-

प्राप्त्यादेर्युद्धोत्साहजन्यत्वेनोत्साहमूलकवीररसोऽपि व्यज्यते । यद्यपि वीरस्यापि शृङ्गारेण विरोध एवेति नानुकूलता, किन्तु वीरस्यालम्बनमिह प्रतियोद्धा, शृङ्गारस्य तु सुराङ्गना इत्यालम्बनभेदादविरोध इत्यन्तरा विशेषितः।

जैसे-युद्धमें तुरत मृत्यु पाकर वीरगतिको प्राप्त हुए योद्धाओंके विषयमें कोई कहता है—भूरेणु इति। नूतन पारिजात-मालाके परागोंसे सुगन्धित वक्षस्थल वाले एवं अप्सराओंसे आलिङ्गित बाहु मध्य वाले तथा चन्दन जलसे सिञ्चित अत्यन्त सुरभित कल्प वृक्षके बने हुए दुकूलों (दुपट्टों) के द्वारा पंखा डुलाये जाते हुए और विमानके पलङ्गों पर बैठे हुए वीरोंने कुतूहल वश सुराङ्गनाओं द्वारा अङ्गुलियोंके इशारेसे दिखलायी जाती हुई, एवं पृथिवीकी धूलियोंमें सनी हुई तथा शृंगालियों द्वारा खानेके लिये गाढ आलिङ्गित की जाती हुई और मांसाहारी गीध आदि पक्षियोंके शोणितोंसे लथपथ एवं स्फुरायमाण पांखोंसे हवा की जाती हुई और युद्ध क्षेत्रमें मरकर पड़ी हुई अपनी लाशों को देखा।

तदाह—

**अत्र हि शृङ्गारबीभत्सयोस्तदङ्गयोर्वा वीररसव्यवधानेन समावेशो न विरोधी।**

तदङ्गयोः शृङ्गारबीभत्सस्थायि-वीरव्यभिचारि-रतिजुगुप्सयोः।

अयमाशयः—न हि सुराङ्गनारति-पतितदेहजुगुप्से इह पार्यन्तिकास्वादसीमानमासादयतः, यच्छृङ्गारबीभत्सौ विरुद्धौ स्याताम्, अतो रतिजुगुप्सयोस्तत्स्थायिनोर्मध्य एव वीररससन्निवेशः। वीरस्य तु वाक्यव्यापकत्वेन प्राधान्येनास्वाद्यत्वम्।

श्रीवत्सलाञ्छनस्तु-वाक्येऽस्मिन् वीरव्यञ्जकसामग्र्यपेक्षया शृङ्गारबीभत्सव्यञ्जकसामग्र्या एवोत्कटत्वेन प्रतीतेः शृङ्गारबीभत्सयोर्मध्य उत्साहमात्रं निवेश्यत इत्यभिदधे।

यहां पर शृङ्गार और बीभत्स रस या उनके रति तथा जुगुप्सा रूप स्थायिभावोंके वीररससे व्यवधान हो जानेसे समावेशमें कोई विरोध नहीं हुआ।

उपसंहरन्नुपदिशति—

**'विरोधमविरोधञ्च सर्वत्रेत्थं निरूपयेत्।**
**विशेषतस्तु शृङ्गारे सुकुमारतरो ह्यसौ॥ ८४॥'**

कविः सहृदयश्च, इत्थममुनोक्तेन प्रकारेण सर्वत्र प्रबन्धे मुक्तकादौ च, सर्वेषु रसेषु वा, विरोधमविरोधं च निरूपयेत्। हि यतः, असौ शृङ्गारः सुकुमारतरोऽत्यन्तकोमलोऽस्तीति शेषः, सुकुमारास्त्वन्येऽपि रसाः, शृङ्गारस्तु नितरामिति तत्र विशेषतोऽधिकं निरूपयेदित्यर्थः।

रसविरोधाविरोधप्रकारश्च—'अत्र रसानां परस्परविरोधस्त्रिधा—क्वचिदाश्रयैक्येन, क्वचिदालम्बनैक्येन, क्वचिन्नैरन्तर्येण। तत्रालम्बनैक्येन वीरशृङ्गारयोः, हास्यरौद्रबीभत्सैः सह सम्भोगस्य, वीरकरुणरौद्रैर्विप्रलम्भस्य। आलम्बनाश्रयैक्याभ्यां वीरभयानकयोः। नैरन्तर्यविभावैक्याभ्यां शान्तशृङ्गारयोः। अविरोधोऽपि त्रेधा-वीरस्याद्भुतरौद्राभ्यां सर्वथैवाविरोधः। शृङ्गारस्याद्भुतेन, भयानकस्य बीभत्सेन। क्वचिदालम्बनभेदाद् यथा—वीरशृङ्गारयोः। तृतीयस्तु—'भूरेणु'—'इत्यादावुक्त एवेति केचित्' इत्युद्द्योतद्योतितदिशाऽवसेयः।

आलोककार उक्ताशयका उपसंहार करते हुए प्रतिपादन करते हैं—विरोधमिति। इसी प्रकार सभी जगह (प्रबन्ध तथा मुक्तकादिमें) विरोध तथा अविरोधका निरूपण करना चाहिये, परन्तु शृङ्गाररसमें इस बातका विशेष रूपसे ध्यान रखना चाहिये, क्योंकि वह (शृंगाररस) अन्य सभी रसोंकी अपेक्षा अधिक सुकुमार होता है।

विवृणोति वृत्तिकारः—

यथोक्तलक्षणानुसारेण विरोधाविरोधौ सर्वेषु रसेषु, प्रबन्धेऽन्यत्र च निरूपयेत् सहृदयः। विशेषतस्तु शृङ्गारे, स हि रतिपरिपोषात्मकत्वाद्, रतेश्च स्वल्पेनापि निमित्तेन भङ्गसम्भवात्, सुकुमारतरः सर्वेभ्यो रसेभ्यो मनागपि विरोधिसमावेशं न सहते।

अन्यत्र मुक्तकादौ।

पूर्वकथित लक्षणोंके अनुसार सभी रसोंमें तथा प्रबन्धकाव्यमें और मुक्तक आदिमें विरोध और अविरोधको अच्छी तरह पहचान कर निबन्धन करना चाहिये, किन्तु विशेषकर शृङ्गार रसमें उक्त विषयका ध्यान रखना परम आवश्यक समझना चाहिये, क्योंकि वह (शृङ्गाररस) रतिके परिपोषात्मक होनेसे और रतिके थोड़े भी कारणसे भङ्ग होनेकी सम्भावनासे सब रसोंसे अधिक सुकुमार होता है, इसलिये वह लेशमात्र भी विरोधीके समावेशको सहन नहीं कर सकता।

किञ्च—

'अवधानातिशयवान् रसे तत्रैव सत्कविः।
भवेत् तस्मिन् प्रमादो हि झगित्येवावभासते ॥ ८५ ॥'

हि यतः, तस्मिन् शृङ्गारे रसे, कवेः प्रमादोऽनवधानता झगित्येव न तु विलम्बेनावभासते। तस्मात् तत्रैव शृङ्गारे सत्कविः अवधानातिशयवान् सप्रयत्नतरो भवेदित्यर्थः।

इसलिये उत्तम कविको चाहिये कि श्रृङ्गार रसमें ही अत्यन्त सावधान रहे, क्योंकि उसमें थोड़ा भी प्रमाद बहुत जल्दी प्रतीत होने लगता है, अर्थात् श्रृङ्गार वर्णनमें कविका थोड़ा भी स्खलन सहृदयोंको तुरंत ही लक्षित होकर अत्यन्त खटकने लगता है।

कारिकां विवृणोति—

**तत्रैव च रसे सर्वेभ्योऽपि रसेभ्यः सौकुमार्यातिशययोगिनि, कविरवधानवान् प्रयत्नवान् स्यात्। तत्र हि प्रमाद्यतस्तस्य सहृदयमध्ये क्षिप्रमेवावज्ञानविषयता भवति।**

तत्र हीत्यादिसमर्थनम्। अवज्ञानविषयता तिरस्कार्यत्वम्।

सभी रसोंसे अत्यधिक सुकुमार श्रृङ्गाररसमें ही कविको विशेष सावधान तथा प्रयत्नशील होना चाहिये, क्योंकि उसमें प्रमाद करनेवाला कवि, सहृदयोंके मध्यमें शीघ्र ही अपमानका पात्र बन जाता है।

न च सुकुमारतैव श्रृङ्गारप्राधान्ये निमित्तम्, यावदन्यदपीत्याह—

**श्रृङ्गाररसो हि संसारिणां नियमेनानुभवविषयत्वात् सर्वरसेभ्यः कमनीयतया प्रधानभूतः।**

न हि शमादीनामनुभवः संसारिणां जीवानां प्रायेण, क्वाचित्कश्च नैव प्राधान्यावहः। श्रृङ्गारस्थायिरतेरनुभवस्त्वाकीटं यथास्वं भवत्येवेति श्रृङ्गारस्य प्राधान्यमक्षुण्णमिति सारम्।

श्रृङ्गार रसकी प्रधानतामें सुकुमारताके अतिरिक्त दूसरा भी कारण बतलाते हैं—श्रृङ्गार इति। श्रृंगार रस समस्त सांसारिक प्राणियोंके अनुभवका विषय अवश्य होता है, इसलिये सौन्दर्यकी दृष्टिसे सब रसोंकी अपेक्षा वह प्रधानभूत है, क्योंकि श्रृङ्गारके रत्यात्मक स्थायिभावका अनुभव, पशुपक्षी पर्यन्त सभी प्राणियोंको अपनी योग्यताके अनुसार होता है, अतः उसकी प्रधानता अक्षुण्ण प्रतीत होती है।

पर्यवसितं विशेषं वक्तुं कारिकामवतारयति—

**एवं सति—**

श्रृङ्गारस्य कमनीयत्वेन सर्वानुकूल्ये निश्चिते सतीत्यर्थः।

**'विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा।**
**तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यति॥ ८६॥'**

तच्छब्दद्वयेन श्रृङ्गारः परामृश्यते। तथा च तदङ्गानां श्रृङ्गारादिविभावादीनां तद्विरुद्धस्य श्रृङ्गारादिप्रतिकूलस्य रसस्य स्पर्शः सम्बन्धः कथितपरिपोषपरिहार-

लक्षणाविरोधोपायेनैव केवलं न दुष्यति न, विनेयान् शिक्षणीयान् सुकुमारमतीन् राजकुमारप्रभृतीन् , उन्मुखीकर्तुमुपदेशग्रहणाय गुडजिह्विकयाऽभिमुखीकर्तुम् , काव्यस्य शोभार्थं श्रृङ्गारव्यञ्जनेन विच्छित्तिविशेषं जनयितुं च क्रियमाणः स न दुष्यति, नैव दोषवान् भवतीत्यर्थः ।

इस प्रकार श्रृङ्गार रसके अत्यन्त रमणीय होनेसे सबके अनुकूल सिद्ध होने पर—अत्यन्त सुकुमारमति वाले विद्यार्थियोंको शिक्षणीय विषयमें प्रवृत्त करानेकी दृष्टिसे या काव्यकी शोभाको बढ़ानेके लिये श्रृङ्गारके विरोधी शान्त आदि रसोंमें श्रृंगारके विभावादि अङ्गोंका सम्पर्क ( वर्णन ) दोषाधायक नहीं होता है ।

तदाह—

**श्रृङ्गारविरुद्धरसस्पर्शः श्रृङ्गाराङ्गाणां यः, स न केवलमविरोधलक्षणयोगे सति न दुष्यति, यावद् विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा क्रियमाणो न दुष्यति ।**

वाशब्दोऽप्यर्थकः । यावदिति किन्त्वर्थकम् ।

श्रृङ्गार रसके अङ्गोंका जो श्रृङ्गार विरोधी रसोंके साथ सम्पर्क है, वह केवल उपर्युक्त अविरोध लक्षणोंके कारण ही निर्दोष है, यह बात नहीं समझनी चाहिये, अपितु शिष्योंको उसकी ओर आकृष्ट करने अथवा काव्यकी शोभाको बढ़ानेकी दृष्टिसे किया जाने पर ही दूषित नहीं होता है ।

उक्तं समर्थयति—

**श्रृङ्गाररसाङ्गैरुन्मुखीकृताः सन्तो हि विनेयाः सुखं विनयोपदेशं गृह्णन्ति**

'स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपभुञ्जते ।
प्रथमालीढमधवः पिबन्ति कटुकौषधम् ॥'

इत्युक्तनयेन मृदुमतयः क्षितिभृत्सुतप्रभृतयः शुष्कान् शान्तादिव्यञ्जकवृत्तान्तानवगन्तुमुन्मुखाः प्रायेण न भवेयुः, किन्तु सानन्दं तानुपदेश्यविषयान् गृह्णीयुरेवेति तेषामुन्मुखीकरणाय तत्रापि तन्मनोरमश्रृङ्गारविभावादयो निवेश्यन्ते । ते च प्रकृतोपयोगितया न विरोधमाचरन्तीति तात्पर्यम् ।

क्योंकि श्रृङ्गार रसके अङ्गोंसे आकृष्ट होकर प्रवृत्त होने वाले छात्र गण सदाचार सम्बन्धी उपदेशोंको आनन्दपूर्वक ग्रहण कर लेते हैं ।

न हि काव्यं सहृदयमनोविनोदमात्रफलकम् , यावन्मनोरमैः शब्दैः कान्तेव भङ्गिविशेषेण सदर्थमप्युपदिशति । तदुक्तं मम्मटेन—'कान्तासम्मिततयोपदेशयुजे'

इति। इतरथा प्रौढमतिभिस्तदनुपादेयमेव स्यादित्यभिप्रेत्याह—

**सदाचारोपदेशरूपा हि नाटकादिगोष्ठी विनेयजनहितार्थमेव मुनिभिरवतारिता।**

आदिशब्देन प्रकरणादीनां श्रव्यकाव्यानां च परिग्रहः। गोष्ठीसमितिरालापो वा। मुनिभिर्भरतादिभिः। अवतारितोद्भाविता प्रचारिता वा।

नाटकादिभ्यो यतो नायकवदाचरणीयम्, न प्रतिनायकवदिति सदाचारोपदेश एव भवति, तस्मात्तानि महर्षिभिः शिक्षणीयजनहिताय प्रकाशितानि। न हि महर्षीणां तुच्छे कर्मणि प्रवृत्तिरित्यभिप्रायः।

काव्य, केवल सहृदयोंके मनोविनोदके लिये ही नहीं होता, अपितु रमणीय शब्दों द्वारा विदुषी स्त्री की तरह छटाविशेषसे सदुपदेशको भी करता है, इस आशयसे वृत्तिकार कहते हैं—सदाचारेति। अर्थात् भरतादि मुनियोंने शिक्षणीय जनोंके हितके लिये ही सदाचारोपदेशरूप नाटकादि गोष्ठी मण्डलीका निर्माण या प्रचार किया है।

शृङ्गाराङ्गसमावेशस्य मुख्यं प्रयोजनमुक्त्वाऽन्यदाह—

**किञ्च शृङ्गारस्य सकलजनमनोऽभिरामत्वात् तदङ्गसमावेशः काव्यशोभाऽतिशयं पुष्यतीत्यनेनापि प्रकारेण विरोधिरसे शृङ्गाराङ्गसमावेशो न विरोधी।**

शोभाऽतिशयं लोकोत्तरचमत्कारं पुष्यति पुष्टीकरोति।

अन्ये तु—'शोभाऽतिशयमलङ्कारविशेषमुपमाप्रभृतिं पुष्यति सुन्दरीकरोति' इति व्याचक्षते, तत्र यथोक्तम्—'काव्यशोभाकर्तारो गुणाः, तदतिशयहेतवस्त्वलङ्काराः' इति प्रमाणं चोपन्यस्यन्ति।

इदमत्र परामर्शनीयम्—न ह्यलङ्काराः शोभाऽतिशयस्वरूपाः, अपि तु तद्धेतवः। अत एव तदतिशयहेतव इति वामनवचनमपि तैरेवोपात्तं सङ्गच्छते। न वा काव्ये समावेशितं शृङ्गाराङ्गमुपमाद्यलङ्कारं सुन्दरीकरोति। तथात्वे तस्यैवालङ्कारत्वप्रसङ्गः, किन्तु कटकादिना मनुष्याङ्गमिव स्वभावसुन्दरमपि तेनैव सुन्दरीक्रियते।

और शृङ्गार रस सब लोगोंके मनको हरण करनेवाला होता है, इसलिये उसके अङ्गोंका समावेश, काव्यकी अतिशय शोभाको बढ़ाता है, इस कारणसे भी विरोधी रसमें शृङ्गाराङ्गका समावेश विरोधी नहीं होता है।

उदाहरति—

ततश्च—

इसलिये:—

कश्चन विरक्तो वदति—

'सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः।
किन्तु मत्ताङ्गनाऽपाङ्ग-भङ्गलोलं हि जीवितम् ॥'

इत्यादिषु नास्ति रसविरोधदोषः।

रामा विलासिन्यो मनोरमा मनोहरा इति सत्यम्, विभूतयः सम्पदो रम्या इति च सत्यम्, किन्तु जीवितं जीवनं हि निश्चयेन मत्ताङ्गनायाः प्रमदाया अपाङ्गभङ्ग इव कटाक्ष इव लोलमस्थिरमस्तीत्यर्थः।

स्वीकरोमि तावद् रमणीनां सम्पदां च रमणीयताम्, किन्तु मनुष्यजीवनं यदि स्थिरं स्यात्, तदैव तदुपभोगः सम्यक् सम्भवेदिति ततो मन आकृष्य परमात्म-चिन्तायामासञ्जनीयमिति भावः।

अत्र जीवितानित्यत्वकथनं शान्तविभावं, रामा इति शृङ्गारालम्बनविभावो विभूतय इति तदुद्दीपनविभावश्च विरुद्धावपि पुष्णीतः, पर्यन्ते शान्तस्यैव विश्रान्तिधामत्वात्। मत्ताङ्गनेत्याद्यपि यथाकथंचिच्छृङ्गारं प्रकाशयञ्जीवनास्थैर्यातिशयबोधनेन शान्तमेवोपकरोति। किञ्च भवत्येतावता महीयान् विनेयोन्मुखीकरणकारी काव्ये शोभाप्रकर्ष इत्यविरोधः शान्तशृङ्गारयोरत्र, परत्र शृङ्गारभङ्गीकृतदेवतास्तवादौ च बोध्यः।

कोई विरक्त व्यक्ति कहता है:—यह ठीक है कि युवती ललनायें बड़ी मनोहारिणी होती हैं और यह भी ठीक है कि ऐश्वर्य सम्पदायें रमणीय होती हैं, किन्तु उनका उपभोग करनेवाला यह जीवन तो मतवाली स्त्रीके कटाक्षक्षेपकी तरह अत्यन्त चञ्चल (क्षण स्थायी) है, अर्थात् प्रमदाओं एवं सम्पदाओंके रमणीय होने पर भी यदि मनुष्य जीवन स्थिर होता तो उन सबका उपभोग भी अच्छी तरह हो सकता था, किन्तु ऐसी बात नहीं है, इसलिये उन (स्त्री-सम्पदाओं) के विषयोंसे मनको हटाकर परमात्मचिन्तनमें ही लगाना चाहिये।

यहां पर अन्ततः शान्तरसके ही पर्यवसान होनेसे संसारकी अनित्यता रूप शान्त रसके विभावके वर्णनसे "रामाः" एवं "विभूतयः" ये दोनों शृङ्गारके आलम्बन एवं उद्दीपन विभाव, विरोधी होते हुए भी शान्त रसको ही पुष्ट करते हैं, इसलिये ऐसे स्थलोंमें रस विरोधका दोष नहीं होता।

उपसंहरन् पर्यवसितमुपदिशति—

'विज्ञायेत्थं रसादीनामविरोधविरोधयोः।
विषयं सुकविः काव्यं कुर्वन् मुह्यति न क्वचित् ॥ ८७ ॥'

अब उपसंहार करते हुए सबका सार बतलाते हैं-विज्ञायेति । इस प्रकार रसादि-के अविरोध एवं विरोधके विषयको जान कर उत्तम कवि काव्य रचना करते हुए कहीं भी भ्रममें नहीं पड़ते हैं ।

स्फुटं व्याख्याति—

इत्थमनेनान्तरोक्तेन प्रकारेण रसादीनां रसभावतदाभासानां परस्परं विरोधस्याविरोधस्य च विषयं विज्ञाय, सुकविः काव्यविषये प्रतिभाऽतिशययुक्तः काव्यं कुर्वन् न कचिन्मुह्यति ।

आदिशब्देन भावशान्त्यादयो ग्राह्याः । मुह्यति मोहं प्रमादं भ्रमं वाऽधिगच्छति ।

इस तरह अभी कही हुई उक्त रीतिसे रस, भाव, एवं तदाभासोंके परस्पर विरोध एवं अविरोधके विषयको जान कर काव्यके विषयमें अत्यन्त प्रतिभाशाली श्रेष्ठ कविको काव्यकी रचना करनेमें कहीं भी भ्रम नहीं होता ।

इत्थं रसादीनां मिथोविरोधाविरोधप्रकारा रसादिसमावेशप्रकाशकत्वेन काव्योपकारका निरूपिताः । तदनन्तरं रसादिव्यञ्जकानां वाचकानां च निरूपणमपि काव्योपकारकमिति तदपि विधीयत इति कारिकाऽवतरणमाह—

एवं रसादिषु विरोधाविरोधनिरूपणस्योपयोगित्वं प्रतिपाद्य, व्यञ्जकवाच्यवाचकनिरूपणस्यापि तद्विषयस्य तत्प्रतिपाद्यते—

व्यञ्जकेति वाच्यवाचकयोर्विशेषणम्, तद्विषयस्येति च निरूपणस्य । पूर्वस्तच्छब्दो रसादीन्, परश्च तदुपयोगित्वं बोधयति—

इस तरह रसादिमें विरोध एवं अविरोधके निरूपण की उपयोगिता बतला कर उन रसादि विषयोंके व्यञ्जकरूप कथावस्तु आदि वाच्य और वाचक शब्दोंके निरूपण की भी उपयोगिताको बतलाते हैं:—

'वाच्यानां वाचकानां च यदौचित्येन योजनम् ।
रसादिविषयेणैतत्कर्म मुख्यं महाकवेः ॥ ८८ ॥

वाच्यानां प्रबन्धसम्बन्धिवृत्तान्तानां, वाचकानां सुप्तिङन्तादिरूपाणां च काव्ये, औचित्येनोचितविवेचनया कथितपूर्वया रसादिविषयेण रसादिव्यञ्जनोपयोगित्वेन, यद् योजनं निवेशनम्, एतन् महाकवेर्मुख्यं तदन्तरेण महाकवित्वासम्पत्तेरसाधारणं कर्मास्तीत्यर्थः ।

कथावस्तु रूप वाच्य और उसके वाचकरूप शब्दोंकी रसादि विषयके औचित्य-की दृष्टिसे योजना करना ही महाकविका मुख्य कर्तव्य है ।

तदाह—

वाच्यानामितिवृत्तविशेषाणां वाचकानां च तद्विषयाणां रसादिविषये औचित्येन यद् योजनम्, एतन्महाकवेर्मुख्यं कर्म।

वाच्य रूप इतिवृत्त (कथावस्तु विशेष) और उसके वाचकरूप शब्दोंका रसादि विषयके औचित्यकी दृष्टिसे संगठन करना ही महाकविका मुख्य कर्तव्य समझा जाता है।

पर्यवसितमाचष्टे—

अयमेव हि महाकवेर्मुख्यो व्यापारो यद् रसादीनेव मुख्यतया काव्यार्थीकृत्य तद्व्यक्त्यनुगुणत्वेन शब्दानामर्थानां चोपनिबन्धनम्।

काव्यार्थीकृत्य 'काव्यस्यात्मा स एवार्थः' इति प्रागुक्ते रसादीनेव प्राधान्येन काव्यव्यङ्ग्यान् विधाय। तद्व्यक्त्यनुगुणत्वेन रसादिव्यञ्जनोपकारित्वेन। तत्रेतिवृत्तरूपवाच्यस्य व्यक्त्यनुगुणत्वम्—'विभावभावानुभावसञ्चार्यौचित्यचारुणः। विधिः कथाशरीरस्य' इत्यादिना सुप्तिङन्तादि—लक्षणवाचकस्य—'सुप्तिङ्वचनसम्बन्धैः' इत्यादिना च प्राङ् निरूपितमेव स्मरणीयम्।

मुख्यमित्यनेन—'आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः' इत्यादिना पूर्वं यद् वाच्यापेक्षया काव्ये व्यङ्ग्यस्योपादेयत्वमुपक्षिप्तम्, तत् साधितमुपसंहृतमिदानीम्।

महाकविका यही मुख्य कार्य है कि रसादिको मुख्यरूपसे काव्यका विषय बना कर उसके अनुरूप ही शब्दों तथा अर्थोंकी रचना करे।

अथ सम्प्रत्युक्तव्यवस्थानां प्राचीनसम्मतिं दर्शयन् वृत्तीः प्रसङ्गाद् वाच्यव्यङ्ग्यप्रत्ययक्रमं व्यञ्जनां च निरूपयितुं कारिकामवतारयति—

एतच्च रसादितात्पर्येण काव्यनिबन्धनं भरतादावपि सुप्रसिद्धमेवेति-प्रतिपादयितुमिदमुच्यते—

एतदिदानीमस्मदुक्तम्। आदिशब्देनेतरालङ्कारनिबन्धपरिग्रहः। सुप्रसिद्धमेव, न त्वस्माभिरेव कल्पितम्।

अब उक्त व्यवस्थामें प्राचीनोंकी सम्मति दिखलाते हुए प्रसङ्गवश कैशिकी आदि वृत्तियोंका और वाच्य-व्यङ्ग्यके बोधक्रमका निरूपण करते हैं—एतच्चेति। रसादिको ही प्रधान विषय मानकर यह काव्य रचना करना, भरतादि मुनि प्रोक्त नाट्यशास्त्रमें भी अत्यन्त प्रसिद्ध है, यह बतलानेके लिये आगे कहते हैं:—

'रसाद्यनुगुणत्वेन व्यवहारोऽर्थशब्दयोः।
औचित्यवान् यस्ता एता वृत्तयो द्विविधाः स्मृताः ॥८६॥'

अर्थशब्दयो रसाद्यनुगुणत्वेन रसादिव्यक्त्यनुकूलतया, औचित्यवानुचितो यः काव्ये व्यवहारः समावेशः, ता एता भरतानुशासनेऽन्यत्रालङ्कारनिबन्धेषु च प्रसिद्धा द्विविधाः कैशिक्यादय आर्थिक्य उपनागरिकाद्याः शाब्दयश्च वृत्तयः स्थिता इत्यर्थः।

रसादिके अनुकूल जो अर्थों और शब्दोंका उचित व्यवहार ( सन्निवेश ) है, वही यह दो प्रकार की वृत्ति मानी जाती है।

वृत्तिनिर्वचनं विदधत् कारिकां व्याख्याति—

व्यवहारो हि वृत्तिरित्युच्यते। तत्र रसानुगुण औचित्यवान् वाच्याश्रयो यो व्यवहारः, ता एताः कैशिक्याद्यो वृत्तयः। वाचकाश्रयाश्चोपनागरिकाद्याः।

वृत्तिरित्यत्र वृतेर्भावे क्तिन्प्रत्ययः, तेनोचितैव व्यापारार्थकता। कैशिकीप्रभृतय उपनागरिकाद्याश्च प्रागेवास्माभिर्लक्षिताः।

वृत्तिकार उक्तार्थको ही स्फुट करते हैं—व्यवहार इति। वृत्तिको ही व्यवहार कहते हैं। उनमें रसके अनुकूल औचित्यसे युक्त जो अर्थवृत्ति व्यवहार (वृत्तियां) हैं, वे कैशिकी आदि आर्थिकी वृत्तियां कही जाती हैं और उक्त प्रकार शब्दवृत्ति जो व्यवहार (वृत्तियां) हैं, वे उपनागरिका आदि शाब्दी वृत्तियां कही जाती हैं।

वृत्तीनां सप्रयोजनत्वं दर्शयति—

वृत्तयो हि रसादितात्पर्येण सन्निवेशिताः कामपि नाट्यस्य काव्यस्य च च्छायामावहन्ति।

नाट्यपदेन दृश्यानां काव्यपदेन च श्रव्याणां ग्रहणम्। छायाऽतिशयाधानमेव वृत्तीनां प्रबन्धेषु प्रयोजनम्।

रसादिके तात्पर्यसे अर्थात् रसादिको प्रधान विषय मान कर प्रयुक्त की गई कैशिकी आदि तथा उपनागरिका आदि वृत्तियां नाटक और काव्यमें कुछ अलौकिक अनिर्वर्णनीय सौन्दर्यको उत्पन्न कर देती हैं।

कुतो रसादितात्पर्येणैव, न पुनरितिवृत्ततात्पर्येण वृत्तीनां योजनम्? इत्याशङ्कामपास्यति—

रसादयो हि द्वयोरपि तयोर्जीवभूताः, इतिवृत्तादि तु शरीरभूतमेव।

हि यतः, द्वयोरर्थशब्दाश्रितत्वभेदेन द्विविधयोरपि तयोर्वृत्त्यो रसादयो जीव-

भूताः शरीर इव काव्ये जीववत् प्रधानानि,--'वृत्तयः काव्यमातृकाः' इति कथयद्भिर्भरतचरणै रसाद्यनुकूलेतिवृत्तयो जनोपदेशस्य विहितत्वेन रसादीनां तत्त्वप्रसिद्धेः। 'स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपभुञ्जते' इत्युपन्यस्यता भट्टभामहेनापि रसादीनां प्राधान्यमुद्घोषितमेव। इतिवृत्तं तु वाच्यार्थरूपं शब्दार्थशरीरस्य काव्यस्य शरीरभूतमिति न दुर्बोधम्। अत एव—'इतिवृत्तं तु नाट्यस्य शरीरम्' इति भरतानुशासनं सङ्गच्छते। तत्र 'नाट्यं च रसः' इत्याचार्याः, तथा च शब्दार्थाश्रितत्वेन तदनतिरिक्ता द्विविधा वृत्तयो रसादीनां शरीरमिति योजना।

रसादिके तात्पर्यसे ही वृत्तियोंका ज्योंका त्यों निवेश होता है और इतिवृत्त (कथावस्तु) के तात्पर्यसे क्यों नहीं होता? इस शङ्काको दूर करते हैं—रसादय इति। क्योंकि रसादि ही आर्थी एवं शाब्दी दोनों प्रकारकी वृत्तियोंका, शरीरमें आत्माकी तरह काव्यमें सारभूत प्रधान वस्तु है। इतिवृत्त (कथावस्तु) आदि तो शरीर ही है।

एकदेशिमतमुपन्यस्यति--

**अत्र केचिदाहुः—'गुणगुणिव्यवहारो रसादीनामितिवृत्तादिभिः सह, न तु जीवशरीरव्यवहारः। रसादिमयं हि वाच्यं प्रतिभासते, न तु रसादिभिः पृथग्भूतम्' इति।**

रसादीतिवृत्तयोर्जीवशरीरव्यवहारस्तदा स्याद्, यदि रसादिभिः पृथग्भूतमपि वाच्यार्थरूपमितिवृत्तं क्वचिदुपलभ्येत। न तु तथा, रसाद्यनतिरिक्तस्यैवेतिवृत्तस्य सर्वत्रोपगमात्। शरीरं तु मरणानन्तरं जीवात् पृथगप्युपलभ्यत इति कथं तयोस्तादृशो व्यवहारः, किन्तु गुणगुणिव्यवहार एव, तथा हि—यथा गुणेभ्यो रूपादिभ्यः पृथग्भूतस्य गुणिनो द्रव्यस्य नोपलम्भः, तथैव रसादिभ्योऽतिरिक्तस्येतिवृत्तस्य, तयोरत्यन्तसम्मिश्रणेन भेदस्य सतोऽपि ग्रहीतुमशक्यत्वाद् वाच्यव्यङ्ग्ययोः प्रतीतिक्रमस्य लाघवेनाज्ञानादिति सारम्।

(पूर्वपक्ष) कुछ लोगोंका कहना है कि इतिवृत्तके साथ रसादिका गुण-गुणीभावका व्यवहार ही ठीक है, जीव और शरीरका व्यवहार ठीक नहीं, क्योंकि वाच्यभूत कथावस्तुरूप गुणी, रसादि रूप गुणसे युक्त होनेसे रसादिमय प्रतीत होता है, न कि आत्मासे भिन्न शरीरके समान रसादिसे पृथक् प्रतीत होता, अर्थात् रसादि और इतिवृत्तमें जीव-शरीरके समान व्यवहार तब होता, जब कि रसादिसे अलग होकर वाच्यार्थ रूप इतिवृत्त कहीं उपलब्ध भी होता, परन्तु ऐसी बात नहीं है, क्योंकि सभी जगह रसादिसे अनतिरिक्त ही इतिवृत्तकी उपलब्धि होती है, शरीर

तो मरणके बाद जीवसे पृथक् भी उपलब्ध होता है, इसलिये इन दोनोंमें गुण-गुणी व्यवहार ही ठीक है ।

खण्डयति—

**अत्रोच्यते—'यदि रसादिमयमेव वाच्यं यथा गौरत्वमयं शरीरम्, एवंसति यथा शरीरे प्रतिभासमाने नियमेनैव गौरत्वं प्रतिभासते सर्वस्य, तथा वाच्येन सहैव रसादयोऽपि सहृदयासहृदयस्य च प्रतिभासेरन् ।**

रसादीतिवृत्तयोर्गुणगुणिभावो नाभ्युपगन्तुं शक्यते, यतस्तथासति यथा गौरत्व-गुणस्य प्रत्यक्षं तद्वतः शरीरस्य प्रत्यक्षे नियमतः सर्वस्यानष्टचक्षुषो भवति, तथैव वाच्यार्थज्ञाने सति रसादिव्यङ्ग्यज्ञानं सर्वस्य सहृदयासहृदयसाधारणस्य वैयाकरणमात्रस्यापि भवेदिति महानुपप्लव आपतति, तस्मान्न गुणगुणिभावस्तयोरिति फलितम् ।

( उत्तरपक्ष ) उक्त प्रश्नके उत्तरमें हम यह कह सकते हैं कि यदि वाच्यरूप इतिवृत्त, गौरवर्णमय शरीरके समान रसादिमय ही होता तो, जैसे शरीरकी प्रतीति होने पर प्रत्येक व्यक्तिको गौरवर्णत्वकी प्रतीति अवश्य ही होती है, वैसे ही सभी सहृदय असहृदय लोगोंको वाच्य प्रतीतिके साथ ही रसादिकी प्रतीति भी होनी चाहिये ।

ननु भवेत् सर्वस्य तदनुभवः, तेन का हानिरित्यत आह—

**न चैवम्, तथा चैतत् प्रतिपादितमेव प्रथमोद्द्योते ।**

एवं सर्वस्य तदवगमश्च न भवतीति प्रथमोद्द्योत एव—'शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते' इत्यादिना निर्धारितम् । तस्मादियमापत्तिर्गुणगुणिभावं प्रतिबध्नात्येवेत्याशयः ।

परन्तु ऐसा नहीं होता है, अर्थात् सभीको ( चाहे सहृदय हो या असहृदय ) एक साथ दोनों ( रस और वाच्यार्थ ) की प्रतीति नहीं होती है, इसे हम प्रथम उद्द्योतमें 'शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते' इत्यादि शब्दोंसे प्रतिपादन कर चुके हैं ।

पुनश्शङ्कते—

**स्यान्मतम्, रत्नानामिव जात्यत्वं प्रतिपत्तृविशेषसंवेद्यं वाच्यानां रसादिमयत्वमिति ।**

इतीत्यस्य मतमित्यनेन, तस्य च स्यादित्यनेनान्वयः । जात्यत्वमुत्कृष्टजाति-विशिष्टत्वम् । प्राधान्ये मयट् । तथा च—रत्नानां जात्यत्वमिव वाच्यानां रसादिमयत्वं प्रतिपत्तृविशेषसंवेद्यं स्यादिति मतं चेदिति सम्बन्धः ।

नायं सार्वत्रिको नियमः—यद् धर्मिणो ज्ञाने धर्मस्यापि ज्ञानं सर्वेषां जनानां भवत्येव, यतो रत्नानां धर्मो जात्यत्वं रत्नानि जानद्भिरपि सर्वैर्न ज्ञायते, वैकटिकेनैव प्रतिपत्तृविशेषेण तु परिचीयते, तद्वदिहापि वाच्यस्य भवेत् सर्वेषां ज्ञानम्, तद्धर्मस्य रसादिमयत्वस्य तु ज्ञानं सहृदयस्यैव प्रतिपत्तृविशेषस्य स्यादिति गुणगुणिभावाभ्युपगमेऽपि न क्षतिरिति शङ्कितुरभिप्रायः।

( पूर्वपक्ष ) जिस प्रकार रत्नोंकी उत्कृष्टताको विशेष जानकार जौहरी व्यक्ति ही जान सकता है, हर एक व्यक्ति नहीं जान सकता, इसी प्रकार कथावस्तु रूप वाच्यके रसादिमयत्वरूप गुणोत्कर्षको सहृदय व्यक्ति ही जान सकता है, सर्व साधारण व्यक्ति नहीं जान सकता, यदि यह अभिमत हो तो, इसका उत्तर यह है कि:—

खण्डयति—

**नैवम्, यतो यथा जात्यत्वेन प्रतिभासमाने रत्ने रत्नस्वरूपानतिरिक्तत्वमेव लक्ष्यते, तथा रसानां विभावानुभावादिरूपवाच्यानतिरिक्तत्वमेव लक्ष्येत; न चैवम्।**

एवं जात्यत्वरसादीनां साम्यं न भवितुमर्हति, यतो रत्नानां जात्यत्वं तेषु लीनमिवास्तीति तेभ्यः पृथङ् न प्रतीयते, किन्तु तदेकरूपं प्रतिभातीति जात्यत्वग्रहः सर्वेषां रत्नदर्शिनां न भवतीत्युचितम्, वाच्यानां विभावादीनां पुनर्धर्मा रसादयो गौरत्वादिवदुन्मग्नस्वभावत्वादीषत्पृथक् प्रतीतिगोचरा भवन्त्येवेति न वाच्यैकरूपा इति सर्वेषां वाच्यावबोधिनां तदवबोधो दुर्वार एव स्यादिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम्। तस्मान्न गौरत्वादिरूपवद्, रसादयः, न वा जात्यत्ववच्च स्वीकर्तुं शक्याः। आद्ये—सर्वेषां तत्प्रतीतिप्रसङ्गात्। अन्त्ये—वाच्यविभावाद्येकरूपताऽऽपातात्, किन्तु विभावादिप्रतीतिप्रयोज्यास्वादस्वरूपा विलक्षणा एव त इति जीवशरीरभाव एव तेषामितिवृत्तेः सहेति तात्पर्यम्।

( उत्तरपक्ष ) उत्कृष्ट रत्नजातीयताकी समता रसादिमें नहीं हो सकती, क्योंकि जैसे उत्कृष्ट-जातीयरूपसे भासित होनेवाले रत्नमें वह उत्कृष्टता रत्नके स्वरूपसे अभिन्न अर्थात् रत्नस्वरूपमय ही प्रतीत होती है, वैसे ही रसादिको भी विभावादि वाच्योंसे अभिन्न अर्थात् विभावादि रूपमें ही भासित होना चाहिये, परन्तु ऐसा नहीं होता, सारांश यह है कि सहृदय व्यक्तियोंको विभावादिसे पृथक् कुछ विलक्षण ही रसादिकी प्रतीति होती है, यह विषय सहृदय हृदय वेद्य ही है।

रसादिविभावादीनां भेदं समर्थयति—

**न हि विभावानुभावव्यभिचारिण एव रसा इति कस्यचिदवगमः। अत एव च विभावादिप्रतीत्यविनाभाविनी रसादीनां प्रतीतिरिति तत्प्रतीत्योः कार्यकारणभावेन व्यवस्थानात् क्रमोऽवश्यंभावी, स तु लाघवान्न प्रकाशत इत्यलक्ष्यक्रमा एव सन्तो व्यङ्ग्या रसादय इत्युक्तम्।**

अत एव—रसादिभ्यो विभावादीनां भेदादेव। अविनाभाविनी-तज्जन्या। तत्प्रतीत्यो-रसादिभावादिज्ञानयोः। स तु-क्रमस्तु। लाघवाच्छैघ्र्यात्। उक्तं प्रागसंलक्ष्यक्रमव्यङ्ग्यनिरूपणप्रकरणे सङ्क्षेपेण।

यदि हि रसादीनां विभावादीनां चैक्यं स्यात्, तर्हि तदुभयप्रतीत्योः कार्यकारणभावो न घटेत। भवति च रसादिप्रतीते विभावादिप्रतीतिः कारणम्। उभयोरेकरूपत्वे तदुभयप्रतीत्योरप्यैक्यं यौगपद्यं च मन्तव्यमेव। तन्मननं तु दुष्करम्, तत्प्रतीत्योः क्रमस्यौपपत्तिकत्वात्। इतरथा कार्यकारणभावस्यैवासङ्गतिः। क्रमावगमश्च क्वचित् संलक्ष्यक्रमादौ भवत्येव। असंलक्ष्यक्रमेषु रसादिषु तु शीघ्रतैव क्रमप्रतिभासं रुणद्धि, तत्को दोषस्तस्येत्याकूतम्।

क्योंकि किसी भी सहृदय व्यक्तिको विभाव, अनुभाव, तथा व्यभिचारि भाव ही रस है, ऐसा अनुभव नहीं होता, इसीलिये विभावादि प्रतीतिके अविनाभूत अर्थात् विभावादि प्रतीतिके विना नहीं होनेवाली रसादिकी प्रतीति, वह्नि जन्य धूमकी तरह विभावादि प्रतीति जन्य ही समझनी चाहिये, अतः विभावादि तथा रसादि प्रतीतियोंके कार्य कारणभाव रूपसे व्यवस्थित होनेसे उन दोनोंमें क्रम अवश्य मानना होगा, परन्तु जैसे कमलके सौ पत्तोंमें सुई चुभोनेसे प्रत्येक पत्रमें क्रमसे ही छेद होने पर भी अत्यन्त सूक्ष्म व्यवधान काल होनेसे क्रमका पता नहीं लगता, इसी प्रकार शीघ्रताके कारण उक्त विभावादि वाच्य प्रतीति एवं व्यङ्ग्यभूत रसादि प्रतीतिमें क्रमका अनुभव नहीं लक्षित होता है, अत एव रसादि असंलक्ष्य क्रम रूपसे ही व्यङ्ग्य होते हैं, यह पहले कह चुके हैं।

नन्वेवं वाच्यव्यङ्ग्ययोर्भेदे सिद्धेऽपि, तत्प्रतीत्योः क्रमः कल्पयितुं न शक्यते, तयोर्यौगपद्येनैव क्वचिदुद्भवात्। इत्थं च किमिति व्यञ्जनाव्यापारोऽप्यतिरिक्तः स्वीक्रियेत, अभिधाव्यापारेणैव प्रकरणादिसाहाय्येन युगपदुभयोर्बोधस्य सम्भवादित्यभिप्रेत्य पुनः शङ्कते—

**ननु शब्द एव प्रकरणाद्यवच्छिन्नो वाच्यव्यङ्ग्ययोः सममेव प्रतीतिमुपजनयतीति किं तत्र क्रमकल्पनया?**

प्रकरणाद्यवच्छिन्नः—प्रकरणवक्तृबोद्धव्यादिविशिष्टः। सममेव—सहैव। शब्द एवेत्येवकारेणार्थादीनां व्यवच्छेदः। शब्दस्त्वेकदैवाभिधयैवोभयं बोधयेदिति व्यञ्जनाया अप्यसिद्धिः।

( पूर्वपक्ष ) प्रकरणादि सहकृत शब्द ही वाच्य एवं व्यङ्ग्य दोनोंका एक साथ ही बोध उत्पन्न कर देता है, उसमें क्रम कल्पना करनेकी क्या आवश्यकता है? अर्थात् शब्दसे ही व्यङ्ग्यार्थकी प्रतीति हो जायगी, उसके लिये वाच्यार्थको हेतु माननेकी कोई अवश्यकता नहीं है।

ननु वाच्यव्यङ्ग्यप्रतीत्योः कार्यकारणभाव एव क्रमं कल्पयेदित्यत आह—

**न हि शब्दस्य वाच्यप्रतीतिपरामर्श एव व्यञ्जकत्वे निबन्धनम्। तथा हि—गीतादिशब्देभ्योऽपि रसाद्यभिव्यक्तिरस्ति, न च तेषामन्तरा वाच्यपरामर्शः।**

निबन्धनं निमित्तम्। प्रतीतिपरामर्शशब्दयोः पर्यायतया सह प्रयोगः कथंचिदुपपादनीयः। अन्तरा मध्ये पूर्वमिति यावत्। दृष्टान्तोपन्यासस्तु व्यभिचारदर्शनाय। तेषां गीतादिशब्दानाम्। आदिशब्देन वाद्यप्रभृतीनां परिग्रहः।

वाच्यव्यङ्ग्यप्रतीत्योः कार्यकारणभावस्तदैव कल्प्येत, यद्युभयोर्व्यभिचारो न स्यात्। दृश्यते च गीतादिशब्दमात्रजन्यरसादिप्रतीतिस्थले व्यभिचारः, तथा हि—कियन्तो गीतशब्दा वाच्यार्थबोधनं विनाऽपि स्वरादिविशेषबलेनैव रसान् बोधयन्तीति कारणाभावप्रयोज्यकार्याभावाभावरूपव्यतिरेकव्यभिचारोऽत्र न तिरोहितः। व्यभिचारे तु जागरूके कथं कार्यकारणभावः। तदभावे च दूरे क्रमकल्पना, भेदानधिगमे व्यञ्जनात्मकपृथग्व्यापारकल्पना चेत्यभिसन्धिः।

वाच्य-व्यङ्ग्य प्रतीतिका कार्य कारण भाव भी क्रमका नियामक नहीं हो सकता, यह बतलाते—नहीति। शब्दके वाच्यार्थकी प्रतीतिका अनुसन्धान व्यञ्जकतामें निमित्त नहीं है, क्योंकि वाच्यार्थकी प्रतीति या अनुसन्धानके विना भी केवल स्वर, लय रागादिके अनुसार ही गीत वाद्यादि शब्दोंसे भी रसादिकी अभिव्यक्ति होती है, परन्तु उन गीतवाद्यादि शब्दोंके श्रवण एवं रसाभिव्यक्तिके बीचमें वाच्यार्थका ज्ञान या अनुसन्धान नहीं होता।

आक्षेपमंशतोऽभ्युपगत्य खण्डयति—

**अत्रापि ब्रूमः—प्रकरणाद्यवच्छेदेन व्यञ्जकत्वं शब्दानामित्यनुमतमेवैतदस्माकम्। किन्तु तद् व्यञ्जकत्वं तेषां कदाचित् स्वरूपविशेषनिबन्धनम्, कदाचिद् वाचकशक्तिनिबन्धनम्। तत्र येषां वाचकशक्तिनिब-**

न्धनम्, तेषां यदि वाच्यप्रतीतिमन्तरेणैव स्वरूपप्रतीत्या निष्पन्नं तद् भवेत्, न तर्हि वाचकशक्तिनिबन्धनम्। अथ तन्निबन्धनम्, तन्नियमेनैव वाच्यवाचकप्रतीत्युत्तरकालत्वं व्यङ्ग्यप्रतीतेः प्राप्तमेव।

यत एवेदमस्माकमनुमतम्, अत एव—'अत्रार्थः शब्दो वा' इत्यादिना पूर्वं शब्दस्यापि व्यञ्जकत्वमुदीरितम्। इयदभ्युपगमनम्। किन्त्वित्यादिना च खण्डनम्। स्वरूपविशेषनिबन्धनं प्रत्यक्षद्वारा शब्दस्वरूपमात्रप्रयोज्यम्। वाचकशक्तिरभिधा तन्निबन्धनं स्वप्रयोज्यवाच्यार्थबोधद्वारा तत्प्रयोज्यम्। तत्र तद्द्वयमध्ये। येषां काव्यशब्दानाम्। स्वरूपप्रतीत्या स्वरूपविषयकश्रावणप्रत्यक्षेण। निष्पन्नमुत्पन्नम्। तद् व्यञ्जकत्वम्। तर्हि वाचकशक्तिनिबन्धनं न तदिति सम्बन्धः। तन्निबन्धनं वाचकशक्तिप्रयोज्यम्। तत् तर्हि। वाच्यवाचकभावोऽभिधा, तत्प्रतीतिस्तत्प्रयोज्यवाच्यार्थबोधः, तदुत्तरकालत्वं तदुत्तरकाले जायमानत्वम्।

अयं भावः—यत्र गीतादिषु शब्दश्रवणानन्तरमेव, व्यङ्ग्यरसादिप्रतीतिः, तत्र तच्छ्रावणप्रत्यक्षस्यैव श्रावणप्रत्यक्षविषयशब्दस्यैव वा कारणता। यत्र तु काव्येषु शब्दतो वृत्तिज्ञानजन्योपस्थित्यादिभिर्विभावादिवाच्यार्थबोधः, तज्जन्या च रसादिप्रतीतिः, तत्र शब्दजन्यवाच्यार्थबोधस्यैवान्वयव्यतिरेकाववधार्यातिरिक्तैव कारणता कल्प्यते। इत्थं च काव्येषु वाच्यार्थप्रतीतिं विना नैव क्वापि व्यङ्ग्यार्थप्रतीतिरिति नास्मिन् कार्यकारणभावे कश्चन व्यभिचारः। कारणतायां स्वीकृतायां क्रमोऽप्यनायत्या स्वीकर्तव्य एव भवेत्।

(उत्तरपक्ष) प्रकरणादिसे सहकृत होकर शब्द, व्यङ्ग्यार्थोंके व्यञ्जक होते हैं, यह बात हमें भी स्वीकार ही है, लेकिन वह व्यञ्जकत्व, शब्दोंमें कभी स्वरूप विशेषके कारण होता है और कभी वाचक शक्तिके कारण होता है। उनमें जहां पर गीत वाद्यादि शब्द श्रवणके बाद ही व्यङ्ग्य रसादिकी प्रतीति होती है, वहां भले ही वाच्यार्थ प्रतीतिकी कोई आवश्यकता न हो, परन्तु जिन काव्यादि स्थलीय शब्दोंमें वाचक शक्ति मूलक ही व्यञ्जकत्व है, उनमें यदि वाच्य प्रतीतिके बिना ही केवल शब्द स्वरूपकी प्रतीति मात्रसे ही व्यञ्जकत्व पूर्ण हो जाय तो वह (व्यञ्जकत्व) वाचक शक्ति मूलक ही नहीं हो सकता और यदि वह, वाचक शक्ति मूलक ही है, तो अवश्य ही व्यङ्ग्यकी प्रतीति वाच्य-वाचक प्रतीतिके उत्तरकालमें माननी पड़ेगी, अर्थात् काव्यमें वाच्यार्थ प्रतीतिके बिना कहीं भी व्यङ्ग्यार्थकी प्रतीति नहीं होती है, इसलिये दोनोंके बोधमें पौर्वापर्य (क्रम) अवश्य मानना ही होगा।

एवं तर्हि स क्रमोऽत्र कुतो न लक्ष्यत इत्यत्राह—

**स तु क्रमो यदि लाघवान्न लक्ष्यते, तत् किं क्रियताम् ।**

वाच्यप्रतीत्यविलम्बेनैव व्यङ्ग्यप्रतीतेरुद्भवात् कमलदलशतभेदवत् क्रमो न लक्ष्यत इत्येतावता स कल्पनीय एव नेति न वक्तव्यमित्याशयः ।

वह क्रम सभी जगह क्यों नहीं लक्षित होता ? इसका समाधान करते हैं— स तु इति । वह क्रम यदि शीघ्रताके कारण नहीं प्रतीत होता तो क्या किया जाय ? अर्थात् वाच्य प्रतीतिके तुरत ही उत्तर क्षणमें व्यङ्ग्यार्थकी प्रतीति हो जानेसे कमल शत पत्रोंके भेदनके समान क्रम लक्षित नहीं होता, तावता वह क्रम है ही नहीं ऐसी कल्पना नहीं की जा सकती है ।

काव्योद्भूतव्यङ्ग्यप्रतीतौ वाच्यप्रतीतेः कारणतां व्यवस्थापयति—

**यदि च वाच्यप्रतीतिमन्तरेणैव प्रकरणाद्यवच्छिन्नशब्दमात्रसाध्या रसादिप्रतीतिः स्यात्, तदनवधारितप्रकरणानां वाच्यवाचकभावे च स्वयमव्युत्पन्नानां प्रतिपत्तॄणां काव्यमात्रश्रवणादेवासौ भवेत् ।**

तत् तदा । अनवधारितप्रकरणानां प्रकरणादिज्ञानाभाववताम् । वाच्यवाचकभावे स्वयमव्युत्पन्नानामजाताभिधाज्ञानानाम् । असौ रसादिप्रतीतिः ।

यदि सर्वस्यां रसादिव्यङ्ग्यप्रतीतौ शब्दश्रावणप्रत्यक्षस्यैव कारणत्वं स्यात्, तर्हि यैः काव्यशब्दाः श्रुताः, किन्तु तेषां प्रकरणादिग्रहो वाच्यार्थनिरूपित—वाचकशब्दनिष्ठाभिधाग्रहश्च न जातः, तेषां वाच्यार्थप्रतीत्यभावेन व्यङ्ग्यार्थप्रतीतिर्या न भवति, सा कुतो न स्यात्, भवन्मते वाच्यार्थप्रतीतेस्तत्कारणत्वानङ्गीकारात् तद्विरहस्याकिञ्चित्करत्वात्, भवदभिमतशब्दप्रत्यक्षमात्रकारणस्य तत्रापि जागरूकत्वाच्च । न च प्रकरणादिज्ञानाभावान्न भवेदिति वाच्यम्, प्रकरणादिज्ञानस्य भवन्मते कारणत्वाकथनात्, स्वरूपसतः प्रकरणादेस्तत्रापि सत्त्वाच्च । तस्मात् काव्यजव्यङ्ग्यप्रतीतौ वाच्यप्रतीतेः कारणत्वमवश्यमूरीकरणीयमिति भावः ।

यदि वाच्यार्थ प्रतीतिके बिना ही प्रकरणादि सहकृत शब्दमात्रसे ही रसादि की प्रतीति निष्पाद्य हो तो प्रकरणादि ज्ञान रहित बोद्धाओंको वाच्य-वाचक शक्ति ज्ञान नहीं रहने पर भी केवल काव्यके श्रवणमात्रसे ही रसादिकी प्रतीति होनी चाहिये, क्योंकि वाच्यार्थ प्रतीति आपके मतमें कारण नहीं है, इसलिये उसका अभाव वहां पर अकिञ्चित्कर है ।

यहां पर प्रकरणादि भी स्वरूपसत् ही कारण माना गया है और वह भी है ही,

इसलिये प्रकरणादिका ज्ञानाभाव भी अकिञ्चित्कर ही होगा, अतः काव्यस्थलमें व्यङ्ग्य प्रतीतिमें वाच्य प्रतीतिको अवश्य कारण मानना चाहिये ।

पुनः क्रमस्वीकृतिं द्रढयति—

सहभावे च वाच्यप्रतीतेरनुपयोगः । उपयोगे वा न सहभावः ।

वाच्यव्यङ्ग्यप्रतीत्योर्यदि सव्येतरविषाणयोरिव युगपदुत्पन्नत्वेन सहभावः, तदा वाच्यप्रतीतेर्व्यङ्ग्यप्रतीतावजनकत्वेनानुपयोगः स्यात् । यदि चोभयोः कार्यकारणभावः, तदा नैव यौगपद्यम् । तत्रोक्तनीत्या तयोः कार्यकारणभावे निर्णीते यौगपद्यस्याभ्युपगन्तुमशक्यत्वात् क्रमोऽवश्यं स्वीकर्तव्य इत्यभिसन्धिः ।

वाच्य एवं व्यङ्ग्य प्रतीतिमें यदि एक साथ उत्पन्न दो शृङ्गकी तरह सहभाव माना जाय तो व्यङ्ग्य प्रतीतिके प्रति कारण नहीं होनेसे वाच्यप्रतीतिकी उपयोगिता ही नहीं होगी और यदि वास्तवमें कारण होनेसे उपयोगिता है, तो सहभाव मानना ही ठीक नहीं है, इसलिये दोनोंकी प्रतीतिमें क्रम मानना आवश्यक है ।

न परमत्रैव, किन्तु गीतादिशब्दजरसादिव्यङ्ग्यप्रतीतावपि क्रमोऽस्त्येवेत्याह—

येषामपि स्वरूपविशेषप्रतीतिनिमित्तं व्यञ्जकत्वं, यथा गीतादिशब्दानाम्, तेषामपि स्वरूपप्रतीतेर्व्यङ्ग्यप्रतीतेश्च नियमभावी क्रमः ।

इदमुक्तं भवति—गीतादिशब्दानामपि रसादिप्रतीतौ स्वरूपसत्तां न कारणता, तथा सति श्रवणमन्तरेणापि तेभ्यस्तत्प्रतीतिप्रसङ्गः, किन्तु तच्छ्रावणप्रत्यक्षस्यैव, तस्मात् तेभ्यः प्रथमं श्रावणप्रत्यक्षम्, तदनन्तरं ततो रसादिप्रतीतिरिति तयोः पौर्वापर्येण क्रमोऽवश्यमस्ति ।

केवल काव्यमें ही नहीं, अपितु गीतादि शब्द जन्य रसादि व्यङ्ग्य प्रतीतिमें भी क्रम मानना आवश्यक है, यह बतलाते हैं—येषामिति । जिन गीतवाद्य स्थलीय शब्दोंमें स्वरूप विशेष श्रवण निमित्तक ही व्यञ्जकत्व माना गया है, उनमें भी स्वरूप विशेषकी प्रतीति एवं व्यङ्ग्य प्रतीतिमें क्रम अवश्य रहता है, अर्थात् गीत आदिके शब्द भी रसादि प्रतीतिके प्रति स्वरूपसत् कारण नहीं हैं, अन्यथा श्रवण के बिना भी उनसे रसादिकी प्रतीति होने लगेगी, अपितु श्रावण प्रत्यक्ष ही कारण है, इसलिये श्रावण प्रत्यक्षके बाद ही रसादिकी प्रतीति होती है, अतः वहाँ पर भी क्रमका अपलाप नहीं किया जा सकता ।

स क्रमः कुतो न प्रतीयत इति पुनर्धाष्टर्येनाशङ्कमानं प्रत्यभिदधाति—

तत्र तु शब्दस्य क्रियापौर्वापर्यमनन्यसाध्यतत्फलघटनास्वाशुभाविनीषु वाच्येनाविरोधिन्यभिधेयान्तरविलक्षणे रसादौ न प्रतीयते ।

तत्र वाच्येनाविरोधिनि वाच्याविरुद्धे, अभिधेयान्तरेभ्यो वाच्यविशेषेभ्यो विलक्षणे—'प्रतीयमानं पुनरन्यदेव' इत्याद्युक्तेरतिरिक्ते, व्यञ्जनीये रसादौ शब्दस्य क्रिययो र्वाच्यव्यङ्ग्यप्रत्यायनयोरभिधाव्यञ्जनयो र्वा पौर्वापर्यं क्रमः, न हि अन्यद् रसादिप्रतीतिव्यतिरिक्तं साध्यं निष्पाद्यं यासां, तादृश्योऽत एव तदेव रसादिप्रत्यायनमेव फलं प्रयोजनं यासां, ताश्च या घटनाः पूर्वोक्ताः संघटनाः, तासु आशुभाविनीषु द्रुततरभवनशीलासु न प्रतीयते, न लक्ष्यत इत्यर्थः।

अयमाशयः—वाच्यव्यङ्ग्यप्रतीत्योः कार्यकारणभावेन क्रमोऽस्त्येव, किन्तु यत्र वाच्याविरुद्धस्तद्विलक्षणो रसादिर्व्यङ्ग्यः, तत्र रसादिव्यञ्जनैकप्रयोजनतया संघटनानां सङ्कीर्णत्वेन—'झटित्येवावभासते' इति कारिकायाम्,-सहेव वाच्येनावभासते' इति वृत्तौ च प्रतिपादनात् क्षिप्रतरं वाच्यव्यङ्ग्ययोः प्रत्यायकतेति क्रमो न लक्ष्यते। यथा वह्निधूमयोर्व्याप्तिग्रहस्य पौनःपुन्येन प्रवृत्त्या प्रणिधानं विनाऽपि धूमज्ञानेन सहेव वह्निज्ञानमुत्पद्यते, न च न क्रमः, किन्तु सन्नपि स शीघ्रताऽऽधिक्येन न प्रतीयते, तथैव विभावादिरसादिप्रतीत्यभ्यासेन प्रणिधानं विनाऽपि तदनुभवजसंस्कारबलादाशुतरं विभावादिप्रतीत्युत्तरं रसादिप्रतीतिस्तथा जायते, यथा तयोः सदपि पौर्वापर्यं न लक्ष्यते।

उस क्रमके नहीं लक्षित होनेमें कारण बतलाते हैं—तत्रेति। अर्थात् शब्दोंकी वाचकता एवं व्यञ्जकता रूप क्रियाओंका वह पौर्वापर्य क्रम, रसादि मात्रकी प्रतीति करानेके उद्देश्यसे की गई अत्यन्त शीघ्र निष्पन्न होनेवाली रचनाओंमें वाच्यके अविरोधी एवं अन्य वाच्यसे विलक्षण रसादि प्रतीतिमें लक्षित नहीं होता है।

स च क्रमो न सर्वत्रालक्ष्य एवेत्याह—

क्वचित्तु लक्ष्यत एव। यथाऽनुरणनरूपव्यङ्ग्यप्रतीतिषु।

तत्र तादृशशीघ्रताया अभावात्।

वह क्रम सभी जगह अलक्ष्य ही नहीं है, अपितु कहीं पर लक्षित भी होता है, जैसे संलक्ष्य क्रम व्यङ्ग्यध्वनिके प्रभेदोंमें वाच्य और व्यङ्ग्यका क्रम स्पष्ट ही प्रतीत होता है।

ननूभयोर्व्यङ्ग्ययोस्तुल्यत्वे, तत्क्रमयोर्लक्ष्यालक्ष्यत्वेन कुतो वैषम्यमित्याक्षिप्य निरस्यति—

तत्रापि कथमिति चेत्, उच्यते—अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यध्वनौ तावदभिधेयस्य तत्सामर्थ्याक्षिप्तस्य चार्थस्याभिधेयान्तरविलक्षणस्या-

त्यन्तविलक्षणे ये प्रतीती, तयोरशक्यनिह्नवो निमित्तनिमित्तिभाव इति स्फुटमेव तत्र पौर्वापर्यम् । यथा-प्रथमोद्द्योते प्रतीयमानार्थसिद्ध्यर्थमुदाहृतासु गाथासु । तथाविधे च विषये वाच्यव्यङ्ग्ययोरत्यन्तविलक्षणत्वाद् यैव एकस्य प्रतीतिः, सैवेतरस्येति न शक्यते वक्तुम् ।

तत्रापि संलक्ष्यक्रमध्वनावपि । कथमित्यतः परं लक्ष्यत इति योज्यम् । तत्सामर्थ्याक्षिप्तस्य व्यङ्ग्यस्य । अभिधेयान्तरविलक्षणस्यान्यवाच्यभिन्नस्य । अत्यन्तविलक्षणे नितरां भिन्ने । न शक्यो निह्नवोऽपलापो यस्य तादृशो निमित्तनिमित्तिभावः कार्यकारणभावः । उदाहृतासु प्रतीयमानार्थो वाच्यार्थादतिरिक्तोऽस्तीति साधनप्रसङ्गेन कथितासु, गाथासु 'भम धम्मिअ' इत्यादिकासु । तथाविधे कार्यकारणीभूते । एकस्य वाच्यस्य । इतरस्य व्यङ्ग्यस्य । अनुरणनध्वन्यपरपर्यायस्य संलक्ष्यक्रमध्वनेरेतन्मते शब्दशक्तिमूलोऽर्थशक्तिमूलश्चेति द्वावेव भेदौ, तन्निरूपणं च द्वितीयोद्द्योते—'आक्षिप्त एवालङ्कारः' इत्यादिना 'अर्थशक्त्युद्भवस्त्वन्यः' इत्यादिना च क्रमेण विहितम् । तत्रार्थशक्त्युद्भवध्वनौ पूर्वं कारणीभूता वाच्यार्थप्रतीतिः, पश्चात्कार्यभूता वाच्यार्थनिष्ठव्यञ्जनाजन्यव्यङ्ग्यविषयिणी प्रतीतिर्जायत इत्यनयोः प्रतीत्योः कार्यकारणभावस्य सुव्यक्तत्वात् क्रमो दुरपह्नवः, यतस्तस्य ध्वनेः—

'अविवक्षितवाच्यस्य पदवाक्यप्रकाशता ।
तदन्यस्यानुरणन-रूपव्यङ्ग्यस्य च ध्वनेः ॥'

इत्यनेन पदवाक्ये एव व्यञ्जकत्वेनोक्ते, न तु संघटनापि, तत्कथं तत्र शैघ्र्यातिशयात् क्रमो न लक्ष्येत । तथा च स्फुटं पृथक् प्रतीयमानयोर्वाच्यव्यङ्ग्यप्रतीत्योरेकीभावो दुर्वचः, व्यङ्ग्यप्रतीतेश्च कार्यत्वेन कारणान्तरानुपलम्भेऽगत्योपपत्त्या च वाच्यप्रतीतिरेव कारणं निर्णीयते । तस्माच्च तयोः पौर्वापर्ये मनागपि सन्देग्धव्यमिति सारम् ।

संलक्ष्य क्रम व्यङ्ग्य और असंलक्ष्य क्रम व्यङ्ग्य दोनोंमें व्यङ्ग्यत्वकी समानता होने पर भी एक जगह क्रम प्रतीत होता है, दूसरी जगह प्रतीत नहीं होता इसका मूल रहस्य बतलाते हैं—तत्रापीति । संलक्ष्य क्रम ध्वनिमें भी वह क्रम कैसे लक्षित होता है ? यह यदि कहो तो इसका उत्तर यह है कि:—अर्थ शक्त्युद्भव और शब्द शक्त्युद्भवके भेदसे संलक्ष्य क्रम व्यङ्ग्य दो प्रकारके हैं, इन दोनोंमें क्रम प्रतीत होता है । यह क्रमशः प्रतिपादन करते हैं—अर्थशक्तिमूलक संलक्ष्य क्रम व्यङ्ग्य ध्वनिमें वाच्यार्थ और उसकी व्यञ्जनासे आक्षिप्त व्यङ्ग्यार्थके अन्य वाच्यार्थसे विलक्षण होनेके कारण जो दोनों वाच्य-व्यङ्ग्य विषयक विलक्षण बोध सहृदयोंके अनुभव सिद्ध हैं, उनके कार्य कारण भावका अपलाप नहीं किया जा

सकता है, इसलिये उनमें पौर्वापर्य क्रम स्पष्ट ही मालूम पड़ता है, जैसे कि प्रथम उद्द्योतमें प्रतीयमान व्यङ्ग्यार्थकी सिद्धिके लिये 'भ्रम धार्मिक'– इत्यादि उदाहृत गाथाओंमें कह चुके हैं। ऐसे स्थलोंमें वाच्य और व्यङ्ग्यके अत्यन्त भिन्न होनेसे जो वाच्यकी प्रतीति होती है, वही व्यङ्ग्यकी प्रतीति या जो व्यङ्ग्यकी प्रतीति होती है, वही वाच्यकी प्रतीति है, यह नहीं कहा जा सकता है।

संलक्ष्यक्रमध्वनेः परस्मिन् प्रभेदेऽपि क्रमं व्यवस्थापयति—

**शब्दशक्तिमूलानुरणनरूपव्यङ्ग्ये तु ध्वनौ—'गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु' इत्यादावर्थद्वयप्रतीतौ शाब्द्यामर्थद्वयस्योपमानोपमेयभावप्रतीतिरुपमावाचकपदविरहे सत्यर्थसामर्थ्यादाक्षिप्तेति तत्रापि सुलक्ष्यमभिधेयव्यङ्ग्यालङ्कारप्रतीत्योः पौर्वापर्यम्।**

'गावो वः' इत्यादिद्वितीयोद्द्योते विवृतस्य 'दत्तानन्दाः' इत्यादिमयूरकविश्लोकस्य चरमचरणः। अर्थद्वयस्य सूर्यकिरणरूपवाच्यस्य, तद्धेनुरूपशब्दशक्त्युद्भवव्यङ्ग्यस्य च। शाब्द्यां साक्षात् परम्परया च शब्दनिष्ठाभिधामूलिकायाम्। अपीति योज्यम्। उपमावाचकपदविरहे यथेवादिशब्दाप्रयोगे अर्थसामर्थ्याक्षिप्ता वाक्यार्थनिष्ठव्यञ्जनाजन्या, एतच्चोपमानोपमेयभावप्रतीतेर्विशेषणम्।

यद्यपि शब्दशक्त्युद्भवध्वनौ 'दत्तानन्दाः' इत्यादौ प्रथमार्थस्याभिधया, द्वितीयार्थस्याभिधामूलव्यञ्जनया प्रतीतिरित्युभयमपि शब्दसाध्यमेवेति न पौर्वापर्यकल्पनाप्रसरः, किन्तु तदनन्तरमर्थद्वयस्य मिथोऽसम्बद्धत्वापत्तिवारणार्थं यो गाव इव गाव इत्युपमानोपमेयभावः कल्प्यते, तत्प्रतीतिस्त्वार्थी व्यञ्जनालभ्यैवेति पूर्वार्थद्वयप्रतीत्युपमाप्रतीत्योः प्राक् पश्चाद्भावेन क्रमः स्फुटं तत्रापि प्रतीयत एवेति सारम्।

अत्र प्रथमद्वितीयार्थप्रतीत्योर्ज्येष्ठकनिष्ठोत्पत्त्योरिव न मिथः कार्यकारणभाव इति तत्र सन्नपि क्रमो नोपात्तः। तृतीयार्थप्रतीतिरूपकार्यस्य तु तदर्थद्वयप्रतीतिः कारणम्, उपमानोपमेयोपस्थापकत्वादिति विभावनीयस्तत्र क्रम इति बोध्यम्।

अब शब्द शक्ति मूल संलक्ष्य क्रम व्यङ्ग्य ध्वनिमें 'गावो वः पावनानाम्'–इत्यादि उदाहृत स्थलोंमें शब्दसे दो अर्थोंकी शाब्दी प्रतीति होने पर भी उस अर्थद्वयके उपमान–उपमेय भावकी प्रतीति, उपमा वाचक पदके अभावमें अर्थ निष्ठ व्यञ्जनासे व्यञ्जित होती है, इसलिये वहां पर भी वाच्य और उपमालंकार रूप व्यङ्ग्यार्थकी प्रतीतिमें पौर्वापर्य क्रम स्पष्ट ही प्रतीत होता है।

एवं तत्र वाक्यप्रकाशे क्रमं व्यवस्थाप्य, तत्रैव पदप्रकाशेऽपि व्यवस्थापयति—

**पदप्रकाश–शब्दशक्तिमूलानुरणनरूपव्यङ्ग्येऽपि ध्वनौ, विशेषणपद-**

स्योभयार्थसम्बन्धयोग्यस्य योजकं पदमन्तरेण योजनमशाब्दमप्यर्थादवस्थितमित्यत्रापि पूर्ववदभिधेयतत्सामर्थ्याक्षिप्तालङ्कारप्रतीत्योः सुस्थितमेव पौर्वापर्यम् ।

विशेषणपदस्य इहैवोद्द्योते—'प्रातुं धनैः' इत्यादिश्लोकावयवस्य दारिद्र्यनिर्विण्णवदान्यजन-कूपोभयविशेषकस्य 'जडः' इति शब्दस्य । योजकं यथैवादिपदम् । योजनन्तु कूपसामानाधिकरण्येन स्वसामानाधिकरण्येन च ज्ञेयम् । अशाब्दत्वं तु योजकपदाभावात् । अर्थादवस्थितं व्यञ्जनात्मकार्थशक्त्युपस्थापितम् । अलङ्कारो व्यतिरेकः । मात्रशब्दस्त्वत्रापि शान्तरसप्रतीतिरलक्ष्यक्रमैव भवतीति सूचयति ।

तत्र हि दारिद्र्यनिर्विण्णजनोच्चारितत्वेन जडपदात् प्रथममभिधया वक्तृविशेषणार्थप्रतीतिः, पश्चादिवाद्यभावेऽप्यभिधामूलव्यञ्जनया तडागकूपविशेषणार्थप्रतीतिः तदुत्तरमार्थव्यञ्जनया तादृशतडागकूपावधिकस्वापकर्षसूचनाद् व्यतिरेकालङ्कारद्वयस्य प्रतीतिः, तत्र चाभिधामूलकप्रतीतियुगलं मूलमिति पूर्ववत् क्रमः सुदर्श एवेति तत्त्वम् ।

इस प्रकार वाक्य प्रकाश्य संलक्ष्य क्रमव्यङ्ग्य ध्वनिमें वाच्य और व्यङ्ग्य प्रतीतिका क्रम बतलाकर अब पद प्रकाश्य संलक्ष्य क्रम व्यङ्ग्य ध्वनिमें भी 'प्रातुं धनैरर्थिजनस्य'-इत्यादि स्थलमें 'कूप और अहम्' रूप दोनों अर्थोंके साथ सम्बन्ध योग्य 'जड़' रूप विशेषणको जोड़नेवाले शब्दके बिना भी दोनों तरफ योजन, शब्द प्रतिपाद्य नहीं होनेपर भी अर्थ शक्तिसे निश्चित होता है, अतः वाक्य गत शब्दशक्ति मूल संलक्ष्य क्रम व्यङ्ग्य ध्वनिके समान यहाँ भी जड़त्वका दोनों तरफ अन्वय होनेसे दीपकालंकार रूप वाच्य तथा उसकी व्यञ्जना रूप सामर्थ्यसे आक्षिप्त व्यतिरेकालंकारकी प्रतीतियोंमें पौर्वापर्य क्रम निश्चितरूपसे प्रतीत होता है ।

नन्वेकस्या एव वैयञ्जनिकप्रतीतेः शब्दशक्त्युद्भवत्वरूपशाब्दत्वम्, अर्थशक्त्युद्भवत्वरूपमार्थत्वं च विरुद्धमित्यत आह—

आर्थ्यपि च प्रतिपत्तिस्तथाविधे विषये-उभयार्थसम्बन्धयोगा शब्दसामर्थ्यप्रतिप्रसवभूतेति शब्दशक्तिमूला कल्प्यते ।

प्रतिपत्तिः प्रतीतिः । उभयार्थसम्बन्धयोगा वाच्यव्यङ्ग्यात्मकार्थद्वयसम्बन्धिनी । इह सम्बन्धयोगशब्दयोः पर्यायत्वेऽपि सह प्रयोगः कथञ्चिदुपपाद्यः । शब्दसामर्थ्यमभिधा, तस्याः प्रतिप्रसवभूता एकत्र नियन्त्रिताया अप्यर्थान्तरे स्वावलम्बदानेनोत्थापिका, यद्वा तस्याः प्रतिप्रसवान्नियन्त्रणनिषेधादभिधामूलव्यञ्जनाया भूता-उत्पन्नेति शब्दशक्तिमूला सा प्रतीतिः कल्प्यत इत्यर्थः ।

इदमिहावसेयम्—वाच्यप्रतीत्यलङ्कारप्रतीत्योरेवात्र क्रमो विवक्षितः, तत्रालङ्कारप्रतीतौ साक्षात् परम्परया वाऽभिधायाः कारणत्वविरहाच्छब्दशक्तिमूलत्वमवास्तवमपि शाब्दप्रतीत्यविनाभावित्वेन तत्राभिधामूलत्वं कल्पयित्वा, शब्दशक्तिमूलत्वं कल्प्यते। तथा च तृतीयप्रतीतावार्थत्वं वास्तविकं शाब्दत्वं च कल्पितमित्युभयोरेकत्र कथंचित् समावेशान्न विरोधः।

उक्त स्थलमें एक ही व्यञ्जना जन्य प्रतीतिमें शब्द शक्त्युद्भवत्वरूप शाब्दत्व एवं अर्थशक्त्युद्भवत्व रूप आर्थत्व इन दो विरुद्ध धर्मोंका समावेश कैसे होगा? इसका समाधान करते हैं—आर्थीति। ऐसे स्थलोंमें व्यतिरेकालंकार रूप व्यङ्ग्य अलंकारकी प्रतीति आर्थी होने पर भी दोनों ओर अन्वयके योग्य जड़ शब्दकी अभिधात्मक शक्तिसे उत्पन्न होनेके कारण शाब्दी भी मानी जाती है।

इत्थं विवक्षितान्यपरवाच्यध्वनिप्रकारद्वये क्रमं व्यवस्थाप्याविवक्षितवाच्यध्वनावपि तं व्यवस्थापयति—

**अविवक्षितवाच्यस्य तु ध्वनेः प्रसिद्धस्वविषयवैमुख्यप्रतीतिपूर्वकमेवार्थान्तरप्रकाशनमिति नियतभावी क्रमः।**

प्रसिद्धे स्वविषये स्वशक्यार्थे यद् वैमुख्यं वाधितत्वम्, तस्य प्रतीतिर्वाधग्रहरूपा, सा पूर्वं यस्या इति विग्रहः। अर्थान्तरप्रकाशनं व्यङ्ग्यबोधनम्।

तदुदाहरणे—'निश्श्वासान्ध इवादर्शः' इत्यादावन्धशब्दादभिधया पूर्वमुपहतदृष्टिकस्योपस्थितिः, ततो दर्पणेऽसम्भवाद् वाधग्रहः, तदनन्तरं लक्षणया म्लानत्वप्रत्यायनम्, तदुत्तरं व्यञ्जनया तदतिशयसूचनं भवतीति तत्रापि क्रमोऽस्त्येवेति तात्पर्यम्।

इस प्रकार विवक्षितान्यपरवाच्य ध्वनिके प्रकार द्वयमें क्रमकी व्यवस्था बतलाकर अब अविवक्षित वाच्य ध्वनिमें भी क्रम की व्यवस्था करते हैं—अविवक्षित इति। अविवक्षित वाच्य ध्वनिके अत्यन्त तिरस्कृत वाच्य विषयक—'निःश्वासान्ध इवादर्शः—' इत्यादि उदाहरणोंमें एवं अर्थान्तर संक्रमित वाच्यविषयक—'रामोस्मि सर्वं सहे' इत्यादि उदाहरणोंमें अपने प्रसिद्ध मुख्य अर्थ की प्रतीतिके बाध होनेसे ही अर्थान्तरका प्रकाशन अर्थात् व्यङ्ग्यार्थका बोध होता है, इसलिये क्रम अवश्यम्भावी है, अर्थात् अन्ध शब्दसे प्रथम अन्धत्वकी उपस्थिति होती है, बादमें दर्पणमें उसका बाध ग्रह होता है, तब म्लानताका बोध होता है, अन्तमें अतिशय मलिनता की व्यञ्जनासे प्रतीति होती है, इस तरह स्पष्ट ही क्रम प्रतीत होता है।

ननु तर्हि तत्र संलक्ष्यत्वेनासंलक्ष्यत्वेन वा क्रमः कथं न विचारित इत्यत आह—

**तत्र त्वविवक्षितवाच्यत्वादेव वाच्येन सह व्यङ्ग्यस्य क्रमप्रतीतिविचारो न कृतः ।**

वाच्यं यदि विवक्षितं स्यात्, तदा तत्प्रतीति-व्यङ्ग्यप्रतीत्योः पौर्वापर्यं विचार्येत । यदि तदेवात्र नास्ति, तर्हि क्रमः कस्य विचारणीय इति तद्विचारो न कृतो ग्रन्थकृतेति शेषः । नैतावता क्रमस्तत्र नास्त्येवेति बोध्यम्, उक्तरीत्या क्रमस्यात्रापि दुरपह्नवत्वादित्याशयः ।

उक्त लक्षणामूल व्यञ्जना स्थलमें भी पूर्वोक्त रीतिसे संलक्ष्य एवं असंलक्ष्य रूपसे क्रमका विचार क्यों नहीं किया गया ? इस सन्देहको दूर करते हैं—तत्रेति । परन्तु उक्त स्थलमें वाच्यार्थके अविवक्षित होनेके कारण ही वाच्यके साथ व्यङ्ग्यके क्रमकी प्रतीतिका विचार नहीं किया गया है, तावता क्रम है ही नहीं ऐसा भ्रम नहीं करना चाहिये, क्योंकि उक्त रीतिसे क्रमका अपलाप नहीं किया जा सकता ।

अथोभयविधवृत्तिजीवितभूतत्वं तन्नियन्त्रणहेतुत्वं च रसादीनां यत् पूर्वमुपक्रान्तम्, तदुपष्टम्भेनैव तेषां वाच्यभिन्नत्वं व्यवस्थापयितुं क्रमविचारः कृत इति सूचयन्नुपसंहरति—

**तस्मादभिधानाभिधेयप्रतीत्योरिव वाच्यव्यङ्ग्यप्रतीत्योर्निमित्तनिमित्तिभावान्नियतभावी क्रमः ।**

अभिधानं शब्दः । तत्प्रतीतिः प्रत्यक्षम् ।

'विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते ।'

इत्यभियुक्तोक्तेः पदप्रत्यक्षस्योपस्थितिद्वारा वाच्यबोधं प्रति कारणत्वेन तत्प्रतीत्योर्यथा तथैव कार्यकारणभावेन वाच्यव्यङ्ग्यप्रतीत्योरपीति सारम् ।

इसलिये शब्द और वाच्य अर्थकी प्रतीतियोंके समान वाच्य और व्यङ्ग्यकी प्रतीतियोंमें कार्यकारण भाव होनेके कारण पौर्वापर्य क्रम अवश्यंभावी है ।

क्रमलक्ष्यालक्ष्यत्वप्रसङ्गमप्युपसङ्क्षिपति—

**स तूक्तयुक्त्या क्वचिल्लक्ष्यते, क्वचिन्न लक्ष्यते ।**

उक्तयुक्त्या वाच्यव्यङ्ग्यप्रतीत्योर्विलम्बभावित्वेनाविलम्बभावित्वेन च ।

किन्तु उक्त युक्तिसे वह क्रम कहीं पर ( संलक्ष्य क्रम व्यङ्ग्य रसादि ध्वनिमें ) प्रतीत होता है और कहीं पर ( असंलक्ष्य क्रम व्यङ्ग्य रसादि ध्वनिमें ) प्रतीत नहीं होता है ।

इदानीमुद्द्योतारम्भे यत् प्रतिज्ञायोपक्षिप्तं व्यञ्जकमुखेन ध्वनिनिरूपणम्, तदु-

पसंहरन्, प्रथमोद्द्योते व्यवस्थापितमपि व्यञ्जकत्वं विनेयबुद्धिवैशद्याय, मुहुरनुयोजकविपक्षमुखमुद्रणाय च पुनर्विचारयन् मीमांसकादिप्रतिपक्षिप्रश्नमुत्थापयति—

तदेवं व्यञ्जकमुखेन ध्वनिप्रकारेषु निरूपितेषु, कश्चिद् ब्रूयात्—किमिदं व्यञ्जकत्वं नाम ? व्यङ्ग्यार्थप्रकाशनम्, न हि व्यञ्जकत्वं व्यङ्ग्यत्वं चार्थस्यापि, व्यञ्जकसिद्ध्यधीनं व्यङ्ग्यत्वम्, व्यङ्ग्यापेक्षया च व्यञ्जकत्वसिद्धिरित्यन्योऽन्यसंश्रयादव्यवस्थानम्।

सिद्धिपदं ज्ञानपरम्, ज्ञानद्वारैवान्योऽन्याश्रयदोषसम्भवात्। सन्दिग्धः सन्दर्भः। यदि च व्यञ्जकत्वं व्यङ्ग्यार्थबोधजनकत्वम्, व्यङ्ग्यत्वं च व्यञ्जकजन्यबोधविषयत्वम्, तर्हि व्यङ्ग्यव्यञ्जकत्वग्रहयोः परस्परं सापेक्षत्वेनान्योऽन्याश्रयदोषे समापतिते 'अन्योऽन्याश्रयाणि कार्याणि न प्रकल्प्यन्ते' इत्यभियुक्तोक्तेस्तयोरेकस्यापि ज्ञानं न स्यादिति व्यङ्ग्यार्थप्रकाशकत्वरूपं व्यञ्जकत्वं न सम्भवतीति प्रष्टुराकूतम्।

( पूर्वपक्ष ) इस प्रकार व्यञ्जक की दृष्टिसे ध्वनि भेदोंके निरूपण करने पर कोई प्रभाकर प्रभृति मीमांसक या वैयाकरण प्रश्न करते हैं कि वह व्यञ्जकत्व क्या पदार्थ है ? व्यङ्ग्यार्थका प्रकाशन ( बोधन ) करना ही व्यञ्जकत्व पदार्थ है, ऐसा मानने पर अर्थका व्यञ्जकत्व और व्यङ्ग्यत्व सिद्ध नहीं हो सकता, क्योंकि व्यञ्जककी सिद्धिके अधीन व्यङ्ग्यकी सिद्धि और व्यङ्ग्यकी दृष्टिसे व्यञ्जककी सिद्धि हो सकती है, इसलिये दोनोंमें परस्पर एकको दूसरे की अपेक्षा होनेसे अन्योन्याश्रय दोष लग जानेके कारण दोनों ही नहीं सिद्ध हो सकते हैं।

तमेव दोषं परिहरति—

ननु वाच्यव्यतिरिक्तस्य व्यङ्ग्यस्य सिद्धिः प्रागेव प्रतिपादिता, तत्सिद्ध्यधीना च व्यञ्जकसिद्धिरिति कः पर्यनुयोगावसरः ?

पर्यनुयोगः परिप्रश्नः। तथा च—'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः।

प्रथमोद्द्योत एव ध्वन्यभाववादिनयनिराकरणप्रसङ्गेन 'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्' इत्यादिसन्दर्भेण वाच्याद्यर्थविलक्षणो व्यङ्ग्योऽर्थो निर्णीत एवेति तत्त्वग्रहे न व्यञ्जकत्वग्रहापेक्षेति केवलं व्यञ्जकत्वज्ञानमात्रे व्यङ्ग्यत्वज्ञानमपेक्षणीयमित्येकतरमात्रापेक्षणान्नान्योऽन्याश्रयदोषः सम्भवतीति परिहर्तुरभिप्रायः।

( व्यञ्जकत्ववादीका उत्तर पक्ष ) वाच्यसे अतिरिक्त व्यङ्ग्यकी सिद्धिका हम पहले ही प्रथम उद्द्योतमें प्रतिपादन कर चुके हैं, उसकी सिद्धिके द्वारा ही व्यञ्जक की भी सिद्धि हो जायगी, इसलिये उक्त प्रश्न करनेका कोई अवसर ही नहीं मालूम पड़ता है।

प्रष्टा तत्परिहारमंशतोऽभ्युपेत्य व्यञ्जकत्वस्य वाचकत्वव्यतिरिक्तत्वमसङ्गतं मन्वानः पुनर्वक्ति—

**सत्यमेवैतत्, प्रागुक्तयुक्तिभिर्वाच्यव्यतिरिक्तस्य वस्तुनः सिद्धिः कृता। स त्वर्थो व्यङ्ग्यतयैव कस्माद् व्यपदिश्यते ?। यत्र च प्राधान्येनावस्थानम्, तत्र वाच्यतयैवासौ व्यपदेष्टुं युक्तः, तत्परत्वाद् वाचकत्वस्य। अतश्च तत्प्रकाशिनो वाक्यस्य वाचकत्वमेव व्यापारः, किन्तस्य व्यापारान्तरकल्पनया। तस्मात् तात्पर्यविषयो योऽर्थः, स तावन्मुख्यतया वाच्यः। या त्वन्तरा तथाविधे विषये वाच्यान्तरप्रतीतिः, सा तत्प्रतीतेरुपायमात्रम्, पदार्थप्रतीतिरिव वाक्यार्थप्रतीतेः।**

एतदिति सिद्धिकरणक्रियाविशेषणम्। स वाच्यभिन्नतया साधितः। प्राधान्येन तात्पर्यविषयीभूतत्वेन। तत्परेत्यादिस्तस्य वाच्यत्वव्यपदेशहेतुः। तत्प्रकाशिनो वाच्यातिरिक्तार्थबोधकस्य। व्यापारान्तरं व्यञ्जनारूपं व्यञ्जकत्वम्। तस्मादित्यादिनिगमनम्। वाच्यान्तरस्य भवदभिमताभिधेयस्य। तत्प्रतीतेर्द्वितीयवाच्यार्थबोधस्य। उपायमात्रं साधकमात्रं, न तु स्वयं प्रवृत्तिनिवृत्ती प्रयोजयति।

इदमुच्यते—प्रथमोद्द्योते यत् प्रतीयमानार्थस्य वाच्यातिरिक्तत्वं साधितम्, तद्वयमप्यनुमन्यामहे, किन्तु तावता न भवदभीष्टसिद्धिः, वाच्यव्यतिरिक्तत्वसिद्धावपि व्यञ्जनावृत्तिसाधनाभावात् तस्य व्यङ्ग्यत्वासिद्धेः। अपि तु वाच्यत्वमेव तस्य वक्तृतात्पर्यीयमुख्यविषयताऽऽश्रयत्वेन—'यत्परः शब्दः स शब्दार्थः' इति मीमांसासिद्धान्तानुसारमभिधावृत्त्यैव बोधितत्वाद्, व्यापारान्तरकल्पने विविधकार्यकारणभावकल्पनायां गौरवाच्च। आवान्तरिकवाच्यार्थप्रतीतेस्तु प्रधानवाच्यार्थप्रतीतौ पदार्थप्रतीतेर्वाक्यार्थप्रतीताविव कारणत्वम्।

अयं भावः—यथाऽभिधात एव प्रागुत्पन्ना पदार्थोपस्थितिः पश्चात् ततो भाविनं वाक्यार्थबोधमुपकरोति, तथैवाभिधाबलात् पूर्वोत्पन्नः प्रथमवाच्यार्थबोधस्तदुद्भूतमेव पश्चात्तनं द्वितीयवाच्यार्थबोधमुपकुर्यादित्येवं तत्प्रतीत्योः कार्यकारणभावनिर्वाहे सुकरे किमिति व्यञ्जनावृत्तिरभिनवा कल्प्येत। मीमांसाऽऽदिसिद्धान्तोऽप्यत्र सर्वथाऽनुकूलतां दर्शयत्येव। तथा च—

'वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्।
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्॥' इति भाट्टाः।

यथा वह्निसंयुक्तकाष्ठानां मुख्यं फलं पचनम्, आवान्तरिकं च नान्तरीयकं ज्वलनम्, तथा शब्दानामर्थबोधार्थमुच्चारितानां प्रधानं फलं वाक्यार्थबोधनम्, आवान्तरिकं च तदुपयोगिवाच्यार्थबोधनमिति तदर्थः।

शब्दैरभिधाबलेन पदार्थोपस्थापनम्, तैश्च पदार्थैर्वाक्यार्थबोधनं क्रियते। वाक्यार्थश्च वाच्य एवेत्थमिति तत्सारम्।

दीर्घदीर्घतराभिधाव्यापारवशोन्मिषितयोः पदार्थवाक्यार्थप्रतीत्योः पारमार्थिकं कार्यकारणभावं प्राभाकरा अपि मन्यन्ते।

शाब्दिकास्तु तमपारमार्थिकमेवाङ्गीकुर्वन्तीति दिक्।

( व्यञ्जकत्व निषेधक मीमांसक प्रभृतिका पूर्व पक्ष ) यह ठीक है कि पहले बतलाई हुई युक्तियों द्वारा वाच्यसे भिन्न अर्थकी सिद्धि आप जो प्रथम उद्द्योतमें कर चुके हैं, उसका हम भी समर्थन करते हैं, परन्तु प्रश्न यह है कि उस अर्थको व्यङ्ग्य रूपसे ही क्यों व्यवहृत करते हैं? अर्थात् वह अर्थ व्यङ्ग्य ही क्यों कहा जाता? वाच्य क्यों नहीं कहा जाता? वास्तवमें तो जहां वह अर्थ प्रधान रूपसे प्रतीत होता है, वहाँ उसको वाच्य कहना ही ठीक है, क्योंकि वाक्य प्रधान रूपसे उसी अर्थका प्रतिपादन करता है, इसीलिये उस अर्थके बोधनमें तदर्थ प्रकाशक वाच्यका अभिधा नामक व्यापार ही होता है, तदर्थ व्यञ्जना नामक अलग व्यापार माननेकी कोई आवश्यकता नहीं है, इसलिये वाक्यका तात्पर्य विषयीभूत जो अर्थ है, वह प्रधान होनेके कारण वाच्यार्थ ही है, और इस प्रकारके स्थलोंमें बीचमें जो दूसरे अवान्तर वाच्यार्थकी प्रतीति होती है, वह प्रधान भूत वाच्यार्थ प्रतीतिका उपायमात्र है, जैसे कि वाक्यार्थ प्रतीतिमें पदार्थ प्रतीति साधन होती है, अर्थात् जैसे अभिधासे ही पहले पदार्थोपस्थिति उत्पन्न होकर बादमें उसीसे होनेवाले वाक्यार्थ बोधका उपकारक होती है, वैसे ही अभिधा बलसे पूर्वोत्पन्न प्रथम वाच्यार्थबोध, अभिधासे बादमें होनेवाले मुख्य वाच्यार्थ बोधका उपकार करेगा, इसीसे ही दोनोंकी प्रतीति निष्पन्न हो जायगी, उसके लिये व्यञ्जनावृत्ति माननेकी कोई आवश्यकता नहीं है।

आक्षेपं परिहर्तुं विकल्पयति—

**अत्रोच्यते—यत्र शब्दः स्वार्थमभिदधानोऽर्थान्तरमवगमयति, तत्र यत् तस्य स्वार्थाभिधायित्वम्, यच्च तदर्थान्तरावगमहेतुत्वम्, तयोरविशेषो विशेषो वा?।**

अत्र शङ्कायामुत्तरमुच्यत इति योजना। यत्र 'गतोऽस्तमर्कः' इत्यादौ। स्वार्थाभिधायित्वमभिधा। अर्थान्तरावगमहेतुत्वं व्यञ्जना। अविशेषोऽभेदः। विशेषो भेदः।

( उत्तर पक्ष ) उक्त मीमांसक आदिके पूर्वपक्षका खण्डन करते हैं—अत्रोच्यते इति। जहां "गतोऽस्तमर्कः" इत्यादि स्थलमें उक्त शब्द अपने अर्थको अभिधासे बोध कराता हुआ दूसरे अर्थका बोध कराता है, वहाँ उस शब्दका जो स्वार्थका अभिधान करना ( अभिधा ) और परार्थका बोधन करना ( व्यञ्जना ) शक्ति है, उन दोनों ( अभिधा और व्यञ्जना ) में अभेद है? अथवा भेद है?

तत्र प्रथमं विकल्पं खण्डयति—

न तावदविशेषः, यस्मात्तौ द्वौ व्यापारौ भिन्नविषयौ भिन्नरूपौ च प्रतीयेते एव।

तौ वाचकत्वव्यञ्जकत्वरूपौ। भिन्नार्थनिरूपितत्वरूपभिन्नविषयत्वेन भिन्नरूपत्वेन च प्रतीतिस्तद्भेदव्यवस्थापिका।

उनमें ( प्रथम कल्प ) अभेद तो नहीं कह सकते हैं, क्योंकि वे दोनों ( वाचकत्व-व्यञ्जकत्व ) व्यापार विभिन्न विषयक और विभिन्न रूप ही प्रतीत होते हैं।

तत्र भिन्नविषयत्वमुपपादयति—

तथा हि—वाचकत्वलक्षणो व्यापारः शब्दस्य स्वार्थविषयः, गमकत्वलक्षणस्त्वर्थान्तरविषयः।

स्वार्थो वाच्यार्थः। गमकत्वं व्यञ्जना चानर्थान्तरम्।

क्योंकि शब्दका 'वाचकत्व' रूप व्यापार अपने अर्थके विषयमें और 'गमकत्व' ( व्यञ्जकत्व ) रूप व्यापार दूसरे अर्थके विषयमें होता है।

अर्थभेदनिबन्धनो हि वृत्त्योर्भेदव्यवहार इति साधयति—

यतः स्वपरव्यवहारो वाच्यगम्ययोरपह्नोतुमशक्यः।

स्वपरव्यवहारो भेदव्यवहारः।

अर्थ भेद प्रयुक्त ही वृत्तियोंमें भेद व्यवहार होता है, इसको सिद्ध करते हैं—यत इति। क्योंकि वाच्य और व्यङ्ग्य अर्थके विषयमें शब्दके स्व और पर अर्थविषयक व्यवहार अर्थात् भेद व्यवहारका अपलाप नहीं किया जा सकता है।

अर्थयोर्भेदे हेतुमाह—

एकस्य सम्बन्धित्वेन प्रतीतेरपरस्य सम्बन्धिसम्बन्धित्वेन।

एकस्य वाच्यस्य। अपरस्य व्यङ्ग्यस्य।

अर्थके भेदमें युक्ति दर्शाते हैं—एकस्येति। क्योंकि एक अर्थात् प्रथम वाच्यार्थकी शब्दके साथ साक्षात् सम्बन्धित्व रूपसे प्रतीति होती है और दूसरे अर्थात् व्यङ्ग्या-

र्थकी शब्दके साथ परम्परा सम्बन्धित्व अर्थात् शब्दके सम्बन्धी अर्थ और उसके सम्बन्धित्व रूपसे प्रतीति होती है।

तदाह—

वाच्यो ह्यर्थः साक्षाच्छब्दस्य सम्बन्धी, तदितरस्त्वभिधेयसामर्थ्याक्षिप्तः सम्बन्धिसम्बन्धी।

वाच्येन सह शब्दस्य सङ्केतलक्षणः साक्षात्सम्बन्धः, व्यङ्ग्येन सह तु स्वाभिधेयार्थनिष्ठव्यञ्जनेति पारम्परिकः सम्बन्धः। तथा हि—शब्दस्य वाच्येन, तस्य च व्यङ्ग्येन सह सम्बन्ध इति साक्षात्सम्बन्धि-सम्बन्धिनोर्भेदः।

क्योंकि वाच्यार्थ शब्दका साक्षात् सम्बन्धी है और उससे भिन्न व्यङ्ग्यार्थ तो वाच्यार्थकी व्यञ्जनात्मक सामर्थ्यसे आक्षिप्त होनेके कारण सम्बन्धिसम्बन्धी अर्थात् परम्परया शब्दसे सम्बद्ध है, इसलिये साक्षात् सम्बन्धी और सम्बन्धि-सम्बन्धीमें स्पष्ट ही भेद है।

व्यङ्ग्यस्य साक्षात्सम्बन्धितास्वीकारे दोषं दर्शयति—

यदि च स्वसम्बन्धित्वं साक्षात् तस्य स्यात्; तदाऽर्थान्तरव्यवहार एव न स्यात्।

यदर्थान्तरत्वं तस्य भवताऽप्युच्यते, तदेव न सिध्येदिति भावः।

यदि उस वाच्यार्थसे भिन्न व्यङ्ग्यार्थका शब्दके साथ साक्षात् स्वसम्बन्धित्व रूप सम्बन्ध हो तो उसमें अर्थात् वाच्यार्थसे भिन्न अर्थका व्यवहार ही न हो।

निगमयति—

तस्माद् विषयभेदस्तावत् तयोर्व्यापारयोः सुप्रसिद्धः।

तस्मादुक्तहेतोः।

अब भेद पक्षका उपसंहार करते हैं—तस्मादिति। इसलिये स्वार्थविषयमें वाच्यका व्यवहार और परार्थविषयमें व्यङ्ग्यका व्यवहार होनेके कारण इन दोनों व्यापारोंका विषयभेद प्रसिद्ध ही है।

तयोर्भेदस्य साधकं स्वरूपभेदमप्याह—

रूपभेदोऽपि प्रसिद्ध एव। न हि सैवाभिधानशक्तिः, सैवावगमनशक्तिः।

अवगमनशक्तिर्व्यञ्जना।

अभिधा और व्यञ्जनाके भेद साधक स्वरूप भेदको भी बतलाते हैं—रूपभेद इति। वाचकत्व और व्यञ्जकत्वरूप अभिधा-व्यञ्जनाका स्वरूप भेद भी प्रसिद्ध ही है। शब्दकी जो अभिधा नामक वाचकता शक्ति है, वही व्यञ्जना नामक अवगमकत्व शक्ति नहीं है।

तत्र हेतुमाह—

अवाचकस्यापि गीतशब्दादे रसादिलक्षणार्थावगमदर्शनात् । अशब्दस्यापि चेष्टाऽऽदेरर्थविशेषप्रकाशनप्रसिद्धेः ।

यदि वाचकत्वव्यञ्जकत्वयोस्तादात्म्यं भवेत्, तदाऽवाचकः कदाचिदपि व्यञ्जको न भवेत्, वाचकत्ववद् व्यञ्जकत्वमपि 'शब्दमात्रवृत्ति च स्यात् । दृश्यते त्ववाचकोऽपि गीतादिशब्दो रसादिव्यञ्जकः, शब्दभिन्नोऽपि वदननमन-नयनाकुञ्चनादि-चेष्टाप्रभृतिः श्रृङ्गारादिव्यञ्जकः । ततस्तयोरैक्यं कथं सम्भवेदित्यभिसन्धिः ।

क्योंकि गीतादि शब्दोंसे अभिधा शक्तिके नहीं रहने पर भी रसादिरूप व्यङ्ग्यार्थ की प्रतीति होती है । और केवल अभिधा रहित होने पर ही नहीं, अपितु शब्द प्रयोगके विना भी केवल चेष्टा आदिसे भी अर्थविशेषका प्रकाशन होता है, अर्थात् यदि वाचकत्व और व्यञ्जकत्व दोनों एक ही होते तो अवाचक गीतादि शब्द कभी भी रस विशेषका व्यञ्जक नहीं होता और वाचकत्वके समान व्यञ्जकत्व भी केवल शब्दमें ही रहता, परन्तु ऐसी बात नहीं है, क्योंकि मुखनमन, नेत्र संकोचनादि चेष्टाओंसे भी शब्द प्रयोगके विना भी श्रृंगारादिरस रूप अर्थ विशेषका प्रकाशन होता है, इसलिये दोनों एक नहीं हो सकते हैं ।

उक्तार्थसमर्थकचेष्टाव्यञ्जकत्वमुदाहरति—

तथा हि—'व्रीडायोगान्नतवदनया' इत्यादिश्लोके चेष्टाविशेषः सुकविनाऽर्थप्रकाशनहेतुः प्रदर्शित एव ।

श्लोकोऽयमिहैवोद्द्योते प्राग् विवृतः । तदुपात्ताश्चेष्टाविशेषास्तु—वदननमन-कुचकलशोत्कम्पन-नेत्रविभागासञ्जनानि श्रृङ्गारं स्फुटं प्रकाशयन्ति । न हि तच्चेष्टानां वाचकत्वं शब्दात्वाभावात् । वाचकत्वविरहेऽपि च व्यञ्जकत्वं त्वनुभवसिद्धमित्यभिधाव्यञ्जनयोः पार्थक्यं प्रथितमित्याशयः ।

जैसे—'व्रीडायोगान्नतवदनया"—इत्यादि श्लोकमें सुकविने मुखनमनादि चेष्टाविशेषको श्रृंगारादि अर्थविशेषके प्रकाशनका हेतु दिखाया ही है ।

उपसंहरन्नेतदेवाचष्टे—

तस्माद् भिन्नविषयत्वाद् भिन्नरूपत्वाच्च स्वार्थाभिधायित्वमर्थान्तरावगमहेतुत्वं च शब्दस्य यत्, तयोः स्पष्ट एव भेदः ।

इसलिये भिन्न विषय और भिन्न स्वरूप होनेसे शब्दके जो स्वार्थाभिधायित्वरूप अभिधा और अर्थान्तरावगम हेतुत्वरूप व्यञ्जना हैं, उनका भेद स्पष्ट ही है । इस प्रकार अभिधा और व्यञ्जनाका अभेद पक्ष खण्डित हो जाता है ।

अथ द्वितीयविकल्पाश्रयणेऽपि न व्यङ्ग्यस्य वाच्यत्वव्यपदेशः सम्भवतीत्याह—

**विशेषश्चेद् , न तर्हीदानीमवगमनीयस्याभिधेयसामर्थ्याक्षिप्तस्यार्थान्तरस्य वाच्यत्वव्यपदेश्यता।**

अवगमनीयस्यावगमनशक्तिबोधनीयस्य। नञर्थस्य व्यपदेश्यतया सहान्वयः। अभिधा-व्यञ्जनाव्यापारयोः पार्थक्ये तु न व्यङ्ग्यस्य वाच्यत्वेन व्यवहारः सम्भवति, तस्याभिधाबोध्यत्वाभावादिति भावः।

अब अभिधा और व्यञ्जनाके द्वितीय विकल्प ( भेद पक्ष ) के आश्रयण करने पर भी व्यङ्ग्य अर्थका वाच्य स्वरूप नहीं हो सकता, इसको बतलाते हैं—विशेषश्चेदिति। अभिधा और व्यञ्जनात्मक शब्दवृत्ति व्यापारमें यदि पार्थक्य ( विशेष ) है, तो व्यञ्जनारूप अभिधेय सामर्थ्यसे आक्षिप्त व्यङ्ग्यार्थको वाच्यनामसे व्यवहृत करना उचित नहीं है, क्योंकि वह अर्थ अभिधासे नहीं बोधित होता है।

नन्वभिधाबोध्यत्वं परम्परया तत्राप्यस्त्येवेति कुतस्तत्त्वेन व्यपदेश इत्यत्राह—

**शब्दव्यापारगोचरत्वं तु तस्यास्माभिरिष्यत एव। तत्तु व्यङ्ग्यत्वेनैव, न वाच्यत्वेन, प्रसिद्धाभिधानान्तरसम्बन्धयोग्यत्वेन च तस्यार्थान्तरस्य च प्रतीतेः।**

शब्दव्यापारोऽभिधा, तद्गोचरत्वं तत्प्रयोज्यबोधविषयत्वम्। प्रसिद्धस्य वाचकत्वेन ख्यातस्य स्ववाचकशब्दस्य, अभिधानान्तरस्य स्ववाचकेतरशब्दस्य च सम्बन्धः क्रमेण वाच्यवाचकभावो व्यङ्ग्यव्यञ्जकभावश्च, तद्योग्यत्वेन तस्य वाच्यस्य, अर्थान्तरस्य व्यङ्ग्यस्य च प्रतीतेरित्यन्वयः।

आचार्यस्तु—'प्रसिद्धेन वाचकतयाऽभिधानान्तरेण यः सम्बन्धो वाच्यत्वं, तदेव यत्र, तद्योग्यत्वं तेनोपलक्षितस्य' इति व्याचक्षते। तत्र चकारद्वयोपादानप्रयोजनमन्वेषणीयम्।

अभिधाप्रयोज्यबोधविषयत्वादभिधाबोध्यत्वं यद्यपि व्यङ्ग्येऽप्यस्त्येव, किन्त्वभिधामात्रबोध्यत्वं वाच्यत्वं वयं ब्रूमः, तत्र चाभिधेतरव्यञ्जनाप्रयोज्यबोधविषयत्वमप्यस्तीति कुतो वाच्यत्वव्यपदेशः स्यादिति वृत्त्याशयः।

व्यङ्ग्यार्थके भी परम्परया अभिधाबोध्य होनेसे उसमें वाच्यत्वका व्यवहार क्यों नहीं हो सकता ? इसका समाधान करते हैं—शब्दव्यापारेति। अभिधेय सामर्थ्यरूप व्यञ्जनासे आक्षिप्त उस व्यङ्ग्यार्थको अभिधारूप शब्द व्यापारका विषय तो हम भी मानते ही हैं। परन्तु व्यङ्ग्य रूपसे ही मानते हैं, न कि वाच्यरूपसे, क्योंकि

उस वाच्य व्यतिरिक्त अर्थ विशेषकी प्रतीति वाचक रूपसे प्रसिद्ध शब्दके वाच्य वाचकभावरूप सम्बन्धसे भिन्न व्यङ्ग्य व्यञ्जकभावरूप सम्बन्धके योग्य शब्दसे ही होती है, अर्थात् अभिधा मात्रसे जो बोध्य हो उसीको हम वाच्य कहते हैं, व्यङ्ग्यरूप अर्थविशेष तो परम्परया अभिधाजन्य बोध विषय होने पर भी अभिधासे अतिरिक्त व्यञ्जना जन्य बोधका विषय भी होता है, इसलिये उसमें वाच्यत्वका व्यवहार नहीं हो सकता ।

समर्थयति—

शब्दान्तरेण स्वार्थाभिधायिना यद्विषयीकरणं, तत्र प्रकाशनोक्तिरेव युक्ता ।

स्वार्थाभिधायिना स्वशक्यार्थवाचकेन, शब्दान्तरेण तद्व्यङ्ग्यार्थानभिधायकशब्देन, यदर्थान्तरस्य व्यङ्ग्यस्य विषयीकरणं बोधनम्, तत्र प्रकाशनस्य व्यञ्जनस्योक्तिरेव युक्ता, न त्वभिधानस्येत्यर्थः ।

'साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः ।'

'तत्र सङ्केतितार्थस्य बोधनादग्रिमाऽभिधा ॥'

इत्यादिदर्शनादवगमनीयस्यार्थान्तरस्य तत्र शब्दे साक्षात्सङ्केतराहित्येन न तच्छब्दवाच्यत्वम्, न च तच्छब्दस्य वाचकत्वम्, न वा तयोरभिधाव्यापारः, अपि तु व्यङ्ग्यत्वमर्थस्य, व्यञ्जकत्वं शब्दस्य, व्यञ्जना च व्यापार इति बोध्यम् ।

इसलिये किसी अर्थ विशेषको, अपने वाचक शब्दसे न कहकर अभिधा द्वारा अपने स्वार्थको कहनेवाले किसी दूसरे शब्दसे जो प्रतीतिका विषय कराया जाता है, उसके लिये प्रकाशन (व्यञ्जन) शब्दका व्यवहार करना ही उचित है, अभिधा शब्द का प्रयोग करना उचित नहीं, अतः व्यङ्ग्य-व्यञ्जक शब्दका व्यवहार ठीक ही है ।

इदानीं व्यञ्जनायास्तात्पर्यशक्त्याऽगतार्थत्वं दृष्टान्तदार्ष्टान्तिकवैषम्यप्रतिपादनेन निरूपयति—

न च पदार्थवाक्यार्थन्यायो वाच्यव्यङ्ग्ययोः ।

अब व्यञ्जना, तात्पर्य शक्तिसे गतार्थ नहीं हो सकती, इसका निरूपण करते हैं—न चेति । वाच्य और व्यङ्ग्यमें पदार्थ वाक्यार्थका भी दृष्टान्त नहीं दिया जा सकता, अर्थात् जैसे पदार्थ प्रतीति पूर्वक ही वाक्यार्थ प्रतीति होती है और वाक्यार्थ बोध, तात्पर्य शक्तिसे ही निष्पन्न होता है, वैसे ही वाच्यार्थ प्रतीति पूर्वक ही व्यङ्ग्यार्थकी प्रतीति होनेसे तात्पर्य शक्तिसे ही यहां पर भी व्यङ्ग्यार्थका बोध निष्पन्न हो जायगा, उसके लिये व्यञ्जना शक्ति माननेकी क्या आवश्यकता है? इस प्रकारका प्रश्न करना ठीक नहीं ।

यत् पूर्वं 'पदार्थप्रतीतिरिव वाक्यार्थप्रतीतेः' इति तात्पर्यविषयस्य वाच्यत्वं स्थापयता निदर्शनमुपन्यस्तम्, तन्न सङ्गतम्, पदार्थप्रतीतेः सर्वैरस्वीकारात्, स्वीकृतावपि पारमार्थिकत्वेनामननात्, तथा मननेऽप्यौपपत्तिकवैषम्यस्योपलम्भादिति सकलं हेतुमुखेनाह—

यतः पदार्थप्रतीतिरसत्येवेति कैश्चिद्विद्वद्भिरास्थितम्।

कैश्चिद् वैयाकरणैर्न तु सर्वैः। तैरपि पारमार्थिकी न मन्यते, किन्त्वावान्तरिकी लाघवेन वाक्यार्थबोधार्थमेव। आस्थितं प्रतिज्ञातमभ्युपगतमित्यनर्थान्तरम्। सर्वानुमतो ह्यर्थः प्रभवति दृष्टान्तीभवितुम्, न चायं तथेति भावः।

क्योंकि कुछ विद्वान् (वैयाकरण) लोग ही पदार्थ प्रतीतिको मानते हैं, सब लोग नहीं मानते, वे (वैयाकरण) भी उसको पारमार्थिक सत्ता नहीं मानते, किन्तु वाक्यार्थ बोधमें सुभीताके लिये काल्पनिक ही मानते हैं, इसलिये इने गिने व्यक्तियोंका मन्तव्य (विचार) दृष्टान्त नहीं हो सकता, अपितु सबसे समर्थित विषय ही दृष्टान्त हो सकता है।

तदेव वैषम्यं दर्शयति—

यैरप्यसत्यत्वमस्या नाभ्युपेयते, तैर्वाक्यार्थपदार्थयोर्घट-तदुपादानकारणन्यायोऽभ्युपगन्तव्यः।

यैर्मीमांसकैः। अपिशब्दस्तदनुयायिविरलतां सूचयति। उपादानकारणं समवायिकारणं घटस्य कपालम्।

जो भी भट्ट मीमांसक, नैयायिक लोग पदार्थ प्रतीतिकी असत्यताको नहीं मानते हैं, उनको वाक्यार्थ तथा पदार्थमें घट और उसके समवायिकारण कपालका न्याय मानना होगा।

तन्न्यायमुपपादयति—

यथा हि घटे निष्पन्ने तदुपादानकारणानां न पृथगुपलम्भः, तथैव वाक्ये तदर्थे वा प्रतीते पद-तदर्थानाम्।

न पृथगुपलम्भ इति शेषः।

जैसे घटके निष्पन्न हो जाने पर उसके समवायिकारण कपालोंकी अलग प्रतीति नहीं होती है, वैसे ही वाक्य या वाक्यार्थकी प्रतीति होने पर पद या पदार्थकी पृथक् प्रतीति नहीं होती, इसलिये प्रकृतमें पदार्थ-वाक्यार्थका दृष्टान्त संगत नहीं हो सकता।

पृथगुपलम्भे का हानिरित्यत आह—

**तेषां तदा विभक्ततयोपलम्भे वाक्यार्थबुद्धिरेव दूरीभवेत् ।**

तेषां पदतदर्थानाम् । तदा वाक्यार्थबोधनिष्पत्तिकाले । दूरीभवेत् विनश्येत् । अवयवेषु हि पृथक्कृतेषु नावयविन उपलब्धिः ।

ननूपादानकारणानामुत्पन्ने कार्ये पृथगनुपलम्भोऽपि न सर्वमतसिद्धः, बौद्धनये तेषां क्षणिकत्वेनासत्त्वात्, साङ्ख्यमतेऽन्तर्हितत्वाच्चेति किमिह दृष्टान्तोपन्यसनमिति चेत्, उच्यते—तेषां पृथगनुपलब्धिरेवास्माभिरुपन्यस्ता, सा चैकत्र तेषामसत्त्वेन, परत्र तिरोहितत्वेनाक्षतैवेति नासङ्गतिरिति बोध्यम् ।

यदि वाक्यार्थ प्रतीति कालमें पद-पदार्थोंकी अलग प्रतीति मानी जाय तो वाक्यार्थ बोध ही नहीं होगा, क्योंकि अवयवोंके पृथक् हो जाने पर एक अखण्ड अवयवीकी उपलब्धि नहीं होती है, अर्थात् एक सम्पूर्ण अर्थका बोध करानेवाले पद समुदायको ही वाक्य कहते हैं, क्योंकि अर्थैक्य होने पर ही एक वाक्यत्वका व्यवहार होता है, इसलिये पदार्थ और वाक्यार्थकी पृथक् प्रतीति नहीं मानी जा सकती और जब अलग प्रतीति ही नहीं होती है, तब प्रकृतमें पदार्थ-वाक्यार्थका दृष्टान्त ही नहीं दिया जा सकता है ।

प्रकृते तन्न्यायासङ्गतिमाह—

**न त्वेष वाच्यव्यङ्ग्ययोर्न्यायः । न हि व्यङ्ग्ये प्रतीयमाने वाच्यबुद्धिर्दूरीभवति । वाच्यावभासाविनाभावेन तस्य प्रकाशनात् ।**

वाच्यार्थबोधमन्तरेण व्यङ्ग्यार्थबोधस्यानुदयाद् वाच्यार्थबोधस्य तत्र निमित्तकारणता कल्प्यते । न हि निमित्तकारणानामुत्पन्नेऽपि कार्ये पृथगनुपलम्भो, घट इव दण्डादीनाम् । समवायिकारणस्य तु स भवति । न च तत्ता वाच्यार्थबोधस्येति तयोर्वैषम्यं व्यक्तमेव ।

वाच्यार्थबोधानन्तरजायमानव्यङ्ग्यार्थबोधं प्रत्येव वाच्यार्थबोधस्य निमित्तकारणताऽपि, न तु बोधान्तरं प्रत्यपि । तथासत्यवाचकगीतशब्दश्रवणव्यङ्ग्यरसादिबोधे व्यभिचारो दुर्निवारः स्यादिति न विस्मरणीयम् ।

वाच्य और व्यङ्ग्यमें ऐसी बात नहीं है, क्योंकि व्यङ्ग्यकी प्रतीति होने पर वाच्यकी प्रतीति दूर नहीं होती है, अर्थात् व्यङ्ग्य प्रतीतिके साथ २ वाच्यकी भी प्रतीति होती है, क्योंकि वाच्य प्रतीतिके अविनाभावरूपमें ही व्यङ्ग्यकी प्रतीति होती है, याने वाच्य प्रतीतिके बिना व्यङ्ग्यकी प्रतीति नहीं हो सकती है ।

एवं तात्पर्यवृत्तिनिर्वाहानुकूलं पदार्थवाक्यार्थन्यायं निरस्य, स्वाभिमतप्रकाशात्मकव्यञ्जनावृत्तिस्थापनानुलोमघटप्रदीपन्यायमुपन्यस्यति—

तस्माद् घटप्रदीपन्यायस्तयोः।

इसलिये वाच्य और व्यङ्ग्यकी प्रतीतियोंमें प्रदीप-घटका दृष्टान्त देना ही संगत होगा।

तमेवोपपादयति—

**यथैव हि प्रदीपद्वारेण घटप्रतीतावुत्पन्नायां न प्रदीपप्रकाशो निवर्तते, तद्वद् व्यङ्ग्यप्रतीतौ वाच्यावभासः।**

न निवर्तेत इति शेषः। तेन च व्यङ्ग्यव्यञ्जकभाव एव वाच्यव्यङ्ग्ययोः सम्बन्धः पर्यवस्यति।

जैसे कि प्रदीकके द्वारा घटकी प्रतीति हो जाने पर भी प्रदीपकी प्रतीति नष्ट नहीं हो जाती, अपितु प्रदीपकी भी प्रतीति होती रहती है, वैसे ही व्यङ्ग्यकी प्रतीति हो जाने पर वाच्यकी भी प्रतीति होती रहती है, निवृत्त नहीं होती, इसलिये वाच्य-व्यङ्ग्यमें व्यङ्ग्य-व्यञ्जक भाव सम्बन्ध मानना ही ठीक है।

ननु स्वयमेव प्राक्—'यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते।
वाच्यार्थपूर्विका तद्वत् प्रतिपत् तस्य वस्तुनः॥' इत्यनेन
पदार्थवाक्यार्थन्यायं तयोरङ्गीकृत्य साम्प्रतमिह निरस्यतीत्यसमञ्जसमित्यत आह—

**यत्तु प्रथमोद्द्योते—'यथा पदार्थद्वारेण' इत्याद्युक्तम्, तदुपायत्वसाम्यमात्रस्य विवक्षया।**

उपायत्वं कारणता।

तत्र कारणत्वमात्रेण सामान्येन साम्यमुक्तम्, न तु समवाय्यसमवायिनिमित्तस्वरूपैर्विशेषैः। कारणत्वमात्रेण साम्यन्त्वधुनाऽप्युच्यत इति किं दूषणमित्याकूतम्।

यहाँ यह प्रश्न होता है कि पहले प्रथम उद्द्योतमें 'यथा पदार्थ द्वारेण' इत्यादि कारिका द्वारा वाच्य-व्यङ्ग्यमें पदार्थ-वाक्यार्थ न्यायको स्वयं भी मानकर अभी उसका खण्डन करना असंगत मालूम पड़ता है, इसका समाधान करते हैं कि—प्रथम उद्द्योतमें जो 'पदार्थद्वारेण' इत्यादि कहा है, वह केवल उपायत्वकी समताकी दृष्टिसे ही लिखा है, अर्थात् जैसे पदार्थकी प्रतीति वाक्यार्थ प्रतीतिका उपाय (साधन) होती है, वैसे ही वाक्यार्थ प्रतीति व्यङ्ग्यार्थ प्रतीतिका उपाय होती है, इस तरह उपायत्वरूप कारणत्वात्मक सामान्यधर्म मात्रसे ही सादृश्य प्रतिपादन द्वारा तुलना की गई है, न कि समवायिकारणत्व आदि विशेष धर्मसे, इसलिये कोई विरोध नहीं लगता है।

ननु यदि घटप्रदीपन्यायस्तयोरङ्गीक्रियते, तर्हि यथा युगपदेव घटप्रदीपयोर्भानम्भवति, तथैव कार्यकारणभावादनुचितो वाच्यव्यङ्ग्ययोः सममेवावभासो वाक्यतः स्यादिति वाक्यस्य युगपदर्थद्वयबोधकत्वमापतेदित्याशङ्कते—

ननवेवं युगपदर्थद्वययोगित्वं वाक्यस्य स्यात् ।

( पूर्वपक्ष ) यदि वाच्य और व्यङ्ग्य प्रतीतिमें प्रदीप-घट न्याय मानेंगे तो जैसे प्रदीप और घटका एक साथ भान होता है, वैसे ही वाच्य-व्यङ्ग्यका भी एक साथ ही भान होने लगेगा और इस प्रकार वाक्यके एक साथ दो अर्थोंका सम्बन्ध होने लगेगा ?

न चेयमापत्तिरिष्टैव शक्यते कर्तुमित्याह—

तद्भावे च तस्य वाक्यतैव विघटते ।

तद्भावे युगपदर्थद्वयवाचकत्वे । तस्य वाक्यस्य ।

इसको मान लेने पर भी दोष दूर नहीं हो सकता है, क्योंकि ऐसा होने पर उसका वाक्यत्व ही नहीं रहेगा ।

तद्विघटनहेतुमाख्याति—

तस्या ऐकार्थ्यलक्षणत्वात् ।

तस्या वाक्यतायाः । ऐकार्थ्यं पदार्थानां मिथः समन्वयेन दण्डायमानैकार्थबोधकत्वम् । एतत्सम्पादनार्थमेव—'दुर्गालङ्घितविग्रहः' इत्यादिशब्दशक्त्युद्भवध्वनिस्थलेऽरूपमाध्वनिरङ्गीक्रियते ।

युगपत्प्रतिभासमानयोरर्थयोरन्वयाभावेन नैकरूपतेति कुतस्तदुपस्थापकस्य वाक्यत्वमिति तात्पर्यम् ।

क्योंकि एकार्थ होना ही वाक्यका लक्षण है, अर्थात् एक अर्थ होने पर ही वाक्य कहा जाता है ।

तामापत्तिं परिहरति—

नैष दोषः—गुणप्रधानभावेन तयोरवस्थानात् ।

तथा च तयोर्मिथो नानन्वय इति नोक्तदोष इति भावः ।

( उत्तर पक्ष ) व्यङ्ग्य-व्यञ्जकभाव पक्षमें यह दोष नहीं हो सकता है, क्योंकि वाच्य और व्यङ्ग्यकी गुण-प्रधानभावसे व्यवस्था होनेसे परस्परमें अन्वय द्वारा एक वाक्यताका भंग नहीं होता ।

उपपादयति—

व्यङ्ग्यस्य हि क्वचित् प्राधान्यं वाच्यस्योपसर्जनीभावः । क्वचिद्वाच्य-

स्य प्राधान्यमपरस्य च गुणीभावः। तत्र व्यङ्ग्यप्राधान्ये ध्वनिरित्युक्तमेव। वाच्यप्राधान्ये तु प्रकारान्तरं निर्देक्ष्यते।

अपरस्य व्यङ्ग्यस्य। प्रकारान्तरं काव्यप्रभेदान्तरं गुणीभूतव्यङ्ग्याख्यम्। निर्देक्ष्यतेऽस्मिन्नेवोद्द्योते वक्ष्यते मयेति शेषः।

उक्त विषयको ही स्फुट करते हैं—व्यङ्ग्यस्येति। कहीं पर व्यङ्ग्यार्थकी प्रधानता और वाच्यार्थकी अप्रधानता (गौणता) होती है और कहीं पर वाच्यार्थकी प्रधानता और व्यङ्ग्यार्थकी अप्रधानता होती है। उनमें व्यङ्ग्यार्थके प्राधान्य होने पर ध्वनि काव्यका व्यवहार होता है, यह पहले ही कह चुके हैं। और वाच्यार्थके प्राधान्य होनेपर गुणीभूत व्यङ्ग्य काव्यका व्यवहार होता है, इस विषयका निर्देश आगे करेंगे।

उपसंहरति—

तस्मात् स्थितमेतत्—व्यङ्ग्यपरत्वेऽपि काव्यस्य, न व्यङ्ग्यस्याभिधेयत्वम्, अपि तु व्यङ्ग्यत्वमेव।

उक्त विषयको उपसंहार द्वारा बतलाते हैं—तस्मादिति। इसलिये यह सिद्ध हो गया कि काव्यके व्यङ्ग्य प्रधान होने पर भी व्यङ्ग्यार्थ अभिधेय अर्थात् वाच्य नहीं है, अपितु व्यङ्ग्य ही है।

पुनरन्यथाऽपि तात्पर्यशक्तिबोध्यत्वेन वाच्यत्वं व्यङ्ग्यस्य निराकरोति—

किञ्च व्यङ्ग्यस्य प्राधान्येनाविवक्षायां वाच्यत्वं तावद् भवद्भिर्नाभ्युपगन्तव्यम्, अतत्परत्वाच्छब्दस्य।

भवद्भिस्तात्पर्यपक्षपातिभिः। अतत्परत्वात्तदर्थबोधनेच्छयाऽनुच्चारितत्वात्। प्राधान्येन विवक्षित एवार्थः शब्दस्य तात्पर्यविषयो यस्तमेव तात्पर्यवृत्तिर्भवदभिमता बोधयितुमलम्। अत्र तु व्यङ्ग्यस्य तथात्वाभावात् कथं वाच्यत्वं स्यादिति भावः। अभिधैव तात्पर्यसाहाय्येन बोधं जनयतीति तन्मतम्, अतो वाच्यत्वमेव तैराशङ्कितम्, खण्डितं च तदेव सिद्धान्तिभिरिति विभावनीयम्।

दूसरे ढङ्गसे भी व्यङ्ग्यार्थकी वाच्यताका खण्डन करते हैं—किञ्चेति। इसके अतिरिक्त जहाँ पर व्यङ्ग्यार्थकी प्रधानरूपसे विवक्षा नहीं है, वहाँ शब्दके मुख्य रूपसे गुणीभूत व्यङ्ग्यपरक नहीं होनेसे उस गुणीभूत व्यङ्ग्यार्थको आप वाच्यार्थ नहीं मानेंगे, क्योंकि प्रधान रूपसे विवक्षित अर्थ ही शब्दका तात्पर्यविषयीभूत वाच्यार्थ होता है, गुणीभूत व्यङ्ग्यार्थ तो प्रधानतया विवक्षित ही नहीं है।

व्यङ्ग्यस्य प्राधान्येन विवक्षितत्वेऽपि वाच्यत्वाभावं निगमनमुखेनास्थापयति—

**तदस्ति तावद् व्यङ्ग्यः शब्दानां कश्चिद् विषय इति यत्रापि तस्य प्राधान्यम्, तत्रापि किमिति तस्य स्वरूपमपह्नूयते।**

विषयो बोध्यः। इतिर्हेतौ। अपह्नूयतेऽपलप्यते।

प्राधान्येनाविवक्षायां व्यङ्ग्यसद्भावः स्वीकृत इति तदर्थं व्यञ्जनाभारो यदि भवता बोढव्य एव, तर्हि प्राधान्येन विवक्षायां स कथं नोह्यत इत्याशयः।

इसलिये यह अवश्य मानना होगा कि शब्दका कोई व्यङ्ग्य अर्थ भी है। जो कि शब्दके तत्परक नहीं होनेसे वाच्य नहीं है, अतः व्यङ्ग्य है। इसलिये जहाँ पर भी उस व्यङ्ग्यार्थकी प्रधानता है, वहां भी उसके स्वरूपका अपलाप क्यों करते हैं।

उपसंहरति—

**एवं तावद् वाचकत्वादन्यदेव व्यञ्जकत्वम्।**

एवं विषयभेदात् स्वरूपभेदाच्च। तावच्छब्दस्तद्धेत्वन्तरकथनावशेषं सूचयति।

इस प्रकार विषयभेद और स्वरूपभेद होनेसे वाचकत्वसे व्यञ्जकत्व शक्ति अलग ही है।

तमेव हेत्वन्तरं दर्शयति—

**इतश्च वाचकत्वाद् व्यञ्जकत्वस्यान्यत्वं, यद् वाचकत्वं शब्दैकाश्रयमितरत्तु शब्दाश्रयमर्थाश्रयं च, शब्दार्थयोर्द्वयोरपि व्यञ्जकत्वस्य प्रतिपादनात्।**

इत उच्यमानाद्धेतोः। चकारोऽप्यर्थकः, प्रागुक्तहेतुसङ्ग्राहकः। अन्यत्वं भेदः। शब्दैकाश्रयं शब्दमात्रवृत्ति। इतरद्व्यञ्जकत्वम्। तुशब्दोऽभिधां व्यवच्छिनत्ति। अत्रान्येऽपि भेदहेतवो ग्राह्याः।

अभिधा हि शब्दमात्रे तिष्ठति, व्यञ्जना तु वर्ण-पद-तदेकदेश-वाक्य-सङ्घटना-प्रबन्ध-वाच्य-लक्ष्य-व्यङ्ग्यार्थ-चेष्टाप्रभृतिष्वपीति प्राङ्नैकधा प्रतिपादितमेव। अत आश्रयभेदादपि तयोर्भेदः सुस्थितः।

इस कारणसे भी वाचकत्वसे व्यञ्जकत्व भिन्न है, जो कि वाचकत्व केवल शब्दके आश्रित रहता है और व्यञ्जकत्व शब्द और अर्थ दोनोंके आश्रित रहता है अर्थात् अभिधा शक्ति केवल शब्दमें ही मानी जाती है और व्यञ्जनाशक्ति तो शब्द और अर्थ दोनोंमें मानी जाती है, क्योंकि शब्द और अर्थ दोनों ही व्यञ्जक होते हैं, इसका प्रतिपादन किया जा चुका है, इसलिये आश्रयके भेदसे अभिधासे व्यञ्जना भिन्न है।

इत्थं विषयस्वरूपाश्रयभेदतोऽभिधारूपप्रधानवृत्तेर्व्यञ्जनाया भेदं व्यवस्थाप्य पर-

नये लक्षणाशब्देनैव व्यवह्रियमाणाया गुणवृत्तेरपि भेदं दर्शयति—

गुणवृत्तिस्तूपचारेण लक्षणया चोभयाश्रयाऽपि भवति। किन्तु ततोऽपि व्यञ्जकत्वं स्वरूपतो विषयतश्च भिद्यते।

लक्षणा हि शुद्धा गौणी चेति द्विविधा। तत्र शुद्धाया इह लक्षणाशब्देन व्यवहारः, गौण्यास्तूपचारशब्देन, तदुभयोस्त्वप्रधानवृत्तित्वाद् गुणवृत्तिशब्देन। सा चार्थे साक्षात्, शब्दे तु परम्परयाऽऽरोपिता तिष्ठति। तदुक्तम्, लक्षणानिरूपणे प्रदीपकृच्चरणैः—'शक्यव्यवहितलक्ष्यार्थविषयत्वाच्छब्द आरोपित एव स व्यापारः। वस्तुतोऽर्थनिष्ठ एव' इति।

एवं शब्दार्थोभयवृत्तित्वेन साम्याद् गुणवृत्तिव्यञ्जनयोरैक्यं नाशङ्कनीयम्, पूर्ववत्तयोरपि स्वरूपविषयोर्भेदादिति बोध्यम्।

इस प्रकार विषय स्वरूप और आश्रयके भेदसे अभिधा एवं तात्पर्य वृत्तिसे व्यञ्जनावृत्तिका भेद स्थापित कर अब लक्षणारूप गुणवृत्तिसे भी व्यञ्जनाका भेद बतलाते हैं—गुणवृत्तिरिति। गुणवृत्ति रूप लक्षणा दो प्रकारकी होती है—शुद्धा और गौणी। उनमें सादृश्येतर मूलक लक्षणाको शुद्धा कहते हैं, जो कि 'लक्षणा' शब्दसे व्यवहृत होती है और सादृश्य मूलक लक्षणाको गौणी कहते हैं जो कि 'उपचार' शब्दसे व्यवहृत होती है। इस तरह सादृश्य तथा सादृश्येतर सम्बन्ध मूलक उपचार और लक्षणा शब्दसे व्यवह्रियमाण गुणवृत्ति शब्द और अर्थ दोनोंमें आश्रित होती है, इसलिये यद्यपि आश्रयका भेद लक्षणासे व्यञ्जनाका भेदक नहीं हो सकता, तथापि स्वरूप एवं विषयके भेदसे लक्षणासे व्यञ्जनाका भेद है।

तत्र स्वरूपभेदं प्राग् दर्शयति—

रूपभेदस्तावदयम्—यदमुख्यतया व्यापारो गुणवृत्तिः प्रसिद्धा, व्यञ्जकत्वं तु मुख्यतयैव शब्दव्यापारः। न ह्यर्थाद् व्यङ्ग्यत्रयप्रतीतिर्या, तस्या अमुख्यत्वं मनागपि लक्ष्यते।

मुख्यताऽस्खलद्गतिकता। अमुख्यता च तदभावः। व्यङ्ग्यत्रयं वस्त्वलङ्काररसादिरूपम्। लक्षणा हि बाधसध्रीचीना वाच्यार्थे बाधिते तत्सम्बन्धिनोऽर्थान्तरस्य बोधिकेत्यमुख्यस्तद्बोध्योऽर्थः, व्यञ्जना न तादृगिति प्रत्येयोऽर्थस्तु मुख्य एवेति तयोः स्वरूपभेदः स्फुट इति भावः।

उनमें पहले स्वरूप भेद बतलाते हैं—रूपभेद इति। स्वरूप भेद तो यह है कि अमुख्य रूपसे लक्ष्यार्थका बोध करानेवाला शब्दका व्यापार गुणवृत्ति नामसे प्रसिद्ध है और व्यञ्जकत्व तो मुख्य रूपसे ही अर्थविशेषका बोधजनक शब्दका व्यापार

माना जाता है, क्योंकि रसादि ध्वनि, वस्तु ध्वनि एवं अलंकार ध्वनि तीन प्रकारके व्यङ्ग्योंकी प्रतीतिका वाच्यार्थ प्रतीतिसे तनिक भी अमुख्यत्व (अप्रधानत्व) नहीं लक्षित होता है, परन्तु लक्षणा स्थलमें ऐसी बात नहीं है, क्योंकि वाच्यार्थके बाधित होने पर ही लक्षणावृत्ति वाच्यार्थ सम्बन्धी अर्थान्तरको गौण रूपसे ही बतलाती है, इसलिये उससे बोध्य अर्थ अमुख्य रूपसे ही प्रतीत होता है, इस तरह स्पष्ट ही दोनोंका स्वरूप भेद है।

पुनरन्यथा स्वरूपभेदमाह—

अयं चान्यः स्वरूपभेदः—यद् गुणवृत्तिरमुख्यत्वेन व्यवस्थितं वाचकत्वमेवोच्यते। व्यञ्जकत्वं तु वाचकत्वादत्यन्तं विभिन्नमेव। एतच्च प्रतिपादितम्।

प्रतिपादितं वाच्यव्यङ्ग्ययोर्वैलक्षण्यप्रदर्शनप्रसङ्गेन प्रथमोद्द्योते।

अयमभिसन्धिः—'सर्वे सर्वार्थवाचकाः' इति सिद्धान्तमनुसरन्तोऽप्रसिद्धशक्तिनाम्नाऽभिधैव व्यवहितार्थबोधकत्वे लक्षणाभूमिकामभ्युपैतीति ये मन्यन्ते, तन्मते लक्षणाया अभिधाविशेषरूपत्वाद् व्यञ्जनायाश्च ततोऽतितरां भिन्नत्वान्न तादात्म्यम्। न चाभिधाव्यञ्जनयोर्भेद एव सन्देग्धव्यम्, पूर्वमेव बोध्यार्थभेदेन तद्भेदस्यापि व्यवस्थापितत्वात्।

और दूसरा स्वरूप भेद यह है कि गौण रूपसे विद्यमान वाचकत्व शक्ति ही गुणवृत्ति शब्दसे व्यवहृत होती है और व्यञ्जकता शक्ति तो वाचकता शक्तिसे अत्यन्त भिन्न ही होती है, यह विषय वाच्य-व्यङ्ग्यके वैलक्षण्य प्रदर्शन प्रसङ्ग पर प्रथम उद्द्योतमें कह चुके हैं।

पुनरपरथा स्वरूपभेदमाह—

अयं चापरो रूपभेदः—यद् गुणवृत्तौ पदार्थोऽर्थान्तरमुपलक्षयति, तदोपलक्षणीयार्थात्मना परिणत एवासौ सम्पद्यते। यथा—'गङ्गायां घोषः' इत्यादौ। व्यञ्जकत्वमार्गे तु—यदाऽर्थोऽर्थान्तरं द्योतयति, तदा स्वरूपं प्रकाशयन्नेवासावन्यस्य प्रकाशकः प्रतीयते प्रदीपवत्। यथा—'लीलाकमलपत्राणि गणयामास पार्वती।' इत्यादौ।

'गङ्गायां घोषः' इत्यादौ प्रयोजनहेतुकलक्षणलक्षणायां वाच्यं नीरं लक्ष्यतीरान्वयसिद्धये 'परार्थे स्वसमर्पणम्' इत्युक्तेः स्वरूपं लक्ष्यात्मकमेव दर्शयतीति तद्रूपतया तस्य परिणतिः। 'लीलाकमलपत्राणि' इत्यादावार्थव्यञ्जनायान्तु मुखनम-

नादिवाच्यं प्रथमं प्रतीतिपथमवतीर्णमेव दीप इव घटादिं व्रीडाऽऽदिं व्यनक्तीति वाच्याप्रकाशप्रकाशावपि तद्भेदकौ स्त इति सारम्।

और तीसरा स्वरूप भेद यह है कि गुणवृत्तिस्थलमें जब वाच्यार्थ लक्षणा द्वारा दूसरे अर्थको बतलाता है, तब जहत्स्वार्थारूप लक्षण लक्षणा द्वारा लक्षणीय अर्थके रूपमें स्वयं परिणत होकर ही लक्ष्यार्थ बन जाता है। जैसे 'गंगायां घोषः' इत्यादि प्रयोजनमूलक लक्षणलक्षणामें जलरूप वाच्यार्थ लक्ष्यभूत तीरके साथ अन्वय सिद्धिके लिये अपने स्वरूपको तट रूप लक्ष्यार्थमें ही समर्पण करते हुए परिणत हो कर लक्ष्यार्थका बोधन करता है। परन्तु व्यञ्जनास्थलमें जब वाच्यार्थ व्यङ्ग्यरूप अर्थ विशेषको अभिव्यक्त करता है तब प्रदीप-घटके समान वह अपने स्वरूपको प्रकाशित करता हुआ ही व्यङ्ग्यार्थका प्रकाशन करता है। जैसे 'लीलाकमलपत्राणि गणयामास पार्वती' इत्यादिस्थलमें पहले वाच्यार्थका बोध होता है और बादमें वह वाच्यार्थ, लज्जारूप व्यङ्ग्यार्थ या आकारगोपन रूप अवहित्थात्मक शृंगाराङ्गको प्रकाशित करता है, अर्थात् लक्षण लक्षणामें गङ्गापद जलरूप अपने वाच्यार्थको बिलकुल छोड़कर तटरूप लक्ष्यार्थका बोध कराता है, परन्तु व्यञ्जक शब्द तो अपने वाच्यार्थको बतलाता हुआ ही व्यङ्ग्यार्थ विशेषको अभिव्यक्त करता है।

अस्खलद्गतिकत्वेऽपि लक्षणाऽङ्गीकारे दोषं दर्शयति—

**यदि च यत्रातिरस्कृतस्वप्रतीतिरर्थोऽर्थान्तरं लक्षयति, तत्र लक्षणाव्यवहारः क्रियते, तदेवंसति लक्षणैव मुख्यः शब्दव्यापार इति प्राप्तम्। यस्मात् प्रायेणैव वाक्यानां वाच्यव्यतिरिक्ततात्पर्यविषयार्थावभासित्वम्।**

अतिरस्कृताऽबाधिता स्वरूपस्य प्रतीतिर्यस्य तादृशोऽर्थो मुखनमनादिरूपो यत्र 'एवं वादिनि' इत्यादौ, अर्थान्तरं व्रीडाऽऽदिव्यङ्ग्यं लक्षयति प्रतिपादयति, तत्रापि यदि लक्षणाव्यवहारः क्रियते लक्षणैव मन्यते, न तु व्यञ्जना, तदेवमेवं तर्हि, शब्दानां लक्षणैव मुख्यो व्यापारो वृत्तिरिति प्राप्तमापन्नं भवति। यस्मात् प्रायेण बाहुल्येन वाक्यानां वाच्यव्यतिरिक्तस्य तात्पर्यविषयस्यार्थस्यावभासित्वं बोधकत्वं भवतीत्यर्थः।

मुख्यार्थबाधस्तत्सम्बन्धो रूढिप्रयोजनान्यतरच्च लक्षणाबीजम्। तत्र बाधाभावेऽपि लक्षणाऽङ्गीकारे, तस्या एव मुख्यवृत्तित्वमापद्येत, सर्वाभिमतं गुणवृत्तित्वं च भज्येत, तादृशलक्षणयैव सर्वत्र व्यवहर्तुं शक्यत्वात्। तस्माल्लक्षणाया अमुख्यवृत्तित्वं वदता भवताऽकामेनापि वाच्यबाधाभावेऽस्वीकारो विधेय एवेति तात्पर्यम्।

जहत्स्वार्थालक्षणा मूलक अत्यन्त तिरस्कृत वाच्यध्वनिमें वाच्यार्थके अत्यन्त तिरस्कृत होनेसे लक्षणा और व्यञ्जनाके अभेद नहीं होने पर भी अजहत्स्वार्था लक्षणामूलक अर्थान्तर संक्रमित वाच्य ध्वनिमें मुख्यार्थके परित्यागके विना ही अर्थान्तरके बोध होनेसे लक्षणा और व्यञ्जनामें अभेद क्यों नहीं है? इसका खण्डन करते हैं—यदि चेति। यदि 'एवं वादिनि'—इत्यादि ध्वनि स्थलमें भी मुखनमनादि वाच्यार्थ, अपनी प्रतीतिका परित्याग किये विना ही लज्जा आदि अर्थान्तरको लक्षित करता है, इसलिये ऐसे स्थलमें भी मुख्यार्थके बाध नहीं रहने पर भी लक्षणाका ही व्यवहार किया जाय तो अभिधाके स्थान पर भी लक्षणाको ही शब्दका मुख्य व्यापार मानना पड़ेगा, क्योंकि अधिकांश वाक्य वाच्यार्थका परित्याग किये विना ही वाच्यसे भिन्न तात्पर्य विषयीभूत अर्थके प्रकाशक होते हैं, इसलिये मुख्यार्थके अबाध स्थलमें लक्षणा नहीं माननी चाहिये।

पूर्वपक्षी शङ्कितः पृच्छति—

ननु त्वत्पक्षेऽपि यदाऽर्थो व्यङ्ग्यत्रयं प्रकाशयति, तदा शब्दस्य कीदृशो व्यापारः?

व्यञ्जनावादिमतेऽप्यर्थस्य व्यञ्जकतायां शब्दस्य मुख्योऽमुख्यो वा व्यापारः स्वीक्रियते? मुख्यश्चेदभिधैव सः, अमुख्यश्चेद् गुणवृत्तिरेव, अप्रधानवृत्तित्वादिति प्रष्टुरभिप्रायः।

(पूर्वपक्ष) आप (व्यञ्जनावादी) के मतमें भी जब वाच्यार्थ, रसादि, वस्तु तथा अलङ्कार रूप व्यङ्ग्यत्रयको अभिव्यक्त करता है, तब शब्दका किस प्रकारका व्यापार होता है? मुख्य या अमुख्य? यदि मुख्य हो तो अभिधा ही होगी और यदि अमुख्य हो तो लक्षणा ही माननी पड़ेगी, उभयथापि व्यञ्जनाका खण्डन ही हो जाता है, अर्थात् शब्दके अर्थ बोधनमें दो ही व्यापार होते हैं, एक मुख्य और दूसरा अमुख्य, उनमें जहां अर्थ, व्यञ्जक होता है, वहां भी शब्दका या तो मुख्य या अमुख्य इनमेंसे ही कोई एक व्यापार मानना होगा, इसलिये यदि आप मुख्य व्यापार मानते हैं तो वाचकत्व ही होगा और यदि अमुख्य व्यापार मानते हैं तो गुणवृत्ति होगी, क्योंकि मुख्य व्यापारको वाचकत्व और अमुख्य व्यापारको ही लक्षणा रूप गुणवृत्ति कहते हैं। इन दो प्रकारके व्यापारोंके अतिरिक्त व्यञ्जकत्वादिरूप तीसरा प्रकार नहीं हो सकता है।

उत्तरमाचष्टे—

उच्यते—प्रकरणाद्यवच्छिन्नशब्दवशेनैवार्थस्य तथाविधं व्यञ्जकत्वमिति शब्दस्य तत्रोपयोगः कथमपह्नूयते।

'शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः ।
एकस्य व्यञ्जकत्वे त-दन्यस्य सहकारिता ॥' इत्युक्तेरर्थव्यञ्जकत्वेऽपि शब्दस्य सहकारित्वेन व्यङ्ग्यार्थबोधनानुकूलो मुख्य एव व्यापारोऽस्ति । न च मुख्यत्वेऽभिधात्वं तस्य शङ्कनीयम्, अभिधायाः सङ्केतग्रहादिसापेक्षत्वात् । तस्यास्तु प्रकरणादिवैशिष्ट्यापेक्षणात् सामग्रीवैधर्म्यादित्युत्तरयितुराशयः ।

( उत्तरपक्ष ) प्रकरणादि सहकृत शब्दके व्यापारसे ही वाच्यार्थ उस प्रकारके वस्तु, अलङ्कार या रसादिका व्यञ्जक होता है, इसलिये उसमें शब्दकी उपयोगिता का किस प्रकार अपलाप किया जा सकता है, अर्थात् व्यङ्ग्यार्थ प्रकाशनमें शब्दका मुख्य ही व्यापार होता है, परन्तु सामग्रीके भेदसे वह व्यापार वाचकत्वसे अलग ही है, क्योंकि अभिधारूप वाचकतामें संकेतग्रहकी अपेक्षा होती है और व्यञ्जनामें उसकी अपेक्षा न होकर प्रकरणादिके सहयोग मात्रकी अपेक्षा होती है ।

इत्थं व्यञ्जनाया बाधापुरस्कृतत्वात् सङ्केतानपेक्षणात् पृथग्भूतार्थप्रत्यायकत्वाच्च, तद्विरुद्धधर्मवल्लक्षणातः क्रमेण स्वरूपभेदं प्रतिपाद्य विषयभेदं भेदनियामकं प्रतिपादयति—

विषयभेदोऽपि गुणवृत्तिव्यञ्जकत्वयोः स्पष्ट एव । यतो व्यञ्जकत्वस्य रसादयोऽलङ्कारविशेषा व्यङ्ग्यरूपावच्छिन्नं वस्तु चेति त्रयं विषयः । अस्खलद्गतित्वं समयानुपयोगित्वं पृथगवभासित्वं चेति त्रयम् ।

व्यङ्ग्यस्वरूपावच्छिन्नं व्यङ्ग्यत्वेन विच्छित्तिविशेषविधायि । वस्तुनो विशेषणमिदं लक्षणाबोध्यं साधारणं वस्तु व्यवच्छिनत्ति । इति त्रयं विषयो न तु केवलं वस्तु, तावन्मात्रस्य लक्षणयाऽपि बोध्यत्वात् । समयः सङ्केतः । पृथगवभासित्वं वाच्यभेदेन प्रतीयमानता ।

अस्खलद्गतिकत्वादिधर्मत्रयं व्यञ्जनाजन्यबोधविषय एव, लक्ष्ये तु विषये तत्त्रितयविरुद्धधर्मवत्त्वम् । 'गङ्गायां घोष' इत्यादौ तीरबोधे नीरान्वयबाधापेक्षणादभिधाग्रहसापेक्षत्वान्नीरस्य तीररूपेणैव प्रतीयमानत्वाच्च । किञ्च लक्ष्यो न रसादित्रयान्यतमरूप इति लक्षणाव्यञ्जनयोर्विषयभेदः स्फुट एवेति सङ्गतिः ।

इस प्रकार व्यञ्जनामें मुख्यार्थके अबाध, संकेत ग्रहकी अनपेक्षा एवं पृथक् भूतार्थप्रत्यायकत्व होनेसे उक्त तीनोंसे विरुद्ध धर्मवाली लक्षणासे क्रमशः व्यञ्जनाका स्वरूप भेद बतलाकर अब उक्त ( लक्षणासे व्यञ्जना ) भेदका नियामक विषयभेद बतलाते हैं—विषय इति । गुणवृत्ति रूप लक्षणा और व्यञ्जनाका विषय भेद भी स्पष्ट ही है । क्योंकि व्यञ्जनाके विषय 'रसादि' 'अलंकारविशेष' और चमत्कार जनक व्यङ्ग्य

विशेष रूप 'वस्तु' ये तीन हैं और लक्षणाका विषय तो केवल साधारण वस्तु ही है। एवं व्यञ्जना जन्य बोध विषयमें ही अस्खलद्गतिकत्व, समयानुपयोगित्व और पृथक् अवभासित्व, ये तीन धर्म भासित होते हैं, परन्तु लक्षणा जन्य बोध विषयमें उक्त तीनोंसे विरुद्ध धर्म ही भासित होते हैं, अर्थात् ( १ ) लक्षणामें 'स्खलद्गति' याने मुख्यार्थ बाधित होने पर ही शब्द दूसरे अर्थका बोधक होता है, परन्तु व्यञ्जनामें मुख्यार्थका बाध होना कोई आवश्यक नहीं है। ( २ ) अमुख्य रूपसे स्थित वाचकत्व ही गुणवृत्ति कहलाता है, अर्थात् लक्षणामें किसी न किसी रूपसे संकेत ग्रहकी उपयोगिता होती है, परन्तु व्यञ्जनामें संकेत ग्रहकी उपयोगिता नहीं होती है। ( ३ ) और लक्षणामें वाच्यार्थ और लक्ष्यार्थका अभेद प्रतीत होता है जैसे 'गङ्गाया घोषः' यहां पर नीर ही तीर रूपसे परिणत होकर प्रतीयमान होता है, परन्तु व्यञ्जनामें वाच्यार्थ और व्यङ्ग्यार्थका अभेद नहीं प्रतीत होता है, अर्थात् दोनोंकी अलग २ ही प्रतीति होती है।

तत्र प्रथमं लक्ष्यस्य रसादिरूपत्वाभावं दर्शयति—

तत्र रसादिप्रतीतिर्गुणवृत्तिरिति न केनचिदुच्यते, न च शक्यते वक्तुम्।

गुणवृत्तिपदं गुणवृत्तिप्रयोज्यप्रतीतिपरम्, तद्वृत्तिमात्रपरत्वे तादात्म्यशङ्काया एवानुत्थानात्। सामग्रीभेदश्च घटपटयोरिव तत्प्रतीत्योर्भेदको बोध्यः। न हि लक्ष्यप्रतीतिस्थले व्यङ्ग्यप्रतीतिसामग्रीसंवलनम्।

उनमेंसे रसादिकी प्रतीतिको कोई भी सहृदय व्यक्ति लक्षणा जन्य प्रतीति न तो कहता है और न कह ही सकता है, क्योंकि दोनोंकी पृथक् २ सामग्री होनेसे लक्ष्यार्थ प्रतीति स्थलमें व्यङ्ग्य प्रतीतिकी सामग्री संगठित ही नहीं हो सकती है।

लक्ष्यस्य व्यङ्ग्यालङ्काररूपत्वाभावं च प्रथयति—

व्यङ्ग्यालङ्कारप्रतीतिरपि।

कारणभेदादेव लक्षणाजन्यप्रतीतिरिति न शक्यते वक्तुमिति शेषः।

सामग्रीके भेद होनेसे ही व्यङ्ग्य अलंकारकी प्रतीतिको भी लक्षणा जन्य प्रतीति नहीं कह सकते हैं।

तस्यैव व्यङ्ग्यवस्तुरूपत्वाभावमपि प्रतिपादयति—

तथैव वस्तुचारुत्वप्रतीतये स्वशब्दानभिधेयत्वेन यत् प्रतिपादयितुमिष्यते, तद्व्यङ्ग्यम्। तच्च सर्वं न गुणवृत्तेर्विषयः।

यदा वस्तु चारुत्वातिशयेन बोधयितुमिष्यते, तदाऽभिधामतिक्रम्य व्यञ्जनापथारूढं तद् विधीयते। यच्चारुतमं वस्तु, तत् सर्वं लक्षणया बोधयितुं न शक्यते, तस्माद् व्यङ्ग्यवस्तुनोऽपि लक्ष्यवस्तुनो भेदः। न सर्वमित्यनेन यत्किञ्चिद्वस्तुनो

लक्षणाबोध्यत्वमनुमन्यते। तथा चात्यन्ततिरस्कृतवाच्यध्वनौ 'निश्वासान्ध इवादर्श' इत्यादौ मालिन्याद्यर्थो लक्षणयैव प्रत्याय्यते। अत एवोक्तम्—

'कस्यचिद्ध्वनिभेदस्य सा तु स्यादुपलक्षणम्' इति।

वैसे ही रमणीयताकी प्रतीतिके लिये स्वशब्दसे नहीं कहकर अर्थात् वाच्य भिन्नरूपसे ही जिस अर्थका प्रतिपादन करना इष्ट हो, वह वस्तु, व्यङ्ग्य कही जाती है। वह सब ही रमणीय व्यङ्ग्य वस्तु, लक्षणा जन्य बोध विषय नहीं होती है, इसलिये लक्ष्य वस्तुसे भिन्न ही व्यङ्ग्य वस्तु है।

तदेव साधयति—

**प्रसिद्ध्यनुरोधाभ्यामपि गौणानां शब्दानां प्रयोगदर्शनात्। तथोक्तं प्राक्।**

प्रसिद्धी रूढिः। अनुरोधः प्रयोजनापेक्षा। हेतौ तृतीया। प्राक् प्रथमोद्द्योते— 'रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि।' इत्यादिनोक्तम्।

'लावण्यम्' 'वदति विसिनीपत्रशयनम्' इत्यादिरूढिहेतुकलक्षणास्थले व्यङ्ग्यावभासाभावादेव न व्यञ्जनाप्रवेशः। प्रयोजनवल्लक्षणास्थलेऽपि व्यङ्ग्यस्य नैव लक्षणाबोध्यत्वमिति कुतो लक्षणाव्यञ्जनयोरैक्यमित्याशयः।

क्योंकि व्यङ्ग्यका भान नहीं होने पर भी प्रसिद्धि (रूढिवश) और व्यवहार या प्रयोजनके अनुरोधसे भी लाक्षणिक शब्दोंका प्रयोग देखा जाता है, जैसे 'लावण्यं' एवं 'वदति विसिनीपत्रशयनम्' इत्यादि रूढि मूलक लक्षणास्थलमें व्यङ्ग्यार्थके भान नहीं होनेसे व्यञ्जनाका प्रवेश नहीं हो सकता है, जैसा कि पहिले कहा जा चुका है। प्रयोजन मूलक लक्षणास्थलमें भी व्यङ्ग्य लक्षणासे नहीं प्रतीत होता है, इसलिये लक्षणा और व्यञ्जना एक नहीं है।

यद्यपि 'निश्वासान्ध इवादर्शः' इत्यादौ प्रयोजनवल्लक्षणास्थले यन्मालिन्यं प्रतीयते, तच्च न व्यङ्ग्यं न वा तादृक् चारु, यच्च तदतिशयरूपं व्यङ्ग्यं चारुतरं च, तन्न लक्षणया बोधयितुं क्षमम्, तथाऽपि—'यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।' इत्याद्युक्तेस्तदतिशयं व्यञ्जनाद्वारा बोधयितुमेव प्रयोजनवल्लक्षणायाः प्रवृत्तेर्लक्षणाविषयत्वं तादृशवस्तुनोऽपि कल्प्यते, तेनैतावताऽपि लक्षणाव्यञ्जनयोर्वास्तविको विषयभेदः सुस्थिर एवेति सर्वमभिप्रेत्याह—

**यदपि च विषयः तदपि च व्यञ्जकत्वानुप्रवेशेन।**

यत्तदिति सामान्ये नपुंसकम्। व्यञ्जकत्वानुप्रवेशेन व्यञ्जनाऽनुसरणेन।

और जो भी 'गङ्गायां घोषः' इत्यादि प्रयोजनवती लक्षणा स्थलमें शैत्य-पावनत्वादि व्यङ्ग्यार्थ लक्षणाका विषय प्रतीत होता है, वह भी व्यञ्जनाके प्रवेशसे ही समझना चाहिये।

फलितमाचष्टे—

**तस्माद् गुणवृत्तेरपि व्यञ्जकत्वस्यात्यन्तविलक्षणत्वम् ।**

तस्मादुक्तरूपभेदादिहेतोः । गुणवृत्तेरिति पञ्चमी बुद्धिकृतापादानत्वविवक्षायाम् ।

**इसलिये लक्षणासे भी व्यञ्जना अत्यन्त भिन्न है।**

अथाभिधालक्षणाभ्यां भिन्नत्वं व्यञ्जनायास्तदुभयमूलकत्वेन दर्शयति—

**वाचकत्व-गुणवृत्तिविलक्षणस्यापि च तस्य, तदुभयाश्रयत्वेन व्यवस्थानम् ।**

तस्य व्यञ्जकत्वस्य । प्रागुक्तभेदहेतुसमुच्चयार्थकश्चकारोऽपिशब्दश्च व्यवस्थानमित्यनन्तरं योज्यौ । तदुभयमभिधालक्षणे ।

तेनाभिधालक्षणाभिन्नस्य तदुभयमूलत्वेन व्यवस्थानमपि च भेदं सूचयतीत्यन्वयः ।

**व्यञ्जनाके अभिधा और लक्षणासे भिन्न होने पर भी उन दोनों ( अभिधा-लक्षणा ) के आधार पर ही उस ( व्यञ्जना ) की स्थिति होती है, इसलिए अभिधा लक्षणा मूलक होनेसे भी व्यञ्जना भिन्न है।**

व्यञ्जनाया अभिधा-लक्षणामूलत्वं विभज्य दर्शयति—

**व्यञ्जकत्वं हि क्वचिद् वाचकत्वाश्रयेण व्यवतिष्ठते, यथा-विवक्षितान्यपरवाच्ये ध्वनौ । क्वचित्तु गुणवृत्त्याश्रयेण, यथा-अविवक्षितवाच्ये ध्वनौ ।**

आश्रयणमाश्रयः । विवक्षितान्यपरवाच्ये 'एवं वादिनि' इत्यादौ । अविवक्षितवाच्ये 'निश्श्वासान्धः' इत्यादौ ।

**अब अभिधा तथा लक्षणा मूलक व्यञ्जनाको अलग २ विभाग करके बतलाते हैं—**व्यञ्जकत्वमिति । **व्यञ्जना कहीं वाचकत्व रूप अभिधाके आश्रित होती है, जैसे-** 'एवं वादिनि'**—इत्यादि विवक्षितान्यपर वाच्य ( अभिधा मूल ) ध्वनिमें, और कहीं गुण वृत्ति रूप लक्षणाके आश्रित होती है, जैसे** 'निःश्वासान्ध इवादर्शः' **इत्यादि अविवक्षित वाच्य ( लक्षणामूल ) ध्वनिमें।**

पूर्वग्रन्थसङ्गतिं दर्शयन् समर्थयति—

**तदुभयाश्रयत्वप्रतिपादनायैव च ध्वनेः प्रथमतरं द्वौ प्रभेदावुपन्यस्तौ ।**

प्रथमतरं प्रथमोद्द्योते—'स चासावविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति' इत्यनेन ।

**उस व्यञ्जनाके उभयाश्रितत्व अर्थात् अभिधा तथा लक्षणा मूलकत्वके प्रति-**

पादन करनेके लिये ही सबसे पहिले ध्वनिके 'अविवक्षितवाच्य' और 'विवक्षितान्य पर वाच्य' ये दो भेद बतलाये गये हैं।

पुनर्व्यञ्जनाया अभिधालक्षणातो वैलक्षण्यमनेकाभिर्भङ्गिभिर्व्यवस्थापयति—

तदुभयाश्रयत्वाच्च तदेकरूपत्वं तस्य न शक्यते वक्तुम्। यस्मान्न तद्वाचकत्वरूपमेव, क्वचिल्लक्षणाऽऽश्रयेण वृत्तेः न च लक्षणैकरूपमेव, अन्यत्र वाचकत्वाश्रयेण व्यवस्थानात्। न चोभयधर्मत्वेनैव तदेकैकरूपं न भवति, यावद् वाचकत्वलक्षणादिरूपरहितशब्दधर्मत्वेनापि। तथा हि—गीतध्वनीनामपि व्यञ्जकत्वमस्ति रसादिविषयम्। न च तेषां वाचकत्वं लक्षणा वा कथंचिल्लक्ष्यते। शब्दादन्यत्रापि च विषये व्यञ्जकत्वस्यापि दर्शनाद् वाचकत्वादिशब्दधर्मप्रकारत्वमयुक्तं वक्तुम्।

तस्य वाचकत्वस्य। वृत्तेर्वर्तमानत्वात्। यावत् किन्तु। वाचकत्वलक्षणादिभी रहितो योऽवाचकः शब्दो गीतादिध्वनिस्तद्धर्मत्वेन तद्वृत्तित्वेन। शब्दादन्यत्रापि विषये चेष्टाऽऽदावपि। वाचकत्वादयो ये शब्दस्य धर्मा व्यापारास्तत्प्रकारत्वं तद्विशेषत्वम्। व्यञ्जना यतोऽभिधालक्षणोभयमाश्रयति, तस्मात्तदेकरूपा न भवति। तदुभयरूपत्वं च तादृशातिप्रसक्तवृत्तेरप्रसिद्धत्वादेव न सम्भवति। अपि च व्यञ्जना नाभिधारूपैव, लक्षणामूलत्वे तस्यास्ततो व्यभिचरणात्। न वा लक्षणाऽऽत्मिकैव, अभिधामूलत्वे ततोऽपि व्यभिचरितत्वात्। न च तदुभयाश्रयिण्येव, उभे अपि विहायावाचकगीतशब्दादौ वर्तमानत्वात्। नापि च शब्दनिष्ठैव, तद्व्यतिरिक्तेऽपि चेष्टाऽऽदौ सत्त्वात्। इत्थमभिधागुणवृत्तिर्धर्म्यस्य बहुश उपलम्भादभिधागुणवृत्त्यादिशब्दधर्मविशेषत्वमपि व्यञ्जनाया दुर्वचमेवेति सर्वथा भिन्नैव स्वैरिणीयमिति सारम्।

उक्त दोनों (अभिधा तथा लक्षणा) के आश्रित होनेके कारण ही उस व्यञ्जनाको उन दोनोंके साथ एक रूप नहीं कह सकते हैं, अर्थात् व्यञ्जना केवल अभिधा या लक्षणा मात्र नहीं कही जासकती है, अपितु उन दोनोंसे भिन्न ही है।

क्योंकि कहीं अर्थात् लक्षणामूलक अविवक्षित वाच्य ध्वनिमें लक्षणाके भी आश्रय होनेसे वह व्यञ्जना वाचकता रूप ही नहीं हो सकती है। और कहीं अर्थात् अभिधामूलक विवक्षितान्यपरवाच्य ध्वनिमें अभिधाके भी आश्रय होनेसे लक्षणा रूप भी नहीं हो सकती है। और केवल उन दोनों अभिधा और लक्षणाके धर्म होनेसे ही व्यञ्जना तदेकरूप अर्थात् अभिधा या लक्षणा रूप नहीं होती ऐसी बात नहीं है (अर्थात् व्यञ्जनाके अभिधा या लक्षणा रूप न होने का केवल उभयाश्रित होना ही एक कारण नहीं है, अपितु आगे बतलाये हुए और दूसरे

कारण भी उसको अभिधा या लक्षणासे भिन्न करते हैं) अपितु अभिधा और लक्षणा आदि व्यापारसे रहित गीत आदि शब्दोंके धर्म होनेसे भी वह (व्यञ्जना) उन दोनोंसे भिन्न है। जैसे गीतकी ध्वनिमें भी रसादि विषयक व्यञ्जना रहती है, परन्तु उसमें अभिधा या लक्षणा किसी प्रकारकी प्रतीत नहीं होती है। इसके अतिरिक्त शब्दसे भिन्न चेष्टा आदि विषयमें भी व्यञ्जनाकी उपलब्धि होनेसे उसे अभिधा आदि रूप शब्दका धर्म कहना ठीक नहीं है।

ननु नेयं व्यञ्जनाऽतिरिक्ता, किन्त्वभिधालक्षणयोः प्रसिद्धशब्दधर्मयोरेव नूतनः कश्चन प्रकारः कल्प्यत इति पुनः प्रौढ्या व्याहरन्तं परिहसन् भाषते—

यदि वाचकत्वलक्षणाऽऽदीनां शब्दप्रकाराणां प्रसिद्धप्रकारविलक्षणत्वेऽपि व्यञ्जकत्वं प्रकारत्वेन परिकल्प्यते, तच्छब्दस्यैव प्रकारत्वेन कस्मान्न परिकल्प्यते।

शब्दस्य प्रकाराणां विशेषणानां, धर्माणामिति यावत्। प्रकारत्वेन विशेषत्वेन। तत् तदा। लक्षणायाः शब्दधर्मत्वकथनन्तूक्तप्रदीपादिस्वरसप्रतिकूलमेव।

इयत्स्वभिधाऽऽदितो व्यञ्जनाया भेदकेषु जाग्रत्स्वपि यद्यनुचिततरमभिधाऽऽदिशब्दधर्मविशेषत्वं कल्प्यत एव, तर्हि शब्दविशेषत्वमेव कुतो न कल्प्यते, अनौचित्यस्योभयत्र तुल्यत्वात्। तस्मान्न व्यञ्जनाया अभिधाऽऽदिरूपता, न वा तद्विशेषता चेत्याकूतम्।

व्यञ्जना कोई अतिरिक्त पदार्थ नहीं है, अपितु अभिधा लक्षणारूप शब्द धर्मोंका ही एक नूतन प्रकार विशेष है, इस आक्षेपको दूर करते हैं—यदि इति। यदि उक्त रीतिसे अभिधा लक्षणाके प्रसिद्ध भेदोंसे अतिरिक्त होने पर भी व्यञ्जनाको अभिधा और लक्षणा रूप शब्द धर्मोंका ही एक विशेष प्रकार मानना चाहते हैं तो उसको शब्दका ही एक अतिरिक्त धर्म विशेष क्यों नहीं मान लेते हैं, अर्थात् जब उक्त युक्तिसे अभिधा और लक्षणासे व्यञ्जनाका भेद स्पष्ट सिद्ध हो चुका है, तब उस व्यञ्जनाको शब्दका ही एक अलग व्यापार न मानकर अभिधा या लक्षणाके भेदोंमें ही उसको गिनने का व्यर्थ ही आपका प्रयास हो रहा है।

इत्थं व्यञ्जनामतिरिक्तत्वेन बलवद् व्यवस्थाप्य तत्सङ्कलनपुरस्सरमादावुपक्षिप्तं ध्वनिभेदद्वयमुपसंहरति—

तदेवं शाब्दे व्यवहारे त्रयः प्रकाराः—वाचकत्वं गुणवृत्तिर्व्यञ्जकत्वं च। तत्र व्यञ्जकत्वे यदा व्यङ्ग्यप्राधान्यम्, तदा ध्वनिः, तस्य चाविव-

क्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति द्वौ प्रभेदावनुक्रान्तौ प्रथमतरं, तौ सविस्तरं निर्णीतौ ।

एवमुक्तप्रकारैः । शाब्दे व्यवहारे शाब्दबोधजनके व्यापारे वृत्ताविति यावत् । अन्यत् स्फुटम् ।

इस प्रकार शाब्द बोधजनक व्यापार तीन प्रकारके होते हैं—अभिधा, लक्षणा और व्यञ्जना, उनमें जब व्यङ्ग्यार्थकी प्रधानता होती है, तब ध्वनि नामक काव्य कहलाता है और उस ध्वनि काव्यके 'अविवक्षित वाच्य' तथा 'विवक्षितान्यपर वाच्य' ये दो भेद किये गये हैं, जिनका कि पहिले ही सविस्तर वर्णन किया जा चुका है ।

यद्यपि व्यञ्जनाया लक्षणामूलत्वस्यापि व्यवस्थापितत्वात् ततोऽपि वैलक्षण्यं निर्णीतमेवेति नाधुना विवेचनीयं किञ्चित्, तथाऽप्यविवक्षितवाच्यध्वनिस्थले तयोरेकीभावमवधारयतामविवेकिनां मतेन शङ्कामुत्थापयति—

अन्यो ब्रूयात्—ननु विवक्षितान्यपरवाच्ये ध्वनौ गुणवृत्तिता नास्तीति यदुच्यते, तद् युक्तम्, यस्माद् वाच्यवाचकप्रतीतिपूर्विका यत्रार्थान्तरप्रतिपत्तिः तत्र कथं गुणवृत्तिव्यवहारः ।

गुणवृत्तिता ध्वनिशब्दस्य काव्यपरत्वे गुणवृत्तिमत्ता, व्यङ्ग्यपरत्वे तु तत्प्रयोज्यबोधविषयत्वरूपा बोध्या । युक्तत्वे हेतुर्यस्मादित्यादिनोपन्यस्तः ।

सर्वत्र लक्षणालक्ष्येषु वाच्यार्थस्य बाधितत्वाच्छाब्दबोधविषयत्वं न भवति, विवक्षितान्यपरवाच्यध्वनौ तु पूर्वं वाच्यस्य पश्चाद् व्यङ्ग्यस्य प्रतीतिरिति वाच्यबाधविरहान्न लक्षणया निर्वाह इति सारम् ।

जो अन्य कोई व्यक्ति कहते हैं कि विवक्षितान्यपर वाच्यध्वनिमें गुणवृत्तिरूप लक्षणा नहीं हो सकती है, सो ठीक है । क्योंकि लक्षणास्थलमें मुख्यार्थके बाध होने से वाच्यार्थकी प्रतीति नहीं होती है, परन्तु विवक्षितान्यपर वाच्य ध्वनिमें वाच्य-वाचकरूप शब्दार्थकी प्रतीति पूर्वक ही व्यङ्ग्यरूप अर्थान्तरकी प्रतीति होती है, इसलिये वहां लक्षणाका व्यवहार नहीं हो सकता है, क्योंकि उक्त ध्वनिमें वाच्यार्थके बाध नहीं होनेसे वाच्य और व्यङ्ग्य दोनोंकी अलग अलग और क्रमशः प्रतीति होती है ।

एवं विवक्षितान्यपरवाच्ये ध्वनौ व्यञ्जनामभ्युपगत्याविवक्षितवाच्ये गुणवृत्तेर्वृत्तान्तं प्रतिपादयति—

न हि गुणवृत्तौ यदा निमित्तेन केनचिद् विषयान्तरे शब्द आरोप्यते-

ऽत्यन्ततिरस्कृतस्वार्थः; यथा—'अग्निर्माणवकः' इत्यादौ, यदा वा स्वार्थमंशेनापरित्यजंस्तत्सम्बन्धद्वारेण विषयान्तरमाक्रामति, यथा—'गङ्गायां घोषः' इत्यादौ, तदा विवक्षितवाच्यत्वमुपपद्यते।

नहीत्युपपद्यत इत्यनेनान्वेति। गुणवृत्तौ लक्षणायां यदा जहत्स्वार्थत्वे गौणत्वे च। निमित्तेन सादृश्यातिशयादिना कारणेन। विषयान्तरे वाच्यातिरिक्ते लक्ष्यार्थे। आरोप्यते लक्ष्यबुबोधयिषयोच्चार्यते। अग्निमाणवकयोर्भेदेऽपि सामानाधिकरण्यनिर्देशादग्निशब्दः शक्यान्वयानुपपत्तेरत्यन्ततिरस्कृतवाच्यः सादृश्यसम्बन्धेन तेजस्विनं लक्षयति, तत्ताऽतिशयरूपं च प्रयोजनं लक्षणामूलव्यञ्जनागम्यम्। यदाऽजहत्स्वार्थत्वे शुद्धत्वे च। स्वार्थमंशेनैकदेशेनापरित्यजन् शब्दः, तत्सम्बन्धद्वारेण वाच्यसम्बन्धमुखेनार्थान्तरं वाच्यसम्बन्धिनं लक्ष्यमाक्रामत्यर्थान्तरसङ्क्रमितवाच्यो भवति। 'गङ्गायां घोषः' इत्यादौ गङ्गाशब्दो बाधितवाच्यो नीरं वाच्यं मुख्यत्वेन विजहत् तीरविशेषणत्वेनोपाददानश्च नीरसन्निहिततीरं लक्षयति। घोषे गङ्गागतशैत्याद्यतिशयश्च व्यङ्ग्यः। तदा विवक्षितवाच्यत्वं न ह्युपपद्यते, एकत्र वाच्यस्य सर्वथाऽविवक्षणात्, अपरत्र प्राधान्येनापरामर्शनात्।

वस्तुतस्त्वर्थान्तरसङ्क्रमितवाच्यत्वे 'गङ्गायां घोषः' इति नोदाहरणीयम्, तीरस्य नीरसम्बन्धेन बोधस्यासर्वसम्मतत्वात्। किन्तु 'कुन्ताः प्रविशन्ति' इत्याद्येवोदाहरणीयम्। तेन नैव पूर्वापरग्रन्थसङ्गतिभङ्ग इति विभावनीयम्।

इस प्रकार विवक्षितान्यपर वाच्यध्वनिमें व्यञ्जनाको स्थापित कर अविवक्षित वाच्यध्वनिमें लक्षणा मात्रका विषय बतलाते हैं—नहि इति। गौणी लक्षणामें जब किसी कारण विशेषसे दूसरे अर्थमें उसके अवाचक शब्दका अपने स्वार्थको अत्यन्त तिरस्कृत कर आरोप किया जाता है, जैसे 'अग्निर्माणवकः' इत्यादि स्थलमें अग्नि शब्दका अपने अर्थको छोड़कर तेजस्वितादिके सादृश्यसे किसी अत्यन्त प्रतिभाशाली बालकमें आरोप द्वारा प्रयोग किया जाता है, तब अत्यन्त तिरस्कृत वाच्यध्वनि या जहत्स्वार्था गौणी लक्षणा ही मानी जाती है, किन्तु विवक्षितान्यपर वाच्यध्वनि नहीं मानी जाती, इसी प्रकार शुद्धा लक्षणामें जब कुछ अंशमें अपने अर्थको छोड़ कर उसके सम्बन्ध द्वारा लाक्षणिक शब्दका अर्थान्तरमें प्रयोग किया जाता है, जैसे 'गङ्गायां घोषः' इत्यादिमें गङ्गा आदि शब्द नीर रूप वाच्यको मुख्य रूपसे छोड़ता हुआ नीरसन्निहित तीररूप अर्थान्तरको लक्षित करता है, तब अविवक्षित वाच्य अर्थात् लक्षणा मूलध्वनि या शुद्धा लक्षणा मानी जा सकती है, परन्तु विवक्षितान्य पर वाच्यध्वनि नहीं मानी जा सकती, क्योंकि प्रथम स्थलमें वाच्यार्थ

की बिलकुल ही विवक्षा नहीं है और द्वितीय स्थलमें लक्ष्यार्थमें विशेषण रूपसे भासित होनेपर भी मुख्यरूपसे वाच्यार्थकी प्रतीति नहीं होती है। इसलिये जहां विवक्षितान्यपर वाच्यध्वनि होती है, वहां गुणवृत्तिरूप लक्षणाके सम्भव नहीं होनेसे और जहाँ लक्षणा रहती है, वहाँ विवक्षितान्यपर वाच्य ध्वनिके सम्भव नहीं होनेसे उन दोनोंकी एक विषयता नहीं हो सकती है, यह कहना सर्वथा युक्ति संगत ही है।

उक्तमेव समर्थयति—

अत एव च विवक्षितान्यपरवाच्ये ध्वनौ वाच्यवाचकयोर्द्वयोरपि स्वरूपप्रतीतिरर्थावगमनं च दृश्यत इति व्यञ्जकत्वव्यवहारो युक्त्यनुरोधी।

अत एव—विवक्षितान्यपरवाच्यध्वनेर्गुणवृत्त्यनुपकृतत्वे सति व्यञ्जनागम्यत्वादेव। अविवक्षितवाच्यध्वनिभेदद्वयस्य गुणवृत्तिबोध्यत्वमेवेति विवक्षितान्यपरवाच्यध्वनेर्व्यञ्जनागम्यत्वाभ्युपगमेन समर्थितम्। स्वरूपप्रतीतिः पद-तद्वाच्यज्ञानम्। अर्थावगमो व्यङ्ग्यार्थप्रतीतिः।

इसीलिये विवक्षितान्यपर वाच्यध्वनिमें वाच्य और वाचक दोनोंके स्वरूपकी एवं व्यङ्ग्यार्थकी प्रतीति पायी जाती है, इसलिये व्यञ्जनाका व्यवहार युक्ति संगत ही है।

तत्र लोकप्रसिद्धां युक्तिं दर्शयति—

स्वरूपं प्रकाशयन्नेव परावभासको व्यञ्जक इत्युच्यते।

यथा—दीपादिः।

क्योंकि दीपक आदिके समान अपने स्वरूपको प्रकाशित करते हुए ही दूसरेके स्वरूपको प्रकाशित करनेवाला व्यञ्जक कहलाता है।

आंशिकं व्यञ्जनाऽभ्युपगमं स्फुटमाह—

तथाविधे विषये वाचकत्वस्यैव व्यञ्जकत्वमिति गुणवृत्तिव्यवहारे नियमेनैव न शक्यते वक्तुम्।

अपि तु तत्र व्यञ्जकताऽतिरिक्तैव कल्पनीया भवतीति भावः।

इस प्रकारके उदाहरणोंमें अभिधारूप वाचकता और व्यञ्जना दोनों ही स्पष्ट रूपसे अलग अलग प्रतीत होती हैं। इसलिये वाचकत्व ही व्यञ्जनारूप है, इस प्रकारका गौण व्यवहार निश्चितरूपसे नहीं किया जा सकता है, अपितु उससे अतिरिक्त ही व्यञ्जना माननी चाहिये।

एवमभिधामूलध्वनौ व्यञ्जनां स्वीकृत्य लक्षणामूलाविवक्षितवाच्यध्वनेरुक्तभेद-

द्वये तामस्वीकुर्वन्नाक्षिपति—

अविवक्षितवाच्यस्तु ध्वनिर्गुणवृत्तेः कथं भिद्यते, तस्य प्रभेदद्वये गुणवृत्तिप्रभेदद्वयरूपता लक्ष्यत एव ।

तुना विवक्षितान्यपरवाच्यादस्य व्यतिरेकः सूच्यते । गुणवृत्तिपदं तद्बोध्यपरम् । यद्वा कथं भिद्यत इत्येव कथमसम्बन्ध इत्येतदर्थकम् । भिद्यत इति कर्मकर्तरि प्रयोगः । विवक्षितान्यपरवाच्यध्वनौ वाच्यव्यङ्ग्ययोर्व्यक्तं पृथगवभासो भवतीति तत्र गुणवृत्तिर्लेशतोऽपि प्रवेशमलभमाना व्यञ्जनां मा निरौत्सीत्, किन्त्वविवक्षितवाच्यध्वनेरत्यन्ततिरस्कृतवाच्यार्थान्तरसङ्क्रमितवाच्यात्मके प्रकारयुगले, गुणवृत्तेरुदाहृतभेदद्वयाच्च किमपि वैलक्षण्यम्, वाच्यव्यङ्ग्ययोः पृथगनवभासादिति कुतस्तत्र गुणवृत्तेरतिरिक्ता व्यञ्जना कल्प्येतेत्याक्षेप्तुरभिसन्धिः ।

इस प्रकार अभिधामूल ध्वनिमें व्यञ्जना मानकर लक्षणामूल ध्वनिमें लक्षणासे अतिरिक्त व्यञ्जनाको मनानेके लिये पूर्व पक्ष उठाते हैं—अविवक्षितवाच्य इति। विवक्षितान्य परवाच्य ध्वनिमें अतिरिक्त व्यञ्जना होने पर भी लक्षणामूल अविवक्षितवाच्यध्वनिमें लक्षणासे अतिरिक्त व्यञ्जना कैसे हो सकती है? क्योंकि उस (अविवक्षितवाच्यध्वनि) के 'अत्यन्ततिरस्कृत वाच्य' एवं 'अर्थान्तरसंक्रमितवाच्य' इन दोनोंमें क्रमशः उपचारात्मक गौणी लक्षणा और शुद्धा लक्षणाका स्वरूप स्पष्ट ही प्रतीत होता है, अर्थात् अत्यन्त तिरस्कृत वाच्यध्वनि, लक्षणलक्षणा या जहत्स्वार्था या उपचारात्मक गौणी लक्षणा स्वरूप है और अर्थान्तर संक्रमितवाच्य ध्वनि, उपादान लक्षणा या अजहत्स्वार्था या शुद्धा लक्षणास्वरूप ही प्रतीत होती है, इसलिये ऐसे स्थलोंमें लक्षणासे व्यञ्जना अलग नहीं है, यह पूर्वपक्षका तात्पर्य है।

खण्डयति—

यतोऽयमपि न दोषः ।

अनन्तरवक्ष्यमाणहेतोरिति शेषः । यत इति नातिप्रयोजनकं प्रतिभाति ।

(उत्तर) वक्ष्यमाण युक्तियोंसे प्रकृतमें यह दोष भी नहीं हो सकता है ।

तमेव हेतुमभिदधाति—

यस्मादविवक्षितवाच्यो ध्वनिर्गुणवृत्तिमार्गाश्रयोऽपि भवति, न तु गुणवृत्तिरूप एव ।

ध्वनिपदमिह व्यापारपरम् । गुणवृत्तेर्मार्ग उक्तप्रकारद्वयमाश्रयो मूलं यस्येति बहुव्रीहिरप्यत एव सङ्गच्छते ।

तस्माद् गुणवृत्तिव्यञ्जकत्वयोस्तत्र नैक्यम्, यस्मादविवक्षितवाच्यध्वनौ यो व्यञ्जनाव्यापारः, स लक्षणामूलोऽपि लक्षणारूपो न वक्तुं शक्यत इति सारम्।

क्योंकि अविवक्षितवाच्यध्वनि गुणवृत्ति रूप लक्षणाके मार्गका भी आश्रयण करती है, इसलिये वह लक्षणा स्वरूप ही नहीं है, अर्थात् अविवक्षितवाच्यध्वनिमें जो व्यञ्जना व्यापार प्रतीत होता है, वह लक्षणामूलक होने पर भी लक्षणास्वरूप ही नहीं है, क्योंकि कार्य-कारण दोनों एक नहीं होते हैं।

तत्र हेतुमाचष्टे—

गुणवृत्तिर्हि व्यञ्जकत्वशून्याऽपि दृश्यते।

'कलिङ्गः साहसिकः' इत्यादौ रूढिहेतुकलक्षणाया व्यञ्जनासाहचर्यस्याप्यनियतत्वात् कथमैक्यसम्भावनेति भावः।

क्योंकि 'कलिङ्गः साहसिकः' इत्यादि स्थलोंमें लेशमात्र भी व्यञ्जनाकी प्रतीति नहीं होने पर भी लक्षणा मानी जाती है, इसलिये दोनों एक नहीं हो सकती हैं।

कुतो न तत्र व्यञ्जनेति शङ्कायामाह—

व्यञ्जकत्वं च यथोक्तचारुत्वहेतुं व्यङ्ग्यं विना न व्यवतिष्ठते।

यतो व्यङ्ग्यबोधनार्थमेव व्यञ्जनाऽवस्थितिः, ततोऽव्यङ्ग्यलक्षणायां तस्याः कथं व्यवस्थेति सारम्।

वहां व्यञ्जना क्यों नहीं मानी जाती है? इस प्रश्नका समाधान करते हैं— व्यञ्जकत्वमिति। क्योंकि सहृदयोंके अलौकिक आह्लादजनक व्यङ्ग्यार्थके विना व्यञ्जना नहीं होती है, अर्थात् व्यङ्ग्यार्थके बोधनार्थ ही व्यञ्जना मानी जाती है, इसलिये व्यङ्ग्यार्थ रहित उक्त लक्षणास्थलमें व्यञ्जना नहीं मानी जा सकती है, अतः लक्षणा और अविवक्षितवाच्य ध्वनि दोनों एक नहीं हो सकती हैं।

पुनरपि गुणवृत्तेर्व्यञ्जनायाश्चैक्यं निराकर्तुं वैलक्षण्यं प्रतिपादयन् प्रथममभेदोपचारशब्दव्यवहार्यगौणलक्षणायाः सप्रयोजनाया उदाहरणे दर्शयति—

गुणवृत्तिस्तु वाच्यधर्माश्रयेणैव व्यङ्ग्यमात्राश्रयेण चाभेदोपचाररूपा संभवति। यथा—तीक्ष्णत्वाद् 'अग्निर्माणवकः' आह्लादकत्वात् 'चन्द्र एवास्या मुखम्' इत्यादौ।

अभेदोपचारः सादृश्यातिशयव्यञ्जकतादात्म्यारोप एव रूपं यस्याः सा गौणलक्षणा, वाच्यविषयकबोधजनको यो धर्मः शब्दव्यापारोऽभिधालक्षणः, तदाश्रयेण रूढिहेतुका, व्यङ्ग्यमात्रस्य केवलप्रयोजनस्याश्रयेण प्रयोजनवती चेति द्विविधा सम्भवतीत्यर्थः। तत्र प्रयोजनवद्गौणलक्षणोदाहरणयोः पूर्वत्र सादृश्यं तेजस्वित्वरूपेण

तीक्ष्णत्वेन, परत्र चानन्दजनकत्वेन। तदतिशयश्चोभयत्र व्यञ्जनामात्रगम्यः प्रयोजनम्। इयमेव सारोपा लक्षणा रूपकालङ्कारस्य बीजम्।

लक्षणा और अविवक्षितवाच्यध्वनिमें परस्पर भेद प्रतिपादनार्थ और भी युक्तियोंको बतलानेकी भावनासे पहले प्रयोजन मूलक अभेदोपचार रूप गौणी लक्षणाका उदाहरण बतलाते हैं—गुणवृत्तिस्तु। अभेदोपचार रूप गौणी लक्षणा तो वाच्यविषयक बोधजनक अभिधात्मक शब्द व्यापारके आश्रयसे रूढ़िमूलक और व्यङ्ग्यरूप केवल प्रयोजन विषयक बोधजनक व्यञ्जनाके आश्रयणसे प्रयोजनवतीरूप दो प्रकार की होती है, उनमें पहले प्रयोजनमूलक गौणीका उदाहरण बतलाते हैं—जैसे तेजस्वितादि गुण युक्त होनेसे यह बालक अग्नि है, एवं आह्लादजनक होनेसे इस (वनिता) का मुख चन्द्रमा है, इत्यादि स्थलोंमें क्रमशः अतिशय तेजस्विता एवं अतिशय आनन्दजनकताकी प्रतीतिरूप प्रयोजन व्यञ्जनागम्य है, इसलिये यह प्रयोजनवती गौणी लक्षणा है। परन्तु वही (लक्षणा) व्यञ्जना नहीं है, क्योंकि उक्त लक्षणाके प्रयोजनमूलक होनेसे उक्त प्रयोजन-प्रतिपादक व्यञ्जना अतिरिक्त ही है।

तामेव रूढिमूलिकामुदाहरति—

**यथा च—'प्रिये जने नास्ति पुनरुक्तम्' इत्यादौ।**

द्वितीयोद्द्योतोदाहृतप्राकृतपद्यच्छायाऽन्तिमांशोऽयम्। आदिशब्देन 'वदति विसिनीपत्रशयनम्' 'लावण्यम्' इत्यादीनां सङ्ग्रहः। एषु प्रयोजनाभावाद् रूढिरेव हेतुतामासादयतीति प्रागुक्तमेव।

वस्तुतस्त्वत्र सादृश्यप्रत्ययाभावान्न गौणत्वमिति रूढिहेतुकगौणलक्षणायाः 'तैलानि हेमन्ते सुखानि' इत्याद्युदाहरणमेवान्यत्र दर्शितमवसेयम्।

अब रूढ़िमूलक गौणी लक्षणाका उदाहरण बतलाते हैं—यथाचेति। जैसे 'प्रियजनमें पुनरुक्ति नहीं होती' अर्थात् चर्वित चर्वणके समान बार बार उपभोग करने पर भी प्रियजन अनुपादेय (फीका) नहीं प्रतीत होता।

यहां पर प्रयोजनकी प्रतीति नहीं होनेसे रूढि मूलक ही पुनरुक्त पदसे लक्षणा द्वारा अनुपादेयत्व अर्थ लक्षित होता है, और पुनरुक्तिके अनुपादेयत्व-धर्मका बादमें 'न' शब्दसे निषेध किया गया है, इसलिये गौणी लक्षणा भी स्पष्ट ही प्रतीत होती है, परन्तु व्यङ्ग्यार्थकी प्रतीति नहीं होनेसे व्यञ्जना नहीं है, अतः दोनों (लक्षणा और व्यञ्जना) भिन्न हैं। इसी प्रकार 'वदति विसिनीपत्रशयनम्'-इत्यादिमें भी समझना चाहिये।

अथात्र लक्षणाशब्दव्यवहार्य्यां शुद्धलक्षणां रूढिमूलामुदाहर्तुमाख्याति—

**याऽपि लक्षणारूपा गुणवृत्तिः, साऽप्युपलक्षणीयार्थसम्बन्धमात्राश्रयेण**

चारुरूपव्यङ्ग्यप्रतीतिं विनाऽपि सम्भवत्येव।

न तु न सम्भवतीति शेषः। उपलक्षणीयो लक्ष्यरूपोऽर्थः। चारुरूपस्य चमत्कारभूमेर्व्यङ्ग्यस्य प्रतीतिं विनाऽपि तद्रूपप्रयोजनाभावेऽपि, केवलरूढ्याऽपीति यावत्। अयमपिशब्दः क्वचित् प्रयोजनवतीमपि तां समुच्चिनोति।

अब लक्षणा शब्दसे व्यवहृत होनेवाली रूढि मूलक शुद्धा लक्षणाके उदाहरण प्रदर्शन द्वारा अविवक्षित वाच्य ध्वनिसे उसका भेद बतलाते हैं—याऽपि इति। और जो भी शुद्ध लक्षणा रूपा रूढि मूलक गुणवृत्ति है, वह भी लक्ष्यार्थके साथ सम्बन्ध मात्रके आश्रयणसे रमणीय रूप चमत्कार जनक व्यङ्ग्यार्थकी प्रतीतिके विना भी हो सकती है, इसलिये उक्त लक्षणा भी व्यञ्जना नहीं हो सकती, क्योंकि उक्त लक्षणास्थलमें लेशमात्र भी व्यञ्जनाका विषय नहीं प्रतीत होनेसे व्यञ्जना नहीं कही जासकती है।

उदाहरति—

यथा 'मञ्चाः क्रोशन्ति' इत्यादौ विषये।

अत्र क्रोशनकर्तृत्वस्याचेतनेषु मञ्चेषु बाधान्मञ्चपदस्य स्वार्थसंसक्तेषु पुरुषेषु लक्षणा। सा च प्रयोजनविरहाद् रूढिमूलैव। न हि तत्र किञ्चिदपि चमत्कारि प्रतीयते। अतो न तत्र व्यञ्जनाप्रवेशः। आदिशब्दः 'ग्रामः पलायितः', 'कलिङ्गः साहसिकः' इत्यादीन् सङ्गृह्णाति।

जैसे 'मञ्चाः क्रोशन्ति' 'कलिङ्गः साहसिकः' 'ग्रामःपलायितः' इत्यादि उदाहरणोंमें क्रमशः मचान, कलिङ्ग ( उड़ीसा ) देश एवं ग्राममें क्रोशन ( चिल्लाना ), साहस और पलायन क्रियाओंके बाध होनेसे रूढि ( प्रसिद्धि ) मूलक लक्षणा द्वारा पुरुष विशेष लक्षित होते हैं और लेशमात्र भी प्रयोजनकी प्रतीति नहीं होनेसे व्यञ्जना का बिलकुल ही सम्भव नहीं है, इसलिये लक्षणासे अतिरिक्त ही व्यञ्जना माननी होगी।

ननु यत्र तु तस्यां प्रयोजननिबन्धनायां चमत्कारिव्यङ्ग्यप्रतीतिरस्त्येव, तत्र का गतिरित्याशङ्कायामाह—

यत्र तु सा चारुरूपव्यङ्ग्यप्रतीतिहेतुः, तत्रापि व्यञ्जकत्वानुप्रवेशेनैव, वाचकत्ववत्। असंभविना चार्थेन यत्र व्यवहारो यथा—'सुवर्णपुष्पं पृथिवीम्' इत्यादौ, तत्र चारुरूपव्यङ्ग्यप्रतीतिरेव प्रयोजिकेति तथाविधेऽपि विषये गुणवृत्तौ सत्यामपि ध्वनिव्यवहार एव युक्त्यनुरोधी।

यत्र सप्रयोजनकशुद्धलक्षणास्थले। सा लक्षणा। हेतुः प्रयोजिका। व्यञ्जकत्वा-

नुप्रवेशेनैव व्यञ्जनाबलेनैव, न तु स्वतः। वाचकत्ववदभिधावत्, तथा हि—यथा—'गतोऽस्तमर्कः' इत्यादावभिधास्थलेऽभिसरणकालादिव्यङ्ग्यार्थप्रतीतिर्व्यञ्जनाधीनैव, न त्वभिधाजन्येति सर्वसम्मतम्, तद्वल्लक्षणास्थलेऽपि व्यञ्जनाजन्यैवेति बोध्यम्। असम्भविना बाधितेन। व्यवहारश्शब्दप्रयोगरूपः। पृथिव्यवधिकसुवर्णपुष्पकर्मकचयनस्याप्रसिद्धत्वाल्लक्षणायामनायासेन प्रचुरधनोपार्जनरूपचमत्कारिव्यङ्ग्यप्रतीतिर्व्यञ्जनयैवेति सैव तच्चमत्कारित्वस्य बीजम्। गुणवृत्तौ लक्षणायां मध्ये सत्यामपि। ध्वनिव्यवहारो व्यञ्जनाव्यवहार एव, न तु लक्षणाव्यवहारः। युक्त्यनुरोधी युक्तः।

इदमुक्तं भवति—न हि लक्षणाव्यञ्जनयोरैक्यं सम्भवति, यतो रूढौ व्यञ्जनामन्तरेणापि सा दृश्यते। प्रयोजने सह दृश्यमानाऽपि तत्र तत्र लक्षणाहेतुभूतचमत्कारकव्यङ्ग्यप्रतीतेर्व्यञ्जनैव जनिका, न तु सा, अभिधेव वाच्यस्य व्यञ्जकत्वे। तस्मान्न तयोरैक्यम्।

और जहाँ भी कहीं 'गङ्गायां घोषः' इत्यादि प्रयोजन मूलक लक्षणास्थलोंमें वह लक्षणा शीतत्व-पावनत्वातिशयादि रूप रमणीय व्यङ्ग्यार्थ प्रतीतिका हेतु रूप अनुभूत होती है, वहां भी उस (लक्षणा) को अभिधात्मक वाचकताके समान व्यञ्जनाके अनुप्रवेशसे ही चारुत्व रूप प्रतीयमान व्यङ्ग्यार्थका हेतु समझना चाहिये, अर्थात् व्यञ्जनाके बलसे ही उक्त रमणीय व्यङ्ग्यार्थकी प्रतीति होती है, नकि लक्षणाके बलसे, इसलिये सर्वथा ही लक्षणासे व्यञ्जना भिन्न है। भावार्थ यह है कि जैसे 'गतोऽस्तमर्कः' इत्यादि अभिधा मूल व्यञ्जनास्थलमें अभिसरण योग्य कालादि रूप व्यङ्ग्यार्थकी प्रतीति व्यञ्जनाके बलसे ही होती है, वैसे ही लक्षणा मूल व्यञ्जना स्थलमें भी व्यञ्जनाके बदौलत ही उक्त रमणीय व्यङ्ग्यार्थकी प्रतीति समझनी चाहिये। एवं जहां असंभवी अर्थात् बाधित अर्थसे आरोपमूलक लक्षणा द्वारा व्यवहार होता है, जैसे 'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः'—इत्यादि स्थलमें पृथिवीरूपलतासे सुवर्ण पुष्पके चयनका असंभव होनेसे सुवर्ण पुष्प वाली पृथिवीके चयनरूप मुख्यार्थका बाध होकर उपचारात्मक लक्षणा द्वारा विपुल धन लक्षित होता है और उसके अनायास उपार्जनसे सुलभ समृद्धिकी प्राप्ति द्वारा शूर, कृतविद्य और सेवकोंका प्राशस्त्य, पिहित कामिनी कुचकलशवत् सौन्दर्यातिशय रूपसे ध्वनित होता है, इस प्रकार वहां चारुत्वरूप व्यङ्ग्यार्थकी प्रतीति ही उस उपचारात्मक आरोप मूलक लक्षणाका हेतु है, इसलिये इस प्रकारके भी रमणीय व्यङ्ग्यार्थ प्रतीति स्थलमें लक्षणाके होने पर भी अनायास पुष्कल धनोपार्जनरूप चमत्कार जनक व्यङ्ग्य प्रतीतिके कारण ही लक्षणाके व्यवहार होनेसे ध्वनिका व्यवहार होना ही युक्ति संगत प्रतीत होता है।

हेतुं प्रदर्शयन्नुपसंहरति—

**तस्मादविवक्षितवाच्ये ध्वनौ द्वयोरपि प्रभेदयोर्व्यञ्जकत्वविशेषाविशिष्टगुणवृत्तिः, न तु तदेकरूपा, सहृदयहृदयाह्लादिप्रतीयमानाप्रतीतिहेतुत्वाद्, विषयान्तरे तद्रूपशून्यायाश्च दर्शनात्।**

द्वयोरर्थान्तरसङ्क्रमितवाच्यात्यन्ततिरस्कृतवाच्ययोः। व्यञ्जकत्वमेव विशेषस्तेनाविशिष्टा—अविद्यमानं विशिष्टं विशेषः प्रभेदो यस्यास्तादृशी, व्यञ्जनाऽऽत्मकप्रकाररहिता। वस्तुतस्तु व्यञ्जकत्वेन विशेषणेनाविशिष्टा समुपस्कृतेत्यर्थकः, व्यञ्जकत्वविशेषणाविष्टा' इति पाठ एव समीचीनः, सुगमार्थत्वात्। तदेकरूपा व्यञ्जनैकात्मिका। सहृदयहृदयाह्लादी यः प्रतीयमानो व्यङ्ग्योऽर्थः, तस्याप्रतीतिहेतुत्वादप्रत्यायकत्वात्। विषयान्तरे रूढिहेतुकजहत्स्वार्थलक्षणास्थले 'राजा कण्टकं शोधयति' इत्यादौ। 'अग्निर्वटुरित्यादौ' इतीह लोचनन्तु तदीयतेजस्विताऽतिशयव्यङ्ग्यप्रयोजनोपेक्षापरमेव। तद्रूपशून्याया व्यञ्जकत्वविधुरायाः। 'सहृदयहृदयाह्लादिनी, प्रतीयमाना। प्रतीतिहेतुत्वात्' इति विच्छिन्नपाठस्तु गुणवृत्तेस्तद्विशेषणद्वययोगासम्भवात्, 'प्रतीतिहेतुत्वात्' इतीयदर्थस्य व्यञ्जनैकरूपत्वाभावहेतुत्वासम्भवाच्चान्यथितः।

यतो गुणवृत्तिश्चमत्कारिप्रतीतिं न जनयति, यतश्च रूढौ व्यङ्ग्यार्थविरहाद् व्यञ्जनाऽभावाद् व्यञ्जनासाहचर्यमपि गुणवृत्तेर्व्यभिचरितमेव, तस्माद्‌ कुतस्तस्या व्यञ्जनातादात्म्यमिति सारम्।

तथा चानुमितिः—'अविवक्षितवाच्यध्वनौ गुणवृत्तिर्व्यञ्जनातो भिन्ना, चमत्कारिव्यङ्ग्यप्रतीतिजनकत्वाभावाद्, विवक्षितान्यपरवाच्यध्वनावभिधावत्' इति।

युक्तिके साथ प्रकृत विषयका उपसंहार करते हैं—तस्मादिति। इसलिये लक्षणामूलक अविवक्षित वाच्य ध्वनिके अर्थान्तर संक्रमित वाच्य एवं अत्यन्त तिरस्कृत वाच्य रूप दोनों भेदोंमें व्यञ्जना विशेषसे उपस्कृत होकर ही लक्षणावृत्ति सहृदय व्यक्तियोंके आह्लादका जनक होती है, न कि व्यञ्जना रूप ही होकर, अर्थात् लक्षणा और व्यञ्जना दोनों एक ही वृत्ति नहीं हैं, क्योंकि लक्षणासे सहृदय हृदयके आह्लाद जनक व्यङ्ग्यार्थकी प्रतीति नहीं होती है और 'राजा कण्टकं शोधयति' इत्यादि रूढि मूलक जहत्स्वार्था लक्षणास्थलमें व्यङ्ग्यार्थके न होनेके कारण व्यञ्जना से रहित ही लक्षणा प्रतीत होती है।

पौनरुक्त्यं परिहरन्नुपसंहरति—

**तदेतत् सर्वं प्राक् सूचितमपि स्फुटतरप्रतीतये पुनरुक्तम्।**

प्राक् प्रथमोद्द्योते सूचितम्, इह पुनः स्फुटतरप्रतीत्यर्थमुक्तमिति स्वरूप-निमित्तभेदान्न पुनरुक्ततेति ज्ञेयम् ।

ये सारी बातें यद्यपि पहले (प्रथम उद्द्योतमें) सामान्य रूपसे सूचित की जा चुकी हैं, तथापि अधिक विशेष स्पष्ट रूपसे प्रतीतिके लिये फिर कही गयी हैं। इसलिये उक्त स्वरूप भेद और निमित्त भेदसे प्रतिपादनके कारण पुनरुक्ति नहीं समझनी चाहिये ।

इत्थं व्यक्तेरविवक्षितवाच्यध्वनावपि गुणवृत्तितो वैलक्षण्यं व्यवस्थाप्य भूयो हेत्वन्तरोपन्यासेनाभिधातोऽपि तद् व्यवस्थापयन् व्यक्तेरौपाधिकत्वं प्रतिपादयति—

**अपि च व्यञ्जकत्वलक्षणो यः शब्दार्थयोर्धर्मः, स प्रसिद्धसम्बन्धानुरोधीति न कस्यचिद् विमतिविषयतामर्हति ।**

अपि तु सर्वसम्मत एवेदानीमिति सारम् ।

इस प्रकार अविवक्षित वाच्य ध्वनिमें व्यञ्जनाको लक्षणासे पृथक् सिद्ध करनेके बाद फिर अन्य युक्तियों द्वारा अभिधासे उसका भेद प्रतिपादनार्थ व्यञ्जनाको औपाधिक बतलाते हैं—अपि चेति। शब्द और अर्थका व्यञ्जनारूप जो धर्म है, वह प्रसिद्ध अभिधात्मक सम्बन्धका अनुसरण करता है, इसमें किसीका भी मतभेद नहीं है, अपितु सर्व सम्मत ही अब कहना चाहिये ।

प्रसिद्धसम्बन्धशब्दं विवृण्वन् व्यञ्जनाया औपाधिकतां दर्शयति—

**शब्दार्थयोर्हि प्रसिद्धो यः सम्बन्धो वाच्यवाचकभावाख्यः तमनुरुन्धान एव व्यञ्जकत्वलक्षणो व्यापारः सामग्र्यन्तरसम्बन्धादौपाधिकः प्रवर्तते ।**

अनुरुन्धान उपजीव्यत्वेनाश्रयन् । सामग्र्यन्तरसम्बन्धात् प्रकरणादिवैशिष्ट्यात् । औपाधिक उपाधिकृतोऽनियत इति यावत् ।

क्योंकि शब्द और अर्थका जो प्रसिद्ध वाच्य-वाचक भाव सम्बन्ध है, उसका अनुसरण करते हुए ही व्यञ्जनारूप व्यापार, प्रकरणादि वैशिष्ट्यरूप विभिन्न सामग्रीके सम्बन्धसे व्यङ्ग्यार्थ बोधनार्थ औपाधिक (अनियत) रूपसे प्रवृत्त होता है, अर्थात् जो अपने निकटवर्ती सम्बद्ध पदार्थमें अपने धर्मका स्थापन करता है, उसे उपाधि कहते हैं और उसके सहकारसे प्रतीत होनेवाले धर्मको औपाधिक कहते हैं, जैसे जपापुष्पके पास स्फटिकको रख देनेसे स्फटिकमें जो लालिमा भासित होने लगती है, सो जपाकुसुमरूप उपाधिके सम्बन्धके कारण होनेसे औपाधिक कहलाती है, वैसे ही प्रकरणादि वैशिष्ट्यरूप विभिन्न सामग्रीके सहकारसे वाच्य वाचक शब्दार्थ व्यङ्ग्यार्थको व्यक्त करता है, इसलिये प्रकरणादि वैशिष्ट्यात्मक

सामग्री रूप उपाधिके सहयोगसे शब्दमें भासित होनेवाला व्यञ्जनात्मक व्यापार औपाधिक कहलाता है।

अभिधायास्तु नियतत्वमिति ततो भेदमाह—

**अत एव वाचकत्वात् तस्य विशेषः।**

अत एवौपाधिकत्वादेव। वाचकत्वादित्यवधौ पञ्चमी। तस्य व्यञ्जकत्वस्य विशेषो भेदः।

परन्तु अभिधात्मक व्यापार तो शब्दका एक नियत स्वाभाविक धर्म है, इसीलिये (वाचकताको स्वाभाविक और व्यञ्जनाको औपाधिक होनेके कारण ही) अभिधात्मक वाचकतासे व्यञ्जनाका भेद है।

तदेव समर्थयति—

**वाचकत्वं हि शब्दविशेषस्य नियत आत्मा।**

शब्दविशेषस्य वाचकशब्दस्य। नियत आत्मा—आत्मवन्नियतो नैसर्गिक इति यावत्।

क्योंकि वाचकशब्दका अभिधारूप वाचकता एक नियत स्वाभाविक धर्म है।

नियतत्वे हेतुमाख्याति—

**सम्बन्धव्युत्पत्तिकालादारभ्य तदविनाभावेन तस्य प्रसिद्धत्वात्।**

सम्बन्धस्य शब्दार्थयोर्वाच्यवाचकभावरूपस्य यो व्युत्पत्तिकाल आद्यविशेषज्ञानसमयः, तस्मादारभ्य ततः प्रभृति, तदविनाभावेन वाचकत्वनान्तरीयकतया तस्य शब्दविशेषस्य। 'सम्बन्धी' इति पृथक् पाठो नोचितः, अर्थानन्वयात्।

क्योंकि संकेत ग्रह कालसे लेकर हमेशा शब्दके साथ रहनेवाला अभिधात्मक व्यापार सर्वानुभव सिद्ध है।

वाचकत्वं व्यतिरेचयति—

**स त्वनियतः, औपाधिकत्वात्।**

स व्यञ्जकत्वव्यापारः।

परन्तु व्यञ्जनात्मक व्यापार तो औपाधिक होनेसे शब्दका नियत धर्म नहीं है।

औपाधिकत्वमुपपादयति—

**प्रकरणाद्यवच्छेदेन तस्य प्रतीतेः, इतरथा त्वप्रतीतेः।**

तस्य व्यञ्जकत्वस्य। इतरथा प्रकरणादिवैशिष्ट्यविरहेण। कादाचित्कतैवौपाधिकत्वमित्याशयः।

क्योंकि प्रकरणादि वैशिष्ट्यकी मर्यादासे ही व्यञ्जनाका भान होता है, अन्यथा नहीं, इसलिये व्यञ्जना शब्दका नियत या नैसर्गिक धर्म नहीं है, अपितु कादाचित्क होनेसे औपाधिक ही है।

व्यञ्जकत्वस्यानियतत्वेन तुच्छत्वादविवेचनीयतामाशङ्क्य समाधत्ते—

**ननु यद्यनियतः, तत् किं तस्य स्वरूपपरीक्षया? नैष दोषः—यतः शब्दात्मनि तस्यानियतत्वम्, न तु स्वे विषये व्यङ्ग्यलक्षणे।**

शब्दात्मनि शब्दस्वरूपे।

शब्द एवानियतत्वं व्यञ्जनायाः, स्वप्रतिपाद्यव्यङ्ग्यविषयं प्रति तु नियतत्वमेव, तामन्तरेण व्यङ्ग्यस्य कदाचिदप्यबोधात्।

अभिधा वाचकशब्देषु नियता, व्यञ्जना तु प्रकरणादिवैशिष्ट्येन शब्देषु, ततोऽन्यत्र च, लक्ष्यमाणा तदभावे चालक्ष्यमाणेत्यनियता, तस्मात्तयोर्भेद उचित एवेति ग्रन्थकाभिप्रायः।

यदि वह (व्यञ्जना) शब्दका स्वाभाविक धर्म नहीं है, अपितु काल्पनिक ही है तो उसके स्वरूपकी परीक्षा करनेकी ही क्या आवश्यकता है? यह नहीं कह सकते हैं, क्योंकि शब्दमें उस व्यञ्जनाका अनैयत्य (अनिश्चितता) होनेपर भी व्यङ्ग्यार्थरूप अपने विषयमें उसका अनैयत्य नहीं है, अर्थात् व्यङ्ग्यार्थको नियत रूपसे ही वह प्रतीत कराती है, क्योंकि व्यञ्जनाके विना व्यङ्ग्यार्थकी प्रतीति नहीं होती है, इसलिये गगन कुसुम या वन्ध्या पुत्रके समान व्यञ्जना पदार्थ मिथ्याभूत वस्तु नहीं है।

पुनरन्यथाऽभिधाव्यञ्जनयोर्भेदमुपपादयति—

**लिङ्गत्वन्यायश्चास्य व्यञ्जकभावस्य लक्ष्यते। तथा हि लिङ्गत्वमाश्रयेषु (अ) नियतावभासम्, इच्छाऽधीनत्वात्, स्वविषयाव्यभिचारि च, तथैवेदम्, यथा दर्शितं व्यञ्जकत्वम्। शब्दात्मनि (अ) नियतत्वादेव च तस्य वाचकत्वप्रकारता न शक्या कल्पयितुम्।**

लिङ्गत्वन्यायोऽनुमितिहेतुत्वतुल्यता। लिङ्गत्वं हेतुता। आश्रयेषु धूमादिषु। इच्छाऽधीनत्वादनुमित्सा—व्याप्तिस्मृत्यधीनसाध्यत्वात्। अनियतावभासमनियतज्ञानं नियमतोऽज्ञायमानमिति यावत्। स्वविषये केवलान्वयित्वादौ। अव्यभिचारि नियतम्। शब्दात्मनि वाचकशब्दे। अनियत्वान्नियमेनावर्त्तनात्। तस्य व्यञ्जकत्वस्य। वाचकत्वप्रकारताऽभिधाविशेषत्वम्।

सन्दर्भसङ्गतये प्रकोष्ठघटकाकारद्वयघटितः पाठः कल्पितः।

यथा केवलान्वयित्वादिधर्मत्रये नियताऽपि धूमादिनिष्ठा साधनताऽनुमित्साऽऽदिसत्त्वे प्रतीयमाना तदभावे त्वप्रतीयमानाऽनियतप्रतीतिः, तथैव व्यञ्जकताऽपि व्यङ्ग्ये नियताऽपि प्रकरणादिवैशिष्ट्यसद्भावे प्रतीयमाना तद्विरहे त्वप्रतीयमानेत्यनियतप्रतीतिरेव व्यञ्जकशब्देषु, अभिधा पुनर्वाचकशब्देषु नियतैव। तस्मादभिधाविशेषो नैव व्यञ्जनेति सारम्।

औपाधिकरूपसे व्यञ्जनाका अभिधासे पार्थक्य सिद्धकर अब लिङ्गत्व न्यायसेभी अभिधासे व्यञ्जनाका भेद सिद्ध करते हैं—लिङ्गत्वेति। इस व्यञ्जनामें लिङ्गत्व न्याय लक्षित होता है, जैसे–'पर्वतो वह्निमान् धूमात्' इत्यादि अनुमान स्थलमें धूमवृत्ति हेतुता अपने आश्रयभूत धूमादिमें अनुमित्सारूप इच्छाके अधीन होनेके कारण नियतरूपसे प्रतीत नहीं होती है और साध्यभूत वह्निरूप अपने विषयमें सदा नियत ही रहती है, वैसे ही यह व्यञ्जना भी अपने आश्रयभूत शब्दमें इच्छाधीन होनेसे अनियत और व्यङ्ग्यार्थरूप अपने विषयके बोधनमें नियत ही रहती है, जैसे कि ऊपर दिखाया जा चुका है। लिङ्गत्व न्यायका सारांश यह है कि न्यायशास्त्रमें अनुमानकी प्रक्रियाके अनुसार 'पक्षमें साध्यकी अनुमितिजनकको लिङ्ग कहा जाता है जैसे 'पर्वतो वह्निमान् धूमात्' यहाँ पर धूम लिङ्ग कहलाता है, क्योंकि वह लीन अर्थात् प्रत्यक्ष न दिखाई देनेवाले वह्निरूप साध्यका बोधक है, परन्तु लिङ्ग, पक्ष, और साध्यका व्यवहार हमेशा नहीं होता, अपितु जब अनुमिति करनेकी इच्छा होती है तभी होता है, इसी प्रकार शब्दमें व्यञ्जनाका व्यवहार प्रयोक्ताकी इच्छा पर ही निर्भर है, इसलिये व्यञ्जनामें लिङ्गत्व न्यायकी समानता है। वाचक शब्दमें नियमपूर्वक नहीं रहनेके कारण ही व्यञ्जनाको अभिधाविशेष नहीं कह सकते हैं, क्योंकि अभिधा नियतरूपसे वाचक शब्दमें प्रतीत होती है और व्यञ्जना नियतरूपसे नहीं प्रतीत होती है।

उक्तानङ्गीकारे दोषमाह—

**यदि हि वाचकत्वप्रकारता तस्य भवेत्, तच्छब्दात्मनि नियताऽपि स्याद्, वाचकत्ववत्।**

सर्वेषामेव वाचकशब्दानां वाचकत्वमिव व्यञ्जकत्वमप्यापद्येत, तच्च नेष्टम्, अनुभवविरोधादिति भावः।

यदि व्यञ्जना अभिधा विशेष ही होती तो वाचक शब्दमें अभिधाकी तरह नियत रूपसे ही रहती, परन्तु ऐसी बात नहीं है, अर्थात् वह (व्यञ्जना) शब्दमें नियत रूपसे नहीं रहती है, इसलिये अभिधासे भिन्न ही व्यञ्जना है।

अभिधाव्यञ्जनयोर्भेदः सर्वमतसिद्ध इति प्रागभिहितं समर्थयितुमादौ मीमांसकाऽनुमतत्वं स्थापयति—

**स च तथाविध औपाधिको धर्मः शब्दानामौत्पत्तिकशब्दार्थसम्बन्धवादिना वाक्यतत्त्वविदा पौरुषेयापौरुषेययोर्वाक्ययोर्विशेषमभिदधता नियमेनाभ्युपगन्तव्यः ।**

स च व्यञ्जनारूपश्च । औत्पत्तिकं नित्यं शब्दार्थयोः सम्बन्धं शक्तिरूपं वदतीति तच्छीलेन । औत्पत्तिकशब्दस्य नित्ये रूढिमूलिका विपरीता वा लक्षणा । तथा च—'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इत्यादिजैमिनिसूत्रविवरणे—'औत्पत्तिक' इति नित्यं ब्रूमः । उत्पत्तिर्हि भाव उच्यते लक्षणया । अवियुक्तः शब्दार्थयोर्भावः सम्बन्धो, नोत्पन्नयोः पश्चात् सम्बन्धः' इति शबरस्वामिनः ।

वाक्यतत्वविदा वाक्ये शक्तिं मन्वानेन । पुरुषेण कृतं सन्दर्भं पौरुषेयं लौकिकं वाक्यम् । तद्भिन्नमपौरुषेयं वाक्यं वेदलक्षणम् । तयोर्वाक्ययोर्विशेषं वैलक्षण्यमभिदधता कथयता मीमांसकेन ।

तन्मते शब्दानां नित्यत्वेऽपि तत्सङ्घटनाविशेषात्मकस्य वाक्यस्यानित्यत्वात् तन्निर्मातृता पुरुषस्य, यथा हि मालाकारस्य पुष्पानुत्पादकत्वेऽपि तत्सन्दर्भरूपस्रङ्निर्मातृतेति विभावनीयम् ।

स्वाभाविक अभिधासे औपाधिक व्यञ्जनाके सर्वमत सिद्ध भेदका समर्थन करनेके लिये सबसे पहिले मीमांसकका समर्थन प्रस्तुत करते हैं—स चेति । इस प्रकारका व्यञ्जनारूप औपाधिक धर्म, शब्द और अर्थका परस्परमें नित्य सम्बन्ध मानने वाले एवं पौरुषेय और अपौरुषेय वाक्योंमें विशेष भेद मानने वाले वाक्य तत्त्व वेत्ता मीमांसकको अवश्य मानना पड़ेगा, क्योंकि उनके मतमें शब्दार्थ सम्बन्धके नित्य होनेसे शब्द भी नित्य हैं, इसलिये लौकिक एवं वैदिक शब्दोंमें अभिधा शक्तिके समान ही होनेके कारण उसके आधार पर पौरुषेय वाक्यसे अपौरुषेय वाक्योंमें विशेषता नहीं हो सकेगी, इसलिये तात्पर्य शक्तिके आधार पर ही उन दोनों वाक्योंका भेद सम्भव हो सकता है, क्योंकि लौकिक पौरुषेय वाक्योंमें वक्ताके भ्रम, प्रमाद, आलस्यादि दोष युक्त होनेसे उसके तात्पर्य विषयीभूत अर्थमें मिथ्यात्वके सम्भवसे अप्रामाणिकता भी हो सकती है, किन्तु वैदिक वाक्य किसी पुरुषसे निर्मित नहीं होनेके कारण मिथ्यार्थक नहीं होनेसे अप्रामाणिक नहीं हो सकता, इसीलिये उसको स्वतः प्रमाण और लौकिक वाक्यको परतः प्रमाण माना जाता है, इस प्रकार पौरुषेय वाक्योंका तात्पर्यार्थ ही उनको अपौरुषेय वैदिक

वाक्योंसे भिन्न करता है और वह तात्पर्यार्थ अभिधासे नहीं जाना जासकता है, क्योंकि वह संकेतित अर्थ नहीं है और अभिधा संकेतित अर्थका ही बोध कराती है। एवं वह ( तात्पर्यार्थ ) लक्षणासे भी प्रतीत नहीं हो सकता है, क्योंकि मुख्यार्थ बाधादि रूप लक्षणा सामग्रीका अभाव है, इसलिये व्यञ्जनासे ही तात्पर्यार्थ का बोध हो सकता है, अतः नहीं चाहने पर भी मीमांसकको व्यञ्जना वृत्ति माननी ही होगी।

कथमिति चेत् ?—

**तदनभ्युपगमे हि तस्य शब्दार्थसम्बन्धनित्यत्वे सत्यप्यपौरुषेयपौरुषेययोर्वाक्ययोरर्थप्रतिपादने निर्विशेषत्वं स्यात्। तदभ्युपगमे तु पौरुषेयाणां वाक्यानां पुरुषेच्छाऽनुविधानसमारोपितौपाधिकव्यापारान्तराणां सत्यपि स्वाभिधेयसम्बन्धापरित्यागे मिथ्याऽर्थताऽपि भवेत्।**

तदनभ्युपगमे व्यञ्जनाऽनङ्गीकारे। तस्य मीमांसकस्य। शब्दार्थयोः सम्बन्धस्य नित्यत्वे सत्यपि। निर्विशेषत्वमविलक्षणत्वम्। तदभ्युपगमे व्यञ्जनास्वीकारे। पुरुषस्य निर्मातुरिच्छायास्तात्पर्यस्यानुविधानेनानुसरणेन समारोपितमौपाधिकं व्यापारान्तरं तात्पर्यविषयीभूतार्थप्रकाशकं व्यञ्जनालक्षणं शक्त्यन्तरं येषु तानि तथाभूतानि, तेषाम्। स्वाभिधेयसम्बन्धापरित्यागे स्ववाच्यवाचकत्वत्यागाभावे सत्यपि। मिथ्याऽर्थताऽसत्यार्थप्रतिपादकता।

अयं भावः—मीमांसकनये पौरुषेयापौरुषेयवाक्ययोर्वैलक्षण्यं यन्निर्णीतम्, तन्न तावद् वाच्यार्थबोधकत्वनिबन्धनम्, तद्बोधकताया उभयत्र तुल्यत्वात्। किन्तु तात्पर्यार्थबोधकत्वकृतम्, तथा हि—तात्पर्यं वाक्यनिर्मातृपुरुषस्येच्छा, तद्विषयीभूतार्थप्रतिपादकता पौरुषेये वाक्य एव सम्भवति, न त्वपौरुषेये, पुरुषाणामसर्वज्ञत्वेन च भ्रान्तिमत्त्वेन तदिच्छाविषयीभूतार्थस्य कदाचिन्मिथ्यात्वमिति लौकिकवाक्यानां मिथ्याऽर्थप्रतिपादकतापि, वेदवाक्यानां तु निर्मातृपुरुषाभावेन तात्पर्यविषयीभूतार्थाभावादेव न तत्ता, तदेव वाक्यद्वयस्य मिथो वैलक्षण्यम्। सा च निर्मातृपुरुषतात्पर्यविषयार्थप्रकाशकता नाभिधा, तदर्थे सङ्केतविरहात्। न च लक्षणा, मुख्यार्थबाधाद्यभावात्। अपि तु व्यञ्जनैवेत्यकामेनापि तेन व्यक्तिः स्वीकरणीयैव, तदस्वीकरणे तद्वैलक्षण्यानुपपत्तेः।

व्यञ्जना वृत्तिके नहीं मानने पर मीमांसकके मतमें शब्दार्थ सम्बन्धके नित्य होने पर भी पौरुषेय वाक्योंसे अपौरुषेय वाक्योंमें अर्थ प्रतिपादनके प्रति विशेषता

नहीं होगी, अर्थात् लौकिक वाक्योंसे वैदिक वाक्योंका वलक्षण्य नहीं हो सकेगा। और व्यञ्जनाके मान लेने पर तो पौरुषेय वाक्योंमें अपने वाच्य वाचक भावरूप सम्बन्धके नहीं त्याग करने पर भी पुरुषकी इच्छारूप तात्पर्यका अनुसरण करने वाले व्यञ्जनात्मक व्यापारसे युक्त वाक्योंकी मिथ्यार्थकता भी हो सकनेके कारण पौरुषेय वाक्योंसे अपौरुषेय वाक्यका वैलक्षण्य हो सकता है।

ननु न हि वह्नेरुष्णत्वहानं विना शैत्यं कदाचिदपि सम्भवतीति पौरुषेयवाक्यानां यथाऽर्थबोधकत्वत्यागमन्तरेण तद्विरुद्धायथाऽर्थतात्पर्यार्थप्रकाशकत्वधर्मयोगः कथं स्यादित्याशङ्कायामभिदधाति—

**दृश्यते हि भावानामपरित्यक्तस्वस्वभावानामपि सामग्र्यन्तरसम्पातसम्पादितौपाधिकव्यापारान्तराणां विरुद्धक्रियत्वम्। तथा हि—हिममयूखप्रभृतीनां निर्वापितसकलजीवलोकं शीतलत्वमुद्वहतामेव, प्रियाविरहदहनदह्यमानमानसैर्जनैरालोक्यमानानां सतां, सन्तापकारित्वं प्रसिद्धमेव।**

भावानां पदार्थानाम् अपरित्यक्तः स्वस्य स्वभावो नियतधर्मो यैरिति, सामग्र्यन्तरस्यान्यकारणकूटस्य सम्पातेन प्रत्यासत्त्या सम्पादितं निर्वर्तितमौपाधिकमागन्तुकं व्यापारान्तरं धर्मान्तरं यत्रेति च विग्रहद्वयम्। हिममयूखः शीतकिरणश्चन्द्रः। प्रभृतिपदेन नलिनीदलादीनां परिग्रहः। निर्वापितो निर्वृतीकृतः सकलो जीवलोको येन तादृशम्।

न ह्ययं नियमः—यत् स्वधर्मं विहायैव वस्तु तद्विरुद्धं धर्मं लभते, यतः शिशिरत्वमपरित्यज्यैव चन्द्रो विरहिसन्तापकत्वं भजति, उष्णत्वमनुत्सृज्यैव च वह्निः सतीपरीक्षणक्षणे शीतलत्वमाश्रयति। तस्मात् कथं न पौरुषेयवाक्यानां यथाऽर्थस्वार्थबोधकत्वेऽप्ययथाऽर्थ—तात्पर्यार्थप्रकाशकत्वं स्यादित्याशयः।

अग्निमें जैसे उष्णताके त्यागके विना कभी भी शैत्य नहीं आसकता, क्योंकि दोनों विरुद्ध धर्म हैं, इसी प्रकार पौरुषेय वाक्योंमें अपने स्वाभाविक यथार्थ बोधकत्वके त्यागके विना उसके विरुद्ध अयथार्थभूल तात्पर्यार्थ प्रकाशकत्व धर्म नहीं हो सकता है, इस संदेहका समाधान करते हैं—दृश्यते इति। अपने स्वभावका परित्याग किये विना भी अन्य सामग्रीके सहकारसे उपाधिकृत अन्य व्यापारोंको प्राप्त करने वाले पदार्थोंमें विपरीत क्रियाकारित्व देखा जाता है। जैसे कि सारे ही संसारको शान्ति प्रदान करने वाले अपने स्वाभाविक शीतल स्वभावसे युक्त होने पर भी, चन्द्रमामें प्रियाके वियोगाग्निसे सन्तप्त चित्त वाले पुरुषोंके दृष्टिगोचर होने पर सन्ताप कारित्व प्रसिद्ध ही है, इसी प्रकार सती नायिकाके परीक्षण समयमें अग्नि

अपने स्वाभाविक उष्णत्व धर्मका परित्याग किये विना ही शीतलत्वको धारण करता है।

निगमयति—

तस्मात् पौरुषेयाणां वाक्यानां सत्यपि नैसर्गिकेऽर्थसम्बन्धे मिथ्याऽर्थत्वं समर्थयितुमिच्छता, वाचकत्वव्यतिरिक्तं किञ्चिद्रूपमौपाधिकं व्यक्तमेवाभिधानीयम्।

मीमांसकेनेति शेषः। अर्थसम्बन्धेऽभिधारूपे किञ्चिद्रूपमौपाधिकं कथनास्वाभाविको धर्मः। अभिधानीयं वक्तव्यम्। तत्कथनं विना न निर्वाह इति भावः।

इसलिये पौरुषेय वाक्योंका अर्थके साथ नित्य स्वाभाविक सम्बन्ध होने पर भी उसकी मिथ्यार्थकताका समर्थन करनेकी इच्छा रखनेवाले मीमांसकको वाक्योंमें अभिधा रूप वाचकताके अतिरिक्त कुछ औपाधिक रूप (अस्वाभाविक धर्म) अवश्य ही कहना चाहिये।

ननु तद्धर्मान्तरमभिधाऽऽख्यैवकथयेदित्याक्षेपं निरस्यति—

तच्च व्यञ्जकत्वादृते नान्यत्। व्यङ्ग्यप्रकाशनं हि व्यञ्जकत्वम्। पौरुषेयाणि च वाक्यानि प्राधान्येन पुरुषाभिप्रायमेव प्रकाशयन्ति। स च व्यङ्ग्य एव, न त्वभिधेयः, तेन सहाभिधानस्य वाच्यवाचकता—लक्षणसम्बन्धाभावात्।

नान्यत्, अपि तु व्यञ्जकत्वमेव। व्यङ्ग्यस्य प्रकाशनं प्रकाश्यतेऽनेनेति व्युत्पत्त्या प्रकाशकरणम्। प्रकरणादिप्राहिततात्पर्येणैव लौकिकवाक्यार्थनिर्धारणात् प्राधान्यम्, तद्ग्रहविरहेऽर्थस्य शाब्दानुभवप्रवेशासम्भवात्। पुरुषस्याभिप्रायन्तात्पर्यं तद्विषयीभूतमर्थं च प्रकाशयन्ति व्यञ्जन्ति। स पुरुषाभिप्रायस्तद्विषयीभूतार्थश्च। तेनाभिप्रायेण तदर्थेन च। अभिधानस्य शब्दस्य, अभिधीयतेऽनेनेति व्युत्पत्तेः।

अयं भावः—वक्तृतात्पर्यं तद्विषयं च मुख्यमर्थं नाभिधा बोधयितुं प्रभवति, तस्य सङ्केतितत्वाभावात्, न च लक्षणा, मुख्यार्थबाधादिविरहात्, किन्तु व्यञ्जनैवेति लौकिकवाक्यनिर्मातृतात्पर्य—तद्विषयार्थप्रकाशकत्वेन मीमांसकेनापि व्यञ्जना स्वीकार्य्यैव।

और वह औपाधिक धर्म व्यञ्जनाके सिवा और कुछ नहीं हो सकता है। व्यङ्ग्यार्थका प्रकाशन करना ही व्यञ्जना है। पौरुषेय वाक्य मुख्यरूपसे वक्तापुरुषके अभिप्राय विशेषको ही (व्यङ्ग्यरूपसे) प्रकाशित करते हैं। और वह पुरुषाभिप्राय व्यङ्ग्य ही होता है, वाच्य नहीं होता। क्योंकि उस पुरुषाभिप्रायके साथ वाचक शब्दका वाच्य—वाचकभाव रूप सम्बन्ध नहीं रहता है, इसलिये वक्ता

पुरुषके अभिप्रायरूप व्यङ्ग्यार्थको अभिव्यक्त करनेके लिये मीमांसकको भी अवश्य ही व्यञ्जना वृत्ति माननी चाहिये।

व्यक्तिविपक्ष आक्षिपति--

नन्वनेन न्यायेन सर्वेषामेव लौकिकानां वाक्यानां ध्वनिव्यवहारः प्रसक्तः, सर्वेषामेवानेन न्यायेन व्यञ्जकत्वात्।

अनेन न्यायेन 'लौकिकवाक्यानां वाच्यातिरिक्तवक्त्रभिप्रायविषयार्थव्यञ्जकत्वम्' इति सिद्धान्तेन। व्यञ्जकत्वमेव खलु ध्वनित्वसम्पादकम्।

( पूर्वपक्ष ) इस प्रकार सभी लौकिक वाक्योंका वक्ताके अभिप्राय रूप तात्पर्य विषयीभूत व्यङ्ग्यार्थके साथ सम्बन्ध होनेके कारण ध्वनि व्यवहार होने लगेगा, क्योंकि उक्त रीतिसे सभी लौकिक वाक्य वक्ताके तात्पर्यार्थके अभिव्यञ्जक होते हैं।

उत्तरमाचष्टे—

सत्यमेतत्—किन्तु वक्त्रभिप्रायप्रकाशनेन यदिदं व्यञ्जकत्वम्, तत् सर्वेषामेव लौकिकवाक्यानामविशिष्टम्। तत्तु वाचकत्वान्न भिद्यते। व्यङ्ग्यं हि तत्र नान्तरीयकतया व्यवस्थितम्, न तु विवक्षितत्वेन। यस्य तु विवक्षितत्वेन व्यङ्ग्यस्य व्यवस्थितिः, तद्व्यञ्जकत्वं ध्वनिव्यवहारस्य प्रयोजकम्।

अविशिष्टं तुल्यम्। वाचकत्वान्न भिद्यतेऽभिधावदेव तत्र सर्वत्र तिष्ठति। नान्तरीयकतया धान्यपलालन्यायेन, न तु प्राधान्येन। यस्य व्यङ्ग्यस्येति सम्बन्धः। तद्व्यञ्जकत्वं तन्निरूपिता व्यञ्जना। सन्दर्भानुरोधेन पाठः परिवर्तितः।

न हि व्यञ्जकत्वमात्रेण ध्वनित्वम्, अपि तु प्रधानीभूतव्यङ्ग्यव्यञ्जकत्वेन। तात्पर्यस्य तद्विषयार्थस्य च व्यङ्ग्यत्वेऽपि न प्राधान्यम्, नान्तरीयकत्वेन विच्छित्तिविशेषाधायकत्वात्। तेन न सर्वत्र लौकिकवाक्येषु तात्पर्यतदर्थव्यञ्जकेष्वपि ध्वनित्वापत्तिरित्याकूतम्।

( उत्तरपक्ष ) वक्ताके अभिप्रायके प्रकाशनसे जो शब्दोंमें व्यञ्जकता आती है, वह ( व्यञ्जकता ) तो सभी लौकिक वाक्योंमें समान ही है, इसीलिये वह वाचकता से भिन्न नहीं है, अर्थात् अभिधाके समान सभी जगह रहती है। क्योंकि व्यङ्ग्यार्थ तो उनमें आनुषङ्गिक ( गौण ) रूपसे ही रहता है, न कि प्रधानरूपसे विवक्षित होकर रहता, इसलिये व्यङ्ग्यार्थके प्रधानरूपसे विवक्षित न होनेके कारण उसमें ध्वनिका व्यवहार नहीं किया जाता है। परन्तु जिस व्यङ्ग्यार्थकी प्रधानरूपसे विवक्षा रहती है, उसीकी व्यञ्जकता ध्वनि व्यवहारका प्रयोजक होती है, अर्थात्

केवल व्यञ्जकत्व मात्रसे ही ध्वनिका व्यवहार नहीं होता, अपितु प्रधान रूपसे विवक्षित व्यङ्ग्यार्थके व्यञ्जकत्वसे ही ध्वनिका व्यवहार होता है, इसलिये जिस किसी रूपमें वक्ताके तात्पर्य विषयीभूत अर्थके व्यङ्ग्य होने पर भी मुख्य रूपसे अविवक्षा-स्थलोंमें चमत्काराधायक नहीं होनेसे ध्वनिका व्यवहार नहीं होता है।

कीदृशं तर्हि व्यङ्ग्यं प्रधानतां भजतीति प्रश्नं समाधत्ते—

**यत्त्वभिप्रायविशेषरूपं व्यङ्ग्यं शब्दार्थाभ्यामेव प्रकाशते, तद्भवति विवक्षितं तात्पर्येण प्रकाश्यमानं सत्।**

अभिप्रायशब्दः प्राग्वद् विषयपरोऽपि। तद्विशेषरूपता तु व्यङ्ग्यस्य चमत्कारातिरेकित्वेन। एवकारेण चेष्टाऽऽदि व्यवच्छिद्यते, तद्व्यङ्ग्यस्य ध्वनित्वाप्रयोजकत्वात्। तात्पर्येण व्यञ्जनया। सदन्तं व्यङ्ग्यविशेषणम्। इहापि पाठः किञ्चित् परिवर्तितः। शब्दार्थाभ्यां स्वमुपसर्जनीकृत्य व्यञ्जनया बोध्यमानं विच्छित्तिविधायि व्यङ्ग्यमेव तयोर्ध्वनित्वप्रयोजकम्, न तु यत्किञ्चिदपि व्यङ्ग्यम्, विच्छित्तिविशेषाधायिप्रत्ययस्यैव काव्यमुख्योद्देश्यत्वात्, प्रकृते तु व्यङ्ग्यं न तादृशमिति नैव दूषणमित्याशयः।

किस प्रकारका व्यङ्ग्य प्रधान कहा जा सकता है, इसका समाधान करते हैं— यत्तु इति। जो अभिप्राय विशेषरूप व्यङ्ग्य, शब्द और अर्थसे ही प्रकाशित होता है, वह यदि व्यञ्जना द्वारा प्रधानरूपसे प्रकाशमान हो तो विवक्षित व्यङ्ग्य कहलाता है, अर्थात् शब्द और अर्थसे स्वार्थ समर्पण पूर्वक व्यञ्जनाद्वारा प्रतीयमान चमत्कार विशेषजनक व्यङ्ग्य ही काव्यमें ध्वनि व्यवहारका प्रयोजक होता है, क्योंकि चमत्कार विशेषकी प्रतीति ही काव्यका मुख्य उद्देश्य होती है।

नन्वभिप्रायविशेषव्यङ्ग्यमेव यदि ध्वनित्वप्रयोजकम्, तर्हि कथितचररसादिप्रकारत्रयव्यङ्ग्यत्वे तत्त्वं कथं स्यात्, तेषां तद्रूपत्वाभावादित्याशङ्कायां विशेषमाख्याति—

**किन्तु तदेव केवलमपरिमितविषयस्य ध्वनिव्यवहारस्य न प्रयोजकम्, व्यापकत्वात्, तत्तु दर्शितभेदत्रयरूपतात्पर्येण द्योत्यमानमभिप्रायरूपमनभिप्रायरूपं च सर्वमेव ध्वनिव्यवहारस्य प्रयोजकमिति यथोक्तव्यञ्जकत्वविशेषध्वनिलक्षणे नातिव्याप्तिर्न चाव्याप्तिः।**

तदेवाभिप्रायविशेषरूपमेव। अपरिमितस्य विपुलस्य। व्यापकत्वाद् ध्वनेरिति शेषः। एतच्च प्रागेवालङ्कारान्तर्भावनिराकरणप्रसङ्गेन प्रतिपादितम्। भेदत्रयं वस्तव-

लङ्काररसादिलक्षणम्। तात्पर्येण व्यक्त्या। अनभिप्रायरूपं वस्त्वादिलक्षणम्। व्यञ्जकत्वविशेषवान् यो ध्वनिस्तस्य लक्षणे।

इदमुच्यते—यद्यभिप्रायव्यञ्जकत्वसामान्यं ध्वनिलक्षणं स्यात्, तर्हि निर्मातृपुरुषाभिप्रायव्यञ्जकेषु लौकिकवाक्येष्वतिव्याप्तिः, अभिप्रायातिरिक्तवस्त्वादिव्यञ्जकेष्वव्याप्तिश्चापतेदिति 'शब्दार्थाभ्यामेव' इत्यत्र प्रतिपादितं 'यत्रार्थः शब्दो वा' इत्यादिना प्रथमोद्द्योते समुपक्षिप्तमेव ध्वनिलक्षणमवसेयम्। तथा च क्वचिदभिप्रायविशेष एव, क्वचिच्च वस्त्वादिरूप एव चमत्कारिणि व्यङ्ग्ये प्राधान्येन विवक्षितेऽप्रधानयोः शब्दार्थयोर्ध्वनित्वमतो न दोषः।

यदि अभिप्राय विशेषरूप व्यङ्ग्य ही ध्वनि व्यवहारका प्रयोजक हो तो रसादि वस्तु और अलंकार रूप व्यङ्ग्यत्रय स्थलमें ध्वनिका व्यवहार नहीं होगा, क्योंकि उक्त तीनों व्यङ्ग्य अभिप्राय विशेप रूप ही नहीं हैं, इसलिये इस विषयमें विशेष बातें बतलाते हैं—किन्तु इति। किन्तु केवल वही अभिप्राय विशेपरूप व्यङ्ग्य अपरिमित स्थलों पर व्यङ्ग्य वस्तु, अलंकारादिके भेदसे होनेवाले ध्वनि व्यवहारका प्रयोजक नहीं है, क्योंकि ध्वनिका विषय अत्यन्त व्यापक है, इसलिये व्यञ्जना द्वारा प्रतीयमान पूर्व प्रदर्शित वस्तु, अलंकार, रसादिरूप तीनों व्यङ्ग्य ही चाहे अभिप्राय रूप रसादि हो या अनभिप्राय रूप वस्तु-अलंकार हो सभी, ध्वनि व्यवहारके प्रयोजक होते हैं, इसलिये पूर्वोक्त व्यञ्जकत्व विशेपरूप ध्वनिके लक्षणमें उक्तरीतिसे अतिव्याप्ति या अव्याप्ति दोप नहीं लगता है, अर्थात् यदि अभिप्राय-व्यञ्जकत्व सामान्य ही ध्वनिका लक्षण मानते तो सभी लौकिक वाक्योंमें वक्ताके अभिप्रायके व्यञ्जक होनेसे ध्वनि लक्षणकी अतिव्याप्ति होती और व्यङ्ग्य वस्तु, अलंकारके अभिप्राय रूप न होनेसे उसके व्यञ्जकस्थलमें अव्याप्ति होती, अतः ध्वनिका उक्त सामान्य लक्षण न मान कर 'यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ व्यङ्क्तः काव्य विशेषः स ध्वनिः सूरिभिः कथितः' इस कारिकाके अनुसार ही ध्वनिका लक्षण मानना चाहिये, इसलिये कहीं अभिप्राय विशेपरूप और कहीं वस्तु, अलंकारादि रूप चमत्कारजनक व्यङ्ग्यार्थके प्रधानतया प्रतीयमान होने पर ध्वनिका व्यवहार माना गया है, अतः कोई दोष नहीं होता।

निगमयति—

**तस्माद् वाक्यतत्त्वविदां मते न तावद् व्यञ्जकत्वलक्षणः शाब्दो व्यापारो विरोधी, प्रत्युतानुगुण एव लक्ष्यते।**

शाब्यपि व्यञ्जना यदा मीमांसकेन स्वीकृता, तदा स्थालीपुलाकन्यायेन सकलव्यञ्जनासिद्धिर्जातैव तन्नयेऽपीति भावः।

सन्दर्भानुरोधेन द्वितीयनकारघटितः पाठो निराकृतः।

इसलिये वाक्य मर्मज्ञ मीमांसकोंके मतमें व्यञ्जनारूप शब्द सम्बन्धी व्यापार का मानना, प्रतिकूल नहीं, अपितु अनुकूल ही प्रतीत होता है अर्थात् शाब्दी व्यञ्जनाके मीमांसकाभिमत सिद्ध होनेसे सभी व्यञ्जना स्थालीपुलाक न्यायसे उनके मतमें भी सिद्ध ही हो जाता है।

इत्थं मीमांसकमतानुगुणत्वं प्रतिपाद्य वैयाकरणनयानुगुणतरत्वं व्यञ्जनायाः समासेन प्रतिपादयति—

**परिनिश्चितनिरपभ्रंशशब्दब्रह्मणां विपश्चितां मतमाश्रित्यैव प्रवृत्तोऽयं ध्वनिव्यवहार इति तैः सह किं विरोधाविरोधौ चिन्त्येते।**

परितः प्रमाणेन निश्चितं निर्णीतं स्थापितमिति यावद्, निरपभ्रंशमपभ्रंशशब्दविविक्तं गलिताविद्यं, शब्द एव नित्यत्वात् व्यापकत्वाच्च ब्रह्म यैस्ते तादृशाः, तेषां विपश्चितां विदुषां वैयाकरणानाम्। तथा हि—'प्रथमे हि विद्वांसो वैयाकरणाः, व्याकरणमूलत्वात् सर्वविद्यानाम्' इत्युक्तमेव ध्वनिलक्षणे प्राक्।

वैयाकरणमतमनुसृत्यैवालङ्कारिकैरप्यङ्गीकृते ध्वनौ, तेषां का विप्रतिपत्तेः सम्भावना? । अतस्तन्मतेऽपि स्फोटप्रकाशिका व्यञ्जनाऽस्त्येवेति तात्पर्यम्।

इस प्रकार व्यञ्जना स्वीकार करनेमें मीमांसकोंका समर्थन बतलाकर अब वैयाकरणोंका समर्थन बतलाते हैं—परिनिश्चितेति। अपभ्रंशादि विषयक अविद्या-संस्कार रहित शब्द ब्रह्मके तत्त्वको जाननेवाले वैयाकरण विद्वानोंके मतका आश्रयण करके ही हमारे शास्त्रमें ध्वनिका व्यवहार प्रचलित हुआ है, अतः उनके साथ व्यञ्जनाके बारेमें विरोधाविरोध विषयक चिन्ता करना ही व्यर्थ है, अर्थात् वे भी स्फोट प्रकाशनार्थ ध्वनि रूप व्यञ्जनाको मानते ही हैं, इसलिये उनके साथ विरोध हो ही नहीं सकता।

एवं वाक्यतत्त्वविदां मीमांसकानां, पदतत्त्वविदां वैयाकरणानां च मते व्यञ्जनां व्यवस्थाप्य प्रमाणतत्त्वविदां नैयायिकादीनां नयेऽपि व्यवस्थापयितुमुपक्रमते—

**कृत्रिमशब्दार्थसम्बन्धवादिनां तु युक्तिविदामनुभवसिद्ध एवायं व्यञ्जकभावः शब्दानामर्थान्तराणामिव निर्विरोधश्चेति न प्रतिक्षेप्यपदवीमवतरति।**

क्रियया निर्वृत्तं कृत्रिमं सङ्केतरूपतया कल्पितत्वादनित्यं शब्दार्थयोः सम्बन्धं वदन्तीति तादृशास्तेषां नैयायिकबौद्धादीनां युक्तिविदामुपपत्त्याऽर्थान् निर्धारयताम्। अर्थान्तराणां दीपादीनामिव। निर्विरोधो विरोधान्निष्क्रान्तो बाधरहित इति यावत्। प्रतिक्षेप्यः खण्डनीयः। बाधितो ह्यर्थस्तैः खण्ड्यत एव।

नैयायिकनये शब्दार्थयोरनित्यत्वादेव, सौगतादिमते वस्तुमात्रस्य क्षणिकत्वादेव च तत्सम्बन्धस्यानित्यत्वम्। युक्तिविदामित्यनेन युक्तिसिद्धं व्यञ्जकत्वं ते नापलपेयुरिति सूचितम्। यथा प्रदीपस्य घटाद्यर्थान्तरप्रकाशकत्वमनुभवसिद्धम्, तथा शब्दार्थयोरपि स्ववाच्य-स्वेतरार्थप्रकाशकत्वमिति व्यञ्जकत्वे तार्किकाणामपि न विमतिरित्याशयः।

शब्द और अर्थका संकेत कृत वाच्य-वाचक भाव रूप अनित्य सम्बन्ध माननेवाले प्रमाण तत्त्व वेत्ता नैयायिकोंके मतमें तो दीपादि अन्य लौकिक पदार्थोंके व्यञ्जकत्वके समान शब्दोंका व्यञ्जकत्व अनुभव सिद्ध ही है और वह बाध रहित प्रतीत होता है, इसलिये नैयायिकोंके मतसे व्यञ्जना खण्डन करने योग्य नहीं है।

तदाह—

**वाचकत्वे हि तार्किकाणां विप्रतिपत्तयः प्रवर्तन्ताम्, किमिदं स्वाभाविकं शब्दानामाहोस्वित् सामयिकमित्याद्याः। व्यञ्जकत्वे तु तत्पृष्ठभाविनि भावान्तरसाधारणे लोकप्रसिद्ध एवानुगम्यमाने को विमतीनामवसरः ?।**

विप्रतिपत्तयो विरुद्धयुक्तियुक्तोक्तयः। शब्दानां वाचकत्वमिदं स्वाभाविकं नित्यम्, आहोस्विदथवा, सामयिकं सङ्केतजन्यत्वादनित्यमित्यादिरूपास्ताः। तत्पृष्ठभाविनि वाचकत्वात् पश्चाज्जायमाने। भावश्च प्रद्द्वारको वोध्यः। भावान्तरसाधारणे दीपादि—प्रकाशकपदार्थान्तरेष्वपि तुल्ये। प्रसिद्धे दीपादिसादृश्येन प्रख्याते। अनुगम्यमान आलम्ब्यमाने।

लोकाप्रसिद्धे वाचकत्वे तार्किकाणां नित्यानित्यत्वविवादो विविधः सम्भवति, न तु लोकप्रसिद्धे पदार्थान्तरेषु बहुश उपलभ्यमाने व्यञ्जकत्वे। व्यञ्जकत्वं हि यादृशमेकत्र दीपादौ तादृशमेवापरत्रापि शब्दादाविति को विवादावसरस्तत्र तेषाम्। तत्र विवादेऽनुभवसिद्धापलापकता शिरस्यापतेदित्याकूतम्।

तार्किकोंकी, वाचकताके विषयमें, क्या शब्दोंकी वाचकता स्वाभाविक होनेसे नित्य है, या संकेतकृत होनेसे अनित्य है, इस प्रकारकी विप्रतिपत्तियां भले ही हों, परन्तु उस अभिधात्मक वाचकताके बाद आनेवाली एवं दीपक आदि अन्य व्यञ्जक पदार्थोंके समान सर्वानुभव सिद्ध व्यञ्जनाके विषयमें मतभेदका अवसर ही नहीं है।

तदेव समर्थयति—

**अलौकिके ह्यर्थे तार्किकाणामभिनिवेशाः प्रवर्तन्ते, न तु लौकिके। न हि नीलमधुरादिष्वशेषलोकेन्द्रियगोचरे बाधारहिते तत्त्वे परस्परं**

विप्रतिपन्ना दृश्यन्ते। न हि बाधारहितं नीलं नीलमिति ब्रुवन्नपरेण प्रतिषिध्यते 'नैतन्नीलं, पीतमेतत्' इति।

अलौकिके लोकानुभवागोचरे। अभिनिवेशाः स्वमतस्थापनाग्रहाः। नीलमधुरादिष्विति निर्धारणे सप्तमी, इतरथा वचनभेदात् तत्त्व इत्यनेन सामानाधिकरण्यं न घटते। तत्त्वे पदार्थे।

प्रत्यक्षविषये नीलादौ न कस्यापि विवादः, किन्तु तन्नीलं प्रकृतिनिष्पादितं परमाणुनिष्पादितं वेति तत्कारण एव विवाद इति सारम्।

लौकिक प्रत्यक्षके अविषयभूत परमाणु-आत्मा आदि अलौकिक अर्थोंके विषयमें ही नैयायिकोंकी सारी विप्रतिपत्तियां (स्वपक्ष-स्थापनाका आग्रह) होती हैं, न कि प्रत्यक्ष सिद्ध लौकिक अर्थोंके विषयमें, जैसा कि नील, मधुर आदि, सर्वजन प्रत्यक्ष सिद्ध अबाधित पदार्थके विषयमें परस्पर मतभेद नहीं दिखाई देता है। क्योंकि अबाधित नीलको नील कहनेवाले किसी भी व्यक्तिको दूसरा व्यक्ति यह नील नहीं है, अपितु पीत है, ऐसा निषेध नहीं करता है, अर्थात् प्रत्यक्ष दृष्टिगोचर नीलादि पदार्थमें किसीको भी विवाद नहीं होता है, अपितु यह नील प्रकृतिसे निष्पादित है, या परमाणुसे इस प्रकार उसके अप्रत्यक्षभूत कारणमें ही विवाद होता है।

प्रकृते सङ्गमयति—

**तथैव व्यञ्जकत्वं वाचकानां शब्दानामवाचकानां च गीतध्वनीनामशब्दरूपाणां च चेष्टाऽऽदीनां यत् सर्वेषामनुभवसिद्धं, तत्केनापह्नूयते।**

तार्किकैरपि नापलपितुं शक्यं तद् व्यञ्जकत्वमिति भावः।

इसी प्रकार वाचक शब्दोंकी एवं अवाचक शब्दरूप गीतादि ध्वनियोंकी और अशब्दरूप चेष्टा आदिकी जो सर्वानुभव सिद्ध व्यञ्जकता है, उसका कौन व्यक्ति अपलाप कर सकता है अर्थात् तार्किक भी व्यञ्जनाका अपलाप नहीं कर सकते हैं।

व्यञ्जकत्वस्य प्रसिद्धिं प्रदर्शयन्नुपसंहरति—

**अशब्दमर्थं रमणीयं हि सूचयन्तो व्याहारास्तथा व्यापारनिबन्धाश्च विदग्धपरिषत्सु विविधा विभाव्यन्ते। तानुपहास्यतामात्मनः परिहरन् कथमभिसन्दधीत सचेताः।**

हि यतो विदग्धपरिषत्सु रसिकगोष्ठीषु, अशब्दं शब्देनाभिधाऽभिधप्रधानवृत्त्याऽप्रतिपादितमनभिधेयमिति यावत्, रमणीयं रहस्यतानयनेन चमत्कारकारणम्, अर्थं सूचयन्तो व्यञ्जनया प्रत्याययन्तः, विविधा नानाकाराः, व्याहाराः साङ्केतिकोक्तयो

व्यापारनिबन्धा इङ्गितप्रभृतयः क्रियाविशेषाश्च विभाव्यन्ते दृश्यन्ते ज्ञायन्त वा। तस्मात् सचेताः सहृदयस्तार्किकादिषु कश्चित्, आत्मनः, उपहास्यतामनुचितखण्डनाचरणादुपहासास्पदत्वं परिहरन्नपाकुर्वन्, तान् व्यञ्जकान् व्याहारान् व्यापारांश्च, कथं केन प्रकारेण, अभिसन्दधीत तिरस्कुर्वीतेत्यर्थः।

तैरपि विदग्धसाङ्केतिकव्याहाराद्यर्थं व्यञ्जना चेदङ्गीकार्य्यैव, तर्ह्यन्यत्रापि किमिति नाङ्गीक्रियेत। तत्रापि व्यञ्जनाऽङ्गीकारे त्वनुभवसिद्धमप्यपलपन्नुपहसनीय एव स्यात् सचेतसां सदसीत्याशयः।

इह 'पराभिसन्धानमधीयते यैः' इति कालिदासस्य, 'जनो विद्वानेकः सकलमभिसन्धाय तु जनम्' इति भवभूतेश्च प्रयोगादभिसन्दधातेरवधारितोऽप्यन्यत्र प्रतारणरूपोऽर्थो लोचनानुसारं प्रकरणानुरोधेन परित्यक्तः, तिरस्काररूपश्चोपात्तः। यद्वा तानपलप्य प्रतिवादिनः कथमभिसन्दधीत प्रतारयेदित्यवान्तरक्रियाऽध्याहारो विधेयः।

**रसिक विद्वानोंकी गोष्ठियोंमें शब्दसे नहीं कहे जासकनेवाले अत्यन्त चमत्कार जनक रमणीय अर्थोंको व्यञ्जना द्वारा अभिव्यक्त करनेवाली अनेक प्रकारकी वचन रचना चातुरी परिपूर्ण सांकेतिक उक्तियां एवं इशारे आदि व्यापार, शब्द रूपमें निबद्ध और अनिबद्ध दोनों प्रकारके पाये जाते हैं, इसलिये अपने आपको उपहास से बचानेवाला बुद्धिमान् व्यक्ति किस प्रकार उन वचन भङ्गियों एवं इशारे आदि व्यञ्जकोंका तिरस्कार कर सकता है, या उन ( व्यञ्जक वचन विन्यास एवं इशारे आदि ) का अपलाप कर प्रतिवादियोंकी वञ्चना कर सकता है।**

अथ व्यक्तिमतिरिक्तामस्वीकृत्य, व्यङ्ग्यप्रतीतिमनुमितिमेव मन्वानस्य तार्किकस्य मतमुपन्यस्यति—

**(ब्रूयात्) अस्त्यभिसन्धानावसरे व्यञ्जकत्वं शब्दानां गमकत्वम्। तच्च लिङ्गत्वम्, अतश्च व्यङ्ग्यप्रतीतिर्लिङ्गिप्रतीतिरेवेति लिङ्गलिङ्गिभाव एव तेषाम्, व्यङ्ग्यव्यञ्जकभावो नापरः कश्चित्। अतश्चैतदवश्यमेव बोद्धव्यम्, यस्माद् वक्त्रभिप्रायापेक्षया व्यञ्जकत्वमिदानीमेव त्वया प्रतिपादितम्। वक्त्रभिप्रायश्चानुमेयरूप एव।**

ब्रूयादित्यत्र 'अन्यः' इति योज्यम्। 'अभिसन्धानावसरे' इत्यस्यापि तत्रैव सम्बन्धः प्रतिभाति। शब्दानां गमकत्वं व्यञ्जकत्वमस्ति, न तु कश्चिदपलपति। चकारस्त्वर्थकः। तद्व्यञ्जकत्वं तु लिङ्गत्वमनुमितिसाधनत्वमेव, न त्वतिरिक्तं व्यक्ति-

-रूपम् । अतोऽस्माद्धेतोः । व्यङ्ग्यप्रतीतिर्लिङ्गप्रतीतिः साध्यानुमितिरेवेति तेषां व्यञ्ज-कत्वविशिष्टशब्द-तद्व्यङ्ग्यार्थानाम्, व्यङ्ग्यव्यञ्जकभावोऽपरोऽतिरिक्तो न कश्चित्, अपि तु लिङ्गलिङ्गिभावः साध्यसाधनभाव एव । अतोऽस्मादनुपदमुदीर्यमाणाद्धेतोरपि, एतद् व्यङ्ग्यव्यञ्जकत्वम्, एवं साध्यसाधनभावरूपं बोद्धव्यम् । यस्मात्, इदानीं मीमांसकमतव्याख्यानसमय एव, त्वया व्यक्तिवादिना, वक्त्रभिप्रायापेक्षया व्यञ्जकत्वं वक्तुरभिप्रायव्यञ्जकत्वं शब्दानां प्रतिपादितम् । चकारस्त्वर्थे । वक्तुरभिप्रायस्तु पर-कीयेच्छारूपत्वादनुमेयोऽनुमितिविषय एव, न तु व्यङ्ग्य इत्यर्थः ।

अयं भावः—व्यङ्ग्यस्य वस्तुप्रभृतेर्व्यञ्जकेन शब्द-तदर्थादिना सह नियतः कश्चन सम्बन्धो व्यक्तिवादिनाऽपि मन्तव्यः । अन्यथा सर्वत्रासम्बद्धार्थव्यञ्जनमा-पद्येत । स च सम्बन्धो ज्ञाप्यज्ञापकभाव एवौचित्यादिति व्याप्येन ज्ञापकेन शब्दादि-ना साधनेन, व्यापकस्य ज्ञाप्यस्य वस्त्वादेः साध्यस्य, बोधनमनुमानमेवेति न वस्त्वा-दिव्यङ्ग्यबोधनार्थं व्यञ्जनायाः प्रयोजनम् । तदुक्तं व्यक्तिविवेके महिमभट्टेन—

'वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति ।
सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता ॥' इति ।

परकीयेच्छाया अनुमेयमात्रत्वादिदं पुनर्वक्तुरभिप्रायस्य व्यङ्ग्यत्वं वदता व्यक्ति-वादिनाऽप्यनायत्याऽङ्गीकरणीयमेव । विशेषस्तु व्यक्तिविवेकादितोऽवसेयः ।

अब एक अतिरिक्त व्यञ्जना वृत्तिको न मानकर व्यङ्ग्य प्रतीतिको अनुमिति रूप ही माननेवाले नैयायिकोंका मत प्रस्तुत करते हैं—स्यादिति । ( पूर्वपक्ष ) कोई कह सकता है कि व्यञ्जनाके परित्याग करनेका अवसर है, क्योंकि शब्दोंके अन्यार्थगमकत्व ( बोधकत्व ) का ही नाम व्यञ्जकता है और वह गमकता लिङ्गत्व रूप ही है, इसलिये व्यङ्ग्यकी प्रतीति साध्यरूप लिङ्गीकी प्रतीति ही है, अत एव लिङ्गलिङ्गिभाव अर्थात् साध्य-साधनभाव ही उन शब्द-अर्थोंका व्यङ्ग्य-व्यञ्जकभाव सम्बन्ध है, लिङ्गलिङ्गिभावसे अलग कुछ नहीं है, इसलिये भी ऐसा अवश्य ही जानना चाहिये कि वक्ताके अभिप्रायकी दृष्टिसे व्यञ्जक-व्यङ्ग्यभावका प्रतिपादन तुमने (व्यञ्जनावादीने) अभी तुरत ही मीमांसक मतके खण्डन प्रसङ्गमें किया है, और वक्ताका अभिप्राय तो अनुमेय रूप ही है, क्योंकि अनुमान द्वारा ही परकीय इच्छा रूप अभिप्रायका बोध होता है, सारांश यह है कि व्यङ्ग्य वस्तु आदिके साथ व्यञ्जक शब्दार्थका कोई नियत सम्बन्ध अवश्य व्यञ्जनावादिको भी मानना चाहिये, अन्यथा सभी जगह असम्बद्धार्थकी भी व्यञ्जनासे प्रतीति होने लगेगी, और वह सम्बन्ध ज्ञाप्य-ज्ञापक भाव रूप ही उचित प्रतीत होता है,

इसलिये व्याप्य भूत शब्दादि साधनरूप ज्ञापकसे व्यापक वस्तु आदि साध्यरूप ज्ञाप्यका, बोधन अनुमान रूप ही है, इसलिये अनुमानसे ही गतार्थ हो जानेसे वस्तु आदि व्यङ्ग्यार्थके बोधनार्थ व्यञ्जनाकी आवश्यकता नहीं है।

प्रौढिवादेनाभ्युपेत्य खण्डयति—

**अत्रोच्यते—नन्वेवमपि यदि नाम स्यात्, तत् किं नश्छिन्नम्। वाचकत्वगुणवृत्तिव्यतिरिक्तो व्यञ्जकत्वलक्षणः शब्दव्यापारोऽस्तीत्यस्माभिरभ्युपगतम्। तस्य चैवमपि न काचित् क्षतिः। तद्धि व्यञ्जकत्वं लिङ्गत्वमस्तु, अन्यद्वा, सर्वथा प्रसिद्धशाब्दप्रकारविलक्षणत्वं शब्दव्यापारविषयत्वं च तस्यास्तीति नास्त्येवावयोर्विवादः।**

नामेति सम्भावनायाम्। एवं व्यञ्जकत्वस्य लिङ्गत्वतादात्म्यमपि यदि सम्भावितं स्यात्, तत्तदा, किं नश्छिन्नं काऽस्माकं हानिः? न काचिदित्यर्थः। यतोऽस्माभिर्वाचकत्वादिभ्यो भिन्नं व्यञ्जकत्वं शक्तिरूपमङ्गीकृतम्। तस्य व्यञ्जकत्वनिष्ठवाचकत्वाद्यतिरिक्तत्वस्य, एवं लिङ्गत्वाङ्गीकारेऽपि न क्षतिः। हि यतस्तद्वाचकत्वाद्यतिरिक्तत्वेनाङ्गीक्रियमाणं वस्तु लिङ्गत्वं ततोऽन्यद् वा किञ्चिद् भवतु, तथाऽपि तस्य धर्मस्य प्रसिद्धा ये शाब्दप्रकारा अभिधाऽऽदयस्तद्विलक्षणत्वं तेभ्यो भिन्नत्वं तदभिमतं सर्वथाऽस्त्येव, इति हेतोरावयोर्व्यक्त्यनुमितिवादिनोर्न विवादः।

व्यञ्जकत्वस्य वाचकत्वाद्यतिरिक्तत्वस्थापन एवास्माकमाग्रहः, तच्च तस्य लिङ्गत्वरूपतां वदता त्वयाऽप्यङ्गीकृतमेव, तत्कुतो नस्त्वया सह विवाद इत्यभिसन्धिः।

(उत्तर पक्ष) यदि थोड़ी देरके लिये व्यञ्जनाको लिङ्गत्व रूप मान भी लें तो उससे हमारी कुछ हानि नहीं होगी, क्योंकि हमने तो अभिधा और लक्षणासे अतिरिक्त ही व्यञ्जना नामक एक तीसरा शब्द व्यापार है यह स्वीकार किया है, इसलिये उस वाचकत्वाद्यतिरिक्त व्यञ्जनाको लिङ्गत्व रूप मान लेने पर भी कोई हानि नहीं दिखाई देती, क्योंकि वह व्यञ्जना चाहे लिङ्गत्व रूप हो या अन्य ही कुछ हो, हर हालतमें अभिधा और लक्षणा रूप शब्द व्यापारसे विलक्षण ही वह व्यञ्जना शब्दवृत्ति व्यापार विशेष है यह सबको स्वीकार करना होगा, इसलिये उस विषयमें हमारा तुम्हारा कोई विवाद नहीं है, अर्थात् व्यञ्जनाको अभिधा-लक्षणासे भिन्न माननेमें ही हमारा आग्रह है, सो तो उसको लिङ्गत्व मानने वाले आप भी मान ही रहे हैं, इसलिये आपके साथ हमारा कोई मतभेद नहीं है।

प्रौढ्याऽभ्युपगतमसिद्धान्तमतमपास्यति—

**न पुनरयं परमार्थो यद् व्यञ्जकत्वं लिङ्गत्वमेव सर्वत्र, व्यङ्ग्यप्रतीतिश्च लिङ्गिप्रतीतिरेवेति।**

उभयोर्वैयधिकरण्येऽपि कुतस्तादात्म्यमित्याशयः ।

परन्तु वास्तवमें यह बात नहीं है कि व्यञ्जना सभी जगह लिङ्गत्व रूप ही होती है और व्यङ्ग्यकी प्रतीति अनुमिति रूप लिङ्ग जन्य लिङ्गी (साध्य) की प्रतीति ही है।

सिंहावलोकनन्यायेनाभ्युपगमसाधनमुक्तमपि दूषयति—

यदपि स्वपक्षसिद्धयेऽस्मदुक्तमनूदितं त्वया 'वक्त्रभिप्रायस्य व्यङ्ग्यत्वेनाभ्युपगमात् तत्प्रकाशने शब्दानां लिङ्गत्वमेव' इति, तदेतद् यथाऽस्माभिरभिहितम्, तद्विभज्य प्रतिपाद्यते, श्रूयताम्—

द्विविधो हि विषयः शब्दानाम्—अनुमेयः प्रतिपाद्यश्च। तत्रानुमेयो-विवक्षालक्षणः। विवक्षा च शब्दस्वरूपप्रकाशनेच्छा, शब्देनार्थप्रकाशनेच्छा चेति द्विप्रकारा। तत्राद्या न शाब्दव्यवहाराङ्गम्, सा हि प्राणित्वमात्रप्रतिपत्तिफला। द्वितीया तु शब्दविशेषावधारणावसितव्यवहिताऽपि शब्दकारणव्यवहारनिबन्धनम्। ते तु द्वे अप्यनुमेयो विषयः शब्दानाम्। प्रतिपाद्यस्तु प्रयोक्तुरर्थप्रतिपादनसमीहाविषयीकृतोऽर्थः। स च द्विविधो वाच्यो व्यङ्ग्यश्च। प्रयोक्ता हि कदाचित् स्वशब्देनार्थं प्रकाशयितुं समीहते, कदाचित् स्वशब्दानभिधेयत्वेन प्रयोजनापेक्षया कयाचित्। स तु द्विविधोऽपि प्रतिपाद्यो विषयः शब्दानां न लिङ्गितया स्वरूपेण प्रकाशते, अपि तु कृत्रिमेणाकृत्रिमेण वा सम्बन्धान्तरेण।

विभज्य विषयविभागं विधाय। विषयः शब्दोच्चारणोत्तरं प्रतीतिगोचरोऽर्थः। विवक्षा वक्तुमिच्छा। सा च शब्दानां स्वरूपस्यानुपूर्व्याः प्रकाशनस्येच्छा, शब्दान् प्रयुञ्जीय इत्याकारिका, शब्दोच्चारणानुकूलयत्नानुकूला, शब्दानां प्रयुयुक्षालक्षणैका, ततोऽर्थप्रकाशनस्येच्छा 'अर्थं प्रतिपादयेयम्' इत्याकारिकाऽर्थप्रतिपादनानुकूलयत्नानुकूलाऽर्थप्रतिपिपादयिषारूपा द्वितीयेति द्विप्रकारा विवक्षा। तत्र तयोः। आद्या प्रयुयुक्षा। शाब्दव्यवहारस्य शाब्दबोधस्याङ्गमुपकारिणी न। हि यतः सा प्राणित्वमात्रस्य प्रतिपत्तिरनुमितिः फलं यस्यास्तादृशी। शब्दप्रयुयुक्षया केवलं प्राणित्वमनुमातुं शक्यते, अप्राणिनां तदभावात्, न तु शाब्दज्ञानं जनयितुम्। द्वितीयाऽर्थप्रतिपिपादयिषा तु, शब्दविशेषस्य वाचकशब्दस्यावधारणावसितेन निर्णयाध्यवसानेन, व्यवहिता सान्तरालाऽपि, शब्दस्य कारणं यो व्यवहारो व्यापारः कण्ठताल्वाद्यभिघातलक्षणः, तन्निबन्धनं तत्कारणीभूता। ते तु द्वे अपि तदिच्छाद्वयमपि, अनुमेये एव, परकीयेच्छाया अनुमितिमात्रगोचरत्वात्। अर्थप्रतिपादनस्य समीहयेच्छया

विषयीकृतोऽर्थो वाच्यो व्यङ्ग्यश्च। हि यतः प्रयोक्ता पुरुषः। स्वशब्देन वाचकशब्देन। अर्थं वाच्यम्। कयाचिद् विलक्षणया प्रयोजनस्य गोपनकृतार्थसौन्दर्यातिरेचनादिरूपस्यापेक्षया, स्वशब्दानभिधेयत्वेन वाचकशब्दावाच्यत्वेन, अर्थं व्यङ्ग्यं प्रकाशयितुं समीहते। द्विविधो वाच्यव्यङ्ग्यलक्षणः। लिङ्गितया स्वरूपेण साध्यत्वरूपेणानुमेयत्वेनेति यावत्, न प्रकाशते, किन्तु तार्किकमते कृत्रिमेण, मीमांसकादिनयेऽकृत्रिमेण, सम्बन्धान्तरेणाभिधाव्यञ्जनालक्षणेन।

प्रयोक्तुः शब्दप्रयुयुक्षा, ततोऽर्थप्रतिपिपादयिषा चोच्चार्यमाणशब्दतोऽनुमीयत इत्यनुमेयमेव तदिच्छाद्वयम्। वाच्यो व्यङ्ग्यश्चार्थो नानुमेयः, अभिधाव्यञ्जनाभ्यामेव बोधितत्वादनुमित्यगोचरत्वात्। तस्मान्न व्यक्तिरनुमित्या गतार्थेति भावः।

जो भी आपने अपने पक्षकी सिद्धि करनेके लिये हमारे कथनका अनुवाद किया कि तुमने ( व्यञ्जनावादी मैंने ) वक्ता पुरुषके अभिप्रायको व्यङ्ग्य माना है और उस वक्ताके अभिप्रायके प्रकाशन करनेमें शब्दोंका लिङ्गत्व ही है, इसलिये इस विषयमें जिस प्रकार हमने कहा है, उसको अच्छी तरह अलग अलग खोलकर प्रतिपादन करते हैं, आप सावधान पूर्वक सुनें-शब्दोंका दो प्रकारका विषय होता है, एक अनुमेय और दूसरा प्रतिपाद्य, उनमेंसे अर्थको कहनेकी इच्छा रूप विवक्षा अनुमेय कहलाती है और विवक्षा भी दो प्रकारकी होती है, एक शब्दके आनुपूर्वी रूपसे प्रकाशन करनेकी इच्छा और दूसरी, शब्दसे अर्थ प्रकाशन करनेकी इच्छा। उनमें पहिली अर्थात् शब्द स्वरूप प्रकाशनेच्छा शाब्दबोधकी उपकारिणी नहीं है, क्योंकि उसका केवल प्राणित्व मात्रकी प्रतीति कराना ही प्रयोजन है, अर्थात् अर्थहीन शब्दकी व्यक्त या अव्यक्त एक विलक्षण ध्वनि कोई चेतन ही कर सकता है अचेतन नहीं, अतः शब्दके स्वरूप मात्रके प्रकाशनसे प्राणीका बोध तो अवश्य होता है, परन्तु उससे किसी प्रकारके अर्थका ज्ञान न हो सकनेके कारण वह शाब्द बोधमें उपयोगी नहीं होता है। परन्तु दूसरी विवक्षा ( अर्थ प्रकाशनेच्छा ) तो वाचक शब्द विशेषके निश्चयात्मक अवधारण करनेसे व्यवहित होने पर भी शाब्द बोध व्यवहारकी उपकारिणी होती है। ये दोनों भी शब्द सम्बन्धी विवक्षायें शब्दोंके अनुमेय विषय हैं, अर्थात् शब्द विशेषका श्रवण कर शब्द स्वरूप प्रकाशन की इच्छाका और शब्द द्वारा अर्थ प्रकाशनकी इच्छाका अनुमान होता है, अतः ये दोनों विवक्षायें शब्दके अनुमेय विषय कहलाती हैं, और प्रयोक्ता व्यक्तिकी अर्थप्रतिपादनेच्छाका विषयीभूत अर्थ शब्दका प्रतिपाद्य विषय होता है। और वह ( प्रतिपाद्य विषय ) वाच्य और व्यङ्ग्यके भेदसे दो प्रकारका होता है, क्योंकि प्रयोक्ता कभी अर्थको अपने वाचक शब्दके द्वारा प्रकाशित करना चाहता है, और

कभी किसी विलक्षण गोपनकृत सौन्दर्यातिशय रूप प्रयोजन विशेषको द्योतित करनेकी दृष्टिसे स्ववाचक शब्दसे नहीं कहकर दूसरे ही ढङ्गसे प्रकाशित करना चाहता है। इनमें पहिला स्वशब्दाभिधेय अर्थ वाच्य और दूसरा स्वशब्दानभिधेय अर्थ व्यङ्ग्य कहलाता है। शब्दोंका उपर्युक्त दोनों प्रकारका यह प्रतिपाद्य विषय लिङ्गि अर्थात् अनुमेय रूपसे प्रकाशित नहीं होता, अपितु तार्किक मतमें कृत्रिम संकेतादि रूप अनित्य सम्बन्धसे या मीमांसकादि मतमें अकृत्रिम अभिधा व्यञ्जना रूप अन्य सम्बन्धसे प्रकाशित होता है। सारांश यह है कि प्रयोक्ताके द्वारा उच्चार्यमाण शब्दसे उसकी शब्दप्रयोगेच्छा और अर्थप्रतिपिपादयिषा रूप इच्छाद्वयका अनुमान किया जाता है, क्योंकि अनुमानसे ही परकीय इच्छाका पता लग सकता है, परन्तु वाच्य और व्यङ्ग्य अर्थ अभिधा-व्यञ्जनासे ही बोधित होनेके कारण अनुमितिका विषय नहीं होता, इसलिये अनुमानसे व्यञ्जना गतार्थ नहीं हो सकती है।

वाच्यव्यङ्ग्ययोरनुमेयत्वाभावमुपपादयति—

विवक्षाविषयत्वं हि तस्यार्थस्य शब्दैर्लिङ्गतया प्रतीयते न तु स्वरूपम्।

तस्य द्विविधस्यापि प्रतिपाद्यस्यार्थस्य, विवक्षाविषयत्वं तद्विषयकविवक्षैव वा शब्दैरुच्चार्यमाणैर्लिङ्गतया साधनत्वेन साधनीभूतैरिति यावत्, प्रतीयतेऽनुमीयते, न तु स्वरूपमर्थद्वयस्याकारोऽनुमीयत इति शेषः।

'अयमर्थोऽस्य विवक्षाविषयः, एतदुच्चारितशब्दबोध्यत्वात्' इत्यनुमित्याऽर्थनिष्ठा विवक्षाविषयतैव साध्यते, न त्वर्थः, तस्य पक्षत्वादित्यभिप्रायः।

वाच्य और व्यङ्ग्यमें अनुमितिविषयताका अभाव बतलाते हैं—विवक्षेति। प्रयोक्ताके शब्दोंको सुनकर उच्चार्यमाण उन्हीं शब्द रूप हेतुओंसे उस अर्थकी विवक्षा अर्थात् वक्ता अमुक अर्थ बतलाना चाहता है, इस प्रकारकी इच्छा तो अनुमेय रूपसे प्रतीत हो सकती है, परन्तु उस अर्थका स्वरूप अनुमेय रूपसे नहीं प्रतीत होता है, क्योंकि 'यह अर्थ वक्ताकी विवक्षाका विषय है, क्योंकि इस शब्दके बोध्य होनेसे' इस अनुमानसे विवक्षा-विषयता ही साध्य होकर अनुमेय होती है, पक्ष भूत अर्थ तो सिद्ध होनेसे अनुमेय नहीं होता।

उक्तान्यथामननेऽनुपपत्तिमाचष्टे—

यदि हि लिङ्गतया तत्र शब्दानां व्यवहारः स्यात्, तच्छब्दार्थे सम्यङ्मिथ्यात्वादिविवादा एव न प्रवर्तेरन्, धूमादिलिङ्गानुमितानुमेयान्तरवत्।

अयं भावः—यदि वाच्यव्यङ्ग्ययोरनुमितिरेव भवेत्, तर्हि तदर्थविशेष्यको यथाऽर्थत्वायथाऽर्थत्वप्रकारकः संशयः एव नोदियात्, अनुमितेर्निश्चयात्मकत्वात्। न

हि धूमहेतुकानुमितिगोचरवह्निविषयकस्तादृक् सन्देह उदेति। उत्तिष्ठन्ते च विप्रतिपन्नानां संशया इति न तस्यानुमितिविषयत्वम्।

यदि उस अर्थके विषयमें लिङ्गरूपसे शब्दका व्यापार हो अर्थात् शब्दसे अनुमान द्वारा अर्थकी प्रतीति हो तो धूमादिलिङ्गसे अनुमित वह्नि आदि साध्यके समान उस शब्दार्थके विषयमें यथार्थत्व या अयथार्थत्वका संशय ही उत्पन्न न हो अर्थात् यदि वाच्य और व्यङ्ग्यकी अनुमिति ही हो तो अनुमितिके निश्चयात्मक होनेसे उक्त अर्थ विशेष्यक मिथ्यात्व-अमिथ्यात्व प्रकारक संशय ही उत्पन्न नहीं हो क्योंकि धूमहेतुक पर्वतमें वह्नि विषयक अनुमिति हो जाने पर पर्वतमें वह्नि है या नहीं, इस प्रकारका संशय नहीं होता है, परन्तु प्रकृतमें तो अर्थके ज्ञान हो जाने पर भी यह अर्थ ठीक है या नहीं, इस प्रकारका संशय होता है, अतः वह (अर्थ) अनुमेय नहीं है।

ननु व्यङ्ग्यार्थस्य शब्दसम्बन्धित्वविरहात्, तत्वे वा परम्परया सम्बन्धित्वाच्छब्दतस्तस्य प्रतीतिर्न सम्भवतीतिशङ्कामपनयति—

व्यङ्ग्यश्चार्थो वाच्यसामर्थ्याक्षिप्ततया वाच्यवच्छब्दस्य सम्बन्धीभवत्येव। साक्षादसाक्षाद्भावो हि सम्बन्धस्याप्रयोजकः। वाच्यवाचकभावाश्रयत्वं च व्यङ्ग्यव्यञ्जकत्वस्य प्रागेव दर्शितम्।

शब्दस्य वाच्यार्थो यथाऽभिधासम्बन्धेन सम्बन्धी, तथैव व्यङ्ग्योऽपि व्यञ्जनासम्बन्धेन। भेदस्त्वियानेव, यदभिधा साक्षात्सम्बन्धो व्यञ्जना चार्थद्वारकत्वात् परम्परासम्बन्धः। नैतावता काऽपि हानिः, सम्बन्धे साक्षाद्भावानिवेशात्। न च व्यञ्जनायाः परम्परासम्बन्धत्वे शङ्कनीयम्, अस्या अभिधोपजीवकत्वस्य प्रागिहैवोद्द्योते भेदप्रदर्शनप्रसङ्गेनोक्तत्वादिति तात्पर्यम्।

व्यङ्ग्यार्थका शब्दके साथ कोई साक्षात् सम्बन्ध नहीं रहनेसे शब्दद्वारा उसकी प्रतीति नहीं हो सकती, इस प्रश्नका समाधान करते हैं—व्यङ्ग्यश्चेति। शब्दका वाच्यके साथ अभिधा सम्बन्धके समान व्यङ्ग्य अर्थके साथ भी व्यञ्जना सम्बन्ध होनेसे व्यङ्ग्यार्थ भी वाच्यकी व्यञ्जनात्मक सामर्थ्यसे आक्षिप्त होनेके कारण शब्दका सम्बन्धी होता ही है, फरक इतना ही है कि वाच्यार्थके साथ शब्दका साक्षात् सम्बन्ध है और व्यङ्ग्यार्थके साथ वाच्यद्वारक परम्परा सम्बन्ध है, किन्तु इतने मात्र भेद होनेसे कोई हानि नहीं होती, क्योंकि साक्षात्त्व या असाक्षात्त्व सम्बन्धका प्रयोजक नहीं है। व्यञ्जनाका अभिधात्मक वाचकताके ऊपर ही निर्भर होनेके कारण पूर्वमें ही उसके परम्परा सम्बन्धत्वको प्रदर्शित कर चुके हैं।

उपसंहरति—

**तस्माद् वक्त्रभिप्रायरूपव्यङ्ग्ये लिङ्गतया शब्दानां व्यापारः। तद्विषयीकृते तु प्रतिपाद्यतया।**

तस्माद् वक्तुरभिप्रायस्य परेच्छारूपत्वेनानुमितिमात्रविषयत्वात्। व्यङ्ग्य इत्युक्तिस्तु परमतानुसारेण। शब्दानां लिङ्गतया हेतुत्वेन व्यापारः। तद्विषयीकृते विवक्षिते तु वाच्यव्यङ्ग्यत्वाभ्यां द्विविधेऽर्थे प्रतिपाद्यतया व्यवहारः। विवक्षाऽनुमेयैव, तदनुमितौ चोच्चार्यमाणः शब्द एव लिङ्गम्। व्यङ्ग्यत्वं च तस्या नास्ति। यश्च वक्तृविवक्षाविषयो द्विविधो वाच्यो व्यङ्ग्यश्चार्थः, स शब्दानां प्रतिपाद्यो विषयो नानुमेयः, तदीयसम्बन्धस्य नियतत्वाभावेन तं प्रति शब्दानां लिङ्गत्वासम्भवादिति भावः।

इसलिये वक्ताका अभिप्राय रूप व्यङ्ग्य तो परेच्छा रूप होनेके कारण शब्दरूप लिङ्गसे अनुमान द्वारा अनुमेय ही होता है, इसलिये उसमें अनुमिति विषयताका ही व्यवहार होता है, परन्तु उसके तात्पर्य विषयीभूत अर्थोंमें तो प्रतिपाद्य रूपसे व्यवहार होता है, अर्थात् वक्ताके अभिप्राय रूप व्यङ्ग्यके विषयमें ही शब्दोंका लिङ्गरूपसे व्यापार होता है, परन्तु उसके विषयीभूत अर्थके विषयमें तो प्रतिपाद्य रूपसे ही शब्दका व्यापार ( व्यञ्जना ) होता है

प्रतिपाद्यार्थद्वयेऽपि व्यङ्ग्यस्य व्यञ्जनामात्रगम्यत्वं दर्शयति—

**प्रतीयमाने तस्मिन्नभिप्रायरूपे च वाचकत्वेनैव व्यापारः, सम्बन्धान्तरेण वा? न तावद् वाचकत्वेन, यथोक्तं प्राक्। सम्बन्धान्तरेण व्यञ्जकत्वमेव।**

प्रतीयमाने व्यङ्ग्ये। तस्मिन्ननभिप्रायरूपे वस्त्वादौ। अभिप्रायरूपे यथा—

'उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि।' इत्यादौ चुम्बनेच्छादिलक्षणे। यथोक्तं प्राक् तदर्थस्य सङ्केतितत्वाभावादभिधया बोधयितुमशक्यत्वम्। शब्दानामिति शेषः। सम्बन्धान्तरेणेति चेदङ्गीक्रियते, तदा तदेव सम्बन्धान्तरं व्यञ्जना।

यः खल्विच्छारूपस्तदतिरिक्तश्च शब्दानां व्यङ्ग्योऽर्थः, तस्य सङ्केतितत्वाभावान्नाभिधाबोध्यत्वम्, प्रतीतिगोचरत्वाच्च नापलपनार्हत्वमित्यगत्या यत् तद्बोधनोपयोगि व्यापारान्तरं कल्प्यते, तदेव व्यञ्जनेत्याशयः।

अभिप्रायस्येदानीमेवानुमेयमात्रत्वमुक्त्वा व्यङ्ग्यत्वमुच्यत इत्यसङ्गतमिति चेत्, न, यतो विवक्षारूपस्य वक्तुरभिप्रायस्यानुमितिमात्रगम्यत्वमुक्तम्। वाच्यशिवाद्य-

भिप्रायस्य तु व्यङ्गयत्वमुच्यत इति विषयभेदः। सर्वविधेच्छानामनुमितिमात्रविषयत्वमेवेति न नियमः, तथासति 'देवदत्तो जिगमिषति' इत्यादौ देवदत्तसमवेतगमनेच्छाभाश्शाब्दान्वयप्रवेशो न स्यादिति द्रष्टव्यम्।

अब प्रतिपाद्य रूप उक्त अर्थ द्वयमें भी व्यङ्ग्यका व्यञ्जनामात्र गम्यत्व बतलाते हैं—प्रतीयमान इति। उस प्रतीयमान वस्तुरूप अनभिप्रायात्मक व्यङ्ग्यमें एवं अभिप्राय रूप व्यङ्ग्यमें क्या अभिधात्मक वाचकतासे ही व्यापार होता है? या अन्य (व्यञ्जना) सम्बन्धसे? (अभिप्राय रूपमें जैसे—'उमामुखे बिम्बफलाधरोष्ठे' इत्यादि स्थलमें पार्वती मुख चुम्बन विषयक शिवजीके अभिप्राय रूप इच्छामें) उनमें प्रथम पक्ष (वाचकत्व व्यापार) ठीक नहीं कहा जा सकता, क्योंकि व्यङ्ग्यार्थके साथ संकेत ग्रह नहीं रहनेसे शब्द अभिधावृत्ति द्वारा इसका बोध नहीं करा सकता है। यदि द्वितीयपक्ष (सम्बन्धान्तर) मानते हैं तो वही सम्बन्धान्तर व्यञ्जना है, अर्थात् शब्दोंका इच्छा रूप या अन्य जो व्यङ्ग्यार्थ है, उसमें संकेतग्रह नहीं रहनेसे अभिधा द्वारा उसका बोध नहीं हो सकता और प्रत्यक्ष अनुभूत होनेसे उसका अपलाप भी नहीं किया जा सकता, इसलिये उसके बोधनार्थ व्यञ्जनात्मक व्यापार अवश्य मानना होगा। यहाँ पर एक बात अवश्य ध्यानमें रखनी चाहिये कि पूर्वोक्त सिद्धान्तानुसार परेच्छारूप वक्ताके अभिप्रायके अनुमेय होने पर भी वाच्यभूत शिवजीका चुम्बनाभिलाष रूप अभिप्राय व्यङ्ग्य ही है, अनुमेय नहीं, क्योंकि विषयभेद होनेसे विरोध नहीं लगता है।

ननु तत् सम्बन्धान्तरं लिङ्गलिङ्गिभाव एव कुतो न कल्प्यत इत्याक्षेपं समाधत्ते—

**न च व्यञ्जकत्वं लिङ्गत्वरूपमेव, आलोकादिष्वन्यथा दृष्टत्वात्।**

आलोके घटादिनिरूपिता व्यञ्जकता विद्यते, न तु लिङ्गता, घटाद्यनुमितिसाधनत्वाभावादालोकादेः। तथा च व्यभिचारस्य स्फुटत्वान्न तयोस्तादात्म्यमिति भावः।

उस सम्बन्धान्तरको व्यञ्जना न मानकर लिङ्गलिङ्गिभाव ही क्यों नहीं मानते, इस आक्षेपका समाधान करते हैं—नचेति। दीपक आदिके आलोक (प्रकाश) में लिङ्गत्वके अभावमें भी घटादिका व्यञ्जकत्व (प्रकाशकत्व) देखा जाता है, इसलिये व्यञ्जकता हमेशा लिङ्गत्वरूप ही नहीं होती है, अर्थात् दीप घट आदिका प्रकाशक तो होता है, परन्तु वह घटादिका अनुमापक नहीं होता, इसलिये व्यभिचार दोष होनेसे व्यञ्जकको लिङ्ग ही कहना कोई आवश्यक एवं उचित नहीं है।

निगमयति—

**तस्मात् प्रतिपाद्यो विषयः शब्दानां न लिङ्गत्वेन सम्बन्धी, वाच्यवत्।**

**यो हि लिङ्गित्वेन तेषां सम्बन्धी यथा दर्शितो विषयः, स न वाच्यत्वेन प्रतीयते, अपि त्वौपाधिकत्वेन।**

प्रतिपाद्यो वाच्यव्यङ्ग्योभयरूपः लिङ्गत्वेन सम्बन्धी न—अनुमेयो न। वाच्यवदिति दृष्टान्तः—यथा प्रतिपाद्यो वाच्यो नानुमेयः, तथैव व्यङ्ग्योऽपि। वाच्यस्याभिधामात्रबोध्यत्वस्य निर्णीतत्वाद् दृष्टान्तता। यो विवक्षालक्षणः। तेषां शब्दानाम्। औपाधिकत्वेन वाच्याद्यर्थविशेषणत्वेन।

शब्दानां वाच्य इव व्यङ्ग्योऽपि प्रतिपाद्यो नानुमेयः, अनुमेयश्चार्थो वक्त्रिच्छारूपो न वाच्यः, किन्तु वाच्यादिविशेषणीभूत इत्युभयोर्वैलक्षण्यमिति सारम्।

इसलिये प्रतिपाद्यभूत व्यङ्ग्य विषय, वाच्यके समान ही शब्दके साथ लिङ्गीरूपसे सम्बद्ध नहीं है, अर्थात् जैसे वाच्यार्थ शब्दसे अनुमेय नहीं होता है, वैसे ही व्यङ्ग्यार्थ भी शब्दसे अनुमेय नहीं है। क्योंकि जो विषय लिङ्गीरूपसे उन शब्दोंका सम्बन्धी अर्थात् शब्दोंसे अनुमेय होता है, जैसा कि पहिले अभी दिखलाया गया वक्ताका अभिप्रायात्मक विवक्षारूप विषय है, वह वाच्यरूपसे प्रतीत नहीं होता, अपितु औपाधिक ( वाच्यादि अर्थके विशेषणीभूत ) रूपसे ही प्रतीत होता है, अर्थात् शब्दोंका वाच्यकी तरह व्यङ्ग्य भी प्रतिपाद्य ही है, अनुमेय नहीं क्योंकि वक्ताकी इच्छा रूप जो अर्थ अनुमेय होता है, वह वाच्य नहीं, किन्तु वाच्यादिके विशेषणीभूत है, इसलिये दोनोंमें स्पष्ट ही वैलक्षण्य है।

प्रतिपाद्यस्याप्यनुमेयत्वाङ्गीकारे कथितामेवापत्तिं पुनः स्मारयति—

**प्रतिपाद्यस्य च विषयस्य लिङ्गित्वे तद्विषयाणां विप्रतिपत्तीनां लौकिकीनां लौकिकैरेव क्रियमाणानामभावः प्रसज्येतेति एतच्चोक्तमेव।**

लिङ्गित्वेऽनुमेयत्वे। स एव विषयो यासां तास्तद्विषयाः, तासाम्। लौकिकीनां लोके भवानाम्। 'लौकिकानाम्' इत्यपपाठः, भवार्थेऽणि तदन्तात् 'टिड्ढाणञ' इत्यादिसूत्रेण विहितस्य ङीपो दुर्वारत्वात्। अङ्गाजाड्ये तु—लौकिकशब्दस्याजादिगणे पाठः कल्पनीयः। उक्तमेव प्राक्—'यदि हि' इत्यादिना।

अयं भावः—यदि वाच्यो व्यङ्ग्यश्चार्थोऽनुमेयः स्यात्, तदोक्तयुक्त्या तद्विषयकसत्यत्वतदभावप्रकारकः सन्देहो न भवेत्, अनुमितेर्निश्चयात्मकत्वेन समानविषयतायां निश्चयस्य सन्देहं प्रति प्रतिबन्धकत्वात्। भवति च तत्र सन्देहः, तस्मादसौ नानुमितिविषयः। विवक्षाया अनुमेयत्वाङ्गीकारे तु तस्या इच्छारूपत्वेन सन्देहो नोचित इति तदुत्थानासम्भवो न दोषाय। न हीच्छायां कोऽपि विप्रतिपद्यते, अर्थे तु विप्रतिपन्नो भवत्येव।

प्रतिपाद्यको भी बलात्कार अनुमेय मानने पर पूर्व कथित आपत्तिका ही स्मरण दिलाते हैं—प्रतिपाद्येति । प्रतिपाद्य विषयको भी यदि अनुमेय ही मानें तो उसके विषयमें लौकिक पुरुषों द्वारा की जानेवाली पूर्वोक्त विप्रतिपत्तियोंका अभाव प्राप्त होगा, जिसको कि 'यदि हि'–इत्यादि शब्दोंसे पहले ही कह चुके हैं, अर्थात् यदि वाच्य और व्यङ्ग्य अर्थ अनुमेय ही हो तो उक्त युक्तिसे तद्विषयक सत्यत्व और मिथ्यात्वका सन्देह ही नहीं होगा, क्योंकि, अनुमितिके निश्चयात्मक होनेसे समान विषयक सन्देहके प्रति प्रतिबन्धकत्व है, परन्तु उक्त विषयमें सन्देह होता है, इस लिये वह अनुमेय नहीं माना जा सकता । वक्ताकी इच्छाको अनुमेय मानने पर तो कोई दोष नहीं होता, क्योंकि उसके विषयमें सन्देह नहीं होता, इसलिये उसमें किसीको विप्रतिपत्ति नहीं होती, अपितु अर्थके विषयमें ही विप्रतिपत्ति होती है ।

ननु व्यङ्ग्यस्यापि प्रतीत्यनन्तरं सत्यत्वासत्यत्वावधारणायानुमितिरेव शरणीकरणीयेत्यनुमेयत्वमेव, तत्कथं पुनरिदानीं तदभाव उच्यत इत्याशङ्कां दृष्टान्तोपन्यासेन निराकरोति—

**यथा च वाच्यविषये प्रमाणान्तरानुगमेन सम्यक्त्वप्रतीतौ क्वचित् क्रियमाणायां तस्य प्रमाणान्तरविषयत्वे सत्यपि, न शब्दव्यापारविषयताहानिः, तद्वद् व्यङ्ग्यस्यापि ।**

न वयं व्यङ्ग्यस्यानुमेयतां निषेधामः, अपि तु व्यङ्ग्यत्वं व्यवस्थापयामः । तथा हि—यथा वाच्यस्य शाब्दविषयताऽनन्तरम्–'आप्तवादाविसंवादसामान्यादनुमेयता ।' इत्यभियुक्तोक्तेः सत्यत्वावधारणार्थमनुमितिगोचरताऽपि भवति, न च तेनानुमेयत्वेन वाच्यत्वमपनीयते, तथैव व्यङ्ग्यस्य व्यञ्जनया प्रत्यायनादुत्तरं सत्यत्वनिर्णयार्थमनुमितिविषयत्वेऽपि व्यङ्ग्यत्वं नोपरमतीत्याकूतम् ।

व्यङ्ग्यार्थ प्रतीतिके बाद भी उसके सत्यत्व-असत्यत्वके निश्चयार्थ अनुमानकी ही आवश्यकता होगी, इसलिये व्यङ्ग्यार्थ भी अनुमानका ही विषय होगा, फिर सिद्धान्त पक्षमें उसकी अनुमान विषयताका जो खण्डन किया गया है, वह ठीक नहीं मालूम पड़ता, इस आक्षेपका समाधान करते हैं—यथा चेति । जैसे वाच्यार्थके विषयमें अनुमानादि प्रमाणान्तरसे प्रामाण्य ग्रहण होनेके कारण वाच्यार्थमें अनुमानादिके प्रमाण विषय होने पर भी अभिधात्मक शब्द व्यापारके विषयत्वकी हानि नहीं होती; याने वाच्यार्थ शब्द बोधका विषय माना ही जाता है, वैसे ही व्यङ्ग्यार्थमें भी प्रामाण्य-अप्रामाण्यके निश्चयके लिये अनुमानादि प्रमाणान्तरोंकी श्यकता होने पर भी उसे (व्यङ्ग्यार्थको) व्यञ्जनात्मक शब्द व्यापारके

विषय माननेमें कोई क्षति नहीं है, अर्थात् हम व्यङ्ग्यके अनुमेयत्वका खण्डन नहीं करते, अपितु उसमें व्यङ्ग्यत्वका ही स्थापन करते हैं, इसलिये जैसे वाच्यके शब्द बोधविषयत्व होनेके बाद उसके सत्यत्वके निश्चयार्थ अनुमिति विषयत्व भी होता है, इसी प्रकार व्यञ्जना द्वारा व्यङ्ग्यकी प्रतीति होनेके बाद उसके सत्यत्व निर्णयार्थ अनुमिति विषयता मानने पर भी व्यङ्ग्यत्वकी हानि नहीं हो सकती।

सर्वेषां वाच्यादीनामनुमेयत्वोक्तिः पुनरभ्युपगमवाद एव, न त्विह काव्येषु प्रयोजिकेति दर्शयति—

**काव्यविषये च वाच्यव्यङ्ग्यप्रतीतीनां सत्यत्वासत्यत्वनिरूपणस्याप्रयोजकत्वमेवेति तत्र प्रमाणान्तरव्यापारपरीक्षा, उपहासायैव सम्पद्यते।**

'ज्योतिष्टोमेन यजेत' इत्यादि श्रौतवाक्यानां विधायकतया तदर्थस्य प्रामाणिकत्वग्रहायानुमानादिप्रमाणगोचरता भवति। काव्यवाक्यानां त्वद्भुतविच्छित्तिशालिप्रतीतिमात्रप्रयोजनकत्वेन तत्प्रतिपाद्यधर्मिकसत्यत्वनिर्णयस्य फलानाधायकत्वेनानपेक्ष्यतया प्रमाणान्तरानुसरणं नावश्यकम्। तत्र सत्यत्वपरीक्षणमुपक्रम्यमाणं प्रत्युत 'अयं केवलशुष्कतर्ककर्कशीकृतमतिर्न त्वास्वादरसिकः सहृदयः' इति विदग्धपरिषद्बहिर्हितं कर्तुरुपहासमेव जनयतीति सारम्।

सभी वाच्य-व्यङ्ग्योंमें अनुमिति विषयताका कथन केवल पूर्व पक्षके अनुरोधसे ही किया गया है, वास्तवमें तो काव्यमें उसकी कोई आवश्यकता ही नहीं है, यह दिखलाते हैं—काव्यविषय इति। अन्य लौकिक-वैदिक वाक्योंके अनुष्ठानादि परक होनेसे लोगोंके प्रवृत्त्यर्थ उनमें प्रामाण्य या अप्रामाण्य ज्ञानकी आवश्यकता होने पर भी काव्य वाक्योंके केवल अलौकिक चमत्कार जनक प्रतीति कराना मात्र प्रयोजन होनेके कारण, उनमें प्रामाण्य-अप्रामाण्य ज्ञानकी कोई आवश्यकता ही नहीं है, इसलिये काव्यके विषयमें व्यङ्ग्य प्रतीतिके सत्यत्व या असत्यत्वके निरूपण का अप्रयोजकत्व होनेसे उनमें अनुमानादि प्रमाणान्तरके व्यापारका विचार करना केवल उपहास जनक ही होगा।

निगमयति—

**तस्माल्लिङ्गिप्रतीतिरेव सर्वत्र व्यङ्ग्यप्रतीतिरिति न शक्यते वक्तुम्।**

सर्वत्रेत्यनेन क्वचिन्नियतसम्बन्धस्थले तथात्वमप्यनुमन्यत इत्यवगन्तव्यम्।

इसलिये सभी जगह लिङ्गिप्रतीति (अनुमिति) ही व्यङ्ग्य प्रतीति होती है, यह नहीं कहा जा सकता है।

नन्वेवं व्यञ्जकत्वव्यापिकाऽनुमितिसाधनता माभूत्, व्यञ्जकतैव तद्व्यापिका कुतो न स्वीक्रियते इत्याशङ्कायामाह—

**यत्त्वनुमेयरूपव्यङ्ग्यविषयं शब्दानां व्यञ्जकत्वम्, तद् ध्वनिव्यवहारस्याप्रयोजकम्।**

अनुमेयरूपं यदभिप्रायलक्षणं व्यङ्ग्यम्, तद्विषयकं शब्दानां व्यञ्जकत्वं यत्, तद् ध्वनिव्यवहारस्य ध्वनित्वस्य प्रयोजकं नेत्यर्थः।

अभिप्रायव्यञ्जकत्वमात्रेण ध्वनित्वाङ्गीकारे सर्वेषामेव पौरुषेयवाक्यानां तत्त्वापत्तिरित्युक्तमेव। तस्मादभिप्रायेतरनिरूपितव्यञ्जकतैव ध्वनित्वप्रयोजिका, न तु व्यञ्जकतासामान्यम्। इत्थं च ध्वनित्वप्रयोजकव्यञ्जकता नैवानुमितिसाधानतां व्याप्नोतीति हृदयम्।

पूर्वोक्त दोष लगनेसे सर्वत्र व्यञ्जना स्थलोंमें अनुमिति विषयता नहीं होने पर भी सभी अनुमान स्थलोंमें ही व्यञ्जनाकी विषयता माननेमें क्या क्षति है? इस आक्षेपका समाधान करते हैं—यत्तु इति। अनुमेय रूप वक्ताके अभिप्रायात्मक व्यङ्ग्यके विषयमें शब्दोंका जो व्यञ्जकत्व है, वह ध्वनि व्यवहारका प्रयोजक नहीं है, क्योंकि सभी पौरुषेय वाक्योंमें वक्ताके अभिप्रायके व्यञ्जक होनेसे ध्वनित्वकी आपत्ति हो जायगी, इसलिये अभिप्रायसे इतर वस्तुका व्यञ्जकत्व ही ध्वनि व्यवहारका प्रयोजक है, इसलिये अनुमिति हेतुताके साथ व्यञ्जकताका व्याप्य-व्यापक भाव नहीं हो सकता।

नन्वभिप्रायव्यञ्जकता यदीत्थं ध्वनित्वाप्रयोजिका, तदा तदुपादानमिह निष्फलमेव प्राक् कुतो विहितमित्याक्षेपं समादधाति—

**अपि तु व्यञ्जकत्वलक्षणः शब्दानां व्यापार औत्पत्तिकशब्दार्थसम्बन्धवादिनाऽप्यभ्युपगन्तव्य इति प्रदर्शनार्थमुपगन्तव्यम्।**

विप्रतिपद्यमानेन मीमांसकेन व्यञ्जनां स्वीकारयितुमेव तदुपादानं प्राग् विहितमिति नैव निष्फलमिति भावः।

यदि अभिप्राय-व्यञ्जकत्व ध्वनित्वका प्रयोजक नहीं है तो अभी कुछ पहले उस (अभिप्राय व्यञ्जकत्व) का व्यर्थ विचार क्यों किया? इस आक्षेपका समाधान करते हैं—अपितु इति। शब्द-अर्थके नित्य सम्बन्धको माननेवाले मीमांसकको भी वक्ताके अभिप्रायादिके विषयमें शब्दोंका अभिधासे भिन्न व्यञ्जनारूप व्यापार मानना ही होगा, इस बातको दिखलानेके लिये ही मीमांसक मतके प्रसंगमें वक्-

लाया था, अर्थात् मीमांसकसे भी व्यञ्जनावृत्ति स्वीकार करवानेके लिये ही उक्त विचार प्रस्तुत किया गया है, अतः उसे निष्फल नहीं समझना चाहिये।

तदेव सङ्क्षेपेणाह—

तद्धि व्यञ्जकत्वं कदाचिल्लिङ्गत्वेन, कदाचिद् रूपान्तरेण, शब्दानां वाचकानामवाचकानां च सर्ववादिभिरप्रतिक्षेप्यमित्यस्माभिर्यत्न आरब्धः।

येन केनापि रूपेण व्यञ्जकत्वं सर्वैः स्वीकरणीयमेवेति प्रदर्शनार्थमेवास्माकं तत्तन्मतव्याख्यानरूपोऽयं प्रयासः। तथा हि—शब्दानामभिप्रायलक्षणे व्यङ्ग्येऽनुमानेन व्यञ्जकता, घटादौ दीपादेः प्रत्यक्षेण व्यञ्जकता, अवाचकगीतादिध्वनीनां रसादौ स्वरूपप्रत्यक्षेण व्यञ्जकता, विवक्षितान्यपरवाच्यध्वनावभिधासाहाय्येन व्यञ्जकता, अविवक्षितवाच्यध्वनौ च गुणवृत्तिसहकारेण व्यञ्जकतेति न केनचिदपि नाङ्गीकरणीयमिति भावः।

उक्त विषयको ही संक्षेपमें कहते हैं—तद्धि इति। वह व्यञ्जकता वक्ताके अभिप्राय रूप व्यङ्ग्यके बोधनमें अनुमान रूपसे, घटादिके प्रति दीपादिमें प्रत्यक्ष रूपसे एवं अवाचक गीतध्वनि आदिमें रसादि विषयक स्वरूप प्रत्यक्षसे तथा विवक्षितान्यपरवाच्य ध्वनिमें अभिधाके सहयोगसे और अविवक्षित वाच्य ध्वनिमें लक्षणा के सहकारसे वाचक या अवाचक सभी प्रकारके शब्दोंमें सभी वादियोंको स्वीकार करना ही पड़ेगा, इसी बातको दिखलानेके लिये ही हमने यह प्रयास आरम्भ किया है।

उपसंहरति—

तदेवं गुणवृत्ति-वाचकत्वादिभ्यः शब्दप्रकारेभ्यो नियमेनैव तावद् विलक्षणं व्यञ्जकत्वम्।

एवमुक्तैः प्रकारैः। अन्यत् स्फुटम्।

अब सबका उपसंहार करते हैं—तदेवमिति। इसलिये उक्त प्रकार लक्षणा रूप गुणवृत्ति और अभिधारूप वाचकत्व आदि शब्द प्रकारोंसे अवश्य ही विलक्षण व्यञ्जनावृत्ति है।

पुनरपरया भङ्ग्या व्यञ्जनां स्थापयति—

तदन्तःपातित्वेऽपि तस्य न ग्रहादभिधीयमानं तद्विशेषस्य ध्वनेर्यत् प्रकाशनं विप्रतिपत्तिनिरासाय सहृदयव्युत्पत्तये वा तत् क्रियमाणमनभिसन्धेयमेव।

तस्य, व्यञ्जकत्वस्य, तदन्तःपातित्वेऽप्यभिधाऽऽदिव्यापारविशेषरूपत्वेऽपि, न ग्रहान्नाभिनिवेशात्, किन्त्वौचितीपर्यालोचनयैव, विप्रतिपत्तीनां व्यञ्जनारूपोऽभि-

घाऽऽदिविशेषो नास्तीत्याद्याकाराणां, निरासाय निवर्तनाय, सहृदयानां व्युत्पत्तये विशेषज्ञानेन संशयनिवारणाय वा, क्रियमाणं यत्, तद्विशेषस्याभिधागुणवृत्तिप्रकारविशेषस्य, ध्वनेर्ध्वननं ध्वनिरिति व्युत्पत्त्या व्यञ्जनाव्यापारस्य प्रकाशनम्, तद् अनभिसन्धेयमतिरस्कार्यमेवेत्यर्थः ।

सामग्र्यन्तरसहकारेणाभिधाऽऽदिरेव व्यङ्ग्यमपि बोधयतीति व्यञ्जनाया अभिधाऽऽदिप्रकारविशेषत्वेऽभ्युपगतेऽपि विपक्षमुखमुद्रणाय सपक्षसन्तोषणाय च, पृथक् तन्निरूपणमावश्यकमेवेति सारम् ।

दूसरे ढङ्गसे भी व्यञ्जनाका स्थापन करते हैं—तदन्तरिति। इस व्यञ्जनाको अभिधा या लक्षणाके अन्तर्गत मान लेने पर भी निज हठधर्मिताके कारण नहीं अपितु औचित्यकी दृष्टिसे ही अभिधा आदिके प्रकार विशेषरूप ध्वनिका जो विप्रतिपत्तियोंके निराकरणार्थ या सहृदयोंके व्युत्पत्त्यर्थ ग्रन्थकार द्वारा प्रकाशन किया जा रहा है, उसका तिरस्कार नहीं किया जा सकता है, अर्थात् अन्य सामग्रियोंके सहकारसे अभिधा आदि वृत्ति ही व्यङ्ग्यार्थका भी बोध कराती है, इसलिये व्यञ्जना भी अभिधा आदिका ही एक प्रकार विशेष है, इस प्रकार मान लेने पर भी विपक्षियोंके मुखको बन्द करनेके लिये या स्वपक्षियोंके सन्तोषके लिये उसका पृथक् निरूपण करना परम आवश्यक प्रतीत होता है ।

तदेव समर्थयति—

न हि सामान्यमात्रलक्षणेनोपयोगिविशेषलक्षणानां प्रतिक्षेपः शक्यः कर्तुम्। एवं हि सति सत्तामात्रलक्षणे कृते सकलसद्वस्तुलक्षणानां पौनरुक्त्यप्रसङ्गः ।

सामान्यलक्षणेन विशेषलक्षणानां गतार्थता न भवति। तथासति वैशेषिकनये द्रव्यगुणकर्ममात्रवृत्ति-जातिविशेषरूपसत्ताया लक्षणे कृते, द्रव्यत्वादिलक्षणानि पुनरुक्तानि स्युः। यद्वा सच्चैव सद्वस्तूनां घटपटादीनां सकलशास्त्रप्रतिपाद्यानां सामान्यलक्षणम्, इति तन्निरूपणे कृते, तत्तत्पदार्थलक्षणानि तत्र तत्रोक्तानि निरर्थकानि स्युः। तस्मात् पृथग् व्यञ्जनानिरूपणमावश्यकमेव। वस्तुतस्त्वभिधाऽऽदिप्रकारता तस्या नास्त्येवेति प्रागुपपादितमेवेति भावः ।

इहोपयोगित्वविशेषणेनानुपयोगिनो विशेषस्य काकदन्तादेर्लक्षणस्य प्रतिक्षेप्यतैवानुमन्यते ।

उक्त विषयका ही समर्थन करते हैं—नहि इति। क्योंकि किसी पदार्थके सामान्य लक्षण मात्रसे उसके अवान्तर उपयोगी विशेष लक्षणका खण्डन नहीं किया जा

सकता, यदि ऐसा हो तो न्यायमतमें द्रव्य, गुण, कर्म इन तीनोंमें रहने वाली सत्ता जाति मात्रके सामान्य लक्षण कर देने पर उसके अन्तर्गत नौ द्रव्य, २४ गुण, पांच कर्म रूप सभी सद् वस्तुओंके अवान्तर विशेष लक्षण ही व्यर्थ हो जाँय, इसलिये अभिधा और लक्षणात्मक गुणवृत्तिसे अतिरिक्त ही व्यङ्ग्यार्थ बोधके लिये व्यञ्जना वृत्ति माननी चाहिये।

उपसंहरति—

तदेवम्—

'विमतिविषयो य आसीन्मनीषिणां सततमविदितसतत्त्वः।
ध्वनिसञ्ज्ञितः प्रकारः काव्यस्य व्यञ्जितः सोऽयम् ॥६६॥'

यो ध्वनिसञ्ज्ञितो ध्वनिनामा काव्यस्य प्रकारः, अविदितोऽप्रसिद्धः सतत्त्वः सदृशो यस्य तादृशोऽद्वितीय इति हेतोर्मनीषिणां तार्किकादिविदुषां विमतीनां नानाविधविप्रतिपत्तीनां विषयो लक्ष्य आसीत्। सोऽयम्, एवमुक्तप्रकारैः, व्यञ्जितः प्रकाशितो व्यवस्थापित इत्यर्थः।

इस प्रकार ध्वनि नामका जो काव्य विशेष तार्किक आदि विद्वानोंके मतभेदका विषय होकर निरन्तर अभी तक अविदितकी तरह था, उसको हमने उक्त प्रकार प्रकाशित किया।

इत्थं ध्वनिनामानं काव्यस्य प्रधानं प्रकारं सपरिकरं निरूप्य, तत्कल्पं गुणभूतव्यङ्ग्याभिधानं द्वितीयं प्रकारमपि निरूपयति—

'प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते।
यत्र व्यङ्ग्यान्वये वाच्य–चारुत्वं स्यात् प्रकर्षवत् ॥ ६१ ॥'

गुणीभूतं वाच्याधिकचमत्कारानाधायकत्वेनाप्रधानीभूतं व्यङ्ग्यं यत्र सः, तदात्मकः काव्यस्य, अन्यो ध्वनेर्भिन्नो द्वितीयः प्रकारो दृश्यते। यत्र काव्ये, व्यङ्ग्येनान्वये सम्बन्ध उपकारे वा सति, वाच्यस्य चारुत्वं प्रकर्षवद् ध्वनिवाच्यापेक्षयाऽप्युत्कृष्टं स्यादित्यर्थः।

उक्त रीतिसे ध्वनि नामक उत्तम काव्य विशेषका सविस्तर निरूपण करके, अब गुणीभूत व्यङ्ग्य नामक दूसरे काव्य भेदका निरूपण करते हैं—प्रकार इति। जहां व्यङ्ग्यार्थके सम्बन्ध होनेसे वाच्यार्थकी रमणीयता अतिशय चमत्कारशालिनी हो जाती है, वह गुणीभूत व्यङ्ग्य नामक काव्यका दूसरा भेद होता है, अर्थात्

जहाँ व्यङ्ग्यार्थसे वाच्यार्थ ही अधिक चमत्कारशाली प्रतीत होता हो, वहाँ गुणी-भूत व्यङ्ग्य नामक काव्यका व्यवहार होता है।

तदाचष्टे—

व्यङ्ग्योऽर्थो ललनालावण्यप्रख्यो यः प्रतिपादितः, तस्य प्राधान्ये ध्वनिरित्युक्तम्। तस्यैव तु गुणीभावेन वाच्यचारुत्वप्रकर्षे गुणीभूतव्यङ्ग्यो नाम काव्यप्रभेदः प्रकल्प्यते।

प्रतिपादितः प्रथमोद्द्योते—'प्रतीयमानं पुनरन्यदेव' इत्यादिना। उक्तं तत्रैव 'यत्रार्थः शब्दो वा' इत्यादिना। तस्यैव व्यङ्ग्यस्य। वाच्यस्य चारुत्वप्रकर्ष इति चारुत्वसाम्यस्याप्युपलक्षणम्, तुल्यप्राधान्यकव्यङ्ग्यस्यापि गुणीभूतव्यङ्ग्यप्रभेदत्वेन वक्ष्यमाणत्वात्।

गुणीभूतस्य व्यङ्ग्यस्याष्टविधत्वादस्य काव्यस्याप्यष्टौ भेदाः। ते चास्माभिः—

'इतराङ्गं व्यङ्ग्यं स्यादगूढमस्फुटं वाच्यसिद्ध्यङ्गम्।
सन्दिग्धप्राधान्यं तुल्यप्राधान्यमसुन्दरं यत्र॥
काकाक्षिप्तं च गुणी-भूतव्यङ्ग्यस्य ते भेदाः॥' इति साहित्यमीमांसायां गुणिताः। परेऽपि भूयांसोऽस्य भेदा व्यङ्ग्योपस्कृतवाच्यालङ्काराणां बाहुविध्याद्भवन्तीति ज्ञेयमन्यतः।

उक्तार्थको ही वृत्तिकार स्फुट करते हैं—व्यङ्ग्य इति। ललनाओंके शरीरमें भासमान एक विलक्षण लावण्य (सौन्दर्य) के समान सहृदयोंके आह्लादजनक जिस व्यङ्ग्यार्थका प्रतिपादन किया है, उसके प्राधान्य होने पर ध्वनि नामक काव्य माना जाता है, यह बात कह चुके हैं। परन्तु उसी व्यङ्ग्यार्थके गौण हो जानेके कारण वाच्यार्थकी रमणीयताका आधिक्य हो जाने पर गुणीभूत व्यङ्ग्य नामका काव्यभेद माना जाता है। इसी प्रकार जहाँ व्यङ्ग्यार्थ और वाच्यार्थमें समान ही रमणीयता प्रतीत होती है, वहाँ भी गुणीभूत व्यङ्ग्य काव्यका ही व्यवहार होता है, इस तरह गुणीभूत व्यङ्ग्यके निम्न आठ भेद माने गये हैं—१. इतराङ्गव्यङ्ग्य, २. काक्वाक्षिप्तव्यङ्ग्य, ३. वाच्य सिद्ध्यङ्गभूत व्यङ्ग्य, ४. सन्दिग्ध प्राधान्य व्यङ्ग्य, ५. तुल्य प्राधान्य व्यङ्ग्य, ७. अगूढ़ व्यङ्ग्य और ८. असुन्दर व्यङ्ग्य। इन्हीं आठोंका आगे निरूपण कर रहे हैं।

वस्त्वलङ्काररसादिरूपतया त्रिविधेषु व्यङ्ग्येषु, अत्यन्ततिरस्कृतवाच्यकशब्दप्रतीयमानवस्तुरूपव्यङ्ग्यस्य वाच्याङ्गतायामितराङ्गव्यङ्ग्यरूपं गुणीभूतव्यङ्ग्य मुदाहर्तुमाह—

तत्र वस्तुमात्रस्य व्यङ्ग्यस्य तिरस्कृतवाच्येभ्यः शब्देभ्यः प्रतीयमा-

नस्य, कदाचिद् वाच्यरूपवाक्यार्थापेक्षया गुणीभावे सति गुणीभूत-व्यङ्ग्यता, यथा—

*वस्तु, अलंकार, रसादि रूप त्रिविध व्यङ्ग्योंमें वस्तुरूप व्यङ्ग्यके वाच्याङ्ग होने पर इतराङ्ग व्यङ्ग्य रूप प्रथम गुणीभूत व्यङ्ग्यका उदाहरण बतलाते हैं—तत्रेति।* उनमें लक्षणामूलक अविवक्षित वाच्य ध्वनिके अत्यन्त तिरस्कृत वाच्यात्मक प्रभेदमें अत्यन्त तिरस्कृत वाच्य वाले शब्दोंमें व्यज्यमान वस्तुरूप व्यङ्ग्यके कदाचित् वाक्यरूप वाक्यार्थकी अपेक्षा गौण होने पर गुणीभूत व्यङ्ग्य नामसे काव्यका व्यवहार होता है। जैसे—

जलकेलिचिकीर्षयाऽधिनदीपुलिनमवतरन्तीं लावण्यप्रसाधिताशेषावयवामपनीतावगुण्ठनां कामपि कामविलासवासभुवं ललनामकस्मादवलोकयन् कश्चन चकितस्तर्कयति—

'लावण्यसिन्धुरपरैव हि केयमत्र,
यत्रोत्पलानि शशिना सह सम्प्लवन्ते।
उन्मज्जति द्विरदकुम्भतटी च यत्र,
यत्रापरे कदलिकाण्डमृणालदण्डाः॥'

अत्र नदीरोधसि, का इयमदृष्टपूर्वा, अपरैव प्रसिद्धतटिनीभिन्नैव, लावण्यस्य द्रवरूपसुषमाऽतिरेकस्य, सिन्धुः सरित्, विद्यत इति दृश्यत इति वा शेषः। यत्र यस्यां सरिति, शशिना सह, उत्पलानि कुवलयानि, सम्प्लवन्ते सन्तरन्ति। यत्र च द्विरदस्य हस्तिनः कुम्भयोस्तटी पुरस्थली, उन्मज्जत्युदेति। तथा यत्र अपरे प्रसिद्धेभ्य उक्तेभ्यो वाऽन्ये, कदल्या रम्भायाः काण्डौ स्तम्भौ मृणालस्य दण्डौ च ते वर्तन्त इत्यर्थः।

तथा च—'सिन्धुर्वमथुदेशाब्धिनदे ना सरिति स्त्रियाम्' इति मेदिनी। 'स्यादुत्पलं कुवलयम्' इति, 'काण्डोऽस्त्री दण्डबाणार्व-वर्गावसरवारिषु' इति चामरः।

अत्र सिन्धूत्पलशशि-द्विरदकुम्भतटी-कदलिकाण्ड-मृणालदण्डशब्दा बाधितं स्वार्थं तिरस्कृत्य ललना-कटाक्षच्छटा-वदन-स्तनयुग-जङ्घायुगल-बाहुयुग्मानि वस्तूनि प्रकाशयन्ति। तानि च 'अपरैव केयम्' इत्युक्तिबोधितमद्भुतरूपं वाच्यं समर्थनच्छायाऽतिशयविधानेनोपकुर्वन्तीति तिरस्कृतवाच्यकशब्दव्यङ्ग्यानां वाच्यरूपस्येतरस्याङ्गत्वमिति केचित्।

परे तु—'कमलमनम्भसि, कमले च कुवलये तानि च कनकलतिकायाम्।'
'कथमुपरि कलापिनः कलापो विलसति तस्य तलेऽष्टमीन्दुखण्डम्॥'

'कलशे परममहत्त्वं तिमिरस्तोमस्य सोमसहवासः ॥'

इत्याद्यतिशयोक्त्यलङ्कारप्रथमप्रकारोदाहरणनिर्विशेषतयाऽत्रापि ललनाऽऽद्युपमेय-निगरणपूर्वक-सिन्ध्वाद्युपमानाध्यवसानेन सिन्ध्वादिपदानां ललनाऽऽदौ साध्यवसानगौणलक्षणा, उपमानोपमेययोस्तादात्म्यातिशयप्रतिपादनमेव प्रयोजनं व्यज्यमानं वाच्यमुपकुर्वद् गुणीभवतीति वदन्ति ।

अन्ये तु—रूपकानुप्राणितां व्यङ्ग्योपस्कृतामभिधेयभूतामिहातिशयोक्तिं मन्यन्ते । अत एवालङ्कारान्तरसङ्कीर्णवाच्यातिशयोक्तेरिदमेवोदाहरणं दास्यत आचार्यचरणैः । चन्द्रालोककृतस्तु—इमामेव 'रूपकातिशयोक्तिः स्यान्निगीर्य्याध्यवसानतः ।' इति लक्षयित्वा 'अचतुर्वदनो ब्रह्मा द्विवाहुरपरो हरिः ।

अभाललोचनः शम्भुर्भगवान् वादरायणः ॥' इत्युदाजह्रुः ।

रसस्य प्राधान्यात्तु ध्वनित्वमपीहास्त्येवेति न क्षतिः, वस्तुरूपव्यङ्ग्यस्य गुणीभावप्रदर्शनस्यैवोपक्रान्तत्वात् ।

नदीके किनारे जल क्रीडार्थ आई हुई किसी युवतिको देखकर कोई नव युवक कह रहा है—लावण्य इति । ( इस श्लोकमें ललनाको ही नदी रूपमें वर्णन किया गया है ) इस नदीके तट पर यह कौन सी एक विलक्षण नई लावण्य ( अतिशय सौन्दर्य ) की नदी उभर आई है, जिसमें चन्द्रमाके साथ कमल तैर रहे हैं, और जिसमें हाथीके कुम्भस्थल उभर रहे हैं, एवं जिसमें कुछ दूसरे ही प्रकारके कदली के स्तम्भ और मृणालदण्ड दिखाई पड़ रहे हैं, यहां पर सिन्धु, उत्पल, शशि, 'द्विरद कुम्भतटी, कदलिकाण्ड और मृणालदण्ड शब्दोंके मुख्यार्थके सर्वथा वाधित होनेसे 'निःश्वासान्ध इवादर्शः' के समान स्वार्थके अत्यन्त तिरस्कार हो जानेके कारण उक्त शब्दोंसे क्रमशः-ललना, कटाक्ष-विक्षेप, मुख, कुचद्वय, ऊरुयुगल, वाहुयुग्म रूप व्यङ्ग्यार्थ अभिव्यक्त होते हैं, अतः अत्यन्त तिरस्कृत वाच्य वस्तु ध्वनि प्रतीत होती है, परन्तु वह (ध्वनि) 'अपरैव केयम्' इससे वोधित अद्भुत रूप वाच्यांशकी शोभाको ही वढ़ाती है, इसलिये वाच्यरूप इतराङ्ग व्यङ्ग्यात्मक गुणीभूत व्यङ्ग्यका यह उदाहरण समझना चाहिये ।

अथातिरस्कृतवाच्यशब्दसमर्पितवस्तुरूपव्यङ्ग्यस्येतराङ्गतायां गुणीभूतव्यङ्ग्यमुदाहर्तुमाख्याति—

**अतिरस्कृतवाच्येभ्योऽपि शब्देभ्यः प्रतीयमानस्य व्यङ्ग्यस्य कदाचिद् वाच्यप्राधान्येन चारुत्वापेक्षया गुणीभावे सति, गुणीभूतव्यङ्ग्यता ।**

वाच्यव्यङ्ग्ययोः प्राधान्ये हि चारुत्वप्रकर्ष एव हेतुरित्युक्तमेव प्राक् ।

अब अतिरस्कृत वाच्य वाले शब्दोंसे प्रतीयमान वस्तुरूप व्यङ्ग्यके इतराङ्ग होने पर गुणीभूत व्यङ्ग्यका उदाहरण बतलाते हैं—अतिरस्कृत इति। कदाचित् अतिरस्कृत वाच्य वाले शब्दोंसे व्यज्यमान व्यङ्ग्यात्मक वस्तुका प्रधान रूपसे भासमान वाच्यार्थकी चारुताकी अपेक्षा अप्राधान्य हो जाने पर गुणीभूत व्यङ्ग्य नामक काव्यका भेद हो जाता है। वाच्य और व्यङ्ग्यके प्राधान्य या अप्राधान्य होनेमें अतिशय रमणीयताकी प्रतीतिका होना ही हेतु है, यह पहले बतला चुके हैं।

उदाहरति—

यथोदाहृतम्—'अनुरागवती सन्ध्या' इत्येवमादि।

समासोक्त्यलङ्कारोदाहरणपटलम्। इहाबाधितवाच्यकसन्ध्यादिवसशब्दाभ्यां व्यङ्ग्यदम्पतिव्यवहारारोपपरिष्कृतयोः सन्ध्यादिवसयोः प्रतीतिरिति व्यङ्ग्यस्य वाच्यप्रसाधकत्वेनाङ्गत्वम्।

जैसे 'अनुरागवती सन्ध्या'—इत्यादि उदाहरण पहले पृ० ५० में दे चुके हैं, यहाँ पर अबाधित वाक्यार्थवाले सन्ध्या-दिवस शब्दोंसे प्रतीयमान व्यङ्ग्यभूत दम्पति-व्यवहारकी प्रतीति, उक्त वाच्यार्थके ही चमत्कारका हेतु है, क्योंकि उस ( दम्पति व्यवहाररूप ) से उपस्कृत होकर सन्ध्या-दिवस की प्रतीति चमत्काराधायक होती है, इसलिये इतराङ्ग व्यङ्ग्य नामक गुणीभूत व्यङ्ग्यका यह उदाहरण समझना चाहिये।

अथ व्यङ्ग्यपदवीमारूढस्यापि वस्तुनः केनचित् पदेनाभिधीयमानत्वे गुणीभावाद् वाच्यसिद्ध्यङ्गव्यङ्ग्यनामकं गुणीभूतव्यङ्ग्यस्य द्वितीयं प्रकारमुदाहर्तुमभिदधाति—

तस्यैव स्वयमुक्त्या प्रकाशीकृतत्वेन गुणभावः यथोदाहृतम्—'संकेतकालमनसम्' इत्यादि।

तस्यैव व्यङ्ग्यवस्तुन एव। अत्र कमलनिमीलनव्यङ्ग्यस्य गोपनचारिमभृतः सन्ध्यासमयरूपवस्तुव्यङ्ग्यस्याकूतशब्देनोद्घाटितत्वात् तदर्थोपपादकत्वाच्च गुणीभावः। न हि प्रतीयमानसायंसमयमन्तरेणाकूतशब्दार्थ उपपत्तिं भजति। आदिशब्देन 'गच्छाम्यच्युत' इत्यादि ज्ञेयम्।

अब व्यङ्ग्यभूत वस्तुके भी किसी पदके द्वारा स्फुट रूपसे प्रकट कर देने पर गौण हो जानेसे वाच्य सिद्ध्यङ्ग व्यङ्ग्य नामक द्वितीय गुणीभूत व्यङ्ग्यका उदाहरण बतलाते हैं—तस्यैव इति। उसी व्यङ्ग्यभूत वस्तुके स्वयं किसी शब्दके द्वारा प्रकाशित कर देनेसे व्यङ्ग्यका गुणीभाव हो जाता है, जैसे—संकेतकालमनसम्'—इत्यादि उदाहरण पहले पृ. १८० में बतला चुके हैं, यहांपर कमल संकोचनसे प्रतीयमान होनेवाली गोपनकृत चारुताशाली सन्ध्या समय रूप व्यङ्ग्य वस्तुको आकूत

शब्दने स्पष्ट रूपसे वाच्यकी तरह प्रकाशित कर दिया और वह व्यङ्ग्य आकूत शब्दार्थके उपपादक होनेसे गौण हो गया, क्योंकि प्रतीयमान सार्थ समयके विना आकूत शब्दका अर्थ उपपन्न नहीं होता, इसलिये वाच्यसिद्ध्यङ्ग नामक गुणीभूत व्यङ्ग्यका यह उदाहरण है।

अथ रसादिरूपव्यङ्ग्यस्य गुणीभावे रसवदाद्यलङ्काररूपं गुणीभूतव्यङ्ग्यमुदाहर्तुमभिदधाति—

**रसादिरूपव्यङ्ग्यस्य गुणीभावे रसवदलङ्कारविषयः प्राक् प्रदर्शितः।**

प्राग् द्वितीयोद्द्योते—'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।' इत्यादिना प्रदर्शितः। तत्र रसस्य गुणीभावे रसवत्, भावस्य प्रेयः, रसाभास-भावाभासयोरूर्जस्वि, भावशान्तेः समाहितम्, भावोदयस्य भावोदयम्, भावसन्धेर्भावसन्धिः, भावशवलताया भावशवलत्वं चालङ्कारो भवति।

अब रसादि रूप व्यङ्ग्यके गौण होने पर रसवदादि अलंकार रूप गुणीभूत व्यङ्ग्यका प्रतिपादन करते हैं—रसादि इति। जहाँ रसादिसे भिन्न वाक्यार्थके प्रधान-रूपसे चमत्कार जनक प्रतीत होनेके कारण रसादि अप्रधान रूपसे ही प्रतीत होता है, वहां रसवदादि अलंकारोंका व्यवहार होता है, यह विषय पहले ही द्वितीय उद्द्योतमें पृ० ९९ में बतला चुके हैं, उनमें रसके गौण होने पर रसवत्-अलंकार, भावके गौण होने पर प्रेयोऽलंकार, रसाभास और भावाभासके गौण होने पर ऊर्जस्वी-अलंकार, भाव शान्तिके गौण होने पर समाहित अलंकार आदिका व्यवहार होता है।

नन्वपरिच्छिन्नास्वादात्मतया नितरां प्रधानस्य रसादेः कथमन्याङ्गता? कथञ्चाप्राधान्येऽपि न चमत्कारविच्छेदः? इत्याशङ्क्य निराकरोति—

**तत्र च तेषामाधिकारिकवाक्यापेक्षया गुणीभावो विवाहप्रवृत्तभृत्यानुयायिराजवत्।**

तत्र च रसवदाद्यलङ्कारेषु। तेषां रसादीनाम्। स्वतः प्राधान्येऽपि यथा विवाहे प्रवृत्तं भृत्यमनुगच्छतो राज्ञोऽप्राधान्यम्, तथैव प्रधानतमानामपि रसादीनाम्, आधिकारिको व्यापको यो वाक्यप्रतिपाद्यो वृत्तान्तभागो वस्तुभागो वा, तं प्रति गुणीभावः, स्वकीयं च प्राधान्यं भवतीति सारम्।

वाक्यपदं तत्प्रतिपाद्यपरम्, वाक्यमात्रनिरूपिताप्राधान्यस्य रसादीनामसम्भवात्।

निरन्तर अविच्छिन्न रूपसे आस्वाद्यमान होनेके कारण प्रधानभूत रसादि दूसरेका अङ्ग कैसे हो सकता है? और कदाचित् रसादिके अप्रधान होने पर भी चम-

स्कारका विच्छेद क्यों नहीं होता ? इस आक्षेपद्वयका समाधान करते हैं—तत्रचेति। उन रसवदादि-अलंकारोंमें रसादिका आधिकारिक (मुख्य) वाक्यार्थकी अपेक्षा विवाहमें वर रूपसे प्रवृत्त भृत्यके अनुगामी राजाके समान अप्राधान्य होता है, अर्थात् यद्यपि सहृदयोंके अतिशय आह्लादजनक होनेसे व्यङ्ग्यात्मक रस ही काव्यका सर्वस्व माना गया है, तथापि जैसे कोई राजा किसी भृत्यके विवाहमें सम्मिलित हो तो वहां वर रूप होनेसे भृत्य ही प्रधानतया गिना जाता है, राजा तो उसका अनुयायी होनेसे अप्रधान ही रहता है, राज्यमें भले ही उनकी प्रधानता ही क्यों न हो ? वैसे ही रसादिके स्वतः प्रधान होते हुए भी रसवदादि अलंकार की दशामें किसी अन्य की ही प्रधानता होनेसे उनकी मुख्यता हट जाती है, इसलिये ऐसी स्थितिमें रसादिका गुणीभाव ही रहता है।

अथालङ्काररूपव्यङ्ग्यस्य गुणीभावे गुणीभूतव्यङ्ग्यमुदाहर्तुं व्याहरति—

**व्यङ्ग्यालङ्कारस्य गुणीभावे दीपकादिर्विषयः।**

'चन्द्रमऊएहिं णिसा' इत्यादौ दीपकालङ्कारे चन्द्रमयूख-सज्जनयोः, निशाकाव्यकथयोश्चोपमाऽलङ्कारो व्यज्यमानोऽप्युपमानोपमेययोर्वाच्ययोः सम्बन्धोपपादकतया साधक इति वाच्यसिद्ध्यङ्गव्यङ्ग्यरूपगुणीभूतव्यङ्ग्यभेदोऽयम्। आदिपदेन रूपक-परिणामप्रभृतयो ग्राह्याः। तच्च प्रागुपपादितमेव।

अब अलंकार रूप व्यङ्ग्यके गौण होने पर गुणीभूत व्यङ्ग्यका उदाहरण बतलाते हैं—व्यङ्ग्यालंकारस्येति। व्यङ्ग्यभूत अलंकारके गुणी भावका विषय दीपक आदि अलंकार हैं। जैसे—'चन्द्रमयूखैर्निशा'—इत्यादि स्थलीय दीपकालंकारमें चन्द्रमाकिरण और सज्जन पुरुष एवं निशा और काव्य कथामें उपमा अलंकार प्रतीयमान होने पर भी वाच्यरूप उक्त उपमान-उपमेयके सम्बन्धके उपपादक होनेसे दीपकका अङ्ग ही है, अतः यह वाच्यसिद्ध्यङ्ग रूप गुणीभूत व्यङ्ग्य है। इस प्रकार व्यङ्ग्यके वस्तु, अलंकार, और रसादि ये तीनों भेद गुणीभूत हो सकते हैं।

गुणीभूतव्यङ्ग्यकाव्यस्य विपुलविषयतां दर्शयन्नुपदिशति—

तथा—

**'प्रसन्नगम्भीरपदाः काव्यबन्धाः सुखावहाः।**
**ये च तेषु प्रकारोऽयमेवं योज्यः सुमेधसा ॥ ६२ ॥'**

प्रसन्नानि प्रसादवन्ति, गम्भीराणि व्यङ्ग्यबाहुल्येन गुर्वर्थानि विपुलार्थव्यञ्जकानीति यावत्, पदानि येषु तादृशाः, सुखावहाः सहृदयाह्लादकाः, ये काव्यानां बन्धाः

प्रबन्धाः सन्ति स्युर्वा, तेषु काव्यप्रबन्धेषु, सुमेधसा, अयं गुणीभूतव्यङ्ग्यरूपः प्रकारः, एवमुक्तरूपत्रयेण योज्य इत्यर्थः।

ध्वन्यसम्भवे गुणीभूतव्यङ्ग्ययोजनयाऽपि कविसहृदयानामात्मलाभः। इतरथा तूपहास्यतैवेति भावः।

गुणीभूत व्यङ्ग्य काव्यका विशाल विषय बतलाते हैं—प्रसन्नेति। प्रसाद गुण-युक्त एवं विपुलार्थ व्यञ्जक पद वाले और सहृदयोंके आनन्दजनक जो काव्य प्रबन्ध हों, उनमें बुद्धिमान् कविको इसी प्रकार गुणीभूत व्यङ्ग्यका निवेश करना चाहिये, अर्थात् ध्वनिके सम्भव नहीं होने पर कमसे कम गुणीभूत व्यङ्ग्यकी योजनासे भी सहृदय कविको कविपद की प्राप्ति ( आत्म प्रतिष्ठा ) हो सकती है, अन्यथा तो उसकी कविता विद्वद् समाजमें उपहासास्पद ही होगी।

तदाचष्टे—

**ये चैते परिमितस्वरूपा अपि प्रकाशमानास्तथा रमणीयाः सन्तो विवेकिनां सुखावहाः काव्यबन्धाः, तेषु सर्वेष्वेवायं प्रकारो गुणीभूत-व्यङ्ग्यो नाम योजनीयः।**

स्वरूपस्य शब्दस्य परिमितत्वेन सङ्क्षेपेण, अर्थस्य च विशदत्वेन काव्यबन्धानां रमणीयता ज्ञेया।

वृत्तिकार उक्त कारिकार्थको स्फुट करते हैं—ये चैते इति। जो ये अपरिमित स्वरूप होने पर भी नाना प्रकारके व्यङ्ग्यार्थोंके सम्पर्कसे अत्यन्त रमणीय रूपसे प्रकाशमान एवं चतुर विदग्धजनोंके आह्लाद जनक काव्य रचनायें हैं, उन सभी रचनाओंमें गुणीभूत व्यङ्ग्यनामके इस प्रकारका उपयोग करना चाहिये, अर्थात् जहाँ तक सम्भव हो अर्थ गाम्भीर्य एवं अर्थ बाहुल्य पूर्वक संक्षिप्त शब्दोंका ही काव्यमें सन्निवेश करना चाहिये, क्योंकि अर्थ गाम्भीर्यसे ही काव्य रचनाकी रमणीयता होती है।

योजनाशिक्षाऽर्थमुदाहरति—

यथा—

समुद्रं कश्चन सपरिवारं वर्णयति—

'लच्छी दुहिदा जामाउओ हरी तंस घरिणिआ गङ्गा।
अमिअ-मिअङ्का अ सुआ अहो कुडुम्बं महोअहिणो॥'

'लक्ष्मीर्दुहिता जामाता हरिस्तथा गृहिणी गङ्गा।
अमृतमृगाङ्कौ च सुतावहो कुटुम्बं महोदधेः॥' इतिच्छाया।

लक्ष्मीः श्रीरेव दुहिता, हरिर्विष्णुरेव जामाता, तथा गङ्गा भागीरथ्येव गृहिणी पत्नी, च तथा अमृतं पीयूषं मृगाङ्कश्चन्द्रश्चैव सुतौ, इति, अहो निस्सीमविस्मयनिदानं, महोदधेः समुद्रस्य, कुटुम्बं पोष्यपटलं परिवार इति यावत्।

तथा च—'कुटुम्बं पोष्यवर्गे च' इत्यमरमाला। 'अमृतं वारुणी' इति विवरणं तु महामाहेश्वरमतानुकूलं प्रतिभाति।

इह लक्ष्मीपदेन सकलस्पृहणीयता, विष्णुपदेन परमैश्वर्यं चतुर्वर्गप्रदत्वं च, गङ्गापदेन सर्वदा सर्वजनसमीहितसमर्पणव्यसनिता, अमृतपदेत दुस्सहनिधनक्लेशोपशमकत्वम्, मृगाङ्कपदेन सुधामयदीधितिसमानन्दितभुवनत्वं च व्यज्यमानं यद् वस्तु, तद् 'अहो कुटुम्बम्' इत्युक्त्यभिहितविस्मयस्याधिवयं पुष्यदङ्गतामेति, महोदधिकुटुम्बस्य दर्शितप्रतीयमानविशेषणसम्पर्केणैवाद्भुततमत्वसम्पत्तेरिह परिकरालङ्कारो गुणीभूतव्यङ्ग्यता च काव्यस्य सुधीभिरवधार्यताम्।

काव्यमें शब्द योजन क्रम शिक्षार्थ उदाहरण बतलाते हैं—यथेति। समुद्रकी लक्ष्मी कन्या है, विष्णु भगवान् जामाता हैं, गङ्गा उसकी पत्नी है, अमृत और चन्द्रमा जैसे पुत्र हैं, अहो! महोदधिका कितना उत्तम कुटुम्ब-परिवार है, यहाँ पर लक्ष्मी पदसे सर्वजन स्पृहणीयता, विष्णु पदसे परम ऐश्वर्य, तथा चतुर्वर्ग रूप फलप्रदत्व, गङ्गा पदसे परम पावनत्व, एवं सकल काम पूरण समर्थत्व, अमृत पदसे मरणत्रासोपशामकत्व, और मृगाङ्क पदसे अलौकिक आह्लादकत्वादि रूप प्रतीयमान वस्तु व्यङ्ग्य है और वह (व्यङ्ग्य वस्तु) 'अहो' पदके वाच्य भूत आश्चर्यका पोषक होकर गुणी भूत व्यङ्ग्य रूपसे ही चमत्कार जनक प्रतीत होती है। क्योंकि महोदधिके परिवारके उक्त प्रतीयमान विशेषणके सम्पर्कसे ही अतिशय अद्भुतत्वके सम्पादन द्वारा परिकरालंकार ही मुख्य रूपसे आह्लाद जनक प्रतीत होता है।

न चात्रैव, किन्तु सर्वत्र वाच्यालङ्कारेषु गुणीभूतव्यङ्ग्यवैशिष्ट्येन चारुता सम्पद्यत इत्याह—

'वाच्यालङ्कारवर्गोऽयं व्यङ्ग्यांशानुगमे सति।
प्रायेणैव परां छायां बिभ्रल्लक्ष्ये निरीक्ष्यते॥ ३६॥'

अयं वाच्यालङ्काराणामुपमादीनां वर्गः समुदायः, व्यङ्ग्यांशस्य गुणीभूतव्यङ्ग्यस्य वस्तुनोऽलङ्कारस्य वा, अनुगमे सम्पर्के सति, प्रायेण बाहुल्येन, परामतिशयितां, छायां चमत्कारितां, बिभ्रद्दधानः, लक्ष्य उदाहरणे, निरीक्ष्यते दृश्यत इत्यर्थः।

केवल उक्त स्थलमें ही नहीं, अपितु सभी वाच्यभूत अलंकारोंमें गुणीभूत

व्यङ्ग्यके माहात्म्यसे रमणीयता प्राप्त हो जाती है, यह दर्शाते हैं—वाच्यालंकार इति। यह अतिशय प्रसिद्ध वाच्यभूत उपमा आदि अलंकारोंका समुदाय गुणीभूत व्यङ्ग्य-वस्तु या अलंकारके सम्पर्कसे काव्यमें प्रायः करके अत्यन्त शोभातिशयको धारण किया हुआ लक्षित होता है।

तदाख्याति—

**वाच्यालङ्कारवर्गोऽयं व्यङ्ग्यांशस्यालङ्कारस्य वस्तुमात्रस्य वा यथायोगमनुगमे सति, छायाऽतिशयं बिभ्रल्लक्षणकारैरेकदेशेन दर्शितः। स तु तथारूपः प्रायेण सर्व एव परीक्ष्यमाणो लक्ष्ये निरीक्ष्यते।**

यथायोगमौचित्यानुसारं क्वचिदलङ्कारस्य क्वचिद् वस्तुमात्रस्य च सम्बन्धः। एकदेशेन स्थालीपुलाकन्यायेन दर्शितः। सर्वेषां पृथक् प्रदर्शनं गुरुतरत्वादशक्यमेव। स वाच्यालङ्कारवर्गस्तु तथारूपो व्यङ्ग्यानुप्राणितः। परीक्ष्यमाणो विवेचनागोचरीक्रियमाणः।

लक्ष्यविवेचनायां वाच्यालङ्काराणां सर्वेषां गुणीभूतव्यङ्ग्यमहिम्नैव प्रायश्चारुत्वातिशयो विभाव्यत इति भावः।

वृत्तिकार उक्ताशयको ही स्फुट करते हैं—वाच्येति। यह अत्यन्त प्रसिद्ध वाच्यरूप अलंकारोंका समूह व्यङ्ग्य-अलंकार या व्यङ्ग्य वस्तु-मात्रके औचित्यानुसार सम्पर्क होने पर अत्यन्त शोभातिशयको धारण किया हुआ लक्षण कारोंके द्वारा 'स्थालीपुलाक' न्यायसे दर्शाया गया है। परन्तु विशेष रूपसे विवेचन करने पर तो प्रायः करके सभी वाच्य भूत अलंकार उसी रूपमें व्यङ्ग्यसे अनुप्राणित होकर शोभातिशयको प्राप्त किये हुए दिखलाई पड़ रहे हैं, अर्थात् लक्ष्योंकी विवेचना करने पर प्रायः सभी वाच्यभूत अलंकारोंकी गुणीभूत व्यङ्ग्यकी महिमासे ही अतिशय रमणीयता प्रतीत होती है।

उपपादयति—

**तथा हि—दीपकसमासोक्त्यादिवदन्येऽप्यलङ्काराः प्रायेण व्यङ्ग्यालङ्कारवस्त्वन्तरसंस्पर्शिनो दृश्यन्ते।**

व्यङ्ग्यं वस्त्वन्तरमलङ्कारान्तरं चात्मप्रसाधनाय स्पृशन्तीति तथोक्ता वाच्यालङ्काराः। दीपके व्यङ्ग्योपमाऽलङ्कारस्य, समासोक्तौ व्यङ्ग्याप्रस्तुतवस्तुनश्च सम्बन्धेन यथा वाच्यालङ्कारोपस्कारः, तथाऽन्यत्रापीत्यभिसन्धिः।

उसीका उपपादन करते हैं—तथाहि इति। जैसे व्यङ्ग्य उपमा आदि अलंकारके सम्पर्कसे दीपक, तथा व्यङ्ग्य भूत नायक-नायिकाके व्यवहारादि वस्तुके सम्पर्कसे

समासोक्ति आदि अलंकारोंमें अतिशय शोभा बढ़ जाती है, वैसे ही अन्य अलंकारोंमें भी व्यङ्ग्य अलंकार या व्यङ्ग्य वस्तुके सम्पर्कसे अतिशय शोभा बढ़ जाती है।

समर्थयति—

**यतः प्रथमं तावदतिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रिया। कृतैव च सा महाकविभिः कामपि काव्यच्छविं पुष्यतीति कथं ह्यतिशययोगिता स्वविषयौचित्येन क्रियमाणा सती, काव्ये नोत्कर्षमावहेत्।**

अतिशयोक्तिर्गर्भे मध्ये वस्तुतो मूले येषां तेऽतिशयोक्तिगर्भास्तेषां भावस्तत्ता। शक्यक्रिया कर्तुं शक्या। स्वे विषयेऽर्थे यदौचित्यं, तेन तदनुसन्धानेन, क्रियमाणा विधीयमाना, अतिशययोगिता चमत्कारप्रकर्षसम्पादकार्थविशेषसम्बन्धिता काव्ये कथमुत्कर्षं नावहेदिति सम्बन्धः।

सर्वेषामेव वाच्यालङ्काराणां गुणीभूतव्यङ्ग्यसङ्गेनैव चारिमप्रकर्षः। तच्च व्यङ्ग्यं क्वचिदलङ्कारलक्षणं क्वचिद्वस्तुरूपं च। तत्र समासोक्त्यादौ वस्तु, दीपकादौ तूपमाऽलङ्कारो व्यङ्ग्यतामाश्रयति। अथवा सर्वत्रैवार्थालङ्कारेष्वर्थानां विच्छित्तिविशेषाधायकत्वरूपातिशयितत्वसम्पादिकाऽतिशयोक्तिरेव व्यञ्जनागम्याऽनुप्राणिका, तां विना तेषां कविप्रतिभोत्थापितत्वविरहान्न स्वरूपसम्पत्तिः। अत एव-कालिदासादिमहाकविप्रबन्धेषु तत्समावेशः प्रायेणेति सारम्।

उसीका समर्थन करते हैं—यत इति। क्योंकि सबसे पहले तो सभी अलंकार अतिशयोक्ति मूलक हो सकते हैं, क्योंकि महाकवियों द्वारा की हुई वह अलंकारोंकी अतिशयोक्ति मूलकता, काव्यको कुछ विलक्षण ही शोभा प्रदान करती ही है, इसलिये अपने विषयके अनुसार उचित रूपमें किया गया अतिशयोक्तिका सम्पर्क काव्यमें क्यों नहीं उत्कर्षको लाएगा। सारांश यह है कि सभी वाच्यभूत अलंकारों की गुणीभूत व्यङ्ग्यके सम्बन्धसे ही अतिशय रमणीयता होती है, और वह व्यङ्ग्य कहीं अलंकार रूप और कहीं वस्तु रूप होता है, उनमें समासोक्ति आदिमें वस्तु और दीपक आदिमें उपमालंकार व्यङ्ग्य होता है। अथवा सभी अर्थालंकारोंमें अर्थोंके विच्छित्ति विशेषाधायकत्व रूप अतिशयितत्वके सम्पादक व्यञ्जना द्वारा प्रतीयमान अतिशयोक्ति ही चमत्कार प्रदान करती है, क्योंकि उसके विना उन अलंकारोंका कवि प्रतिभासे उत्थापित नहीं होनेसे स्वरूप ही नहीं बनता।

भामहलक्षणानुसारमतिशयोक्तिमन्यादृशी मन्यमान उक्तार्थासंगतिं शङ्कते—

**भामहेनाप्यतिशयोक्तिलक्षणे यदुक्तम्—**

**'सैषा सर्वत्र वक्रोक्ति रनयाऽर्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥' इति।**

याऽतिशयोक्तिः पूर्वं लक्षिता, सा एषा वक्रोक्तिः सर्वत्र सर्वालङ्कारेष्वस्ति वाच्येषु । अनयाऽतिशयोक्त्याऽर्थः प्राचीनकविपरम्परावर्णितत्वेन पुरातनीकृतोऽपि विशेषेण भाव्यते विलक्षणतयाऽभिनवीक्रियते । अतोऽस्यामतिशयोक्तौ कविना यत्नः कार्यः । यद् अनया विना—एतद्विहीनः, कोऽलङ्कारः, न कोऽपि, चमत्कारविरहादित्यर्थः ।

तदुक्तम्—'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः ।' इति । वक्रौ यावभिधेयो वाच्यः शब्दश्च, तयोरुक्तिर्वाचां शब्दानां तद्वाच्यानां चालङ्कृतिरिष्टाऽलङ्कारो मत इति तदर्थः ।

वक्रशब्दमयी वक्रार्थप्रतिपादिका चोक्तिर्वक्रोक्तिः । तत्र शब्दार्थयोर्वक्रत्वमलौकिकभङ्गीनिवेशितत्वम् । तच्च काव्याऽलङ्कारेषु सर्वत्राविशिष्टमेव, तद् विनाऽलङ्कारत्वाभावात्, कथंचित्तत्त्वाङ्गीकारेऽपि वैचित्र्यविशेषानाधानात् । यदुक्तमित्यस्य 'तत्राप्ययमेवार्थोऽवगन्तव्यः' इत्यग्रिमेण सम्बन्धः ।

सर्वेषामेव वाच्यालङ्काराणां मूलभूता वाच्यकक्षामतिक्रम्य व्यङ्ग्यसरणिमारूढेति निगूढा चमत्कारप्रसूरतिशयोक्तिरस्तीति भवदुक्तिर्न सङ्गच्छते, भामहोक्तलक्षणानुसारं तस्याः सर्वालङ्कारसामान्यरूपतयाऽपृथग्भूतत्वेन व्यङ्ग्यत्वमूलत्वयोरसम्भवादिति पूर्वपक्षिणोऽभिप्रायः ।

भामहके लक्षणानुसार अन्य प्रकारकी ही अतिशयोक्तिको माननेवाले पूर्वपक्ष करते हैं—भामहेन इति । भामहने भी अतिशयोक्तिके लक्षणमें जो कहा है कि—सब अलंकारोंके चमत्कारकी जननी जिस अतिशयोक्तिको पहिले कह चुके हैं, वह यही वक्रोक्ति सभी वाच्यभूत अलंकारोंमें है, इस अलौकिक छटारूप अतिशयोक्तिके द्वारा पुराना पदार्थ भी विलक्षण रूपसे वर्णित किये जाने पर अत्यन्त चमकने लगता है, इसलिये कविको इसमें विशेष यत्न करना चाहिये, इसके बिना अलंकार ही क्या है? अर्थात् चमत्कार रहित होनेसे केवल नाम मात्रका ही अलंकार कहा जा सकता है । पूर्वपक्षका सारांश यह है कि अलौकिक भङ्गी (छटा) विशेषसे काव्यमें निवेशित शब्दार्थोंका प्रतिपादक उक्तिरूप वक्रोक्ति ही अतिशयोक्ति है और यह सभी अलंकारोंमें हो सकती है, इसलिये सभी वाच्यभूत अलंकारोंके मूलभूत व्यङ्ग्य सरणि पर पहुंची हुई अत्यन्त निगूढ और चमत्कारकी जननी अतिशयोक्ति है यह आप (सिद्धान्तवादी) का कथन संगत नहीं है, क्योंकि भामहोक्त लक्षणके अनुसार वह (अतिशयोक्ति) सब अलंकारोंके सामान्य रूप होनेसे उनसे अपृथक् भूत होनेके कारण व्यङ्ग्य और उनका मूल नहीं हो सकती ।

उत्तरमाह—

**तत्रातिशयोक्तिर्यमलङ्कारमधितिष्ठति, कविप्रतिभावशात् तस्य चारु-**

त्वातिशययोगः। अन्यस्यत्वलङ्कारमात्रतैवेति—सर्वालङ्कारशरीरस्वीकरणयोग्यत्वेनाभेदोपचारात् सैव सर्वालङ्काररूपेत्ययमेवार्थोऽवगन्तव्यः।

अधितिष्ठति पोषकत्वेनाश्रयति। अन्यस्यातिशयोक्त्यपोषितस्य। अलङ्कारमात्रता तज्जातीयत्वमेव, न तु तदीयविच्छित्तिविशेषात्मककार्यकारित्वम्। कविप्रतिभोत्थापितत्वाभावे 'गौर्जल्पति' इत्यादौ तु तस्या अपि नालङ्कारता, न वाऽन्यालङ्कारसम्पादकता। सर्वेषामलङ्काराणां शरीरस्य स्वरूपस्य स्वीकरणे निष्पादकत्वेनाङ्गीकरणे निर्माण इति यावत्, योग्या समर्था। अभेदोपचारान्निष्पाद्यनिष्पादकयोस्तादात्म्याध्यवसायात्। सैवातिशयोक्तिरेव।

अतिशयोऽतिशयिता प्रसिद्धिमतिक्रान्ता उक्तिरतिशयोक्तिरिति लक्षणादलौकिकचमत्काराधायकोक्तिरूपा कविप्रतिभोत्थापिताऽतिशयोक्तिरेव सर्वालङ्काराणामलङ्करणक्रिया निदानम्, तदभावे सन्नप्यलङ्कारोऽसत्कल्प एव, अशाणोल्लीढमणिवत्, तथा च सैव यतः सर्वालङ्काराणां स्वरूपनिष्पादिका, तस्मादतिशयोक्तेरलङ्कारान्तरस्य चायुर्घृतवत् तादात्म्यमुपचर्यत इत्येतदभिप्रायेणैव भामहेन सर्वालङ्काररूपाऽतिशयोक्तिरुक्ता, न तु वास्तविकाभेदाभिप्रायेण। तथा च वस्तुतो भिन्नत्वे सत्युपकारकत्वादतिशयोक्तेरन्यालङ्कारमूलभूतत्वम्, वाचकादिशब्दानुपलम्भेऽपि प्रतीतिगोचरत्वेन व्यङ्ग्यत्वं चास्मदुक्तं नासङ्गतमिति समाधातुस्तात्पर्यम्।

सिद्धान्ती उक्त पूर्वपक्षका उत्तर देते हैं—तत्रेति। उसमें कवियोंकी प्रतिभावश अतिशयोक्ति जिस अलंकारको पोषणके द्वारा प्रभावित करती है, वही अलंकार अतिशय रमणीयताको प्राप्त करता है, अन्य अलंकार तो चमत्कारातिशय रहित होनेसे केवल नाम मात्रका ही रह जाता है, इसीलिये सभी अलंकारोंके चमत्कार जनक स्वरूपके निर्माण कर सकनेकी क्षमता होनेके कारण भामहने 'आयुर्घृतं' की तरह अभेद उपचारसे यही (अतिशयोक्ति) सब अलंकार रूप है ऐसा कहा है, यही उसका अर्थ समझना चाहिये। सारांश यह है कि प्रसिद्धिको अतिक्रमण करने वाली उक्तिको ही अतिशयोक्ति कहते हैं, इसलिये कविकी प्रतिभासे उत्थापित अलौकिक चमत्काराधायक उक्तिरूप अतिशयोक्ति ही सब अलंकारोंके स्वरूप निष्पादक होनेसे भामहने तादात्म्यका आरोप कर उसको सर्वालंकार स्वरूप माना है न कि वास्तविक अभेदाभिप्रायसे कहा है, इसलिये वास्तवमें भेद रहने पर भी सब अलंकारोंके परम उपकारक होनेसे उसको सबका मूलभूत और वाचक शब्दके विना भी प्रतीति गोचर होनेसे व्यङ्ग्य कहा गया है।

अलङ्कारान्तरोपकारित्वादतिशयोक्तिं त्रिधा विभजते—

**तस्याश्चालङ्कारान्तरसङ्कीर्णत्वं कदाचिद् वाच्यत्वेन, कदाचिद् व्यङ्ग्यत्वेन, व्यङ्ग्यत्वमपि कदाचित् प्राधान्येन, कदाचिद् गुणभावेन। तत्राद्ये प्रकारे वाच्यालङ्कारमार्गः। द्वितीये ध्वनावन्तर्भावः। तृतीये तु गुणीभूतव्यङ्ग्यरूपता।**

तत्र प्रकारत्रये। आद्ये वाच्यत्वे। द्वितीये प्राधान्येन व्यङ्ग्यत्वे। तृतीये गुणीभावेन व्यङ्ग्यत्वे।

अतिशयोक्त्यलङ्कारो हि—'लावण्यसिन्धुरपरैव हि केयमत्र' इत्यादौ रूपकेण सङ्कीर्णो वाच्यः।

'केलीकन्दलितस्य विभ्रममधोर्धुर्यं वपुस्ते दृशौ,
भङ्गीभङ्गुरकामकार्मुकमिदं भ्रूनर्मकर्मक्रमः।
आपातेऽपि विकारकारणमहो! वक्त्राम्बुजन्मासवः,
सत्यं सुन्दरि! वेधसस्त्रिजगतीसारस्त्वमेकाकृतिः॥'

इत्याचार्यप्रणीतपद्ये विभ्रममधोरिति रूपकानुप्राणितो वसन्तकामासवानामलौकिकक्रमेण नायिकायां स्थितेर्वर्णनादध्यवसायस्य सिद्धत्वात् प्राधान्येन सूचनीयत्वाच्चध्वनिरूपः।

'उपोढरागेण' इत्यादौ च प्रागुदर्शितदिशा श्लेषपोषितः समासोक्तिपोषकोगुणीभूतव्यङ्ग्यरूप इति त्रयः प्रकारा अतिशयोक्तेरवसेयाः। तत्रादिमप्रकारद्वयस्य प्रकृतानुपयोगित्वेऽपि प्रासङ्गिकमाख्यानम्, अन्यत्रोपकारकत्वात्।

अलंकारान्तरके उपकारककी दृष्टिसे उस (अतिशयोक्ति) के तीन भाग करते हैं—तस्या इति। उस अतिशयोक्तिका अन्य अलकारके साथ सङ्कर कभी वाच्यरूपसे और कभी व्यङ्ग्य रूपसे होता है, व्यङ्ग्यत्व भी कभी प्रधानरूपसे और कभी अप्रधानरूपसे होता है। उन तीनों प्रकारोंमेंसे वाच्यरूप प्रथम पक्षमें वाच्यभूत अलंकारका मार्ग होता है। एवं व्यङ्ग्यके प्राधान्यपक्षमें ध्वनिमें अन्तर्भाव होता है और व्यङ्ग्यके अप्राधान्य पक्षमें गुणीभूत व्यङ्ग्यता होती है। उनमें प्रथम दोनोंके प्रकृतमें अनुपयोग होने पर भी प्रसङ्गवश कथन किया गया है, किन्तु 'उपोढरागेण' इत्यादि पूर्व प्रदर्शित स्थलमें श्लेषसे पोषित एवं समासोक्तिके पोषक गुणीभूत व्यङ्ग्यरूप अतिशयोक्तिका अन्तिम प्रकार समझना चाहिये।

अथास्या गुणीभूतालङ्कारान्तरेभ्यो व्यतिरेकमाह—

**अयं च प्रकारोऽन्येषामप्यलङ्काराणामस्ति, तेषां न सर्वविषयः।**

**अतिशयोक्तेस्तु सर्वालङ्कारविषयोऽपि सम्भवतीत्यर्थः ।**

अयं प्रकारोऽलङ्कारान्तरानुप्रवेशलक्षणस्तत्पोषणरूपः । अन्येषामुपमाऽऽदीनाम् । सर्वेऽलङ्कारा विषया यस्य तादृश इत्यलङ्कारान्तरानुप्रवेशविशेषणम् । सम्भवतीति पूर्वोक्तरीत्याऽभेदोपचारात् ।

उपमाऽऽदिभिर्हि मुष्टिमेयानां रूपकादीनामेवानुप्राणनं विधीयते । अनया पुनः 'कोऽलङ्कारोऽनया विना' इत्युक्तेः सर्वेषामेवालङ्काराणामिति वैलक्षण्यमस्या इति सारम् ।

अब अतिशयोक्तिमें गुणीभूत व्यङ्ग्यात्मक अलंकारान्तरकी अपेक्षा विशेषता बतलाते हैं—अयमिति । यह अन्य वाच्यभूत अलंकारोंके अनुप्राणन द्वारा तत्पोषण रूप प्रकार अतिशयोक्तिके समान यद्यपि उपमादि अलंकारान्तरमें भी होता है, तथापि उन ( गुणीभूत उपमादि ) के सब अलंकार विषय नहीं होते, परन्तु अतिशयोक्तिके तो सारे ही अलंकार विषय हो सकते हैं, अतः इसमें इतनी विशेषता है, अर्थात् गुणीभूत व्यङ्ग्य रूप उपमादिसे इने गिने ही रूपकादि वाच्यभूत अलंकारोंका पोषण होता है, लेकिन उक्त व्यङ्ग्य रूप अतिशयोक्तिसे तो सभी अलंकारोंका पोषण होता है, इसलिये इसमें स्पष्ट ही वैलक्षण्य है ।

कुत्र कीदृशं व्यङ्ग्यं वाच्यालङ्कारमुपकरोतीति प्रश्नं समादधद्, गुणीभूतव्यङ्ग्यविषयवैपुल्यं दर्शयति—

**येषु चालङ्कारेषु सादृश्यमुखेन तत्त्वप्रतिलम्भो यथा—रूपकोपमातुल्ययोगितानिदर्शनाऽऽदिषु, तेषु गम्यमानधर्ममुखेनैव यत् सादृश्यं, तदेव शोभाऽतिशयशालि भवतीति ते सर्वेऽपि चारुत्वातिशययोगिनः सन्तो गुणीभूतव्यङ्ग्यस्यैव विषयः । समासोक्त्याक्षेपपर्यायोक्तादिषु तु गम्यमानांशाविनाभावेनैव तत्त्वव्यवस्थानाद् गुणीभूतव्यङ्ग्यता निर्विवादैव ।**

तत्त्वप्रतिलम्भोऽलङ्कारत्वस्य वैचित्र्यविशेषात्मकस्य प्राप्तिः । उपमायां सादृश्यस्य गम्यमानत्वाभावादुपमापदमत्र तन्मूलकालङ्कारेषु लाक्षणिकम् । यद्वा, रूपकोपमेति रूपकतात्पर्यकमेव । वस्तुतस्तूपमायामपि क्वचित् 'चन्द्र इव मुखम्' इत्यादौ सादृश्यप्रयोजकाह्लादविशेषजनकत्वरूपसाधर्म्यस्य व्यङ्ग्यत्वमेवेति तदर्थमुपायान्तराश्रयणं नोचितम् । तत्र रूपकादिषु साम्यस्य गम्यमानता दर्शितैव ।

..................'निदर्शना ।

अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः ॥' इति

लक्षयित्वा—'क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।

तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥' इति मम्मटभट्टेनोदाहृतायां

निदर्शनायामप्यौपम्यमेव पर्यन्तविश्रान्तिभूमिः, आदिपदेनापह्नुतिप्रभृतीनां ग्रहणम्। गम्यमानांशस्य व्यङ्ग्यविशेषस्य, अविनाभावेनैव नियतसम्बन्धेनैव। तत्त्वव्यवस्थानादलङ्कारत्वव्यवस्थितेः। अत्रादिशब्दोऽप्रस्तुतप्रशंसा-परिकरप्रभृतिपरः।

अयं भावः—रूपकादिपूपमाऽलङ्कारो व्यङ्ग्यो मुखादौ चन्द्रत्वाद्यारोपस्य निमित्तत्वेनोपकरोति। समासोक्त्यादिषु पुनर्द्वितीयार्थरूपं वस्तुव्यङ्ग्यं तत्तदलङ्कारस्वरूपमेव निष्पादयति, तस्मादेते गुणीभूतव्यङ्ग्यस्यैव प्रभेदा ज्ञेयाः।

तुशब्दो रूपकादिषु व्यङ्ग्यस्य किञ्चिदुपकारकत्वमात्रं न स्वलङ्कारस्वरूपान्तः-प्रवेशः, समासोक्त्यादौ तु व्यङ्ग्यविशिष्टवाच्यस्यालङ्काररूपत्वाद् भेद इति सूचयति।

अब किस प्रकारका व्यङ्ग्य वाच्यभूत अलंकारोंका पोषण करता है, इस प्रश्नका समाधान करते हुए गुणीभूत व्यङ्ग्यका विषय वैपुल्य बतलाते हैं—येषु इति। जिन अलंकारोंमें सादृश्य द्वारा वैचित्र्य विशेषात्मक अलंकारत्व प्राप्त होता है, जैसे रूपकोपमा, तुल्ययोगिता, निदर्शना आदिमें, उनसे प्रतीयमान व्यङ्ग्य धर्म द्वारा प्राप्त जो सादृश्य है, वही शोभातिशय शाली होता है, इसलिये वे सभी अलंकार, अतिशय रमणीयतासे युक्त होनेके कारण गुणीभूत व्यङ्ग्यके ही विषय समझे जाते हैं, परन्तु समासोक्ति, आक्षेप, पर्यायोक्त आदिमें तो प्रतीयमान व्यङ्ग्यांशके अविनाभूत रूपमें ही अलंकारत्वात्मक स्वरूपकी प्रतिष्ठा होती है, इसलिये उनमें निर्विवाद ही गुणीभूत व्यङ्ग्यता है, अर्थात् रूपकादि वाच्यालंकारोंमें व्यङ्ग्यभूत सादृश्यात्मक उपमा अलंकार मुखादिमें चन्द्रत्वादिके आरोपमें निमित्त होनेसे उपकार करता है, परन्तु समासोक्ति आदिमें तो द्वितीय अर्थ रूप व्यङ्ग्य वस्तु उन अलंकारोंके स्वरूपको ही निष्पन्न करती है, इसलिये ये सब गुणीभूत व्यङ्ग्य वस्तुके ही प्रभेद हैं। एतावता सारांश यह हुआ कि रूपकादिमें व्यङ्ग्य किञ्चिन्मात्र उपकारक होता है न कि अलंकार स्वरूपके अन्दर उसका प्रवेश होता है, किन्तु समासोक्ति आदिमें तो व्यङ्ग्यार्थ विशिष्ट वाच्यार्थ ही अलंकार स्वरूप माना जाता है, एतावन्मात्र भेद है।

अथ गुणीभूतालङ्कारात्मकव्यङ्ग्यविषये विशेषं व्याहरति—

**तत्र च गुणीभूतव्यङ्ग्यतायामलङ्काराणां केषांचिदलङ्कारविशेषगर्भतायां नियमः। यथा—व्याजस्तुतेः प्रेयोऽलङ्कारगर्भत्वे।**

............'उक्ता व्याजस्तुतिः पुनः।

निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः॥' इतिदर्पणोक्तलक्षणा व्याजोक्तिः प्रेयोऽलङ्कारस्य गुणीभाव एव सम्भवति, तत्र वाच्यनिन्दया व्यज्यमानायाः स्तुतेरौपयिकत्वेन स्तावकनिष्ठ-स्तवनीयविषयकरतेरप्राधान्येन प्रतीतेः।

यथा ममान्योक्तिसाहस्र्याम्—'को वा देवततटिनि ! त्वत्परिचर्यामनोरथं कुर्यात् ।
भवसेविताऽप्यनुपजं तनोषि यत्त्वं भवच्छेदम् ॥'

इत्यादौ व्यङ्ग्यभावे लब्धगुणीभावे प्रेयोऽलङ्कारो भवतीत्युक्तमेव ।

अब गुणीभूत व्यङ्ग्य अलंकारोंके विषयमें विशेषता बतलाते हैं—तत्र चेति। उस गुणीभूत व्यङ्ग्यतामें किन्हीं अलंकारोंके अभ्यन्तर अन्य अलंकार विशेषके होनेका नियम है, जैसे व्याजस्तुतिके अन्दर प्रेयोलंकार नियमतः विद्यमान रहता है । क्योंकि उस (व्याजस्तुति) में वाच्यभूत निन्दासे प्रतीयमान स्तुतिके उपायभूत राजा या देवादि विषयक रति रूप भाव व्यङ्ग्य होता है और वह प्रेम रूप व्यङ्ग्यात्मक भाव वाच्यभूत व्याजस्तुतिके गर्भमें अवश्य रहेगा, अन्यथा व्याजस्तुति बन ही नहीं सकती, इसलिये गुणीभूत व्यङ्ग्य होता है और देवादि विषयक रति रूप भावके अन्याङ्ग होने पर प्रेयोऽलंकार होता है, अतः व्याजस्तुतिमें प्रेयोऽलंकारका होना आवश्यक है ।

अपरं विशेषमाचष्टे—

केषांचिदलङ्कारमात्रगर्भतायां नियमः । यथा–सन्देहादीनामुपमागर्भत्वे ।

मात्रशब्दोऽत्रालङ्कारसामान्यपरः । ननूपमाया विशिष्य ग्रहणात् का तत्सङ्गतिरिति चेत् ? न, उपमापदस्य तन्मूलकालङ्कारपरत्वस्य विवृतत्वात् । वस्तुतस्तु सन्देहादिषु सादृश्यमूलकालङ्कारेषूपमाया एव मूलत्वं, न तु रूपकादीनाम् । तथा हि—'मुखं चन्द्रो वा' इति संशयो मुखधर्मिकचन्द्रत्वारोपरूपरूपकप्रतीतौ दुर्घटः । एवमन्यत्रापि विवेचनीयम् । ग्रन्थयोजना तु नानाऽलङ्कारभूमिकाग्रहणसामर्थ्यादुपमाऽप्यलङ्कारसामान्यमेवेत्यभ्युपेत्यैव विधेया ।

किन्हीं अलंकारोंके गर्भमें अलंकार सामान्य होनेका नियम है, जैसे संदेहादिके गर्भमें उपमालंकार व्यङ्ग्य रूपसे भासित होता है, यहां पर उपमा पदसे सादृश्य मूलक सभी अलंकारोंका ग्रहण समझना चाहिये, जैसे–किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखं, किमब्जे किं मीनौ किमु मदनबाणौ किमु दृशौ । खगौ वा गुच्छौ वा कनककलशौ वा किमु कुचौ तडिद् वा तारा वा कनकलतिका वा किमबला ॥ इत्यादि संदेहादि अलंकारोंके उदाहरणोंमें उपमा नियमतः गर्भमें व्यङ्ग्य रूपसे पिहित रहती है। यद्यपि उपमा भी एक अलंकार विशेष ही है, इसलिये इसको भी अलंकार विशेष गर्भताके पूर्वोक्त नियमके वर्गमें ही रखना उचित था, तथापि इस (उपमा) में अनेक अलंकारोंके रूप धारण करनेकी सामर्थ्य है, अतः इसे अलंकार सामान्य मानकर ही अलंकार मात्र गर्भताका उदाहरण बतलाया है ।

तृतीयं विशेषमाह—

केषांचिदलङ्काराणां परस्परगर्भताऽपि सम्भवति । यथा—दीपकोपमयोः । तत्र दीपकमुपमागर्भत्वेन प्रसिद्धम् । उपमाऽपि कदाचिद् दीपकच्छायाऽनुयायिनी । यथा—मालोपमा । तथा हि—'प्रभामहत्या शिखयेव दीपः' इत्यादौ स्फुटैव दीपकच्छाया लक्ष्यते ।

प्रसिद्धं प्रागेव प्रतिपादितम् । कुमारसम्भवप्रथमसर्गे—

...................'त्रिमार्गयेव त्रिदिवस्य मार्गः ।

संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥' इतिश्लोकस्यावशेषः ।

अत्र हि हिमवत उपमेयस्य दीपाद्यनेकोपमानदर्शनात्—

'मालोपमा यदेकस्योपमानं बहु दृश्यते' इति लक्षिता मालोपमा पूर्णा । तस्याश्च पूतत्वविभूषितत्वरूपैकसाधारणधर्मेण प्रस्तुतस्य हिमवतोऽप्रस्तुतानां दीपादीनां चाभिसम्बन्धादुत्थितं दीपकमुपस्करोतीति तद्गर्भताऽपि, व्यक्तैव । न चान्योऽन्याश्रयः, उपमायाः सर्वत्र दीपकानपेक्षणात्, 'चन्द्र इव मुखम्' इत्यादिधर्मलुप्तोपमाप्रकारेषु दीपकानुपलम्भात् ।

अब तीसरी विशेषता बतलाते हैं—केषाञ्चिदिति । किन्हीं अलंकारोंमें तो परस्पर गर्भता भी हो सकती है, जैसे-दीपक और उपमामें । उनमें उपमा गर्भ दीपक तो प्रसिद्ध ही है, परन्तु कभी २ उपमा भी दीपक की छायानुसारिणी होती है, अर्थात् दीपकालंकारमें सभी जगह उपमा नियमतः गर्भमें रहती ही है, अतः दीपक हमेशा उपमाकी छायानुसारी होता है, परन्तु उपमा किसी स्थल विशेषमें दीपक की छायानुयायिनी होने पर भी सभी जगह उसकी अपेक्षा नहीं करती है, जैसे—'प्रभामहत्या शिखयेव दीपः' इत्यादि मालोपमा स्थलमें दीपक की छाया स्पष्ट रूपसे भासित होती है । 'जहां एक उपमेयमें अनेक उपमान हों वहां मालोपमा होती है । पार्वतीके जन्मसे हिमालय इस प्रकार पवित्र और सुशोभित हुए, जिस प्रकार प्रभा युक्त कलिका ( दीप शिखा ) से दीप सुशोभित होता है, या वियद् गङ्गासे आकाश सुशोभित होता है, अथवा संस्कारवती सरस्वतीसे विद्वान् पुरुष पवित्र और अलंकृत होता है, यहां एक हिमालय रूप उपमेयके उक्त तीन उपमान होनेसे मालोपमा अलंकार है, लेकिन मालोपमाके भीतर दीपक अलंकार व्यङ्ग्य रूपसे भासित होता है। इसलिये यह दीपक गर्भित उपमाका उदाहरण समझना चाहिये ।

उपसंहरति—

तदेवं व्यङ्ग्यांशसंस्पर्शे सति चारुत्वातिशययोगिनो रूपकादयोऽल-

ङ्काराः सर्व एव गुणीभूतव्यङ्ग्यस्य मार्गः। गुणीभूतव्यङ्ग्यत्वं च तेषां तथाजातीयानां सर्वेषामेवोक्तानुक्तानां सामान्यम्। तल्लक्षणे सर्व एवैते सुलक्षिता भवन्ति।

तेषां रूपकादीनामुपमाऽऽदिव्यङ्ग्यसम्बन्धितया प्रसिद्धानाम्। तथाजातीयानां व्यङ्ग्यसम्बन्धित्वेन तत्सदृशानाम्। उक्तानां दीपकतुल्ययोगिताप्रभृतीनाम्, अनुक्तानां सन्देहादीनाम्। गुणीभूतव्यङ्ग्यत्वं सर्वेषामेव सामान्यं साधारणम्। रूपकालङ्काराणां हि चारुत्वातिशयसम्बन्धे व्यङ्ग्यसम्बन्ध एव हेतुः, तेन सर्वेऽमी गुणीभूतव्यङ्ग्यस्य प्रभेदाः।

इदमुक्तं भवति—'गौरिव गवयः' इत्यादावुपमा, 'आदित्यो यूपः' इत्यादौ रूपकम्, 'स्थाणुर्वा पुरुषो वा' इत्यादौ सन्देहः, शुक्तिकायाम् 'इदं रजतम्' इत्यादौ भ्रान्तिमान्, तत्रैव—'नेयं शुक्तिः किन्तु रजतम्' इत्यादावपह्नुतिः, तत्रैव च—'नेदं रजतम्, अपि तु शुक्तिः' इत्यादौ निश्चयः, 'आयन्तौ टकितौ' इत्यादौ यथासङ्ख्यम्, 'अक्षा भज्यन्तां भुज्यन्तां दीव्यन्ताम्' इत्यादौ श्लेषः, 'पीनोऽयं देवदत्तो दिवा न भुङ्क्ते' इत्यादावर्थापत्तिः, 'स्थाघ्वोरिच्च' इत्यादौ तुल्ययोगिता, 'गामश्वं पुरुषं पशुम्' इत्यादौ पुरुषस्य प्रस्तुतत्वे दीपकम्, 'द्वा सुपर्णा सयुजा सखाया' इत्यादावतिशयोक्तिश्च नालङ्कारः, वैचित्र्यविशेषाधायकव्यङ्ग्यसम्बन्धवैधुर्यादिति व्यतिरेकग्रहात्, 'चन्द्र इव मुखम्' 'मुखं चन्द्रः' 'किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु, मुखम्' इत्यादिषु चोपमाऽऽदयोऽलङ्काराः, तत्सद्भावाद्, इत्यन्वयग्रहाच्च, व्यङ्ग्यस्यैवालङ्कारत्वसम्पादकता निर्णीयते। तच्च व्यङ्ग्यं प्रधानं सद् ध्वनिरूपतां दधन्नालङ्कारानुपचिकीर्षति, स्वयमलङ्कार्यत्वात्, किन्तु तन्महिम्ना तथाऽपि तेषामुपकारातिशयो भवत्येव, राजाश्रितानामिव तत्प्रभावेण। अप्रधानश्च कामिनीकुचकञ्जमिवेतन्निगूढं हारादीनिवोपमाप्रभृतीन् नितरां प्रसाधयतीति गुणीभूतव्यङ्ग्यत्वं सर्वेषामेवालङ्काराणां साधारणो धर्मः। तेन गुणीभूतव्यङ्ग्यस्य निरूपणेनैव सर्वालङ्काराणां निरूपणमिह विहितमवसेयम्।

अब सबका उपसंहार करते हैं—तदेवमिति। इसलिये उक्त प्रकार व्यङ्ग्यार्थोंके सम्पर्क होने पर शोभातिशयको प्राप्त करनेवाले रूपक आदि सभी वाच्यभूत अलंकार गुणीभूत व्यङ्ग्यके विषय हैं और उपमादि व्यङ्ग्यके सम्बन्धीरूपसे प्रसिद्ध अतिशय शोभायुक्त रूपक, दीपक, तुल्ययोगिता आदि कहे हुए अलंकारोंमें या न कहे हुए सन्देह आदि सभी अलंकारोंमें गुणीभूत व्यङ्ग्यता सामान्य रूपसे

ही रहती है। उस गुणीभूतव्यङ्ग्यके लक्षण जान लेने पर उपर्युक्त सभी अलंकार सुलक्षित हो जाते हैं। सारांश यह है कि चमत्काराधायक व्यङ्ग्य सम्पर्कके अभावमें 'गौरिव गवयः' इसमें उपमा 'स्थाणुर्वा पुरुषो वा' इसमें संदेह 'शुक्तौ इदं रजतम्' इसमें भ्रान्तिमान् 'आदित्यो यूपः' इसमें रूपक 'द्वा सुपर्णा सयुजा सखाया' इत्यादिमें अतिशयोक्ति आदि अलंकार रूपसे नहीं प्रतीत होते हैं, क्योंकि अलौकिक आह्लाद जनक व्यङ्ग्यार्थका सम्पर्क नहीं है, 'चन्द्र इव मुखम्' 'मुखं चन्द्रः' 'किमिन्दुः किं प्द्मम्-' इत्यादि स्थलमें लोकोत्तर चमत्कार जनक व्यङ्ग्यार्थके सम्पर्क होनेसे उपमा आदि अलंकार रूपसे प्रतीत होते हैं, इसलिये अन्वय-व्यतिरेकसे व्यङ्ग्यार्थमें ही अलंकारत्व सम्पादकता सिद्ध होती है, लेकिन वह व्यङ्ग्यार्थ प्रधानतया प्रतीत होने पर ध्वनि पदसे व्यवहृत होता हुआ स्वयं अलंकार्य होनेसे अलंकारोंको उतना अलंकृत नहीं करता, जितना कि गुणीभूत व्यङ्ग्य किञ्चित् निगूढ कामिनी कुच कलशकी तरह चित्ताकर्षक होकर मुक्ताहारादिके समान उपमादि अलंकारोंको सजाता है। इसलिये गुणीभूत व्यङ्ग्यत्व सभी अलंकारोंका साधारण धर्म है और उस (गुणीभूत व्यङ्ग्य) के निरूपण करनेसे ही सब अलंकारों का निरूपण सम्पन्न हो जाता है।

नन्वमी गुणीभूतव्यङ्ग्यप्रकारा अलङ्काराः, तर्हि पृथक् कथं न लक्षिता इत्याशङ्कायामाह—

**एकैकस्य रूपविशेषकथनेन तु सामान्यलक्षणरहितेन प्रतिपदपाठेनेव शब्दा न शक्यन्ते तत्त्वतो निर्ज्ञातुम्, आनन्त्यात्। अनन्ता हि वाग्विकल्पाः तत्प्रकारा एव चालङ्काराः।**

यथा शब्दानामनन्तत्वाद् 'घटः पटः' इत्यादिक्रमेण प्रतिपदपाठेन निर्धारणं कर्तुं न शक्यमिति पतञ्जलिचरणैरपि निर्णीतम्, तथैवालङ्काराणामपीति सामान्येनैव गुणीभूतव्यङ्ग्यत्वधर्मेण ते निरूपिता एवेति तन्निरूपणं नावशिष्यत इति भावः।

यदि अलंकार भी गुणीभूत व्यङ्ग्यके ही प्रकार हैं तो उनका भी पृथक् निरूपण क्यों नहीं करते? इसका समाधान करते हैं-एकैकस्येति। प्रत्येक अलंकारके सामान्य लक्षणको नहीं कहकर अलग २ प्रत्येकके स्वरूप विशेषके कथन करनेसे तो प्रतिपद पाठके द्वारा अनन्त शब्दोंके ज्ञानके समान अनन्त उन अलंकारोंका पूर्ण ज्ञान नहीं हो सकता, क्योंकि कथन करनेकी अनन्त शैलियां होती हैं और अलंकारोंके भी वे ही प्रकार हैं, अर्थात् जैसे अनन्त शब्दोंके एक एकका नाम लेकर निर्धारण करना असंभव है, वैसे ही अलंकारोंके भी प्रत्येकका पृथक् २ तत्तद् रूपसे निर्वचन करना असंभव है, इसलिये गुणीभूत व्यङ्ग्यत्व रूप सामान्य धर्मसे ही उन (अलंकारों) का निरूपण किया है।

न च नायं नियमो यत् सर्वेषामलङ्काराणां व्यङ्ग्यालङ्कारान्तरसम्बन्धोऽस्त्येवेति कुतो गुणीभूतव्यङ्ग्यसामान्यनिरूपणेन तेषामपि निरूपणमवसितमित्याक्षेपं निरस्यति—

**गुणीभूतव्यङ्ग्यस्य च प्रकारान्तरेणापि व्यङ्ग्यार्थानुगमलक्षणेन विषयत्वमस्त्येव।**

गुणीभूतव्यङ्ग्यशब्देन यत्र वस्तुरूपमलङ्काररूपं रसादिरूपं वा, न त्वलङ्काररूपमेव, किमपि व्यङ्ग्यं वाच्यमुपकरोति, तदुच्यते। तथा चालङ्काररूपव्यङ्ग्यविरहेऽपि क्वचिद् वस्तुरूपं, क्वचन रसादिरूपं वा व्यङ्ग्यमादाय सर्वेषामलङ्काराणां गुणीभूतव्यङ्ग्यत्वं तन्मात्रलक्षणेन लक्षितत्वं च सङ्गतमेवेत्याकूतम्।

सभी अलंकारोंमें गुणीभूत व्यङ्ग्यात्मक अलंकारके सम्बन्ध होनेका कोई नियम नहीं है, इसलिये गुणीभूत व्यङ्ग्य सामान्यके निरूपणसे उनका निरूपण निष्पन्न नहीं हो सकता इस आक्षेपका समाधान करते हैं—गुणीभूतेति। गुणीभूत व्यङ्ग्यकी विषयता केवल एक अलंकारमें अन्य गुणीभूत व्यङ्ग्यरूप अलंकारके सम्बन्धसे ही नहीं होती, अपितु वस्तु या रसादिरूप अन्य व्यङ्ग्यार्थके सम्बन्धसे भी होती है, अर्थात् जहां वस्तुरूप, अलंकाररूप, या रसादिरूप, (न कि केवल अलंकाररूप ही,) कुछ भी व्यङ्ग्य, वाच्यका उपकार करता है, वही यहाँ गुणीभूत व्यङ्ग्य शब्दसे लिया जाता है, इसलिये कहीं अलंकार रूप व्यङ्ग्यके नहीं रहने पर भी वस्तुरूप अथवा रसादि रूप व्यङ्ग्यको लेकर ही सभी अलंकारोंमें गुणीभूत व्यङ्ग्यत्व समझना चाहिये।

गुणीभूतव्यङ्ग्यं प्रशस्त्या व्यवस्थापयन्नुपसंहरति—

**तदयं ध्वनिनिःष्यन्दरूपो द्वितीयोऽपि महाकविविषयोऽतिरमणीयो लक्षणीयः सहृदयैः। सर्वथा नास्त्येव सहृदयहृदयहारिणः काव्यस्य स प्रकारो, यत्र न प्रतीयमानार्थसंस्पर्शेन सौभाग्यम्।**

ध्वनेर्निःष्यन्दरूपस्ततो निस्सृतो दुग्धादामिक्षावत् किञ्चिन्न्यूनः, न तु नवनीतवत् तत्साररूपः, तथासत्यस्यैव प्राधान्यबोधापत्तेः। द्वितीयो गुणीभूतव्यङ्ग्यनामाऽपि काव्यप्रकार इत्यनुषज्यते। महाकवीनां विषयो विधेयः। अतिरमणीयश्चित्राद्यपेक्षया। लक्षणीयो द्रष्टव्यो विवेक्तव्य इति यावत्। काव्यस्य स प्रकारो नास्त्येवेति योगः। सौभाग्यं रमणीयता।

अयमपि काव्यप्रकारश्चमत्कारितायां ध्वनेरीषदेव न्यूनः, अत्रापि चमत्कारिव्यङ्ग्यसम्बन्धात्। इत्थं च काव्यस्य सर्वेष्वेव प्रकारेषु व्यङ्ग्यप्रयुक्तमेव सौन्दर्यमिति तदावश्यकमिति भावः।

गुणीभूत व्यङ्ग्यकी प्रशंसा द्वारा उपसंहार करते हैं—तदयमिति । इसलिये अत्यन्त आह्लादजनक महाकविविषयक यह दूसरा ध्वनि प्रवाह भी सहृदयोंको जान लेना चाहिये, सहृदयोंके हृदयको चकित करनेवाले काव्यका कोई ऐसा भेद नहीं है, जिसमें व्यङ्ग्यार्थके सम्बन्धसे रमणीयता न आ जाती हो, अर्थात् काव्यके सभी प्रकारोंमें व्यङ्ग्यार्थ प्रयुक्त ही सौन्दर्य होता है, इसलिये काव्यमें व्यङ्ग्यार्थका होना अत्यन्त आवश्यक है। सारांश यह है कि प्रकृतमें गुणीभूत व्यङ्ग्यको ध्वनिका निःष्यन्द कहा है, उससे गुणीभूत व्यङ्ग्यको ध्वनिकी दूसरी धारा या उससे उत्पन्न दूसरा प्रवाह ही समझना चाहिये, जिस प्रकार दधिका सार नवनीत (मक्खन) होता है, इसी प्रकार ध्वनिका सार प्रधान रूपसे प्रतीयमान व्यङ्ग्य रसादि ही है, गुणीभूत व्यङ्ग्य तो आमिक्षा (छेना) के समान चित्र काव्यादि की अपेक्षा ही अति रमणीय समझा जाता है, ध्वनिकी अपेक्षा नहीं।

'सकलसत्कविकाव्योपनिषद्भूतम्' इति प्रथमोद्द्योते-कथितं व्यङ्ग्यप्राशस्त्यमवितथं प्रथयितुमाख्याति—

तदिदं काव्यरहस्यं परमिति सूरिभि र्भावनीयम् ।

तदिदं व्यङ्ग्यं तदाहितसौभाग्यं च ।

इसलिये सहृदय विद्वानोंको यह समझ लेना चाहिये कि व्यङ्ग्यार्थका सम्पर्क ही काव्यका परम रहस्य है।

तदेव निदर्शनदर्शनेन समर्थयति—

'मुख्या महाकविगिरामलङ्कृतिभृतामपि ।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम् ॥६४॥'

अलङ्कृतिभृतां वाच्यालङ्कारयुक्तानामपि, महाकवीनां गिरां वाचां काव्यानामिति यावत् । योषितां स्त्रीणां लज्जेव, एषा साम्प्रतमेवोक्ता प्रतीयमानच्छाया व्यङ्ग्यसंस्पर्शप्रयुक्तसुषमा, मुख्या भूषा प्रधानं भूषणमित्यर्थः ।

अयमाशयः—यथा विपुलालङ्करणाऽपि तरुणी लज्जयैव नितरां विभूष्यते, तस्या अन्तरुन्मिषन्मान्मथविकारनिजुह्नुविषाविशेषत्वेन मन्मथविजृम्भारूपत्वात् । अत एव तद्विकारविधुराणां यतीनां दिगम्बरत्वेऽपि न त्रपोन्मेषः । लज्जाऽभावे ह्याशिखं विभूषणाचिताऽपि वारवधूर्न मनागपि कुलाङ्गनाभङ्गीमङ्गीकर्तुं प्रभवति । कवयोऽपि हि—'लज्जापर्याप्तसाधनानि' इति कुलकलत्राणि विशिंषन्ति वर्णयन्ति च—

'कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्,
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।

अनिद्रं यच्चान्तः स्वपिति, तदहो वेद्म्यभिनवां,

प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥' इत्यादि ।

तथैव कविवाक् सालङ्काराऽपि व्यङ्ग्यविशेषसङ्गेनैव प्रसाध्यते, अलङ्कारविरहेऽपि तद्योगे चमत्कारानुभवात्, तत्सत्त्वेऽप्येतदभावे तदभावाच्च ।

उक्त विषयको ही दृष्टान्त द्वारा बतलाते हैं—मुख्येति । जिस प्रकार अनेकों भूषणोंसे भूषित होने पर भी लज्जा ही कुलाङ्गनाओंका मुख्य भूषण होती है, उसी प्रकार उपमादि अलंकारोंसे अलंकृत होने पर भी महाकवियोंकी वाणीका व्यङ्ग्यार्थ सम्बन्ध प्रयुक्त सुषमा ही मुख्य अलंकार है । अर्थात् जैसे विपुल सुवर्णादि भूषण वाली होने पर भी कुलवधू लज्जासे ही अधिक विभूषित होती है, क्योंकि लज्जाके अभावमें चोटीपर्यन्त आभरणोंसे अलंकृत होने पर भी वारवधू ( वेश्या ) लेशमात्र भी कुलीना स्त्री की छटाको नहीं पाती, वैसे ही कवियोंकी वाणी नाना अलंकारोंसे युक्त होने पर भी व्यङ्ग्यविशेषके सम्पर्कसे ही सुसज्जित होकर अलौकिक आह्लाद-जनक होती है, क्योंकि अलंकारोंके नहीं रहने पर भी व्यङ्ग्यके योगमें चमत्कारका अनुभव होता है, इसलिये व्यङ्ग्यार्थका सम्पर्क ही मुख्य चमत्काराधायक है ।

तदाह—

अनया सुप्रसिद्धोऽप्यर्थः किमपि कामनीयकमानीयते ।

'व्यङ्ग्यसम्बन्धेन हि वर्णितचरत्वेन पुरातनोऽप्यर्थोऽभिनवीक्रियते । तदेत-द्दर्शयति चतुर्थोद्द्योते—'अतो ह्यन्यतमेनापि प्रकारेण विभूषिता । वाणी नवत्वमायाति' इत्यादि ।

इस प्रतीयमान व्यङ्ग्यार्थके सम्पर्कजन्य सुषमासे अनेकों बार वर्णित होनेके कारण पुराना भी अर्थ नूतनकी तरह अत्यन्त रमणीय प्रतीत होने लगता है ।

उदाहरति—

तद्यथा—

'विस्रम्भोत्था मन्मथाज्ञाविधाने ये मुग्धाक्ष्याः केऽपि लीलाविलासाः ।

अक्षुण्णास्ते चेतसा केवलेन स्थित्वैकान्ते सन्ततं भावनीयाः ॥' इत्यत्र ।

मन्मथस्य त्रिभुवनैकच्छत्रराज्यशासनानुल्लङ्घनीयाज्ञस्य कामस्य, आज्ञाया 'भीहीपरिहारपुरस्सरं विहियताम्' इत्येवंरूपादेशस्य, विधानेऽनुष्ठाने, मुग्धाक्ष्या वाम-लोचनायाः ये विस्रम्भात् परिचयमदनोद्रेकजन्यत्रपासाध्वसध्वंसलक्षणविश्वासाद्, उत्था उत्पन्नाः, अक्षुण्णाः प्रतिपलं नवनवीभावेनापरिचितचराः, केऽप्यपूर्वतयाऽप-रिच्छिन्नतया वाऽनिर्वचनीयाः, लीलाविलासाः केलिविभ्रमविशेषाः समुल्लसन्तीति

शेषः। ते सहृदयैरेकान्ते रहसि, (न तु जनसमाजे, तत्र चित्तविक्षेपसम्भवात्) स्थित्वा, केवलेन निरुद्धवृत्त्यन्तरेण, चेतसा, सन्ततमनवरतं, भावनीयाः पुनःपुनरनुसन्धानलक्षणभावनागोचरीकरणीयाः, न त्वन्यथाऽवगन्तुं योग्या इत्यर्थः।

अनुल्लंघनीय शासनवाले कामदेवके भय-लज्जा त्याग पूर्वक विहार करनेके आदेशके पालनमें सुन्दराक्षी नायिकाके मदनोद्रेक जन्य लज्जा-भयके ध्वंसरूप विश्वाससे उत्पन्न जो कुछ विलक्षण ही एक अनिर्वचनीय प्रतिक्षण अक्षुण्ण नये नये हाव भाव होते हैं, उन (हाव भावों) का एकान्तमें बैठकर सहृदयोंको चाहिये कि अन्य विषयोंकी ओरसे मनको हटाकर अनन्य चित्तसे बार बार मनन करे।

अत्र केऽपीतिशब्देनाभिधीयमानोऽनिर्वचनीयरूपोऽर्थः प्रथममस्फुटतयाऽचमत्कारकोऽपि, पश्चादगणेयगुणगौरवप्रयुक्तभणनाशक्यत्वादिलक्षणरमणीयापरिमितव्यङ्ग्यसङ्गेनाद्भुतशोभाशाली विधीयत इत्याह—

**केऽपीत्यनेन पदेन वाच्यमस्पष्टमभिदधता प्रतीयमानमक्लिष्टमनन्तमर्पयता का छाया नोपपादिता ?।**

केऽपीत्यस्य पदत्वं वाचकत्वादारोपितम्।

उक्त उदाहरणमें वाच्यार्थको स्फुट रूपसे न कहनेवाले 'केऽपि' इस पदने अनन्त और अक्लिष्ट प्रतीयमान एक विलक्षण व्यङ्ग्यार्थकी प्रतीति कराते हुए कौनसा सौन्दर्यको नहीं उत्पन्न कर दिया है, अर्थात् 'केऽपि' इस शब्दसे अभिधीयमान अनिर्वचनीयरूप अर्थ पहले स्पष्ट रूपसे चमत्कार जनक नहीं प्रतीत होने पर भी, पश्चात् अगणनीय गुण गौरव प्रयुक्त अवर्णनीय रूप रमणीय व्यङ्ग्यार्थके सम्पर्कसे अद्भुत शोभाशाली कर दिया गया है।

अथ काकाक्षिप्तव्यङ्ग्यरूपं गुणीभूतव्यङ्ग्यप्रकारं निरूपयति—

**'अर्थान्तरगतिः काक्वा या चैषा परिदृश्यते।**
**सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता ॥३९॥'**

काकुः शोकक्रोधभयादिजनितध्वनिविकारः, तया तत्कृतहठाक्षेपेण, अर्थान्तरस्य व्यङ्ग्यस्य, गतिः प्रतीतिश्च, या एषा परिदृश्यतेऽनुव्यवसीयते। सा व्यङ्ग्यस्य गुणीभावेऽप्राधान्ये सति, इमं गुणीभूतव्यङ्ग्यरूपं काव्यस्य प्रकारमाश्रिता तदर्थविषयिणीत्यर्थः।

तथा च—'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः' इत्यमरः।

अब काकाक्षिप्त व्यङ्ग्य रूप गुणी भूत व्यङ्ग्यका उदाहरण प्रदर्शन पूर्वक लक्षण बतलाते हैं—अर्थान्तरेति। काकु (शोक-क्रोध-भयादि जनित ध्वनि विकार)

द्वारा जो यह बिल्कुल भिन्न अर्थकी प्रतीति होती है, उसको व्यङ्ग्यके गौण होनेसे इसी गुणीभूत व्यङ्ग्यके अन्तर्गत समझना चाहिये।

तद्वृत्ति—

या चैषा काका क्वचिदर्थान्तरप्रतीतिर्दृश्यते, सा व्यङ्ग्यस्यार्थस्य गुणीभावे सति, गुणीभूतव्यङ्ग्यलक्षणमिमं काव्यप्रभेदमाश्रयते।

केचित्तु—'अर्थान्तरगतिः' इत्यत्र बहुव्रीहिं मत्वा, काव्यप्रभेदपरमेव पदमिदं व्याचक्षते।

वृत्तिकार उक्तकारिकार्थको ही स्फुट करते हैं—या चैषेति। कहीं काकु (बोलनेके विलक्षण ढङ्ग) से जो यह प्रसिद्ध वाच्यार्थसे बिल्कुल भिन्न, अथवा उसी वाच्यार्थके वैशिष्ट्यसे अर्थान्तरमें परिणत विशेष, या तदभाव रूप तीन प्रकारका अर्थ प्रतीत होता है, वह व्यङ्ग्यार्थके अप्राधान्य होनेके कारण गुणीभूत व्यङ्ग्य नामक काव्यविशेषके अन्तर्गत गिना जाता है।

उदाहरति—

यथा—'स्वस्था भवन्ति ? मयि जीवति धार्तराष्ट्राः।'

वेणीसंहारप्रथमाङ्के—'स्वस्था भवन्तु कुरुराजसुताः सभृत्याः।' इतिसूत्रधारोक्तिमाकर्ण्य क्रुद्धेन भीमेनोक्तस्य पद्यस्य चरमांशोऽयम्। पूर्वांशस्तु—

लाक्षागृहानलविषान्नसभाप्रवेशैः,
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्य पाण्डववधू-परिधानकेशान्' इति।

मयि कौरवकुलधूमकेतौ प्रतिज्ञाततन्निधने भीमसेने जीवति, सति, न तु मृते, धार्तराष्ट्रा धृतराष्ट्रस्य सुता दुर्योधनादयः, स्वस्था निर्वृता भवन्ति, न कथमपि स्वस्था भवन्तीत्यर्थः।

अत्र विकृतप्रश्नकाकुस्वरविशिष्टः 'स्वस्थाः' इति, 'भवन्ति' इति, 'मयि जीवति' इति, 'धार्तराष्ट्राः' इति च शब्दो वाच्यार्थस्य सर्वथाऽसम्भावनीयतामनौचित्यं च सूचयति। तत्र वाच्योपकारकत्वेन व्यङ्ग्यं गुणीभूतम्, तद्विना तात्पर्यानुपपत्त्या वाच्यार्थबोधापर्यवसानादिति गुणीभूतव्यङ्ग्यतैवास्य काव्यस्य।

काकुरनुपपत्त्या व्यञ्जनासाहाय्येन वाच्योपपादकमर्थान्तरं समाक्षिपतीति सारम्।

तत्रत्यमेव—'मथ्नामि कौरवशतं समरे न कोपाद्,
दुश्शासनस्य रुधिरं न पिबाम्युरस्तः।

सञ्चूर्णयामि गदया न सुयोधनोरू,
सन्धिं करोतु भवतां नृपतिः पणेन ॥' इति पद्यमप्युदाहरणम् ।

इदमिहावगन्तव्यम्—काकुध्वनि—काक्वाक्षिप्तव्यङ्ग्यरूपगुणीभूतव्यङ्ग्ययोर्वैलक्षण्यं न सम्भावनीयम् । यतो यत्र काकुव्यञ्जितार्थमन्तरेणापि वाच्यार्थबोधे पर्यवसन्ने, प्रकरणादिपर्यालोचनया व्यङ्ग्यार्थबोधः, स काकुध्वनिः । यथा तत्रैव—

'तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां,
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं,
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥'

इति पद्ये, 'कुरुषु गुरोः खेद उचितः । मयि तु नोचितः' इत्याकारेण नञ्काकुव्यङ्ग्येन विनाऽपि बाधाभावाद् वाच्यार्थप्रतीतिः सम्पद्यते । यत्र पुनः काकुबोधितव्यङ्ग्यादृते बाधितो वाच्यार्थ एव न बुध्यत इत्यनुपपत्त्योपपादकमर्थान्तरं काक्वा हठादाक्षिप्यते, तद्गुणीभूतव्यङ्ग्यं काक्वाक्षिप्तव्यङ्ग्यं नाम । यथा-'स्वस्था भवन्ति' इत्यादौ । इत्थञ्च तयोर्वैलक्षण्यं व्यक्तमेव । अत एव हठाकृष्टार्थक्षाक्षिप्तपदसन्निवेशोऽपि सफलः ।

काक्वाक्षिप्त गुणीभूत व्यङ्ग्यका उदाहरण निम्न प्रकार है—यथेति । जैसे वेणी संहारमें 'स्वस्था भवन्तु कुरुराजसुताः सभृत्याः' इसप्रकार सूत्रधारोक्तिको सुनकर क्रुद्ध होकर भीमसेन कहते हैं—स्वस्था भवन्ति इत्यादि । श्लोकका भावार्थ यह है कि लाक्षागृहमें अग्नि लगाकर, विषयुक्त अन्न खिलाकर द्यूत द्वारा हमारे प्राणों और धन सम्पत्तियों पर क्षति पहुंचाकर और गुरु जनोंके सामने ही भरी सभामें पाण्डवोंकी पत्नी द्रौपदीके वस्त्र खींचनेकी दुश्चेष्टा करके भी कौरव कुलके धूमकेतु रूप मुझ भीमसेनके जीते रहने पर भी धृतराष्ट्रके पुत्र दुर्योधनादि निश्चिन्त होकर पूर्ण प्रसन्न रहें ?

यहाँ पर विकृत प्रश्नका कुस्वर युक्त-'स्वस्थाः' 'भवन्ति' 'मयि जीवति' ये पद पूर्वोक्त अर्थका असम्भव सूचित करते हैं, अर्थात् दृढ़ प्रतिज्ञ भीमसेनके जीते जी कौरव किसी भी तरह स्वस्थ नहीं रह सकते, यह अर्थ काकुसे अभिव्यक्त होता है ।

तस्यैवोदाहरणान्तरमाचष्टे—

यथा वा—

दृष्टदुश्चरितया जनसमाज एव प्रतिवेशिन्योपहस्यमाना पुंश्चली तां प्रत्युपहसन्ती

व्याहरति—

'आम असइओ ओरम पइव्वए ! ण तुए मलिणिअँ सीलम् ।
किं उण जणस्स जाअ व्व चन्दिलं तं ण कामेमो ॥'

'भवामोऽसत्य उपरम पतिव्रते ! न त्वया मलिनितं शीलम् ।
किं पुनर्जनस्य जायेव नापितं तं न कामयामहे ॥' इति च्छाया ।

अयि पतिव्रते ! अपांशुले ! वयम्, असत्यो व्यभिचारिण्यो भवामः स्मः, उपरम त्वं गर्हणान्निवर्तस्व तूष्णीं भवेति यावत् । त्वया शीलं सुचरितं न मलिनितं नैव कलङ्कितम् । किं पुनः किन्त्वसतीभावेऽपि, जनस्यान्यपुरुषस्य ( त्वत्पतेः ) जायेव पत्नीव ( त्वमिव ) तं पामरत्वेन प्रसिद्धं नापितं क्षुरोपजीवितयाऽधमं, न कामयामहे न स्पृहयाम इत्यर्थः ।

स्वयं नीचतरनापितेऽनुरक्ताऽपि मां किमाक्षिपसि ? अहन्तु कुलटाऽपि कमपि पुरुषरत्नमेव स्पृहयामीति भावः ।

इह—'भवामोऽसत्यः' इत्यभ्युपगमकाकुः 'तेन का हानिः ?' 'किं च त्वयाऽत्र प्रतिविधेयम् ?' 'का वा नोऽत्र भीतिः ?' इत्याद्यनन्तमर्थं स्वार्थोपपादकतया गुणीभूतं व्यनक्तीति गुणीभूतव्यङ्ग्यता । एवम् 'उपरम' इति सूचनगर्भा, 'पतिव्रते ?' इति दीप्ता, 'न त्वया मलिनितं शीलम्' इति सगद्गदाकाङ्क्षा, 'किं पुनः' इत्यादिनिराकाङ्क्षगद्गदोपहासगर्भा च काकुरविनयातिशयप्रभृतीनर्थान् सूचयति ।

अब काक्वाक्षिप्त गुणीभूत व्यङ्ग्यका ही दूसरा उदाहरण बतलाते हैं—यथावेति । अच्छा बहुत-ठीक है, हम असती ( व्यभिचारिणी ) हैं और महारानी ( आप ) पतिव्रता, पर हे पतिव्रते ! आप चुप रहिये, आपने तो अपना चरित्र भी भ्रष्ट नहीं किया है, लेकिन हम साधारण ( क्षुद्र ) जनकी स्त्रीके समान उस अधम कर्मजीवी नापित ( नाई ) की कामना नहीं करती हैं ।' यहां आप स्वयं अधम ( नीच ) नापित पर आसक्त होकर भी हमारे ऊपर आक्षेप करती हैं ( चार चांद लगाती हैं ) इत्यादि अनेक व्यङ्ग्य उक्त पदोंसे काकु द्वारा प्रतीत होते हैं, इसलिये यह काक्वाक्षिप्त गुणीभूत व्यङ्ग्यका उदाहरण समझना चाहिये ।

नन्वेवं काकोरेव व्यापारेषु प्राधान्यं नाभिधाया इत्यत आह—

शब्दशक्तिरेव हि स्वाभिधेयसामर्थ्याक्षिप्तकाकुसहाया सत्यर्थविशेषप्रतिपत्तिहेतुर्न काकुमात्रम् ।

शब्दशक्तिरभिधैव स्वाभिधेयसामर्थ्येन स्ववाच्यान्यथाऽनुपपत्त्याऽऽक्षिप्ता कल्पिता

काकुरेव, सहाया सहकारिणी यस्यास्तादृशी, सती, अर्थविशेषस्य तादृशव्यङ्ग्यस्य प्रतिपत्तेरवगमस्य हेतुः, न तु काकुमात्रम्, केवलं काकुर्नेत्यर्थः।

काकुस्वरसाहाय्येनाभिधैवार्थव्यञ्जनाबोध्यार्थबोधे निमित्तं काकुस्तु सहकारिणीति नैव मुख्यत्वं तस्या इत्यभिसन्धिः।

**उक्त रीतिसे काकुका ही व्यापारमें प्राधान्य है, अभिधाका नहीं? इस आक्षेपका समाधान करते हैं—शब्दशक्तिरिति। शब्दकी अभिधा शक्ति ही अपने वाच्यार्थकी अन्यथाऽनुपपत्ति द्वारा आक्षिप्त काकुकी सहायतासे व्यङ्ग्यार्थ विशेषकी प्रतीतिका कारण होती है, केवल काकुमात्र नहीं, अर्थात् काकु स्वरकी सहायतासे अभिधा ही वाच्यवृत्ति व्यञ्जनाबोध्य व्यङ्ग्यार्थ प्रतीतिमें निमित्त है, काकु तो केवल सहकारिणी है, इसलिये काकुकी मुख्यता नहीं है।**

कुत इति शङ्कायां वदति—

**विषयान्तरे स्वेच्छाकृतात् काकुमात्रात् तथाविधार्थप्रतिपत्त्यसम्भवात्।**

विषयान्तरेऽभिधाशून्यशब्दे। स्वेच्छाकृताद् यादृच्छिकात्।

इदमाकूतम्—यतो वाचकशब्दवृत्तिरेव काकुर्व्यङ्ग्यमर्थं बोधयितुं समर्था, ततस्तदर्थप्रत्यायनेऽभिधैव प्रधानं कारणं काकुस्तु सहकारिण्येव। यदि काकोरेव प्राधान्यं स्यात्, तदाऽवाचकशब्दनिष्ठाऽपि काकुस्तमर्थं बोधयेदेव। न च केवला सा बोधयितुं प्रभवति, तस्मात्तस्यास्तत्र सहकारितामात्रं, न तु प्रधानकारणता।

**क्योंकि अभिधा शून्य शब्द स्थलोंमें स्वेच्छाकृत काकुमात्रसे उस प्रकारके व्यङ्ग्यार्थविशेषकी प्रतीतिका सम्भव नहीं है, अर्थात् वाचक शब्दमें रहनेवाली ही काकु व्यङ्ग्यार्थके बोधनमें समर्थ होती है, इसलिये अभिधा ही तदर्थ बोधनमें प्रधान कारण है, काकु तो सहकारि कारण ही है, यदि काकु ही प्रधान कारण होती तो उक्त रीतिसे अवाचक शब्दवृत्ति भी काकु तदर्थका बोध करा देती, परन्तु केवल वह बोध करानेमें समर्थ नहीं होती है, अतः उसकी सहकारिता मात्र ही है, प्रधान कारणता नहीं है।**

नन्वेवं सोऽर्थो वाच्य एव स्याद्, अभिधयैव बोधितत्वादित्याक्षेपं समाधत्ते—

**स चार्थः काकुविशेषसहायशब्दव्यापारोपारूढोऽप्यर्थसामर्थ्यलभ्य इति व्यङ्ग्यरूप इति।**

स काकुप्रतीयमानोऽर्थस्तु काकुविशेषः साकाङ्क्षादिकाकुरूपशब्दवृत्तिधर्मविशेषः सहायो बोधने सहकारी यस्य तादृशो यश्शब्दस्य व्यापारोऽभिधालक्षणः, तेनोपारूढोऽपि प्रतीतिगोचरीकृतोऽपि, अर्थसामर्थ्यलभ्य आर्थव्यञ्जनाबोध्य इति हेतोर्व्यङ्ग्यरूप एव, न तु वाच्य इत्यर्थः।

काक्वाक्षिप्तव्यङ्ग्यस्य बोधनाय यद्यप्यभिधाऽपि किञ्चित् प्रसरत्येव, किन्तु प्रसरन्त्यपि सा प्रतीयमानं न स्प्रष्टुमर्हति, तदभिमर्शार्थमार्थव्यञ्जनामेवानुसरतीति तदर्थस्य न वाच्यत्वमित्यभिप्रायः।

ऐसी दशामें अभिधासे ही बोधित होनेसे वह अर्थ, वाच्य ही हो जायगा व्यङ्ग्य नहीं होगा, इस आक्षेपका समाधान करते हैं—स चार्थ इति। काकुसे प्रतीयमान वह अर्थ साकांक्ष शब्दवृत्ति काकुरूप धर्म विशेषकी सहायतासे अभिधात्मक शब्दव्यापार द्वारा प्रतीति विषय होने पर भी अर्थवृत्ति व्यञ्जनात्मक सामर्थ्यसे लभ्य होनेके कारण व्यङ्ग्यरूप ही होता है, वाच्यरूप नहीं होता। अर्थात् काक्वाक्षिप्त व्यङ्ग्यके बोधनार्थ यद्यपि उक्त रीतिसे अभिधाका भी कुछ संचार होता है, तथापि वह प्रतीयमान व्यङ्ग्यार्थका स्पर्श तक भी स्वयं नहीं कर सकती, क्योंकि व्यङ्ग्यार्थभानके लिये तो उसको भी व्यञ्जनाका ही अनुसरण करना पड़ता है, इसलिये काक्वाक्षिप्त अर्थ वाच्य नहीं हो सकता है।

तादृशप्रतीयमानस्य गुणीभावमुपपादयति—

**वाचकत्वानुगमेनैव तु यदा तद्विशिष्टा वाच्यप्रतीतिः, तदा गुणीभूतव्यङ्ग्यतया, तथाविधार्थद्योतिनः काव्यस्य व्यपदेशः। व्यङ्ग्यविशिष्टवाच्याभिधायिनो हि गुणीभूतव्यङ्ग्यत्वम्।**

वाचकत्वेऽनुगमोऽभिधां प्रति गुणीभावोऽभिधानुसरणं वा व्यञ्जनायाः, तेनैव यदा तद्विशिष्टा व्यङ्ग्योपस्कृता वाच्यार्थस्य प्रतीतिर्भवति, तदा तथाविधार्थद्योतिनो वाच्यविशेषणतया गुणीभूतं व्यङ्ग्यं प्रकाशयतः काव्यस्य, गुणीभूतव्यङ्ग्यतया व्यपदेशो भवति। यतस्तत्काव्यं व्यङ्ग्यविशिष्टमेव वाच्यमभिधत्ते, तस्मात्तस्य गुणीभूतव्यङ्ग्यत्वमुचितमेवेत्यर्थः।

वाच्यार्थविशेषणीभावाद् व्यङ्ग्यस्य गुणीभावः, तादृशव्यङ्ग्यप्रकाशकत्वाच्च काव्यस्य गुणीभूतव्यङ्ग्यत्वमिति सारम्।

'व्यङ्ग्यस्य' इत्यसमस्तपाठोऽनुचितः, अर्थासङ्गतेः।

इदं पुनरत्रावगन्तव्यम्—गुणीभूतव्यङ्ग्यकाव्यस्याष्टसु प्रधानप्रकारेषु त्रय एवात्र निरूपिताः। तथा हि अपराङ्गव्यङ्ग्यं यथा रसवदलङ्कारे—'अयं स रशनोत्कर्षी' इत्यादौ। वाच्यसिद्ध्यङ्गव्यङ्ग्यं यथा—'सङ्केतकालमनसम्' इत्यादौ। काक्वाक्षिप्तव्यङ्ग्यं यथा—'स्वस्था भवन्ति' इत्यादौ। पञ्चानां पुनर्निरूपणमवशिष्टमेवेति क्रमेणेह विधीयते। तत्र—

अगूढमविदग्धैरपि वेद्यं व्यङ्ग्यं यत्र, तदगूढव्यङ्ग्यं यथा—

'श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम्।
उपदिशति कामिनीनां यौवनमद एव ललितानि॥' इत्यदः।

इहोपदिशतेर्व्यङ्ग्यस्य प्रकाशनरूपस्य वाच्यायमानतयाऽगूढत्वम्।

अस्फुटं सहृदयैरप्यज्ञेयं व्यङ्ग्यं यत्र, तदस्फुटव्यङ्ग्यम्, यथा—

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम्॥' इति।

अत्रादर्शनं वियोगभयं च भवता परिहरणीयमिति व्यङ्ग्यमतिगूढम्।

सन्दिग्धं वाच्यव्यङ्ग्ययोश्चमत्कारित्वे सन्देहविषयीभूतं प्राधान्यं यस्य, तादृशं व्यङ्ग्यं यत्र तत् सन्दिग्धप्राधान्यम्, यथा—

'हरस्तु किञ्चित् परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि॥' इति।

इह विलोचनत्रययुगपद्व्यापारणरूपवाच्यस्य, चुचुम्बिषालक्षणव्यङ्ग्यस्य वा प्राधान्यमिति सन्दिग्धम्। (वाच्येन) तुल्यं प्राधान्यं यस्य तथाभूतं व्यङ्ग्यं यत्र तत् तुल्यप्राधान्यव्यङ्ग्यम्, यथा—

'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते॥'

अत्र विमनायितः परशुरामः क्षत्रियक्षयमिव रक्षःकुलक्षयमपि करिष्यतीति दण्डलक्षणस्य व्यङ्ग्यस्य, भूत्युपदेशमित्रत्वोपादानरूपसामलक्षणस्य वाच्यस्य च तुल्यमेव प्राधान्यम्। असुन्दरं वाच्यापेक्षयाऽचमत्कारकं व्यङ्ग्यं यत्र तदसुन्दरव्यङ्ग्यम्, यथा—

'वाणीरकुडङ्ग-' इत्यादि।

अत्र व्यङ्ग्यमसुन्दरमिति प्रागेव प्रतिपादितम्।

उस प्रकारके प्रतीयमान व्यङ्ग्यार्थका गौणत्व बतलाते हैं—वाचकत्वेति। जब अभिधाकी अनुगमिनी होकर ही व्यञ्जनासे उस आक्षिप्त व्यङ्ग्यार्थ विशिष्ट वाच्यार्थकी प्रतीति होती है, तब तादृश व्यङ्ग्यार्थ विशिष्ट वाच्यार्थके प्रकाशक काव्यमें गुणीभूत व्यङ्ग्यत्व रूपसे व्यवहार होता है, अर्थात् अभिधानुगामिनी व्यञ्जनासे जब व्यङ्ग्योपस्कृत वाच्यकी प्रतीति होती है, तब वाच्यके विशेषण रूपसे प्रतीयमान व्यङ्ग्यके प्रकाशक काव्यका गुणीभूत व्यङ्ग्यतया व्यपदेश होता है, क्योंकि

वह काव्य व्यङ्ग्य विशिष्ट ही वाच्यका प्रतिपादन करता है, इसलिये उसका गुणीभूत व्यङ्ग्य होना उचित ही है। सारांश यह है कि वाच्यार्थके विशेषण होनेसे व्यङ्ग्य गौण हो जाता है और तादृश व्यङ्ग्यके प्रकाशक होनेसे काव्य गुणीभूत व्यङ्ग्य पदसे व्यवहृत होता है। एक बात ध्यानमें रखनी चाहियेकि गुणीभूत व्यङ्ग्य काव्यके आठों प्रधान प्रकारोंमें तीन प्रकारोंका ही इसमें निरूपण किया है, जैसे—अपराङ्ग व्यङ्ग्यका—अयं स रशनोत्कर्षी—'इत्यादि रसवत् अलंकारमें, वाच्यसिद्धयङ्ग व्यङ्ग्यका—संकेतकालमनसम्' इत्यादिमें, बाँकी पांचोंका निरूपण अवशिष्ट ही है, इसलिये उन सबके लक्षण एवं उदाहरण दीधितिमें देखलेने चाहियें।

ध्वनिगुणीभूतव्यङ्ग्ययोः सङ्कीर्णं विषयं विभजते—

'प्रभेदस्यास्य विषयो यश्च युक्त्या प्रतीयते।
विधातव्या सहृदयैर्न तत्र ध्वनियोजना॥ ६९॥'

युक्त्या-औचित्येन चमत्कृतप्रतीतितारतम्येन, यश्च, अस्य प्रभेदस्य गुणीभूतव्यङ्ग्यप्रकारस्य विषयो लक्ष्यं प्रतीयते। तत्र विषये, सहृदयैर्ध्वनिमात्राभिनिवेशेन, ध्वनेर्योजना न विधातव्येत्यर्थः।

ध्वनिपक्षपातातिशयेन सङ्गतिमतिक्रम्य गुणीभूतव्यङ्ग्यमपि सहृदयैर्ध्वनित्वेन न व्यपदेश्यम्, अपि तु सङ्गतिरालोचनीया। सा तु व्यङ्ग्यस्य वाच्यातिशयित्वे ध्वनित्वम्, तदनतिशायित्वे तु गुणीभूतव्यङ्ग्यत्वमित्येवंरूपाऽसकृत् कथितैव। तामनुसरद्भिरेव व्यवस्था विधेया, न तु ध्वनिपक्षपातेनेत्याशयः।

अब ध्वनि और गुणीभूत व्यङ्ग्यके संकीर्ण विषयका विभाग करते हैं—प्रभेदस्येति। जो काव्य युक्तिपूर्ण चमत्कार जनक प्रतीतिके तारतम्यसे इस गुणीभूत व्यङ्ग्य प्रकारका विषय प्रतीत (लक्षित) होता है, उसके विषयमें सहृदय विद्वानोंको ध्वनिके प्रति विशेष पक्षपातसे ध्वनिकी योजना नहीं करनी चाहिये, अर्थात् ध्वनिके प्रति अतिशय अनुराग होनेसे सङ्गतिका उल्लंघन कर गुणीभूत व्यङ्ग्यको भी ध्वनि पदसे व्यवहृत नहीं करना चाहिये, अपितु व्यङ्ग्यके वाच्यसे उत्कृष्ट होने पर ध्वनि, अन्यथा गुणीभूत व्यङ्ग्य, इस सङ्गतिका पूरा विचार करना चाहिये और तदनुसार ही दोनोंकी व्यवस्था करना उचित है, न कि ध्वनिके पक्षपातसे।

तदभिदधाति—

सङ्कीर्णो हि कश्चिद् ध्वनेर्गुणीभूतव्यङ्ग्यस्य च लक्ष्ये दृश्यते मार्गः। तत्र—यत्र यस्य युक्तिसहायता, तत्र तेन व्यपदेशः कार्यः। न सर्वत्र ध्वनिरागिणा भवितव्यम्।

मार्गो विषयः । अन्यत् स्फुटम् ।

वृत्तिकार उक्ताशयको ही स्फुट करते हैं—संकीर्ण इति । यद्यपि ध्वनि और गुणीभूत व्यङ्ग्यका संकीर्ण विषय भी किन्हीं उदाहरणोंमें देखा जाता है, तथापि उनमें जिस पक्षका तर्कसे समर्थन प्राप्त हो, अर्थात् जो पक्ष युक्तिसंगत मालूम पड़ता हो, उसीके अनुसार ध्वनि वा गुणीभूत व्यङ्ग्यका व्यवहार करना चाहिये, सभी जगह ध्वनिका ही अनुरागी होना उचित नहीं, अर्थात् विना युक्तिके ध्वनिसे प्रभावित होकर गुणीभूत व्यङ्ग्यको भी ध्वनि ही नहीं कहना चाहिये ।

तमेव सङ्कीर्णं विषयमुदाहरति —

यथा—

विवाहाय प्रसाध्यमानां पार्वतीं वर्णयति—

'पत्युश्शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥'

कुमारसम्भवे सप्तमसर्गे पद्यमिदम् । सख्या कर्त्र्या, चरणौ रञ्जयित्वा सालक्तकौ कृत्वा, अनेन मद्रञ्जितचरणेन, पत्युश्चन्द्रशेखरस्य चन्द्रकलां मस्तकेन्दुलेखां मानापनयनावसरे सुरतविशेषविधानसमये वा त्वं स्पृश-आमृश ताडय वा, इति परिहासपूर्वं सपरिहासं कृताशीर्दत्ताशीर्वादा, सा पार्वती, माल्येन स्वकण्ठाक्षिप्कासितया स्रजा, तां तथाऽभिधायिनीं सखीं, निर्वचनं तूष्णीं यथा स्यात्तथा त्रपया किञ्चिदनुक्त्वैव, परिहासाज्जातेर्ष्या वा, जघान ताडयामासेत्यर्थः ।

इह चन्द्रकलायाः स्त्रीत्वेन पतिशिरस्समारूढायाः सपत्नीभावेन चरणेन स्पर्शनं ताडनं वोचितमेव । रञ्जने चरणद्वयस्य योगेऽपि, ताडन एकचरणस्यैवौचित्याद्, योग इत्येकवचनं प्रतिकूलमिति वोध्यम् । व्यङ्ग्यनिर्देशस्त्वनुपदं करिष्यते ।

उसी संकीर्ण विषयका उदाहरण बतलाते हैं—यथेति । जैसे—विवाहके लिये सखी द्वारा प्रसाधित की जाती हुई पार्वतीका कवि वर्णन करता है—सखीने पार्वतीके चरणोंको लाक्षारागसे रञ्जित कर आशीर्वाद दिया कि मेरे द्वारा रञ्जित इस चरणसे सुरतकालीन किसी आसन विशेषमें या सौत होनेके कारण शिवरूप निज पतिके ललाट पर विराजमान चन्द्रकलाका स्पर्श या ताडन करना, इस तरह सखी द्वारा परिहासपूर्वक प्राप्त आशीर्वाद पार्वतीने लज्जावश विना कुछ बोले ही उस सखीको मालासे मारा । यहाँ व्यङ्ग्यका निर्देश अभी आगे करेंगे ।

द्वितीयमुदाहरणमाह—

यथा—

अर्जुनतपोभङ्गायोपगतास्वप्सरस्सु कामपि वर्णयति—

**'प्रयच्छतोच्चैः कुसुमानि मानिना विपक्षगोत्रं दयितेन लम्भिता।**
**न किञ्चिदूचे चरणेन केवलं लिलेख वाष्पाकुललोचना भुवम्॥' इति।**

किरातार्जुनीयाष्टमसर्गघटकोऽयं श्लोकः। उच्चैरूर्ध्वं स्थितानि (यानि स्वयं तथा ग्रहीतुमशक्यान्यत एव याचितानि) कुसुमानि, प्रयच्छता वितरता, दयितेन वल्लभेन, विपक्षगोत्रं सपत्नीनामधेयं लम्भिता प्रापिता तन्नाम्नाऽऽहूतेति यावत्, मानिनीर्ष्यावती सती न किञ्चिदूचे किमपि नावोचत्, तूष्णीं तस्थाविति यावत्, किन्तु तदीर्ष्यया। वाष्पाकुललोचनाऽश्रुपूर्णनयना, केवलं पदा चरणेन भुवं लिलेख विलिलेखेत्यर्थः।

तथा च—'गोत्रं नाम्न्यचले कुले' इति विश्वः।

उसीका दूसरा उदाहरण बतलाते हैं—यथा इति। अर्जुनके तपोभङ्गके लिये आई हुई अप्सराओंमें किसी अप्सरा विशेषका कवि वर्णन करता है—उस अप्सरा विशेषके पहुँचसे अधिक ऊंचे देशमें लगे हुए पुष्पोंके रहनेसे स्वयं नहीं पा सकनेके कारण अप्सरा द्वारा याचित पुष्पोंको तोड़कर देते हुए नायक द्वारा भ्रमवश सपत्नी (सौत) के नामसे आहूत (संबोधित) होने पर वह मानिनी अप्सरा ईर्ष्यासे कुछ नहीं बोलकर केवल आखोंसे आंसू बहाती हुई पैरसे जमीनको कुरेदने लगी।

श्लोकयुगलोपादानं सहैव सङ्गमयति—

**अत्र 'निर्वचनं जघान' 'न किञ्चिदूचे' इति प्रतिषेधमुखेन व्यङ्ग्यस्यार्थस्योक्त्या किञ्चिद्विषयीकृतत्वाद् गुणीभाव एव शोभते।**

प्रथमश्लोके 'निर्वचनं जघान' इत्यनेन लज्जाऽवहित्थाजन्येर्ष्यासौभाग्याभिमानादिर्व्यज्यमानमपि 'निर्वचनम्' इत्युक्त्या वचननिषेधबोधनद्वाराऽभिहितायाः कुमारीजनोचिताप्रतिपत्तेरुपकारकतयाऽङ्गं भवतीति गुणभूतमेव। लज्जाऽऽदिभिरप्रतिपत्तिः, तया च तूष्णीम्भावो जन्यते कुमारीजनेष्वित्युपकार्योपकारकभावो नापहुतः।

द्वितीयश्लोकेऽपि—'न किञ्चिदूचे' इत्यनेन प्रणयसत्करणप्रसरेऽयं तामेव स्मरतीति मानप्रकाशनमेवात्रोचितमिति प्रणयकोपप्रकर्षो व्यज्यमानोऽपि कथनाभावरूपं वाच्यमेवोपपादयन्नङ्गीभवतीति गुणीभावमभ्युपैति। मन्युरेव हि वाचंयमताया मूलमितीहापि पूर्ववदङ्गत्वं नासङ्गतम्।

इहोक्त्या व्यङ्ग्यस्य किञ्चिदेव विषयीकरणमिति व्यङ्ग्यत्वं सर्वथा ततो नापसरति। अन्यथा वाच्यत्वमेवापतेदित्याकलनीयम्।

उक्त दोनों श्लोकोंका एक साथ ही संगमन करते हैं—अत्रेति। यहाँ प्रथम श्लोकमें 'निर्वचनं जघान' 'विना कुछ बोले ही मारा, इससे लज्जा, अवहित्था, हर्ष, ईर्ष्या, सौभाग्य, गर्व आदि व्यङ्ग्यार्थके अभिव्यञ्जित होने पर भी 'निर्वचनं' इस कथनसे वचन निषेध बोधन द्वारा अभिधीयमान कुमारी जनोचित मुग्धापनके पोषक होनेसे गौणत्व हो जानेके कारण गुणीभूत व्यङ्ग्यता ही प्रतीत होती है, एवं दूसरे श्लोकमें 'न किञ्चिदूचे' कुछ नहीं कहा इस प्रतिषेधसे सातिशय मन्यु-संभार रूप प्रणयकोपात्मक व्यङ्ग्यार्थके अभिव्यञ्जित होने पर भी मन्युके ही मौनके कारण होनेसे वचनाभाव रूप वाच्यके उपपादक होनेके कारण उक्त व्यङ्ग्य ही किसी अंशमें अभिधाका विषय हो गया है, इसलिये गौणरूपसे ही प्रतीत होता है।

ध्वनिविषयं पृथक्कुर्वन् निगमयति—

तस्माद् यत्रोक्तिं विना व्यङ्ग्योऽर्थस्तात्पर्येण प्रकाशते, तत्र तस्य प्राधान्यम्। यथा—'एवंवादिनि देवर्षौ' इत्यादौ। इह पुनरुक्तिभङ्ग्या-ऽस्ति वाच्यस्यापि प्राधान्यम्। तस्मान्नात्रानुरणनरूपव्यङ्ग्यध्वनिव्यप-देशो विधेयः।

उक्तिं स्ववाचकशब्दनिर्देशं विना। तात्पर्येण व्यञ्जनया।

'एवंवादिनि' इत्यादौ लज्जाऽऽदिपदाभावे मुखनमनाद्यनुभावाभिव्यज्यमाना लज्जा प्राधान्यं श्रयन्ती ध्वनित्वव्यपदेशहेतुः। 'पत्युः' इत्यादौ 'प्रयच्छता' इत्यादौ च 'निर्वचनम्' 'न किञ्चिदूचे' इत्युक्तिभङ्ग्या दर्शितदिशा स्पृश्यमानत्वाद् व्यङ्ग्यस्य न प्राधान्यम्, किन्तु गुणीभावाद् गुणीभूतव्यङ्ग्यत्वमेव।

'अपिशब्दो भिन्नक्रमः प्राधान्यमित्यनेनान्वेति। तेन वाच्यस्य प्राधान्यमपी-त्यर्थः। अपिना रसापेक्षयाऽप्राधान्यं सूच्यते। इत्थञ्च संलक्ष्यक्रमविचार एवात्र ध्वनित्वाभावः। असंलक्ष्यक्रमविचारे तु तत्त्वमक्षतमेव। अत एव ध्वनेरनुरणनेत्यादि-विशेषणं सङ्गच्छते' इत्येके।

परे तु—'अपिशब्दस्य यथाश्रुतस्थानस्थत्वेऽपि, वाच्यस्यापि प्राधान्यमित्यु-क्त्याऽसंलक्ष्यक्रमव्यङ्ग्यस्यापि प्राधान्यमायातमेवेति विफला भिन्नक्रमत्वाङ्गीकृतिः' इति वदन्ति।

गुणीभूत व्यङ्ग्यसे ध्वनि विषयका पार्थक्य बतलाते हैं—तस्मादिति। इसलिये जहाँ स्ववाचक शब्दके बिना तात्पर्य रूप-व्यञ्जनासे ही व्यङ्ग्यार्थकी प्रतीति होती है, वहां उस (व्यङ्ग्यार्थ) का प्राधान्य होता है, जैसे-'एवं वादिनि देवर्षौ-' इत्यादि स्थलमें लज्जादि वाचक पदके नहीं रहने पर मुखनमनादि अनुभावसे

अभिव्यज्यमान लज्जा प्रधान रूपसे प्रतीत होती हुई ध्वनि व्यवहारके निमित्त होती है। 'पत्युः शिरश्चन्द्रकलाम्-' 'प्रयच्छतोच्चैः' इत्यादि दोनों स्थलोंमें तो 'निर्वचनम्' और 'न किञ्चिदूचे' इस कथनकी शैलीसे उक्त व्यङ्ग्योंकी वाच्यवत् प्रतीति हो रही है, इसलिये वाच्यका भी प्राधान्य है, अतः इन दोनोंमें संलक्ष्य क्रम व्यङ्ग्य ध्वनिका व्यवहार करना ठीक नहीं है, अर्थात् ये दोनों गुणीभूत व्यङ्ग्यके ही उदाहरण हैं, संलक्ष्य क्रम व्यङ्ग्य ध्वनिके उदाहरण नहीं हैं।

असंलक्ष्यक्रमव्यङ्ग्याभिप्रायेण गुणीभूतव्यङ्ग्येऽप्यत्र ध्वनित्वमस्त्येवेत्याह—

'प्रकारोऽयं गुणीभूत-व्यङ्ग्योऽपि ध्वनिरूपताम्।
धत्ते रसादितात्पर्य-पर्यालोचनया पुनः॥ ६७॥'

अयं गुणीभूतव्यङ्ग्योऽपि काव्यस्य प्रकारो रसादीनामसंलक्ष्यक्रमव्यङ्ग्यानां तात्पर्यपर्यालोचनया व्यञ्जनापेक्षया पुनर्ध्वनिरूपतां धत्ते, ध्वनिर्भवतीत्यर्थः।

संलक्ष्यक्रमव्यङ्ग्यापेक्षया गुणीभूतव्यङ्ग्योऽपि रसादिव्यङ्ग्यापेक्षया ध्वनिरेव भवति, रसादीनां सर्वतः प्राधान्यस्य नैसर्गिकचमत्कारोत्कर्षवत्त्वेन प्ररूढत्वादिति तात्पर्यम्।

गुणीभूत व्यङ्ग्यमें भी असंलक्ष्यक्रम व्यङ्ग्यके अभिप्रायसे ध्वनिका ही व्यवहार होता है, यह बतलाते हैं—प्रकारोऽयमिति। गुणीभूत व्यङ्ग्य नामक काव्य विशेष भी रसादिके तात्पर्यसे विचार करनेसे ध्वनि रूपताको धारण करता है, अर्थात् संलक्ष्य क्रम व्यङ्ग्यकी दृष्टिसे गुणीभूत होने पर भी रसादिके प्रधानतया विवक्षित होनेसे वह ध्वनिरूपमें ही परिगणित होता है, क्योंकि रसादिके सर्व प्राधान्य होने पर सबकी अपेक्षा उस (रसादि) में अधिक चमत्काराधायकता स्वभावतः सिद्ध है।

तन्निगदति—

गुणीभूतव्यङ्ग्योऽपि काव्यप्रकारो रसादितात्पर्यपर्यालोचनेन पुनर्ध्वनिरेव सम्पद्यते।

वृत्तिकार उसीको स्फुट करते हैं—'गुणीभूत इति। गुणीभूत व्यङ्ग्य नामक काव्य विशेष भी रसादिके तात्पर्यसे विवक्षित होने पर ध्वनि रूप ही हो जाता है।

उदाहरति—

यथा—अत्रैवोदाहृतेऽनन्तरश्लोकद्वये।

'पत्युः' इत्यादौ 'प्रयच्छता' इत्यादौ च। उभयत्र रसप्राधान्यापेक्षया ध्वनित्वमस्त्येवेति विभावनीयम्।

जैसे–अनन्तर उदाहृत–'पत्युः शिरश्चन्द्रकला–' 'प्रयच्छता–' इन दोनों उदाहरणों में पूर्वोक्त रीतिसे गुणीभूत व्यङ्ग्यत्वके उपपादन कर चुकने पर भी शृङ्गार रसके प्रधानतया तात्पर्य विषयीभूत होने पर ध्वनि काव्यत्वका ही व्यवहार होता है।

पुनरुदाहरति—

यथा—

मानिनीं राधामनुनयन्तं श्रीकृष्णं प्रति तदुक्तिं पल्लवयन् कविः, कमप्याशिषा संवर्धयति—

'दुराराधा राधा सुभग ! यदनेनापि मृजत-
स्तवैतत्–प्राणेशाजघनवसनेनाश्रु पतितम्।
कठोरं स्त्रीचेतस्तदलमुपचारैर्विरम हे !
क्रियात् कल्याणं वो हरिरनुनयेष्वेव मुदितः॥

'हे सुभग ! सुन्दर ! कृष्ण ! यद्–अनेन प्रत्यक्षीभूतेन प्राणेशाया मदन्यप्रियतमायाः, जघनवसनेन परिधानीयपटेन भ्रमादानीतेन, एतत् पतितं ममाश्रु मृजतः प्रोञ्छतस्तव, राधा सौन्दर्यसौभाग्याद्यभिमानवती वृषभानुसुताऽहं दुराराधा दुःखेनाराद्धुं योग्या प्रसादयितुमनर्हेति यावत्। यतः स्त्रीचेतो योषितां हृदयं कठोरं कर्कशं परिभवेनोद्दीपितं सदनुनयासहिष्णु भवति। तत् ततः उपचारैर्दाक्षिण्यप्रयुक्तकृतकानुकूलाचरणैस्ते, अलं न किमपि फलं भविष्यतीति शेषः। अतो विरम उपचारकरणान्निवृत्तो भव' एवमित्थम्, अनुनयेषु प्रसादनेषु विधीयमानेषु, उदितो राधयोक्तो, हरिः कृष्णो वो युष्माकं कल्याणं क्रियादित्यर्थः।

'मृजू' धातोः शत्रन्तात् 'क्ङित्यजादौ वेष्यते' इति वार्तिकेन वृद्धिविकल्पविधानेन 'मृजतः' इति सिध्यति।

अत्र हि सुभगत्वेन कान्ताभिः क्षणमपि विहातुमशक्यत्वं बहुवल्लभत्वयोग्यत्वं च, प्रत्यक्षतया वसनस्यानपह्नवनीयत्वं प्रियतमासम्बन्धित्वेन सप्रेमधारणीयत्वं, विपक्षनायिकायाः कोपौचित्यं च, तदगोपनेन तत्रादराधिक्यं त्रपात्यजनं च, राधेतिस्वनामोच्चारणेन परिभवासहिष्णुत्वप्रभृति, दुराराधत्वेन मानदार्ढ्यम्, अपराधोग्रत्वं च, अश्रुणः पतितत्वेनानपरोधनीयत्वम्, मार्जनेन तस्य प्रत्युत धारासहस्रवाहित्वम्, स्त्रीपदेन प्रणयाद्यनभिज्ञत्वम्, चेतसः कठोरत्वेन नैसर्गिकसौकुमार्यत्यागात् प्रसादनानर्हत्वम्, ईदृशदुर्दशाऽनुभवेऽप्यस्फुटनौचित्यञ्च, उपचाराणां बाहुल्येन नायकस्य चाटुकपटपाटवम्, बहुवचनेनानुनयस्य बाहुल्येन हेतुरेतादृशा-

वस्थाभूयस्त्वं नायिकायाः सौभाग्यं च विपुलं सूच्यमानं वाच्यमेवोपस्करोतीति तदा-दाय काव्यस्य गुणीभूतव्यङ्ग्यता। ईर्ष्याविप्रलम्भश्रृङ्गारं प्राधान्येन व्यज्यमानमपेक्ष्य तु ध्वनित्वमिति पूर्ववदुभययोगोऽत्रापि बोध्यः।

कवि मानिनी राधाको मनानेमें लगे हुए कृष्णकी आशिषका राधाके विलक्षण वचन विन्यास जन्य उपालम्भ द्वारा वर्णन करते हैं—यथा चेति। जैसे-हे सुभग! कृष्ण! किसी अन्य प्राणेश्वरीके सुरत करनेके अनन्तर भ्रमवश स्वयं तुम्हारे द्वारा धारण की गयी इस साड़ीसे गिरते हुए हमारे आंसुओंको पोंछने पर भी सौन्दर्य-सौभाग्यादि-गर्व शालिनी यह वृषभानु सुता (राधा) तुमसे प्रसन्न होने वाली नहीं है, क्योंकि स्त्रियोंका चित्त सौतके साथ पतिके संभोगादि रूप अपमानको नहीं सहन करने वाला महान् कठोर होता है,' इसलिये हमारे मानको दूर करनेके लिये किया जाने वाला तुम्हारा यह अनुनयादि रूप सारा प्रयास व्यर्थ ही है, वश इन बनावटी उपचारोंको रहने दो, इस प्रकार मनानेके अवसर पर राधा द्वारा कहे जाने वाले कृष्ण भगवान् तुम्हारा कल्याण करें।

यहां पर 'सुभग' इस विशेषणसे कान्ताओंके अतिशय प्राणप्रियत्व, अन्य नायिकाके जघन-वसनके प्रत्यक्ष होनेसे उसके अनपलपनीयत्व और प्रियतमाके सम्बन्धी होनेसे सप्रेम धारणीयत्व, सपत्नीके प्रतिकोपका औचित्य और उसके छिपानेके प्रयाससे उसके प्रति आदरातिशय, 'राधा' इस अपने नामके उच्चारणसे परिभव सहिष्णुत्व, 'दुराराधा' इससे मानका दाढर्य, और अपराधका औग्रय, चित्तकी कर्कशतासे स्वाभाविक सुकुमारताका परित्याग, और प्रसादनानर्हत्व, 'उपचारैः' इस बहुवचनसे बनावटी अनुनयोंमें पटुता, और प्रेयसीके सौभाग्याति-शय आदिके व्यङ्ग्य होने पर भी वाच्यके ही उपकारक होनेसे गुणीभूत व्यङ्ग्य काव्य है। परन्तु प्रधान रूपसे व्यज्यमान ईर्ष्याख्य विप्रलम्भकी दृष्टिसे तो ध्वनि काव्य ही है, इसलिये पूर्वोक्तकी तरह यहां भी गुणीभूत व्यङ्ग्य और ध्वनि दोनोंका सम्बन्ध है।

एवमेवान्यत्रापि गुणीभूतव्यङ्ग्यत्वे प्रसिद्धेऽपि रसाद्यपेक्षया ध्वनित्वं भवतीति दर्शयति—

एवंस्थिते च—'न्यक्कारो ह्ययमेव' इत्यादिश्लोके निर्दिष्टानां पदानां व्यङ्ग्यविशिष्टवाच्यप्रतिपादनेऽप्येतद्वाक्यार्थीभूतरसापेक्षया व्यञ्जकत्व-मुक्तम्।

एवमुक्तप्रकारेण ध्वनिगुणीभूतव्यङ्ग्ययोर्विषयविभागे स्थिते सति। निर्दिष्टानां प्रागुक्तानां पदानां 'न्यक्कारः' इत्यादीनाम्। व्यङ्ग्यविशिष्टवाच्यस्य व्यङ्ग्योपस्कृत-

वाच्यस्य, प्रतिपादनेऽपि । एतद्वाक्यार्थीभूतस्य समस्तश्लोकप्रधानव्यङ्ग्यस्य, रसस्य वीरस्य, अपेक्षया, व्यञ्जकत्वं ध्वनित्वमुक्तं भवतीति शेषः ।

न्यक्कार इत्यादिश्लोकघटकपदानामप्रधानव्यङ्ग्यव्यञ्जकत्वेन गुणीभूतव्यङ्ग्यत्वम्, सम्पूर्णश्लोकस्य तु प्रधानवीररसव्यञ्जकत्वेन ध्वनित्वमस्तीति विषयविभागेनोभयोः समावेश इति सारम् ।

इसी प्रकार अन्यत्र भी गुणीभूत व्यङ्ग्यताके प्रसिद्ध होने पर भी मुख्यतया तात्पर्य विषयीभूत रसादिकी दृष्टिसे ध्वनित्व ही होता है, यह दर्शाते हैं—एवं स्थित इति । उक्त रीतिसे ध्वनि और गुणीभूत व्यङ्ग्यके विषय विभागकी व्यवस्था हो जाने पर 'न्यक्कारो ह्ययमेव—' इत्यादि स्थलमें 'न्यक्कार' इत्यादि निर्दिष्ट पदोंके व्यङ्ग्य-विशिष्ट वाच्यार्थके प्रतिपादक होनेकी दृष्टिसे गुणीभूत व्यङ्ग्य होने पर भी सम्पूर्ण श्लोकके तात्पर्य विषयीभूत प्रधान-व्यङ्ग्य वीररसकी दृष्टिसे ध्वनि व्यञ्जकत्व ही कहा है, अर्थात् उक्त श्लोक घटक न्यक्कार आदि पदोंके अप्रधान व्यङ्ग्योंके व्यञ्जक होनेसे गुणीभूत व्यङ्ग्यता है, किन्तु सम्पूर्ण श्लोकके प्रधानभूत वीररसके व्यञ्जक होनेसे ध्वनित्व ही है, इस प्रकार विषय विभागसे दोनोंका समावेश हो जाता है ।

तत्पद्यघटकपदानामज्ञानादर्थान्तरसंक्रमितवाच्यध्वनित्वं मन्यमानान् शिक्षयति—

**न त्वेषां पदानामर्थान्तरसङ्क्रमितवाच्यध्वनिभ्रमो विधातव्यः, विवक्षितवाच्यत्वात् तेषाम् । तेषु हि व्यङ्ग्यविशिष्टत्वं वाच्यस्य प्रतीयते, न तु व्यङ्ग्यरूपपरिणतत्वम् । तस्माद् वाक्यं तत्र ध्वनिः, पदानि तु गुणीभूत-व्यङ्ग्यानि ।**

एषामुक्तश्लोकावयवपदानाम् । व्यङ्ग्यविशिष्टं व्यङ्ग्योपस्कृतम् ।

यथैव 'कदली कदली' इत्यादौ द्वितीयकदल्यादिपदानां व्यङ्ग्यविशिष्टवाच्योप-स्थापकत्वम्, तथैव 'न्यक्कारः' इत्यादावपि, तेनात्राप्यर्थान्तरसङ्क्रमितवाच्यध्वनिरेव कुतो नेति शङ्कितुराशयः ।

यतोऽर्थान्तरसङ्क्रमितवाच्यध्वनिर्लक्षणामूलत्वादविवक्षितवाच्यध्वनेः प्रकारः, ततस्तत्र वाच्योऽर्थो व्यङ्ग्यरूपपरिणतोऽविवक्षितो भवति, न तु विवक्षितः । प्रकृत-श्लोके तु पदानां मुख्यार्थबाधाभावाल्लक्षणाविरहेण वाच्यस्याविवक्षितत्ववैधुर्यान्न स ध्वनिः, किन्तु गुणीभूतव्यङ्ग्यान्येव पदानि, ध्वनिस्त्वसंलक्ष्यक्रम उक्तरीत्या । केवलं 'रावणः' इत्यत्रार्थान्तरसंक्रमितवाच्यध्वनिः । तदेतदुक्तमनुपदमपि स्फुटीभव-त्येवेति समाधातुरभिप्रायः ।

उक्त श्लोक घटक व्यञ्जक पदोंमें अज्ञानवश अर्थान्तर संक्रमित वाच्य ध्वनिको

मानने वालोंका भ्रम दूर करते हैं—नत्वेषामिति। उक्त श्लोक घटक न्यक्कार आदि व्यञ्जक पदोंमें अर्थान्तर संक्रमित वाच्य ध्वनिका भ्रम नहीं करना चाहिये, क्योंकि उनमें वाच्य विवक्षित है, इसलिये उन (न्यक्कार आदि) पदोंके वाच्य व्यङ्ग्य विशिष्ट होकर ही प्रतीत होते हैं, न कि व्यङ्ग्य विशेष रूपसे परिणत होते हैं, इसलिये उक्त सम्पूर्ण श्लोक ध्वनि रूप है और तद्घटक पद तो गुणीभूत व्यङ्ग्य रूप ही हैं, सारांश यह है कि लक्षणामूल अविवक्षित वाच्य ध्वनिके एक प्रकार विशेष अर्थान्तर संक्रमित वाच्य ध्वनिके 'कदली कदली, करभः करभः, करिराजकरः करिराजकरः' इत्यादि उदाहरणोंमें वाच्यार्थ अविवक्षित होकर व्यङ्ग्य रूप अर्थान्तर विशेषमें परिणत हो जाता है, इसलिये वह विवक्षित नहीं होता, परन्तु प्रकृत श्लोकमें तो न्यक्कार आदि पदोंके मुख्यार्थके बाध नहीं होनेके कारण लक्षणाके अभावसे वाच्यकी अविवक्षा नहीं होती, इसलिये वे पद अविवक्षित वाच्य ध्वनि नहीं होकर गुणीभूत व्यङ्ग्य ही हैं, ध्वनि तो सम्पूर्ण वाक्यकी दृष्टिसे असंलक्ष्यक्रम-व्यङ्ग्यात्मक ही समझनी चाहिये।

कारिकायां 'गुणीभूतव्यङ्ग्योऽपि' इत्यपिशब्दार्थं विवरीतुमाह—

न च केवलं गुणीभूतव्यङ्ग्यान्येव पदान्यलक्ष्यक्रमव्यङ्ग्यध्वनेर्व्यञ्जकानि, यावदर्थान्तरसङ्क्रमितवाच्यानि ध्वनिप्रभेदरूपाण्यपि। यथा—अत्रैव श्लोके 'रावणः' इत्यस्य ध्वनिप्रभेदान्तररूपस्य व्यञ्जकत्वम्।

गुणीभूतव्यङ्ग्यान्येव पदानि न रसादिध्वनिव्यञ्जकानि, किन्त्वर्थान्तरसङ्क्रमितवाच्यान्यपि पदानि क्वचित् तद्व्यञ्जकानि। उक्तश्लोके 'रावणः' इति पदमुक्तरीत्याऽर्थान्तरसङ्क्रमितवाच्यमपि रसव्यञ्जकमिति दर्शनात्।

उक्त कारिकास्थ 'अपि' शब्दकी व्याख्या करते हैं—न च केवलमिति। केवल गुणीभूत व्यङ्ग्यात्मकपद ही असंलक्ष्यक्रम व्यङ्ग्य रसादि ध्वनिके व्यञ्जक नहीं होते हैं, अपि तु अर्थान्तर संक्रमित वाच्य ध्वनिरूप भी कहीं पर उक्त ध्वनिके व्यञ्जक होते हैं, जैसे उक्त श्लोकमें ही 'रावण' यह पद उक्त रीत्या अर्थान्तर संक्रमित वाच्य रूपसे वीररसका व्यञ्जक होता है।

न च सर्वत्र गुणीभूतव्यङ्ग्यस्य ध्वनिरूपतेति वदति—

यत्र तु वाक्ये रसादितात्पर्यं नास्ति, गुणीभूतव्यङ्ग्यैः पदैरुद्भासितेऽपि तत्र गुणीभूतव्यङ्ग्यतैव समुदायधर्मः।

रसाद्यव्यञ्जकत्वे व्यङ्ग्याप्राधान्यात् कथं ध्वनित्वम्, अतो गुणीभूतव्यङ्ग्यत्वमेव व्यङ्ग्याप्राधान्यात् तत्र वाक्ये समुदायस्य पदकदम्बात्मकवाक्यस्य धर्म इत्याशयः।

परन्तु सभी जगह गुणीभूत व्यङ्ग्य ध्वनि रूप ही नहीं होता, यह बतलाते हैं—
यत्र तु इति। जहां गुणीभूत व्यङ्ग्यात्मक पदोंसे रसादिके अभिव्यञ्जित होने पर भी प्रधान वाक्यके रसादिमें मुख्य रूपसे तात्पर्य नहीं रहता है, वहां सम्पूर्ण वाक्यका भी गुणीभूत व्यङ्ग्यत्व ही धर्म समझा जाता है।

तमेवोदाहरति—

यथा—

'राजानमपि सेवन्ते विषमप्युपभुञ्जते ।
रमन्ते च सह स्त्रीभिः कुशलाः खलु मानवाः ॥' इत्यादौ ।

कुशला लोकवृत्तनिपुणा मानवाः खलु राजानं परमदुष्करसेवनं नृपमपि सेवन्ते शुश्रूषन्ते। तथा विषं सद्यः प्राणहरं गरलमपि, उपभुञ्जते भक्षयन्ति। तथा च स्त्रीभिर्बहिर्दर्शितप्रणयाभिरन्तःक्षुरधारानिभाभिर्योषाभिरपि रमन्ते विहरन्तीत्यर्थः।

राजसेवनं विषभक्षणं स्त्रीभिः सह विहरणं च क्लेशातिशयसाध्यत्वादिष्टविपरीतपरिणतिभीषणत्वाच्च चतुरैरेव मानवैः साधनीयानि, साधारणैस्तु दुष्कराण्येवेति तात्पर्यम्।

अत्र क्लेशातिशयसाध्यत्वाद्युक्तव्यङ्ग्यविशिष्टतया वाच्यस्यैव चारुत्वमिति समुदायस्य गुणीभूतव्यङ्ग्यत्वमेव। शान्तरसाङ्गनिर्वेदस्य व्यङ्ग्यत्वेऽपि न प्राधान्यम्, अविवक्षितत्वात्। अतस्तन्निमित्तकोऽपि न ध्वनित्वव्यपदेशः। अविवक्षानिर्णयन्तु वाच्यचमत्कारप्रकर्षः करोति। न चान्यदपि किञ्चिद् व्यङ्ग्यं प्रधानम्।

जैसे-लोक व्यवहारमें अत्यन्त निपुण मनुष्य अत्यन्त दुराराध्य राजाकी भी शुश्रूषा कर लेते हैं, एवं सद्यः प्राण विनाशक विष भी खा लेते हैं, और असिधाराके नोक पर चलनेके समान अत्यन्त कठिन त्रिया चरित वाली स्त्रियोंके साथ रमण भी कर लेते हैं, यहां पर, राजाका सेवन, विषका भक्षण, और स्त्रियोंके साथ रमण करना अत्यन्त दुष्कर और विपरीत परिणाम जनक होता है, इत्यादि व्यङ्ग्योंसे विशेषित होकर वाच्यार्थ अत्यन्त चमत्कारशाली हो जाता है, इसलिये यह गुणीभूत व्यङ्ग्य ही है। साथ ही उनसे शान्तरसके अङ्गभूत निर्वेद (वैराग्य) के व्यङ्ग्यतया प्रतीत होने पर भी प्रधान रूपसे विवक्षित नहीं होनेसे ध्वनिका व्यवहार नहीं होता, अपितु पद और वाक्य दोनों ही गुणीभूत व्यङ्ग्य हैं।

विवेकश्चायं सर्वथा सार्थक इत्याह—

वाच्यव्यङ्ग्ययोश्च प्राधान्याप्राधान्यविवेके परः प्रयत्नो विधातव्यः, येन ध्वनिगुणीभूतव्यङ्ग्ययोरलङ्काराणां चासङ्कीर्णो विषयः सुज्ञातो भवति। अन्यथा प्रसिद्धालङ्कारविषय एव व्यामोहः प्रवर्तते।

वाच्यस्य प्राधान्ये व्यङ्ग्यस्य विवक्षितत्वे गुणीभूतव्यङ्ग्यम् , वाच्याप्राधान्ये व्यङ्ग्यस्याविवक्षितत्वेऽलङ्कारयोगे च चित्रम् , वाच्याप्राधान्ये व्यङ्ग्यप्राधान्ये च ध्वनिरिति–गुणीभूतव्यङ्ग्यालङ्कारध्वनीनां विविक्तो विषयो वाच्यव्यङ्ग्यप्राधान्याप्राधान्यविवेचनायामेव सुखेन ज्ञातो भवितुमर्हतीति तत्र यतनीयम् । तद्विरहे प्रसिद्धानामुपमाऽऽदीनामलङ्काराणामेव विषये व्यामोहो विमुग्धता भ्रमो वा सम्भवति, अलङ्काराणां वहुलत्वात् सङ्कीर्णविषयत्वाच्चेति भावः ।

वृत्तिकार निम्न वातोंकी ओर विशेष ध्यानाकृष्ट करनेके लिये सतर्कता दिखलाते हैं—वाच्य इति । वाच्य और व्यङ्ग्यके प्राधान्य–अप्राधान्यकी विशेष जानकारी प्राप्त करनेके लिये अत्यन्त यत्न करना चाहिये, जिससे कि ध्वनि, गुणीभूत व्यङ्ग्य और अलंकारोंका विषय असंकीर्णता पूर्वक भली भांति समझमें आजाय, अर्थात् वाच्यकी प्राधान्य दशामें व्यङ्ग्यके विवक्षित होने पर गुणीभूत व्यङ्ग्यता, वाच्यके अप्राधान्य एवं व्यङ्ग्यकी अविवक्षित दशामें अलंकारके सम्बन्ध होने पर चित्र और वाच्यके अप्राधान्य और व्यङ्ग्यके प्राधान्य होने पर ध्वनि काव्यका व्यवहार होता है वाच्य–व्यङ्ग्यके प्राधान्य–अप्राधान्यकी विशद विवेचना करने पर ही सुखपूर्वक जाना जा सकता है, अतः तदर्थं अवश्य प्रयास करना चाहिये, अन्यथा उसके विना एक प्रसिद्ध उपमादि अलंकारोंके विषयमें ही भ्रम या व्यामोह हो सकता है, क्योंकि अलंकारोंकी वहुलता एवं संकीर्ण विषयता है ।

अलङ्काराणां सङ्कीर्णं विषयमुदाहरति—

तथा हि—

गुणोचितसत्कारमलब्ध्वा निर्विण्णः कश्चिदसमीक्ष्यकारिणं विधिं निन्दति—

'लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः,
स्वच्छन्दस्य सखीजनस्य वसतश्चिन्ताज्वरो निर्मितः ।
एषाऽपि स्वयमेव तुल्यरमणाभावाद् वराकी हता,
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥' इति ।

धर्मकीर्तेः श्लोकोऽयमित्यग्रे निर्णेष्यते । तन्व्याः कृशाङ्ग्यास्तनुं वपुः, तन्वता सृजता वेधसा ब्रह्मणा, कोऽर्थः किं प्रयोजनं चेतसि विनिहितः स्थापितो विचारितो वेति न जानीम इति शेषः, यद्वा न कोऽपीति शेषः । यतस्तेन लावण्यमेवानर्घ्यतया द्रविणं धनं तस्य व्ययो नाशो न गणितो नावेक्षितः, लावण्यमयतन्वीतनुनिर्माणे तद्व्ययाधिक्ये तत्कोशरिक्ततासम्भवात् । स्वयं महानतिशयितः क्लेशोऽद्भुततमशिल्परचनायां, परिश्रमः स्वीकृतः । तथा स्वच्छन्दस्य वियोगजनायिकाविपत्पाता–

सम्भवात् तत्प्रतीकारव्यग्रताविरहाद्, वस्तुतः स्वसौन्दर्यस्पर्धाकररूपवज्जनाभावाद्, विश्रृङ्खलस्य, वसतस्तिष्ठतः, सखीजनस्य, हृदये चिन्ता प्रागुक्तप्रतीकारोपायानुसन्धानम्, यद्वा स्पर्धाप्रयुक्ता समताप्राप्त्युपायानुसन्धानमेव सन्तापकत्वाज्ज्वरो लिर्मितो विहितः। तथा—एषा वराकी दयनीया निर्मितललनाऽपि, स्वयं तुल्यस्याद्भुतगुणगणैः स्वसदृशस्य रमणस्य वल्लभस्याभावादनुपलम्भादेव हता विनष्टाऽभूदित्यर्थः।

धातुरेतत्तन्वीनिर्मितिर्नाल्पव्ययसाध्या, न चेषत्करा, न वोदासीनप्रहर्षिणी, नापि स्वविषयसुखायतिरिति निष्प्रयोजनैव सर्वथेति भावः।

अब अलंकारोंके संकीर्ण विषयका उदाहरण बतलाते हैं—यथा लावण्येति। कोई व्यक्ति अपने गुणोचित सत्कारको यहीं पानेसे दुखी होकर असमीक्ष्यकारी विधाता की निन्दा करता है—इस सुन्दरी स्त्रीके शरीरके निर्माणमें ब्रह्माने लावण्य (सौन्दर्य) सम्पत्तिके व्ययकी लेशमात्र भी चिन्ता नहीं की और उस अद्भुत शिल्प रचनाके लिये स्वयं भी महान् कष्ट उठाया एवं उस नायिकाके सौन्दर्यके गर्वसे निश्चिन्त होकर सुखपूर्वक बैठे हुए सखी जनके हृदयसे उसके अनुरूप वरके अन्वेषणार्थ चिन्ता रूप अग्निको प्रज्वलित कर दिया और अपने योग्य वरके न मिलनेसे ही यह विचारी ललना भी मारी गई, न जाने विधाताने इस सुन्दरीके शरीर निर्माण करनेमें कौनसा लाभ हृदयमें सोच रखा था।

प्रकृतसङ्गतिं वक्ति—

**अत्र व्याजस्तुतिरलङ्कार इति व्याख्यायि केनचित्।**

उक्तरीत्या निष्फलकार्यकारिणो वेधसो निन्दाया वाच्यत्वेन, ततो वस्तुतोऽनन्यसामान्यसौन्दर्यशालिरमणीनिर्माणकौशलसम्पदा तस्य स्तुतौ व्यङ्ग्यमर्यादया पर्यवसन्नायां व्याजस्तुतिरिहालङ्कार इति कस्यचिद् व्याख्यानमित्यर्थः।

इस श्लोकमें व्याजस्तुति अलंकार है, ऐसा व्याख्यान किसीने किया, क्योंकि उक्त रीतिसे निष्फल कार्य करने वाले विधाताकी निन्दा रूप वाच्यसे वास्तवमें अनन्य साधारण सौन्दर्य शालिनी रमणी निर्माणके कौशल द्वारा उनकी स्तुति ही व्यङ्ग्य मर्यादासे प्रतीत होती है।

तस्य व्यामोहं प्रकाशयितुं खण्डनं करोति—

**तन्न चतुरस्रम्, यतोऽस्याभिधेयस्यैतदलङ्कारस्वरूपमात्रपर्यवसायित्वे न सुश्लिष्टता।**

तत् केनचित् कृतं व्याजोक्त्यलङ्कारव्याख्यानमिह न चतुरस्रं न युक्तम्। यतो यस्माद्धेतोः, अस्याभिधेयस्य एतत्पद्यवाच्यस्य एतदलङ्कारपर्यवसायित्वे व्याजस्तुतिपरत्वे, सुश्लिष्टता सङ्गतत्वं न भवतीति शेषः।

परन्तु उनका यह कहना ठीक नहीं, क्योंकि इस श्लोकके वाच्यार्थको केवल व्याजस्तुति अलंकारके स्वरूपमें पर्यवसायी माननेसे वह (वाच्यार्थ) सुसङ्गत नहीं होता।

विकल्पकरणेन तदेवासङ्गतत्वं वाच्यस्योपपादयति—

यतो न तावदयं रागिणः कस्यचिद् विकल्पः, तस्य 'एषाऽपि स्वयमेव तुल्यरमणाभावाद् वराकी हता' इत्येवंविधोक्त्यनुपपत्तेः।

अयमुक्तश्लोकार्थविषयको विकल्पो वितर्कः, तस्य रागिणो मलिनवासनाभृतोऽनुरागिणो वा कस्यचिन्न सम्भवति, यतस्तस्य 'एषा वराकी हता' इति करुणाऽमङ्गले उपस्थापयतः, 'तुल्यरमणाभावात्' इत्यात्मनो रमणस्य गर्हणां च सूचयतो वचनस्याख्यानमनुचितं भवतीति नैव सुश्लिष्टतेति सारम्।

विकल्प द्वारा उसी असंगतत्वको बतलाते हैं—यत इति। उस सुन्दरीमें आसक्त किसी रागी या कुत्सित वासनावाले पुरुषकी यह विचारधारा नहीं हो सकती, क्योंकि उस (रागी, या कुत्सितवासनावाले पुरुष) का, 'अपने सदृश अनुरूप पतिके न मिलनेसे यह बिचारी भी मारी गई' इस प्रकार कथन ठीक नहीं मालूम पड़ता है, क्योंकि अनुरक्त व्यक्ति तो कामावेशमें अपनेको ही उसके योग्य समझता है, इसलिये अपने मुखसे अपनी निन्दा संगत नहीं प्रतीत होती।

द्वितीयं विकल्पमभिदधाति—

नापि नीरागस्य, तस्यैवंविधविकल्पपरिहारैकव्यापारत्वात्।

रागान्निर्गतो नीरागो वीतरागः, तस्यापि विकल्पो नायमिति योगः। तस्य वीतरागपुरुषस्य, एवंविधानां रागजन्यानां चित्तविक्षेपाणां, परिहारस्त्याग एवैको व्यापारो यस्य स तादृशः, तस्य भावस्तत्त्वं तस्मात्।

वीतरागो हि नितरां निर्विण्णो जगदेव तुच्छं मन्यमानः कथमीदृशान् वैषयिकवितर्कान् कुर्यादित्यभिसन्धिः।

दूसरा विकल्प उपस्थित करते हैं—नापि इति। किसी वीतराग (रागरहित) पुरुषकी भी यह (उक्ति) विचारधारा नहीं है, क्योंकि उस वीतराग पुरुषके इस विषयवासनाजन्य आसक्तिका त्याग कर देना ही जीवनका एक प्रधान लक्ष्य रहता है, अर्थात् वीतराग पुरुष विषयवासनासे अत्यन्त विरक्त होकर संसारको ही तुच्छ समझता है, अतः वह इस प्रकार के विषयका वितर्क भी नहीं कर सकता है।

ननु प्रबन्धानुरोधादपि क्वचिदीदृशार्थस्य कल्पनं सम्भवतीत्यत आह—

न चायं श्लोकः क्वचित् प्रबन्ध इति श्रूयते, येन तत्प्रकरणानुगतार्थताऽस्य परिकल्प्यते।

अयं श्लोकः क्वचित् प्रबन्धे वर्तत इति च न श्रूयते, तस्मात्तदनुरोधादपि तादृशविकल्पार्थकत्वं कल्पयितुमशक्यमेवेति सर्वथा विवेचनायां व्याजस्तुतेरिह न सम्भवः, तेन तदलङ्कारोक्तिरत्र कस्यचिद् व्याख्यातुर्व्यामोहजन्यैवेति तात्पर्यम् ।

प्रबन्धके अनुरोधसे भी कहीं उक्त प्रकारके अर्थकी कल्पना हो सकती है, इस प्रश्नका समाधान करते हैं—नचायमिति । यह श्लोक किसी प्रबन्धात्मक काव्यमें है, यह भी नहीं सुनते हैं, जिससे कि उसके अनुरोधसे भी उक्तार्थकी कल्पना की जा सके, इस प्रकार सर्वथा विवेचन करने पर व्याजस्तुतिका कोई सम्भव नहीं है, इसलिये उसका कथन करना व्यामोह मात्र जन्य ही कहा जा सकता है ।

स्वमतमुपन्यस्यति—

**तस्मादप्रस्तुतप्रशंसेयम्, यस्मादनेन वाच्येन गुणीभूतात्मना, निस्सामान्यगुणावलेपाध्मातस्य, निजमहिमोत्कर्षजनितसमत्सरजनज्वरस्य, विशेषज्ञमात्मनो न कञ्चिदेवापरं पश्यतः परिदेवितमेतदिति प्रकाश्यते ।**

तस्मादुक्तहेतोः । अप्रस्तुतप्रशंसा वाच्येनाप्रस्तुतेन तुल्येन रमणीतनुनिर्माणवैफल्येन, व्यङ्ग्यस्य प्रस्तुतस्य तुल्यस्यात्मनिर्मितिनिष्प्रयोजनत्वस्य प्रतीतेस्तदाख्योऽयमलङ्कारः । अनेनैतत्पद्यप्रतिपाद्येन वाच्येन गुणीभूत आत्मा स्वरूपं यस्य तादृशेन, निस्सामान्योऽसदृशो यो गुणस्तस्यावलेपेन गर्वेणाध्मातस्योद्धतस्य, निजमहिम्न आत्ममहत्त्वस्योत्कर्षेणाधिक्येन जनित उत्पादितः समत्सरजनानामन्यशुभद्वेपिलोकानां ज्वरः सन्तापो येन तादृशस्य, आत्मनोऽपेक्षयाऽपरं कञ्चिदपि जनं विशेषज्ञमधिवेत्तारं न पश्यतः, सर्वाधिकम्मन्यस्य, कस्यचित् परिदेवितं निर्वेदवचनमिदमिति प्रकाश्यते सूच्यत इत्यर्थः ।

अयं भावः—अत्र लावण्यद्रविणव्ययगणनाभावेन क्लेशातिशयस्वीकारेण च प्रथमचरणवाच्येन, परिदेवकस्याद्भुतगुणगणमण्डितत्वम्, द्वितीयपदवाच्येन स्वच्छन्दवासिसखीजनचिन्तानिर्माणेन स्वाद्भुतगुणोत्कर्षकृतस्पर्धकजनमत्सरोद्भवनम्, तुल्यवल्लभालाभप्रयोज्यवराकीहतत्वरूपेण तृतीयपादवाच्येन सर्वाधिकज्ञम्मन्यत्वम्, धातृकृततन्वीनिर्मितिनिष्प्रयोजनत्वलक्षणेन चरमचरणवाच्येन स्वनिर्माणनिष्फलत्वप्रयोज्यनिर्वेदपरिदेवितमप्रस्तुतेन तुल्येन प्रस्तुतं तुल्यं यद् व्यज्यते, तस्मादप्रस्तुतप्रशंसैवालङ्कारः ।

अब अपना सिद्धान्त मत उपस्थित करते हैं—तस्मादिति । इसलिये उक्त श्लोकमें अप्रस्तुत प्रशंसा अलंकार है, क्योंकि उक्त सुन्दरी रमणीके शरीर निर्माण वैफल्य-

रूप तुल्य अप्रस्तुत वाच्यार्थसे व्यङ्ग्यभूत आत्मनिर्मिति-निष्प्रयोजनस्वरूप तुल्य प्रस्तुतकी प्रतीति होती है, इसी आशयको वृत्तिकार विशेष रूपसे स्फुट करते हैं— यस्मादिति। क्योंकि इस गुणीभूत स्वरूप अप्रस्तुत उक्त वाच्यार्थसे अलौकिक ज्ञानादि गुणोंके गर्वसे अत्यन्त उद्धत, एवं निज वैदुष्य आदि महिमाके उत्कर्षसे ईर्ष्यालु विपश्चियोंके हृदयमें ईर्ष्यात्मक ज्वरको उत्पन्न कर देनेवाले तथा अन्य व्यक्तिको अपने ग्रन्थादि पाण्डित्यका मर्मज्ञ न समझनेवाले अर्थात् अपनेको सर्वाधिक माननेवाले किसी धर्मकीर्ति जैसे महाविद्वान्का यह निर्वेद ( वैराग्य ) सूचक वचन है, यह प्रतीत होता है।

तादृशव्यङ्ग्यस्वीकारे वीजमाह—

तथा चायं धर्मकीर्तेः श्लोक इति प्रसिद्धिः। सम्भाव्यते च तस्यैव।

तथा हि—'लावण्यद्रविणव्ययो न गणितः' इत्यादि—धर्मकीर्तेः' इत्यौचित्यविचारचर्चायां क्षेमेन्द्रः। धर्मकीर्तिश्च न्यायविन्दुप्रणेता वौद्धभिक्षुः सुबन्धोरपि प्राचीनः। तथा हि वासवदत्तावर्णनप्रसङ्गे—'वौद्धसङ्गतिमिवालङ्कारभूषिताम्' इत्यस्य विवृतौ 'वौद्धसङ्गतिमिव, अलङ्कारो धर्मकीर्तिकृतो ग्रन्थविशेषस्तेनभूषिताम्' इति शिवरामः। सुभाषितावलावपि वहवः श्लोका धर्मकीर्तिनाम्नोद्धृताः।

उक्त व्यङ्ग्यार्थके स्वीकारमें वीज वतलाते हैं—तथा चेति। क्योंकि धर्मकीर्तिका यह श्लोक है, इस तरहकी प्रसिद्धि भी है। और उसीका हो भी सकता है, क्योंकि क्षेमेन्द्रने अपनी औचित्य विचार चर्चामें 'लावण्यद्रविणव्ययो न गणितः—इत्यादि—धर्मकीर्तेः' ऐसा लिखा है।

तत्सम्भावनायां तादृशोक्तेः प्रायेण दर्शनमेव वीजमित्येतादृशीमन्यां तदुक्तिमुदाहरति—

यस्मात्—

'अनध्यवसितावगाहनमनल्पधीशक्तिनाऽ-
प्यदृष्टपरमार्थतत्त्वमधिकाभियोगैरपि।
मतं मम जगत्यलब्धसदृशप्रतिग्राहकं,
प्रयास्यति पयोनिधेः पय इव स्वदेहे जराम् ॥' इति।

न—अध्यवसितमुद्गुरूमवगाहनं निश्शेषतो ज्ञानं पक्षे विलोडनं यस्य तत्, तथा—अनल्पा भूयसी धियश्शक्तिरर्थानां झटितिग्राहकतागुणो यस्य तेनापि जनेन, का कथाऽल्पबुद्धेः ?, अधिकाभियोगैर्व्यायासैरपि न दृष्टं नावलोकितं परमुत्कृष्टमर्थतत्त्वं पदार्थसार्थः पक्षे कौस्तुभरत्नादि धनं यस्य तादृशम्, तथा जगति भूलोके

न लब्धो न प्राप्तः सदृशः पूर्वाश्रयतुल्यः प्रतिग्राहकः स्वीकर्ता, यद्वा पक्षान्तरे न— लब्धः सदृशः प्रतिभटो ग्राहो मकर एव ग्राहको येन तथाभूतं, मम मतं दर्शनं, पयोनिधेः पयो जलमिव स्वदेहे स्वान्तः, जरां जीर्णतां, प्रयास्यति गमिष्यतीत्यर्थः।

अत्रोपमाऽलङ्कारः, स्वमतमाहात्म्यवर्णनादद्भुतश्च रसः। यत्त्वप्रस्तुतप्रशंसाऽलङ्कारोऽपीति केचित्, तन्न, विशेषणानां साधारणधर्ममात्रबोधकत्वात्, प्रस्तुताप्रस्तुतयोरपि वाच्यत्वाच्च।

उक्तार्थकी सम्भावनामें उन ( धर्मकीर्ति ) की तादृश गर्वोक्तिका अधिक स्थलमें उपलम्भ ही मूल कारण है, अतः उनकी तादृश अन्य उक्ति भी दर्शाते हैं—यस्मादिति। क्योंकि अत्यन्त प्रचुर बुद्धि वाले व्यक्ति भी जिस मेरे दार्शनिक विचारको पूर्ण रूपसे नहीं समझ पाते हैं, तथा अत्यन्त ध्यान देने पर भी उसके अन्तस्तल ( रहस्य ) तक नहीं पहुँच सकते हैं, ऐसा मेरा दार्शनिक विचार, जगतमें उसके योग्य ग्रहीता पुरुषके नहीं रहनेसे, अधिक शक्ति शाली पुरुष भी जिस (समुद्र जल) के अन्दर प्रवेश करनेका साहस तक भी नहीं कर सके, और अत्यन्त ध्यान देने पर भी जिसके रत्नोंको न देख सके, ऐसे समुद्र–जलके समान अपने (धर्म कीर्तिके) शरीरमें ही जीर्ण शीर्ण हो जायगा।

उदाहरणप्रदर्शनप्रयोजनं वक्ति—

**अनेनापि श्लोकेनैवंविधोऽभिप्रायः प्रकाशित एव।**

यथा समुद्रपयसोऽवगाहनं दूरेऽस्तु, तदध्यवसायोऽपि लोकैर्दुष्कर एव, बुद्धिमताऽप्युद्यमशतेनापि तद्रत्नावलोकनमप्यसम्भवि, तादृग्गर्त्तासत्वादितरत्र तत्स्वीकर्ताऽपि दुर्लभः, तद्ग्राहप्रतिद्वन्द्विग्राहोऽपि वा दुर्लभः, तथैव मन्मतस्यापि, तस्माद्यथा पयोनिधिपयस्तत्रैव जीर्णं भविष्यति, तथैव मन्मतमपि मय्येव, अन्यत्र गमनाभावादिति बोधयतोऽस्य श्लोकस्यापि स्वकीयानन्यसामान्यपाण्डित्यप्रकर्षस्मयपरिदेवन एव तात्पर्य्यमितीदृशस्वपाण्डित्यातिशयप्रकाशिका परिदेवनोक्तिस्तस्यैव सम्भवतीति—'लावण्यद्रविणव्ययः' इत्याद्युक्तिरपि तत्तात्पर्यिका तस्यैवेति कल्प्यत इति हृदयम्।

उदाहरण दिखलानेका प्रयोजन बतलाते हैं—अनेनापीति। इस श्लोकसे भी इसी प्रकारका अभिप्राय व्यक्त किया गया है, अर्थात् समुद्र जलके अन्तस्तल तक प्रवेश करना तो दूर ही रहा, उसका साहस करना भी दुष्कर है, इसलिये वह ( समुद्र जल ) जैसे उसीमें जीर्ण हो जायगा इस प्रकार अपने अनन्य सदृश पाण्डित्यके घमण्ड और योग्य ग्रहीताके न मिलनेसे अपने ज्ञानकी निष्फलत्व भावनासे उत्पन्न निर्वेद प्रकट किया गया है।

वाच्यार्थस्य सङ्गतत्वेऽप्यप्रस्तुतप्रशंसा भवतीति बोधयितुं प्रसङ्गादप्रस्तुतप्रशंसाया वाच्यवैलक्षण्यप्रयोज्यं प्रकारत्रयं निरूपयति—

**अप्रस्तुतप्रशंसायां च यद्वाच्यं, तस्य कदाचिद् विवक्षितत्वम्, कदाचिदविवक्षितत्वम्, कदाचिद् विवक्षिताविवक्षितत्वमिति त्रयी बन्धच्छाया।**

उपपद्यमानत्वाद् विवक्षितवाच्य एकः, अनुपपद्यमानत्वादविवक्षितवाच्यो द्वितीयः, अंशतस्तदुभयसद्भावाद् विवक्षिताविवक्षितवाच्यस्तृतीयश्चाप्रस्तुतप्रशंसायाः प्रकारः। प्रकारपञ्चकं यत्प्रागुक्तं, तत्पञ्चमप्रकारस्य प्रकारत्रयमिदं बोध्यं, न तु प्रकारान्तराणामपि।

अब वाच्यार्थके संगत होने पर भी अप्रस्तुतप्रशंसा होती है, इसको बतलानेके लिये प्रसंग वश अप्रस्तुतप्रशंसाका वाच्य वैलक्षण्य प्रयुक्त भेदत्रय दर्शाते हैं— अप्रस्तुत इति। अप्रस्तुत प्रशंसामें जो वाच्य होता है, वह कहीं उपपद्यमान होनेसे विवक्षित, एवं कहीं अनुपपद्यमान होनेसे अविवक्षित और कहीं अंशतः उपपद्यमान और अंशतः अनुपपद्यमान होनेसे विवक्षिताविवक्षित होता है, इस तरह तीन प्रकारकी इसकी रचना शैली होती है।

तत्र प्रथममुदाहरति—

**तत्र विवक्षितत्वं यथा—**

**'परार्थे यः पीडामनुभवति भङ्गेऽपि मधुरो-**
**यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः॥**
**न सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः,**
**किमिक्षोर्दोषोऽय न पुनरगुणाया मरुभुवः॥'**

व्याख्यातोऽयं श्लोकः प्रथमोद्द्योत एव। अप्रस्तुतेनाविवक्षितेन वाच्येनेक्षुणा प्रस्तुतः पुरुषश्रेष्ठः सूच्यत इति तस्याः प्रथमः प्रकारोऽयम्।

उनमें प्रथमका उदाहरण बतलाते हैं—तत्रेति। जो (इक्षुपक्षमें) कोल्हूमें पेला जाता है, (सज्जन पक्षमें) दूसरोंके लिये पीड़ाका सहन करता है, जो (इक्षु पक्षमें) तोड़े जाने पर भी मधुर रहता है (सज्जन पक्षमें) अपमानित होने पर भी कुपित नहीं होता अपितु मधुर ही बना रहता है, जिसका विकार (इक्षु पक्षमें) गुड शक्कर आदि भी सबको अच्छा ही लगता है, (सज्जन पक्षमें) जिसकी हानि भी दूसरेको प्रिय लगती है, वह यदि किसी अनुचित स्थान (इक्षु पक्षमें ऊसर भूमि) में पड़कर आकार वृद्धिको नहीं प्राप्त करता है, (सज्जनपक्षमें) पद वृद्धि या उन्नतिको नहीं प्राप्त होता है, तो क्या वह इक्षु या सज्जनका दोष है, उस निर्गुण भूमि (इक्षु पक्षमें)

खेत ( सज्जन पक्षमें ) स्वामीका दोष नहीं है? यहाँ अप्रस्तुत विवक्षित वाच्य इक्षु पदसे प्रस्तुत सज्जन पुरुषकी प्रतीति होनेसे अप्रस्तुतप्रशंसा अलंकार है और इक्षुरूप वाच्यार्थ भी उपपद्यमान होनेसे विवक्षित है।

स्वकीयमुदाहरणमाह—

यथा वा ममैव—

'अमी ये दृश्यन्ते ननु सुभगरूपाः सफलता,
भवत्येषां यस्य क्षणमुपगतानां विषयताम्।
निरालोके लोके कथमिदमहो चक्षुरधुना,
समं जातं सर्वैर्न सममथवाऽन्यै रवयवैः॥'

अमी सुभगरूपाः सुन्दराकृतयो लोकानां करचरणाद्यवयवा ये दृश्यन्ते प्रत्यक्षविषयीक्रियन्ते, एषां तेषां, क्षणं किञ्चित्कालं यस्य चक्षुषो विषयतां गोचरतामुपगतानां प्राप्तानां, ननु निश्चितं सफलता सार्थक्यं भवति। अहो आश्चर्यम्, इदं तच्चक्षुर्निरालोके निर्विवेके लोकेऽधुना सर्वैरवयवैः समं तुल्यं जातम्, अथवाऽन्यैरवयवैस्तत्-न समम्, अपि तु तेभ्यो विलक्षणमेवेत्यर्थः।

यदा चक्षुषः क्षणिकेनापि सम्पर्केणैवावयवान्तरसौन्दर्यसाफल्यम्, तदा चक्षुषोऽवयवान्तरतुल्यत्वं कथमिवोचितमिति सारम्।

अत्राप्यप्रस्तुतेन विवक्षितेन चक्षुषा प्रगुणपुरुषविशेषः प्रस्तुतः प्रतीयत इत्यप्रस्तुतप्रशंसैव।

अथवा स्वकीय उदाहरण ही बताते हैं—यथावेति। ये जो रमणीय आकृति वाले मनुष्योंके हाथ, पैर, मुख आदि अवयव दिखाई देते हैं, इन अवयवोंकी सफलता जिस ( नेत्र ) के क्षण मात्र विषय होने ( प्रत्यक्ष दिखाई देने ) के कारण होती है, अहो महान् आश्चर्यकी बात है कि अभी इस अन्धकार ( निर्विवेक ) मय संसारमें वह नेत्र भी किस तरह अन्य सब अवयवोंके समान ही व्यर्थ हो गया, या समान भी नहीं, अपितु उनसे भी गया गुजरा हो गया, क्योंकि अन्धकारमें भी हाथ, पैर आदि अवयवोंसे काम लिया जा सकता है, किन्तु नेत्र तो बिल्कुल ही निरर्थक हो रहा है। सारांश यह है कि जब आँखके क्षणमात्र सम्पर्कसे ही हस्तादि अवयवोंके सौन्दर्यका साफल्य हो जाता है, तब आँखको उन अवयवोंके तुल्य कहना, या उनसे भी गयी बीती कहना किस प्रकार उचित हो सकता है? यहाँ भी अप्रस्तुत चक्षुसे प्रस्तुत कोई अत्यन्त उत्कृष्ट गुण सम्पन्न महापुरुष प्रतीत होता है, अतः अप्रस्तुतप्रशंसा अलंकार है, और उसमें वाच्यार्थ उपपन्न होनेसे विवक्षित है।

तदाह—

अनयोर्हि द्वयोः श्लोकयोरिक्षुचक्षुषी विवक्षितस्वरूपे एव, न तु प्रस्तुते, महागुणस्याविषयपतितत्वादप्राप्तपरभागस्य कस्यचित् स्वरूपमुपवर्णयितुं द्वयोरपि श्लोकयोस्तात्पर्येण प्रस्तुतत्वात्।

अनयोर्द्वयोः श्लोकयोः 'परार्थे' इत्यादौ 'अमी ये' इत्यादौ च। असङ्गतिविरहाद् विवक्षितं स्वरूपं ययोस्ते विवक्षितस्वरूपे। न तु प्रस्तुते किन्त्वप्रस्तुते, वर्णनीयत्वाभावात्। महान्तो गुणा यस्य स महागुणस्तस्य। अविषये कुस्थाने पतितत्वात् प्राप्तत्वाच्च प्राप्तः परभाग उत्कर्षः प्रशंसा वा येन तादृशस्य कस्यचित् पुरुषविशेषस्य स्वरूपमुपवर्णयितुं कथितयोर्द्वयोरपि श्लोकयोस्तात्पर्येण विषयीक्रियमाणस्य प्रस्तुतत्वादित्यर्थः।

श्लोकयोः प्रथमस्य वाच्य इक्षुः, द्वितीयस्य चक्षुश्च नासम्भवितां स्पृशत इति विवक्षिते एव, किन्त्वप्रस्तुते, तयोः प्रस्तुतपुरुषविशेषपरत्वात्, तस्यैव प्रस्तुतत्वात्।

यस्य पण्डितपुण्डरीकस्य क्षणमपि प्रत्यासत्त्यैवान्येषां पाण्डित्यप्रकर्षसाफल्यम्, स किमन्यपण्डिततुल्य एव, नान्यतुल्य इति द्वितीयश्लोकेन प्रकाश्यते।

इन उपर्युक्त दोनों—'परार्थे यः पीडाम्'—इत्यादि, तथा 'अमी ये दृश्यन्ते'—इत्यादि श्लोकोंमें इक्षु तथा चक्षु दोनों विवक्षित वाच्य स्वरूप हैं और अप्रस्तुत हैं, क्योंकि कुस्थान ( निर्गुण ) एवं निरालोक ( विवेकहीन ) स्वामी आदिके सम्बन्धसे उन्नति को न प्राप्त कर सकनेवाले या कार्यमें सफलता न प्राप्त कर सकनेवाले किसी प्रस्तुत अत्यन्त कुशल महापुरुषकी प्रशंसाके लिये ही उपर्युक्त दोनों श्लोक तात्पर्य रूपसे प्रस्तुत किये गये हैं, अर्थात् अप्रस्तुत इक्षु और चक्षुके द्वारा प्रस्तुत महा गुणशाली पुरुष विशेषकी प्रशंसा करना ही उक्त दोनों श्लोकोंका प्रधान लक्ष्य है, इसलिये यहाँ अप्रस्तुतप्रशंसा अलंकार है, और दोनोंके वाच्यभूत इक्षु-चक्षु पदार्थ प्रकृतमें असम्भवी न होनेसे विवक्षित होने पर भी पुरुष विशेष परक होनेसे अप्रस्तुत हैं।

द्वितीयं प्रकारमुदाहरति—

अविवक्षितत्वं यथा—

वाच्यस्येति शेषः। पथिकशाखोटविटपिनोः संवादः—

'कस्त्वं भोः !, कथयामि, दैवहतकं मां विद्धि शाखोटकं,
वैराग्यादिव वक्षि, साधु विदितं, कस्मादिदं कथ्यते ?।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते,
न च्छायाऽपि परोपकारकरणे मार्गस्थितस्यापि मे ॥'

शाखोटकः 'साहर' 'सिहोर' इति नाम्ना भाषायां प्रसिद्धो दन्तकाष्ठोपयोगी लघुपत्रो द्रुमः। स च भूतावास इति नागेशप्रभृतयो वदन्ति। तं प्रति 'भोस्त्वं कः' इति पान्यस्य प्रश्नः। 'दैवेन भागधेयेन हतकं विनष्टं मां शाखोटकं विद्धि जानीहि' तस्योत्तरम्। 'पुनः इदं वैराग्यान्निर्वेदादिव वक्षि (दैवहतकमिति) कथयसि' इति प्रश्नः। 'साधु सम्यग् विदितं त्वया ज्ञातम् (निर्वेदादेव ब्रवीमि) इत्युत्तरम्। पुनः 'इदं वैराग्यं कस्मात् कुतो हेतोः?' इति प्रश्नः। 'कथ्यते (वैराग्यकारणम्)' इत्युत्तरम्। 'अत्र प्रदेशे वामेन मार्गाद् वामभागेनोपलक्षितः किञ्चिद्विप्रकृष्टः पक्षे वाममार्गस्थः, वटो न्यग्रोधवृक्षो यः, तं वटमध्वगजनः पान्थलोकः सर्वात्मना सर्वथा छायोपवेशनादिप्रकारैः सेवत आदरेणाश्रयति, मार्गे सरणिसमीपे पक्षे सदाचारे स्थितस्यापि मे मम छायाऽपि परोपकारस्य करणे न प्रभवति' इत्युत्तरमितिप्रश्नोत्तररूपः श्लोकार्थः।

भूतावासत्वेनैव शाखोटकस्य छाया नाश्रयणीयेति केचित्। तस्य क्षुद्रपत्रत्वाच्छायाया निविडत्वाभावादिति परे।

अब अविवक्षित वाच्यरूप द्वितीय प्रकार बतलाते हैं—अविवक्षितत्वमिति। पथिक और शाखोट नामक वृक्ष विशेषके परस्पर संवादका वर्णन करते हैं—(पथिक पूछता है-) अये तुम कौन हो? (वृक्ष उत्तर देता है-) कह रहा हूँ, मुझे दैवका मारा हुआ (अभागा) शाखोट नामक वृक्ष समझो। (पथिक) कुछ वैराग्य (उदासीनतासे) बोल रहे हो ऐसा मुझे मालूम पड़ता है, (वृक्ष) ठीक समझा, (पथिक) ऐसा क्यों कहते हो? (क्या रहस्य है?) (वृक्ष) यहाँसे बाईं तरफ कुछ हट कर एक बड़ा वटका वृक्ष है, पथिक गण उसके तलमें बैठने, सोने आदिमें सब प्रकारसे उसका सहारा प्राप्त करते हैं, लेकिन मुझे बिलकुल बीच रास्तेमें खड़ा रहने पर भी मेरी छायासे भी किसीका उपकार नहीं हो पाता, बस इस बातका ही मुझे खेद है।

अत्र वाच्याविवक्षितत्वस्य हेतुमभिदधाति—

न हि वृक्षविशेषेण सहोक्तिप्रत्युक्ती सम्भवत इत्यविवक्षिताभिधेयेनैवानेन श्लोकेन समृद्धासत्पुरुषसमीपवर्तिनो निर्धनस्य कस्यचिन्मनस्विनः परिदेवितं तात्पर्येण वाक्यार्थीकृतमिति प्रतीयते।

शाखोटकवृक्षेण सह प्रश्नोत्तरविधानासम्भवाद् वाच्यार्थोऽत्र न विवक्षितः, किन्तु समृद्धो धनाढ्यो योऽसन् दुराचाररतः पुरुषः, तस्य समीपे वर्तिनस्तिष्ठतः,

निर्धनस्य दरिद्रस्य, मनस्विनोऽभिमानिनः, कस्यचित् पुरुषस्य परिदेवितमिदमिति व्यञ्जनया बोध्यते।

इहाप्रस्तुताभ्यां वाच्याभ्यामविवक्षिताभ्यां च शाखोटकवटाभ्यां प्रस्तुतयोर्दिरद्र-दरिद्रसत्पुरुषसमृद्धासत्पुरुषयोर्व्यञ्जनया प्रतीतिरित्यप्रस्तुतप्रशंसा।

शाखोट नामक जड वृक्ष विशेषके साथ उक्ति प्रत्युक्ति नहीं हो सकती है, इस-लिये अप्रस्तुत शाखोट और पथिक रूप वाच्यके विवक्षित न होनेसे ही इस श्लोकके द्वारा अत्यन्त सम्पन्न दुष्ट पुरुषके निकट रहनेवाले अकिञ्चन (गरीब) अत्यन्त मनस्वी व्यक्तिके हार्दिक व्यथाको प्रकट करनेका तात्पर्य ही मुख्य रूपसे व्यक्त किया गया है ऐसा प्रतीत होता है।

तृतीयं प्रकारमुदाहरति—

विवक्षितत्वाविवक्षितत्वं यथा—

अकुलीन-कुरूप-निरपत्य-कलत्राच्छादनाय चेष्टमानं पामरं कश्चिदाचष्टे—

'उप्पहजाआएँ असोहिणीएँ फलकुसुमपत्तरहिआए।
वेरीए वइं देन्तो पामर! हा ओहसिज्जिहसि॥'

'उत्पथजाताया अशोभनायाः फलकुसुमपत्ररहितायाः।
बदर्या वृतिं ददत् पामर भो! अवहसिष्यसे॥' इतिच्छाया।

भो पामर! अज्ञ! उत्पथे कुमार्गे पक्षेऽनवदातकुले जाताया उत्पन्नायाः, अशोभनायाः कण्टकमात्राचितत्वेन पुष्पसम्पद्राहित्येन चासुन्दर्याः, पक्षे लावण्यादिशून्य-कुरूपाया अमङ्गलप्रायाया वा, फलैः कुसुमैः पत्रैश्च रहितायाः, पक्षेऽपत्यहीनायाः, बदर्याः कोलीलतायाः, पक्षे योषितः वृतिमावरणं, पक्षे वस्त्राद्याच्छादनं ददद् रचयं-स्त्वम्, अवहसिष्यसेऽनुचिताचरणाद् दर्शकैरुपहसिष्यस इत्यर्थः।

अत्र ददाते रचनार्थकत्वेन दानार्थकत्वाभावात्तद्योगे न चतुर्थी।

अब विवक्षिताविवक्षितवाच्यरूप अप्रस्तुतप्रशंसा का तीसरा प्रकार बतलाते हैं—विवक्षितत्वाविवक्षितत्वेति। जैसे कुमार्ग (स्त्रीपक्ष में अधमकुल) में उत्पन्न हुई कुरूप (वृक्षपक्षमें कंटीली, स्त्री पक्षमें बदसूरत) फल पुष्प तथा पत्तों से रहित (स्त्रीपक्षमें सन्तान आदिसे रहित) बदरी (बेर) (पक्षान्तरमें किसी ऐसी स्त्री) की बाड़ लगाने वाले (दूसरे पक्षमें उस स्त्री की रक्षा करनेवाले या अपने घरमें बसानेवाले) अये पामर तुम्हें सब लोग हँसेंगे।

इह वाच्यस्य विवक्षिताविवक्षितत्वयोर्हेतुं वदति—

अत्र हि वाच्यार्थो नात्यन्तं सम्भवी।

अत्र बदर्या अप्रस्तुताया वृतेरचनाया अनुचितत्वादसम्भवितया वाच्यस्याविवक्षितत्वम् । कथञ्चन प्रस्तुतत्वे तु सम्भवितया विवक्षितत्वमपीति योजनीयम् ।

वस्तुतस्तु—'सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं,
दृष्टिः सा मदविस्मृतस्वपरदिक् किं भूयसोक्तेन वा ।
सर्वं विस्मृतवानसि भ्रमर हे ! यद् वारणोऽद्याप्यसा—
वन्तश्शून्यकरो निषेव्यत इति भ्रातः ! क एष ग्रहः ॥'

इत्येव तदुदाहरणम् । यतो भ्रमरकर्तृकवारणसेवनाभावे कारणं वाच्यं कर्णचापलं सम्भवित्वाद् विवक्षितम्, रसनाविपर्यासस्त्वसम्भवित्वादविवक्षित एवेत्युभयरूपतांऽशभेदेन स्फुटैव वाच्यस्येति विवेचनीयम् ।

यहाँ पर अप्रस्तुत कंटीली बदरी वृक्ष की डाल की बाड़ लगाना ठीक न होनेसे बदरीरूपवाच्य अविवक्षित है और प्रस्तुत स्त्रीपक्षमें किसी अनाथ अबला स्त्रीका भरण-पोषण करना या घर में शरण देना आदि रूपसे उपयुक्त होनेसे वाच्य विवक्षित हो सकता है, इसलिये विवक्षिताविवक्षितवाच्यरूप अप्रस्तुतप्रशंसा का यह उदाहरण है अर्थात् वाच्यार्थ नतो सर्वथा सम्भवी ही है और नापि सर्वथा असम्भवी ही है ।

इत्थमप्रस्तुतप्रशंसायाः प्रासङ्गिकं प्रकारनिरूपणं समाप्य, प्रक्रान्तमुपसंहरति—

**तस्माद् वाच्यव्यङ्ग्ययोः प्राधान्याप्राधान्ये यत्नतो निरूपणीये ।**

यतो लावण्येत्यादिश्लोकेऽपि वाच्यस्य प्राधान्यमुत व्यङ्ग्यस्येति केषांचिद् व्यामोहो भवत्येव, तस्माद् वाच्यव्यङ्ग्ययोः प्राधान्याप्राधान्ये यत्नतो निरूपणीये, येन व्यामोहो न स्यादित्यर्थः ।

इस प्रकार अप्रस्तुतप्रशंसाके प्रसंग वश प्राप्त भेदोंका निरूपण कर प्रस्तुत गुणीभूतव्यङ्ग्य विषय का उपसंहार करते हैं—तस्मादिति । इसलिये वाच्य और व्यङ्ग्यके प्राधान्याप्राधान्य का विशेष यत्नपूर्वक निरीक्षण करना चाहिये ।

इत्थं व्यङ्ग्यस्य प्राधान्ये ध्वनिम्, अप्राधान्ये गुणीभूतव्यङ्ग्यं च काव्यप्रकारं निरूप्य व्यङ्ग्यशून्यं वस्तुतोऽविवक्षितव्यङ्ग्यं तृतीयं निकृष्टं चित्राख्यं तत्प्रकारं निरूपयति—

**'प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।**
**काव्ये उभे ततोऽन्यद्यत् तच्चित्रमभिधीयते ॥ ४८ ॥**

चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम् ।
तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम् ॥ ६६ ॥

एवं कथितप्रकारेण, व्यङ्ग्यस्य प्रधानगुणभावाभ्यां प्राधान्याप्राधान्यभ्याम्, उभे ध्वनिगुणीभूतव्यङ्ग्यनामनी काव्ये व्यवस्थिते, तथा हि व्यङ्ग्यस्य प्राधान्ये ध्वनिः, अप्राधान्ये तु गुणीभूतव्यङ्ग्यं काव्यं भवति । ततस्ताभ्याम्, अन्यद् भिन्नं यत् काव्यं विवक्षितव्यङ्ग्यशून्यमलङ्कारादियुक्तम्, तत्–चित्रवत्तात्त्विकरूपहीनमपि प्रतिकृतिरूपं चित्रमभिधीयत उच्यत इत्यर्थः ।

तच्चित्रं काव्यं च शब्दार्थचित्रभेदेन शब्दचित्रमर्थचित्रमिति द्विविधं व्यवस्थितम् । तत्र तयोर्मध्ये किञ्चिच्छब्दालङ्कारभूषितं शब्दचित्रं भवति । अतः परं तद्भिन्नमर्थालङ्कारमण्डितमर्थचित्रं भवतीत्यर्थः ।

उक्त रीतिसे ध्वनि और गुणीभूतव्यङ्ग्यकाव्य का निरूपण कर अब चित्रकाव्य का निरूपण करते हैं—प्रधानेति । पूर्वोक्त रीतिसे व्यङ्ग्यके प्राधान्य होने पर ध्वनि और व्यङ्ग्यके अप्राधान्य होने पर गुणीभूत व्यङ्ग्यनामक काव्यके व्यवस्थित होने पर उन दोनोंसे भिन्न और व्यङ्ग्यार्थके मुख्य तात्पर्य रहित केवल अलंकारादिसे युक्त जो काव्य, उसे चित्रके समान काव्य की प्रतीति होनेसे चित्रकाव्य कहते हैं। शब्दचित्र और अर्थ चित्रके भेदसे चित्र काव्य दो प्रकारका होता है, उनमें कुछ (शब्दालंकारभूषित) शब्दचित्र और उससे भिन्न (अर्थालंकारभूषित) अर्थचित्र होता है।

तदाह—

व्यङ्ग्यस्यार्थस्य प्राधान्ये ध्वनिसञ्ज्ञितः काव्यप्रकारः, गुणभावे तु गुणीभूतव्यङ्ग्यता । ततोऽन्यद् रसभावादितात्पर्यरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यं च काव्यं केवलवाच्यवाचकवैचित्र्यमात्राश्रयेणोपनिबद्धमालेख्यप्रख्यं यदाभासते, तच्चित्रम्, न तन्मुख्यं काव्यम्, काव्यानुकारो ह्यसौ । तत्र किञ्चिच्छब्दचित्रं यथा–दुष्करयमकादि । वाच्यचित्रं ततः शब्दचित्रादन्यद् व्यङ्ग्यार्थसंस्पर्शरहितं प्राधान्येन वाक्यार्थतया स्थितं रसादितात्पर्यरहितमुत्प्रेक्षाऽऽदि ।

रसादितात्पर्यराहित्यं रसादीनां बुबोधयिषयाऽनिबद्धत्वात् । सर्वथा तद्राहित्यं तु दुर्वचमेव, सर्वेषामेव पदार्थानां विभावतायाः परिहर्तुमशक्यतया, तद्व्यङ्ग्ययत्किञ्चिद्रसादिसाहित्यात् । व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यताऽपि प्राग्वद् व्यङ्ग्यवस्त्वादि-

प्रतिपादनेच्छयाऽनिबद्धत्वमेव। चित्रकाव्ये हि व्यङ्ग्यस्य सद्भावेऽप्यविवक्षितत्वाद-सत्कल्पता, न तु सर्वथा तदभाव एव। वाच्यवाचकयोरर्थशब्दयोर्वैचित्र्यमलङ्कारस्त-न्मात्रेण। आलेख्यप्रख्यं चित्रतुल्यं विवक्षितव्यङ्ग्यरसादिरूपजीवहीनमिति यावत्। न मुख्यं काव्यं, किन्तु गौणम्, अलङ्कारादिभिः काव्यसादृश्येन तत्त्वारोपात्। असौ वन्धः काव्यस्यानुकारोऽनुकरणं प्रकृतिरित्येतदप्राशस्त्यसूचकम्। शब्दचित्रमर्थचित्रं चेति विभागः। दुष्करत्वं क्लेशेन निर्मेयत्वाद् यमकादेर्विशेषणम्। आदिशब्देन पद्मादिबन्ध-शब्दश्लेषप्रभृतीनां ग्रहणम्। व्यङ्ग्यार्थसंस्पर्शरहितमिति समासोक्त्या-दीनां, रसादितात्पर्यरहितमिति रसवदादीनां च गुणीभूतव्यङ्ग्यालङ्काराणां व्यवच्छे-दाय विशेषणम्। उत्प्रेक्षाऽऽदीत्यादिपदेनोपमाप्रभृतीनां परिग्रहः।

इदं पुनरत्र चिन्त्यम्—दीपकतुल्ययोगिताऽऽदिवदुत्प्रेक्षायामपि विवक्षितव्यङ्ग्यौ-पम्यसम्बन्धस्य जागरूकत्वात् कथमर्थचित्रत्वमिति।

वृत्तिकार उक्तार्थ को ही विशद करते हैं—व्यङ्ग्यस्येति। व्यङ्ग्यार्थके प्राधान्य होने पर ध्वनि नामक काव्य होता है और व्यङ्ग्यार्थके अप्राधान्य होने पर गुणीभूत व्यङ्ग्यनामक काव्य होता है, और उन दोनोंसे भिन्न, रस, भाव आदिके तात्पर्यसे रहित, एवं व्यङ्ग्यार्थ विशेषके प्रकाशन शक्तिसे रहित, केवल वाच्यवाचक के शब्दार्थालंकाररूप वैचित्र्यके आधार पर रचित जो काव्य चित्रके समान विवक्षित व्यङ्ग्य रसादिरूप आन्तरिक जीवनरहित प्रतिकृतिमात्र मूर्त्ति मात्र भासित होता है, उसे चित्रकाव्य कहते हैं। वह वास्तवमें मुख्य काव्य नहीं है, अपितु काव्यका अनुकरण ( नकल ) मात्र होनेसे गौणकाव्य है, उनमेंसे कुछ शब्दचित्र होते हैं, जैसे कष्टसे निष्पन्न होनेवाले यमक शब्दश्लेष आदि और उस शब्दचित्रसे भिन्न, व्यङ्ग्यार्थसम्पर्करहित, रसादि तात्पर्यशून्य प्रधानतया वाक्यार्थरूपसे विद्यमान अर्थचित्र होते हैं, जैसे उत्प्रेक्षा आदि।

यहां इस बात पर विशेष ध्यान रखना चाहिये कि चित्रकाव्य को व्यङ्ग्यार्थ विशेष प्रकाशन शक्ति रहित और रसादि तात्पर्यरहित कहनेसे उस ( चित्रकाव्य ) में रसादिव्यङ्ग्यार्थ का सर्वथा अभाव ही नहीं रहता, अपितु व्यङ्ग्यार्थके अविवक्षित होनेसे अभाव जैसा प्रतीत होता है, क्योंकि प्रत्येक पदार्थका काव्यमात्रमें किसी न किसी रससे कुछ न कुछ सम्पर्क अवश्य रहता है, इसलिये उसका सर्वथा रसादि रहित होना सम्भव नहीं है, अपितु रसादि की अविवक्षासे ही चित्रकाव्यका व्यवहार होता है।

अथ चित्रपदार्थं निर्वक्तुं परीक्षमाणः पृच्छति—

**अथ किमिदं चित्रं नाम?।**

न किमपि वस्तुतत्त्वं प्रतिभातीत्यभिप्रायः।

अब चित्रपदार्थके निरूपणार्थ पूर्वपक्ष करते हैं—किमिदमिति। यह चित्रकाव्य क्या है ? अर्थात् कुछ भी वस्तुतत्त्व नहीं मालूम पड़ता।

स्वयमेवोत्तरयति—

यत्र न प्रतीयमानार्थसंस्पर्शः।

व्यङ्ग्यराहित्यमिति फलितम्।

पूर्वपक्षी स्वपक्षको दृढ़ करनेके लिये स्वयं शङ्का समाधान करते हैं—यत्रेति। जहाँ प्रतीयमान व्यङ्ग्यार्थका सम्पर्क न हो, उसी को क्या चित्रकाव्य कहते हैं ?

तच्च न शोभनमिति दर्शयति—

**प्रतीयमानो ह्यर्थस्त्रिभेदः प्राक् प्रदर्शितः। तत्र—यत्र वस्त्वलङ्कारान्तरं वा व्यङ्ग्यं नास्ति, स नाम चित्रस्य कल्प्यतां विषयः। यत्र तु रसादीनामविषयत्वम्, स काव्यप्रकारो न सम्भवत्येव।**

वस्तुव्यङ्ग्यशून्यत्वमलङ्कारव्यङ्ग्यशून्यत्वं च चित्रस्याभ्युपगन्तुं शक्यते, सम्भवित्वात्। रसादिव्यङ्ग्यशून्यत्वं पुनः कथङ्कारमूरीक्रियताम्, तच्छून्यत्वे काव्यत्वस्यैवापगमादसम्भवित्वात्।

वह कहना ठीक नहीं है, यह दर्शाते हैं—प्रतीयमानेति। प्रतीयमान व्यङ्ग्यार्थ, वस्तु, अलंकार और रसादिरूप तीन प्रकार का होता है, यह विषय पहले ही कह चुके हैं, उनमें जहाँ व्यङ्ग्य वस्तु या व्यङ्ग्य अलंकार न हो, उसको भले ही चित्रकाव्य मान सकते हैं, किन्तु जहाँ रसादिव्यङ्ग्य का विषय न हो, ऐसा तो कोई भी काव्य नहीं हो सकता है, क्योंकि उस ( रसादि व्यङ्ग्य ) के अभाव में काव्यत्व ही नहीं बनता।

असम्भवितामेवोपपादयति—

**यस्मादवस्तुसंस्पर्शिता काव्यस्य नोपपद्यते। वस्तु च सर्वमेव जगद्गतमवश्यं कस्यचिद् रसस्य चाङ्गत्वं प्रतिपद्यते। अन्ततो विभावत्वेन।**

अवस्तुसंस्पर्शिता पदार्थबोधकत्वभावः। अन्ततश्चरमविचारेण, सर्वं वस्तु विभावत्वेन रसाङ्गं भवत्येव।

काव्यवाक्यानामनर्थकत्वमसङ्गतार्थकत्वं वा स्वीकर्तुं न शक्यते, तथासति, प्रमत्तवाक्यतुल्यत्वेनानुपादेयत्वमापद्येत। तस्मात् यत्किञ्चित्सङ्गतार्थबोधकत्वमङ्गीकृतम्। तावतैव रसव्यञ्जकत्वमप्यङ्गीकृतमेव, यतो नास्तीदृशो जगति कोऽप्यर्थो, यः कस्यचिदपि रसस्योद्दीपनमालम्बनं वा न सम्भवति। ततश्च तद्द्वारको रससद्भावः

प्राप्त इव तस्मात् सर्वात्मना रसादिव्यङ्ग्यशून्यत्वं काव्यस्य नैव सम्भवतीति भावः।

उक्त असम्भव का ही प्रतिपादन करते हैं—यस्मादिति। क्योंकि काव्य में किसी वस्तु का सम्पर्क ( सम्बन्ध ) न हो यह नहीं कहा जा सकता, और संसार के सभी पदार्थ अवश्य ही किसी न किसी रस या भावके अङ्ग बन ही जाते हैं, यदि अन्यरूपसे कदाचित् रसके साथ सम्बन्ध न भी सम्भव हो, तो भी अन्ततः ( पर्यवसानमें ) विभावरूपसे प्रत्येक पदार्थका रससे सम्बन्ध हो ही जाता है, क्योंकि संसारमें कोई भी ऐसी वस्तु नहीं है, जो कि किसी भी रस का उद्दीपन विभाव या आलम्बन विभाव न होती हो, इसलिये उस ( वस्तु ) के द्वारा काव्य में रसादिका होना तो आवश्यक ही मालूम पड़ता है।

किञ्च—

**चित्तवृत्तिविशेषा हि रसादयः न च तदस्ति वस्तु किञ्चिद्, यन्न चित्तवृत्तिविशेषमुपजनयति। तदनुत्पादने वा कविविषयतैव तस्य न स्यात्। कविविषयश्च चित्रतया कश्चिन्निरूप्यते।**

पण्डितराजोक्तरीत्या सर्वेषामेव स्थायिभावानां चित्तवृत्तिरूपतया तद्विशेषा एव रसादय इति यत्किञ्चिच्चित्तवृत्तिजनकत्वमवश्यमेवार्थानामतोऽपि रसादिव्यञ्जकत्वमर्थबोधककाव्यवाक्यानां दुष्परिहरमेव। अन्यथा कविविषयता कविप्रयत्नगोचरता कविप्रतिपाद्यतेति यावद्, एव चित्रकाव्यस्य न स्यात्। तस्मात्तत्रापि रसादिव्यङ्ग्यसत्त्वं स्वीकार्यमेव। स्वीकृते तस्मिन् 'व्यङ्ग्यार्थसंस्पर्शरहितम्' इति विशेषणं न सङ्गच्छते। अप्रसिद्धिरपि चित्रस्य नैव वक्तुं शक्या, प्राचुर्येण तस्यैवोपलम्भात्। तस्मात् किमत्र शरणम्? इति प्रष्टुरभिप्रायः।

एवं रसादिके अनुभवात्मक होनेसे और अनुभवके चित्तवृत्ति विशेषरूप होनेसे रसादि भी चित्तवृत्ति विशेषरूप ही हैं और ऐसा कोई पदार्थ नहीं है, जोकि यत्किञ्चित् चित्तवृत्ति विशेषको उत्पन्न न करता हो, अर्थात् सभी पदार्थोंमें कुछ न कुछ चित्तवृत्तिविशेषजनकता अवश्य ही माननी होगी, अन्यथा यदि चित्रकाव्य में चित्तवृत्ति विशेषरूप रसाभिव्यञ्जकता न हो तो वह ( चित्रकाव्य ) कवि प्रतिपाद्य हो न हो सकेगा, और उसमें कवि विषयता का अपलाप भी नहीं किया जा सकता, क्योंकि कविका विषयभूत कोई पदार्थ ही चित्रकाव्य कहलाता है। इसलिये उसमें भी रसादि व्यङ्ग्य का सम्बन्ध मानना ही पड़ेगा, इसी स्थिति में ( चित्रकाव्यमें भी रसादि व्यङ्ग्य के सम्बन्ध मानने पर ) उस ( चित्रकाव्य ) में 'व्यङ्ग्यार्थसंस्पर्शरहितम्' यह विशेषण देना युक्ति संगत नहीं मालूम पड़ता यह प्रश्नकर्त्ता का आशय है।

समादधाति—

अत्रोच्यते, सत्यम्, न तादृक् काव्यप्रकारोऽस्ति, यत्र रसादीनामप्रतिपत्तिः।

अप्रतिपत्तिर्बोधविरहः।

सिद्धान्ती समाधान करते हैं—अत्रोच्यते इति। इस प्रकार का कोई भी काव्य नहीं है, जिसमें रसादि की प्रतीति का अभाव हो।

एतावदभ्युपगत्योत्तरमाह—

किन्तु, यदा रसभावादिविवक्षाशून्यः कविः शब्दालङ्कारमर्थालङ्कारं वोपनिबध्नाति, तदा तद्विवक्षाऽपेक्षया रसादिशून्यताऽर्थस्य परिकल्प्यते। विवक्षोपारूढ एव हि काव्ये शब्दानामर्थः। वाच्यसामर्थ्यवशेन च कविविवक्षाविरहेऽपि तथाविधे विषये रसादिप्रतीतिर्भवन्ती परिदुर्बला भवतीत्यनेनापि प्रकारेण नीरसत्वं परिकल्प्य चित्रविषयो व्यवस्थाप्यते।

विवक्षाऽपेक्षया रसादिशून्यता विवक्षितरसाद्यव्यञ्जकत्वम्। विवक्षोपारूढो विवक्षाविषयीभूतः। वाच्यसामर्थ्यवशेनार्थव्यञ्जनाबलेन। तथाविधे विषये क्वचिच्चित्रकाव्ये। परिदुर्बलाऽविवक्षितविषयकत्वादप्रधानीभूता। अनेनापीत्यपिशब्दः प्रथमकल्पे रसादिप्रतीते रसत्वं, द्वितीयकल्पे तु दुर्बलत्वं विवक्षाऽनुरोधात् कल्पनीयमिति समाधानप्रकारस्य कथञ्चिन्निर्वाहकतां सूचयति।

यदा कविरलङ्कारव्यसनितया कदाचित् 'विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन' इति कथितनियममवहेल्यालङ्कारमेव प्राधान्येन विवक्षति, तदा रसादीनां नान्तरीयकव्यङ्ग्यानां सत्त्वेऽपि काव्यवाक्यस्य तच्छून्यत्वं वक्तुं शक्यते, यतो विवक्षैवार्थानां सत्त्वासत्त्वव्यवस्थापिका काव्येषु, तदादायैव चित्रस्य लक्षणं तथाविहितमुपपद्यते। यत्र च क्वचिदविवक्षितानामपि रसादीनां वाच्यसौन्दर्यमहिम्नाऽऽर्थव्यञ्जनासाहाय्येन जायते चित्रेष्वपि 'मध्ये व्योम स्फुरति सुमनोधन्वनः शाणचक्रम्' इत्यादिषु प्रतीतिः, तावता न चित्रत्वव्याघातस्तस्य भवितुमर्हति, तत्र रसादीनामविवक्षितत्वात् तत्प्रतीतेरास्वाद्यतमत्ववैधुर्यादिति समाधातुराशयः।

परन्तु जब रस, भाव आदिके बोध करानेकी इच्छा से रहित होकर कवि शब्दालंकार या अर्थालंकार का निर्माण करता है, तब उस (शब्दार्थालंकार) की विवक्षा की दृष्टि से रसादिशून्यता की कल्पना की जाती है, क्योंकि काव्यमें विवक्षाविषयीभूत अर्थ ही शब्द का अर्थ समझा जाता है, उस प्रकार के (चित्रकाव्यके)

विषयमें रसादि विषयक कविकी विवक्षा नहीं रहने पर भी यदि वाच्यवृत्तिव्यञ्जनाके बलसे रसादिकी प्रतीति होती भी है, तो वह दुर्बल ही समझी जाती है, इस कारणसे भी उसको नीरस मानकर चित्रकाव्य का विषय व्यवस्थापित किया जाता है।

उक्तमेवार्थमुपसङ्क्षिप्य वदति—

तदिदमुक्तम् ।

मयैवेति शेषः ।

'रसभावादिविषय-विवक्षाविरहे सति ।
अलङ्कारनिबन्धो यः स चित्रविषयो मतः ॥
रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा ।
तदा नास्त्येव तत्काव्यं ध्वनेर्यत्तु न गोचरः ॥'

रसभावादयो विषया यस्याः सा रसभावादिविषया, तादृशी चासौ विवक्षा कवितात्पर्यम्, स चित्रस्य तल्लक्षणस्य तद्व्यवहारस्य वा विषयो मतः स्वीकृतः ।

यदा तु रसादिषु रसादिविषयिका विवक्षा तात्पर्यवती प्राधान्यावलम्बिनी स्यात् ।
तदा तत् काव्यं नास्त्येव, यत्तु यत्पुनः, ध्वनेस्तल्लक्षणस्य तद्व्यवहारस्य वा गोचरो विषयो न स्यादित्यर्थः ।

एतावता विवक्षितव्यङ्ग्यसहितत्वे सति शब्दार्थान्यतरालङ्कारवत्त्वं चित्रत्वमितिलक्षणं पर्यवसितम् ।

उक्तार्थ को ही संक्षेपमें बतलाते हैं–तदिदमिति । रस, भाव आदि विषयक विवक्षा (तात्पर्य) नहीं रहने पर जो अनुप्रास, यमक उपमा आदि अलंकारोंका निर्माण किया जाता है, वह चित्रकाव्य का विषय माना गया है । और जब प्रधान रूपसे रस, भाव आदि की प्रतीति करानेके तात्पर्यसे विवक्षा की जाती है, तब ऐसा कोई भी काव्य नहीं हो सकता, जो ध्वनि का विषय न माना जाय । एतावता यह सार निकला कि जिसमें विवक्षित व्यङ्ग्यार्थ न हो और शब्दालंकार या अर्थालंकार इन दोनोंमेंसे कोई भी अलंकार हो, उसे चित्रकाव्य कहते हैं ।

नन्वीदृशनिकृष्टकाव्यस्य निरूपणं किमर्थमित्यत आह—

एतच्च चित्रं कवीनां विशृङ्खलगिरां रसादितात्पर्यमनवेक्ष्यैव काव्यप्रवृत्तिदर्शनादस्माभिः परिकल्पितम् ।

काव्यप्रवृत्तिक्रियया समानकर्तृकत्वमनवेक्षणक्रियाया इति क्त्वाप्रत्ययः, किन्तु तस्याः पदार्थैकदेशतया तत्रान्वयाभावात् स्थितानामित्यध्याहार्यम् ।

माभूच्चित्रं प्रशस्तकाव्यम्, किन्तु लक्ष्यानुरोधाल्लक्षणं व्यवस्थाप्यते। लक्ष्याणि तु भूयांसि तथाविधान्युपलभ्यन्त एव, कवीनां नानारुचितया केषां च न तत्रापि प्रवृत्तिरवलोक्यते। तस्मात्तदपि निरूपितमेवास्माभिरिति भावः।

इस प्रकारके अधम चित्रकाव्यके निरूपण का प्रयोजन बतलाते हैं—एतच्चेति। शृङ्खला रहित वाणीवाले कवियों की नाना प्रकार की रुचि होनेके कारण प्रधानरूपसे रसादि प्रतीति विषयक तात्पर्य की अपेक्षा किये बिना ही काव्य विषयक रचनामें प्रवृत्ति देखनेसे ही हमने इस चित्रकाव्य का निरूपण किया है अर्थात् चित्रकाव्य भले ही प्रशस्त न हो, किन्तु विभिन्न प्रकार की रुचिवाले बहुतों कवियों की इस काव्य की रचना में अधिक प्रवृत्ति की उपलब्धि होनेसे ही हमने इसका भी निरूपण किया है।

तर्हि किमाधुनिकैरपि तत्र प्रवृत्ति र्विधेयेति प्रश्ने कथयति—

**इदानीन्तनानान्तु न्याय्ये काव्यनयव्यवस्थापने क्रियमाणे, नास्त्येव ध्वनिव्यतिरिक्तः काव्यप्रकारः।**

समुचितध्वनिव्यवस्थायां जातायामाधुनिकैस्तत्रैव प्रवर्तनीयमिति भावः।

उसी प्रकार आधुनिक कवियों को भी क्या चित्रकाव्य रचना में प्रवृत्त होना चाहिये? इस आक्षेप का समाधान करते हैं—इदानीमिति। वर्त्तमान समय में तो समुचित ध्वनिकाव्य मार्ग की व्यवस्था कर दी जाने पर आधुनिक कवियों के लिये ध्वनि से भिन्न कोई दूसरा काव्य प्रकार ही नहीं है, अर्थात् ध्वनि की उचित व्यवस्था हो जानेसे आधुनिको को उसी की रचनामें प्रवृत्ति करनी चाहिये।

तत्र हेतुं वक्ति—

**यतः परिपाकवतां कवीनां रसादितात्पर्यविरहे व्यापार एव न शोभते, रसादितात्पर्ये च सति, नास्त्येव तद्वस्तु, यदभिमतरसाङ्गतां नीयमानं न प्रगुणीभवति। अचेतना अपि हि भावा यथायथमुचितरसभावतया चेतनवृत्तान्तयोजनया वा न सन्त्येव ते ये यान्ति न रसाङ्गताम्।**

व्यापारः काव्यरचनाऽऽत्मकः। शब्दार्थयो रसौचित्यानुसारी विवेकः परिपाकः। प्रगुणीभवति प्रशस्तगुणवत्तां प्राप्नोति। भावाः पदार्थाः। उचितौ स्वतः सम्भविनौ रसभावौ यत्र ते तादृशाः, तेषां भावस्तत्ता तया, ते न सन्त्येव, ये रसाङ्गतां न यान्तीत्यन्वयः।

रसादिविवक्षाव्यतिरेके पदार्थानामचमत्कारितयाऽशोभनत्वात्, तदन्वये च चेतनानां पदार्थानां स्वतः, अचेतनानामपि पदार्थानां चेतनधर्मारोपेण तत्त्वाद्

विवक्षितरसादिव्यञ्जकत्वमेव काव्यस्य यतश्चमत्कारितायां निमित्तम्, अतस्तत्रैव प्रवर्तनीयमिति सारम्।

क्योंकि रसोचित शब्दार्थोंके सन्निवेश करनेमें परिपक्व बुद्धिवाले सिद्धहस्त कवियों का रसादितात्पर्यके विना व्यापार ही नहीं शोभित होता, रसादिविषयक तात्पर्य होने पर तो कोई ऐसा पदार्थ ही नहीं है, जोकि अभिमत रसके अङ्ग बनाने पर अत्यन्त प्रशंसनीय न हो जाय, अचेतन भी कोई ऐसे पदार्थ नहीं हैं, जोकि यथायोग्य उचित (स्वतः संभवि) रस, या भावके सम्बन्धसे अथवा चेतन वृत्तान्तके आरोपात्मक सम्बन्धसे रसके अङ्ग न बन सकें अर्थात् रसादि की विवक्षाके विना पदार्थमें चमत्कार जनकता न होने से रमणीयता नहीं प्रतीत होती, परन्तु रसादि के साथ सम्पर्क होने पर चेतन पदार्थोंमें स्वतः और अचेतन पदार्थोंमें चेतन धर्मोंके आरोपसे रमणीयता चमकने लगती है, इससे सिद्ध होता है कि विवक्षित रसादि सम्पर्क ही काव्यमें चमत्कारिताका प्रयोजक है, इसलिये ध्वनि काव्यकी रचनाके लिये ही आधुनिक कवियों को प्रवृत्त होना चाहिये।

पदार्थानां रसाङ्गतानयनं कविविवक्षाऽधीनमेवेति दर्शयति—

तथा चेदमुच्यते—

'अपारे काव्यसंसारे कविरेव प्रजापतिः।
यथाऽसौ रोचते विश्वं तथेदं परिवर्तते॥
शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत्।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत्॥
भावानचेतनानपि चेतनवच्चेतनानचेतनवत्।
व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया॥'

अपारेऽनाद्यन्ते, काव्यमेव नानाविधत्वाद् विपुलत्वाच्च संसारः प्रपञ्चस्तस्मिन् तद्विषयनिर्माणे प्रजापतिर्विधाता कविरेवास्ति यतः, अतोऽस्मै कवये यथा रोचते तदिच्छाऽनुसारम्, इदं विश्वं जगत् तथा तेन भिन्नभिन्नरूपेण परिवर्तते परिणतं भवति।

तथा च-कविः शृङ्गारी शृङ्गारादिरसास्वादनप्रवणश्चेद् यदि भवेत्, तदा जगदेव काव्ये वर्ण्यमानं रसमयं रसाङ्गं जातं भवति। स कविरेव चेद् यदि वीतराग उदासीनो वर्णनरसिकताशून्यो भवति, तदा तद्वर्ण्यमानं सर्वमेव जगद्वस्तु नीरसं भवति। सुकविः काव्ये अचेतनाञ्जडानपि भावान् नगनदीप्रभृतिपदार्थान् चेतनवत् स्त्रीपुंसवत्, च तथा चेतनानानन्दसम्मोहदशायामचेतनवद् यथेष्टमिच्छाऽनुरूपं स्वतन्त्रतया व्यवहारयति प्रवर्तयतीत्यर्थः।

काव्ये कवेरिच्छयैव भावानां सरसता नीरसता वा, चेतनताऽचेतनता वा भवतीति तदनौचित्ये स एव निगृहीतः स्यात्, तेन तत्राप्रमादिना प्रवर्तनीयमित्यभिसन्धिः।

पदार्थोंको रसका अङ्ग बनाना कविकी विवक्षाके अधीन ही रहता है, यह बतलाते हैं—तथाचेदमिति। इस अनन्त काव्य जगत्में उसका निर्माता केवल कवि ही एक प्रजापति ( विधाता ) है, उसे जो अच्छा लगता है, यह जगत् उसी प्रकार बदल जाता है। यदि कवि शृङ्गारका रसिक है तो यह सारा जगत् ही काव्यमें वर्ण्यमान होकर शृङ्गार रसमय प्रतीत होने लगता है, और यदि वह ( कवि ) वीतराग ( विरागी ) है, तो यह सब ( जगत् ) वर्ण्यमान होता हुआ भी नीरस ही प्रतीत होने लगता है। सुकवि अपने काव्यमें अचेतन ( जड़ ) पदार्थोंको भी चेतनके समान और चेतन पदार्थोंको भी अचेतनके समान स्वतन्त्रतापूर्वक जैसा चाहता है, वैसा ही वर्णन द्वारा बना देता है ( व्यवहार कराता है ) अर्थात् काव्यमें कविकी इच्छाके ऊपर ही पदार्थों की सरसता या नीरसता, चेतनता या अचेतनता निर्भर रहती है, उसके अनौचित्य होनेपर वही ( कवि ही ) पूरा दोषी समझा जाता है, इसलिये कविको काव्यके विषयमें बहुत सावधानीसे वर्तना चाहिये।

उपसंहरति—

**तस्मान्नास्त्येव तद्वस्तु यत् सर्वात्मना रसतात्पर्यवतः कवेस्तदिच्छया तदभिमतरसाङ्गतां न धत्ते। तथोपनिबध्यमानं वा चारुत्वातिशयं न पुष्णाति।**

तस्मादुक्तहेतोर्यत् सर्वात्मना सर्वथा रसतात्पर्यवतो रसप्रवणस्य कवेःतदिच्छया सरसपदार्थप्रतिपिपादयिषया, तस्य कवेरभिमतरसस्याङ्गतां व्यञ्जकत्वेनोपकारकतां न धत्ते। वा तथा, तथा रसाङ्गत्वेनोपनिबध्यमानं काव्ये निवेश्यमानं सत्, चारुत्वातिशयं न पुष्णाति, तद्वस्तु नास्त्येव, कवीच्छाऽनुसारमेव तेषां परिवर्तनादित्यर्थः।

उक्त विषयका ही उपसंहार करते हैं—तस्मादिति। पूर्णरूपसे रसमें लीन कविके लिये ऐसा कोई पदार्थ नहीं हो सकता है, जो उसकी सरस पदार्थ प्रतिपादन करने की इच्छासे उसके अभिमत रसका अङ्ग न बन जाय, या रसाङ्ग रूपसे काव्य में उपनिबद्ध ( वर्णित ) होकर अतिशय रमणीयताको पोषित न करे। अर्थात् कविकी इच्छानुसार ही उनका बिल्कुल परिवर्तन हो जाता है।

न चैतदप्रसिद्धमिति ब्रूते—

**सर्वमेतच्च महाकवीनां काव्येषु दृश्यते। अस्माभिरपि स्वेषु काव्यप्रबन्धेषु यथायथं दर्शितमेव।**

स्वेषु काव्यप्रबन्धेषु देवीशतकार्जुनचरितविषमबाणलीलाप्रभृतिषु ।

उपर्युक्त विषय बिल्कुल अप्रसिद्ध नहीं है, यह बतलाते हैं—सर्वमिति। ये सब विषय महाकवियोंके काव्योंमें प्रत्यक्ष दिखलाई पड़ रहे हैं, और हम भी विषम बाणलीला आदि अपने काव्य प्रबन्धोंमें यथोचित रूपसे दिखला ही चुके हैं।

ध्वनेः प्राधान्यं दर्शयन्नुपसंहरति—

**स्थिते चैवं सर्व एव काव्यप्रकारो न ध्वनिधर्मतामतिपतति ।**

एवं सर्वभावानां रसादिव्यञ्जकत्वे स्थिते निर्धारिते सति, काव्यस्य सर्व एव प्रकारः, ध्वननं ध्वनिर्धर्मो यस्य स ध्वनिधर्मा तस्य भावो ध्वनिधर्मता तां, ध्वनित्वरूपां न अतिपतति नातिक्रामति, सर्वोऽपि ध्वनिरेव भवति तत्प्रकार इत्यर्थः।

अब ध्वनिका प्राधान्य दिखलाते हुए उपसंहार करते हैं—स्थिते इति। इस प्रकार सभी पदार्थोंका रसके साथ सम्बन्ध स्थापित हो जाने पर काव्यका कोई भी प्रकार ध्वनि रूपताका उल्लङ्घन नहीं करता अर्थात् काव्यका सभी भेद ध्वनि रूपको धारण कर सकता है।

गुणीभूतव्यङ्ग्यस्य का गतिरित्याकाङ्क्षायां वक्ति—

**रसाद्यपेक्षया कवेर्गुणीभूतव्यङ्ग्यलक्षणोऽपि प्रकारस्तदङ्गतामवलम्बते प्राक् ।**

गुणीभूतव्यङ्ग्यलक्षणोऽपि काव्यस्य प्रकारः, कवे रसाद्यपेक्षया रसादिव्यञ्जनाभिप्रायेण प्राक् तस्य ध्वनेरङ्गतां तद्रूपतां धत्त इत्यर्थः।

गुणीभूतव्यङ्ग्यमपि प्राधान्येन रसादिव्यञ्जकत्वे ध्वनिरेव भवति। तच्च 'प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि' इत्यादिकारिकया, तदयं ध्वनिनिष्यन्दरूपः' इत्यादिवृत्त्या च प्रतिपादितमेव प्रागित्याशयः।

उक्त रीतिसे सबके ध्वनि रूप हो जाने पर गुणीभूत व्यङ्ग्यका व्यवहार ही लुप्त हो जायगा इस आक्षेपका समाधान करते हैं—रसाद्यपेक्षयेति। गुणीभूत व्यङ्ग्य रूप काव्यविशेष भी प्रधान रूपसे कविके रसादिविषयक तात्पर्य होनेपर ध्वनिरूपताको ही धारण कर लेता है, अर्थात् गुणीभूत व्यङ्ग्य भी प्रधानतया रसादिकी प्रतीति परक होनेपर ध्वनिरूप ही हो जाता है यह पहले बतला ही चुके हैं।

ननु तर्हि कदा तस्य पार्थक्यमिति पृच्छां निवर्तयति—

**यदा तु चाटुषु देवतास्तुतिषु वा रसादीनामङ्गतया व्यवस्थानम्, हृदयवतीषु च षट्प्रज्ञाऽऽदिगाथासु कासुचिद् व्यङ्ग्यविशिष्टवाच्यात् प्राधान्यम्, तदपि गुणीभूतव्यङ्ग्यस्य ध्वनिनिष्यन्दभूतत्वमेवेत्युक्तं प्राक् ।**

यदा तु पुनः, चाटुषु नितम्बिनी—नृपतिप्रभृतिप्रसादकमिथ्याप्रशंसावाक्येषु, देवतास्तुतिषु वा वाच्यवृत्तापेक्षया रसादीनामङ्गतया व्यवस्थानं स्थितिर्भवति, च तथा कासुचिदनतिप्रतीतासु हृदयवतीषु 'अञ्जलिया' इति नाम्ना प्राकृतकविसमाजे प्रथितासु षट्प्रज्ञाऽऽदीनां कुशलानां प्रातिवेश्मिकानां गाथासु, व्यङ्ग्येन विशिष्टाद् गुणीभूतव्यङ्ग्याद् वाच्यात् प्राधान्यं तद्धेतुकश्चमत्कारः, तदा गुणीभूतव्यङ्ग्यं नाम काव्यं भवतीति शेषः। तदपि गुणीभूतव्यङ्ग्यत्वमपि तस्येति शेषः, ध्वनिनिष्यन्द-भूतत्वमेवेति प्राक् 'तदयं ध्वनिनिष्यन्दरूपः' इत्यादिनोक्तमेवेत्यर्थः।

तथा च—'धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि।
षट्सु प्रज्ञाऽस्ति यस्योच्चैः षट्प्रज्ञा इति संस्मृतः॥'

इति त्रिकाण्डशेषः।

गुणीभूतव्यङ्ग्य काव्यका व्यवहार काल बतलाते हैं—यदेति। जब मानिनी नायिका या राजा आदिको प्रसन्न करनेके लिये मिथ्या प्रशंसात्मक स्तुतियोंमें या देवताओंकी स्तुतियोंमें रसादिकी अङ्ग (गौण) रूपसे स्थिति हो, एवं प्राकृत कवियोंकी गोष्ठीमें हृदयवती नामसे प्रसिद्ध षट्प्रज्ञादि सहृदयोंकी गाथाओंमें व्यङ्ग्यविशिष्ट वाच्यमें प्राधान्य हो, तब भी गुणीभूतव्यङ्ग्य ध्वनिकी दूसरी धारा रूप ही होती है, यह भी पहले ही कह चुके हैं।

चित्रमिदानीं तर्हि खपुष्पायत इत्याशङ्कां समादधदुपसंहरति—

**तदेवमिदानीन्तनकविकाव्यनयोपदेशे क्रियमाणे, प्राथमिकानामभ्यासार्थिनां यदि परं चित्रेण व्यवहारः, प्राप्तपरिणतीनां तु ध्वनिरेव प्राधान्येन काव्यमिति स्थितमेतत्।**

तत् तस्माद्धेतोः, एवं ध्वनेरेव मुख्यत्वेन, इदानीन्तनानामाधुनिकानां कवीनां काव्यनयोपदेशे काव्यनीतिशिक्षणे क्रियमाणे, ये प्राथमिकाः प्रथममेव काव्यं कर्तुं प्रवृत्ताः, अत एवाभ्यासार्थिनः पौनःपुन्येन काव्यघटनमभिलषन्तः सन्ति, तेषां प्रथमभूमिकास्थितानामनधिगतप्रौढीनां परं केवलं चित्रेण व्यवहारो यदि स्यात्, तदा भवितुमर्हतीत्यनुमन्यते। प्राप्ता परिणतिः काव्यरचना-प्रौढिर्यैस्ते तादृशाः, तेषां तु पुनर्ध्वनिरेव प्राधान्येन, क्वचित्तु गुणीभूतव्यङ्ग्यमपीति शेषः, काव्यं भवतीति नियन्त्रणं स्थितं निर्णीतमित्यर्थः।

प्रथमावस्थायां कवीनां चित्रमपि काव्यं भवत्येव, चरमावस्थायान्तु ध्वनिरेव। तेन चित्रस्य नाप्रसिद्धिर्न वा ध्वनेरप्राधान्यमिति सारम्। एतेन चित्रं काव्यं नास्त्ये-वेति व्याहरन्तो दर्पणकृतः प्रत्युक्ताः।

उक्त रीतिसे ध्वनिके ही सर्वत्र प्रावल्य होनेके कारण परम उपादेय होनेसे चित्र काव्य गगन कुसुमके समान हो जायगा इस सन्देहको दूर करते हैं–तदेवमिति। इसलिये ध्वनिके ही प्राधान्य होनेपर आधुनिक कवियोंके लिये काव्यनीतिके शिक्षण करनेमें यह कहा जा सकता है कि प्रारम्भिक दशामें केवल अभ्यास चाहनेवाले भले ही चित्र काव्यका व्यवहार कर लें, परन्तु परिपक्व ( सिद्धहस्त ) कवियोंके लिये तो ध्वनि काव्य ही एकमात्र शरण है, यह सिद्ध होता है, अर्थात् प्राथमिक अवस्थामें कवियोंके लिये चित्रकाव्य भी आश्रय हो सकता है, लेकिन चरम अवस्थामें पहुंचे हुए सिद्धहस्त कवियों के लिये ध्वनि काव्यको ही आश्रय समझना चाहिये इस प्रकार चित्रकाव्यकी भी अप्रसिद्धि नहीं हुई और ध्वनिकाव्यका प्राधान्य भी ज्योंका त्यों बना रहा।

पर्यन्ते सङ्गृह्णाति—

तदयमत्र संग्रहः—

'यस्मिन् रसो वा भावो वा तात्पर्येण प्रकाशते।
संवृत्याभिहितं वस्तु यत्रालङ्कार एव वा॥
काव्याध्वनि ध्वनिर्व्यङ्ग्यं प्राधान्यैकनिबन्धनः।
सर्वत्र तत्र विषयी ज्ञेयः सहृदयैर्जनैः॥'

यस्मिन् काव्याध्वनि काव्यमार्गे, रसः श्रृङ्गारादिः, अथ भावो रत्यादिस्तदाभासादिश्च, अथवा संवृत्य सौन्दर्योत्कर्षसम्पादनाय गोपयित्वाऽभिहितमुक्तं वस्तु, अथवा यत्र अलङ्कार एव, व्यङ्ग्यं व्यज्यमानतां दधत्, तात्पर्येण कविविवक्षाविषयत्वप्रयुक्तप्राधान्येन प्रकाशते प्रतीतिविषयो भवति। तत्र सर्वत्र रसादिवस्त्वलङ्कारप्रधानकव्यञ्जनस्थलेषु, प्राधान्यमेकं प्रधानं निबन्धनं निमित्तं यस्य स ध्वनिरर्थरूपः सहृदयैः, विषयी त्रिविधध्वनिकाव्यरूपविषयभाग् ज्ञेय इत्यर्थः।

'काव्याद्ध्वनिर्ध्वनेर्व्यङ्ग्यम्' इति पाठस्तु, विश्रृङ्खलत्वात्, 'काव्यमार्गे' इति लोचनविवरणप्रतिकूलत्वाच्च नोपादेयः।

वस्त्वादीनां प्राधान्येन व्यङ्ग्यत्वे ध्वनिः, स एव च प्रधानमिति फलितम्।

अब सबका संग्रह कर रहे हैं--तदयमत्रेति। इसलिये इस विषयमें यह सारांश निकला कि—जिस काव्यमें रस या भाव प्रधान रूपसे प्रकाशित हो, अथवा जिसमें छिपे हुए कामिनी कुच कलशवत् अतिशय सौन्दर्यके आधायक वस्तु या अलङ्कार प्रकाशित हो, उन सबमें केवल व्यङ्ग्यार्थके प्राधान्य होनेके कारण सहृदय जन ध्वनिको ही प्रधान विषयी समझें, अर्थात् वस्तु, अलङ्कार और रसादिके प्रधानतया व्यङ्ग्य होनेपर प्रधानभूत ध्वनि काव्य समझना चाहिये।

प्रकारान्तराण्यपि ध्वनेर्दर्शयति—

'सगुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः ।
सङ्करसंसृष्टिभ्यां पुनरप्युद्द्योतते बहुधा ॥ १०० ॥'

स ध्वनिः, गुणीभूतव्यङ्ग्यैस्तत्प्रकारैः सहितैः सगुणीभूतव्यङ्ग्यैः, तथाऽलङ्कारै-र्वाच्यालङ्कारैः सहितैः सालङ्कारैः, स्वैरात्मीयैरविवक्षितवाच्यत्वादिभिः प्रभेदैः प्रकारैः सह, सङ्करः सापेक्षाणामङ्गाङ्गिभावेन सन्देहेनैकवाचकानुप्रवेशेन च त्रिविधः सम्बन्धः, संसृष्टिर्निरपेक्षाणां च योग एकविध एव, ताभ्यां सम्बन्धविशेषाभ्यामुपलक्षितः पुनरपि बहुधा नानाप्रकारवान्, उद्द्योतते भातीत्यर्थः।

अब ध्वनिका प्रकारान्तर भी दिखलाते हैं—सगुणीभूतेति। अलङ्कारोंके सहित गुणीभूत व्यङ्ग्योंके साथ और अपने भेदोंके साथ सङ्कर, और संसृष्टिके द्वारा यह ध्वनि अनेक प्रकारकी प्रकाशित होती है।

तदाह—

तस्य च ध्वनेः स्वप्रभेदैर्गुणीभूतव्यङ्ग्येन वाच्यालङ्कारैश्च सङ्करसंसृष्टि-व्यवस्थायां क्रियमाणायां बहुप्रभेदता लक्ष्ये दृश्यते। तथा हि—स्वप्रभेद-सङ्कीर्णः, स्वप्रभेदसंसृष्टः, गुणीभूतव्यङ्ग्यसङ्कीर्णः, गुणीभूतव्यङ्ग्यसंसृष्टः, वाच्यालङ्कारान्तरसङ्कीर्णः, वाच्यालङ्कारसंसृष्टः, संसृष्टालङ्कारसङ्कीर्णः, संसृष्टालङ्कारसंसृष्टश्चेति बहुधा ध्वनिः प्रकाशते।

अविवक्षितवाच्यः—अर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति प्रथमं द्विविधः प्रत्येकं पदवाक्यप्रकाश्यत्वेन चतुर्विधः। विवक्षितान्यपरवाच्यस्तु—असंलक्ष्य-क्रमरूपोऽनन्तोऽपि वाक्य-पद-तदंश-घटना-वर्ण-प्रबन्धव्यङ्ग्यत्वेन षड्विधः। संलक्ष्यक्रमरूपस्तु—शब्दशक्त्युद्भवो वस्त्वलङ्कारयोर्व्यङ्ग्यत्वेन द्विविधोऽपि प्रत्येकं पदप्रकाश्यत्वेन चतुर्विधः, अर्थशक्त्युद्भवो वस्त्वलङ्कारयोर्व्यञ्जकयोः प्रत्येकं स्वतः-सम्भवितया कविप्रौढोक्तिसिद्धतया कविनिबद्धवक्तृप्रौढोक्तिसिद्धतया च षड्विधो वस्त्वलङ्काररूपत्वेन द्वादशविधः, स एव पुनः पद-वाक्य-प्रबन्धप्रकाश्यत्वेन षट्त्रिंशद्विधः, शब्दार्थशक्त्युद्भववस्तु वाक्यप्रकाश्यत्वेनैकविध एवेति सङ्कलनयैक-पञ्चाशत्प्रकारकः शुद्धो ध्वनिः।

ततश्चैकपञ्चाशतो भेदानां तावद्भिः प्रकारैः स्वकीयैर्गुणने (२६०१) द्वे सहस्रे षट्शतानि-एकश्च ध्वनेः प्रभेदाः। तेषां पुनस्त्रिरूपः सङ्कर एकरूपा संसृष्टिरिति

चतुर्भिर्गुणने (१०४०४) दशसहस्राणि-चत्वारि शतानि-चत्वारश्च तत्प्रकाराः। तेषामपि शुद्धभेदैरेकपञ्चाशता योजने (१०४५५) दशसहस्राणि-चत्वारि शतानि-पञ्चपञ्चाशद् ध्वनेः प्रभेदाः सम्भवन्तीति प्रकाशकारादयः तद्विवेकविशेषस्तु प्रदीपादौ द्रष्टव्यः।

वृत्तिकार उक्त कारिकार्थको स्फुट करते हैं—तस्य च ध्वनेरिति। उस ध्वनिके अपने भेदोंके साथ एवं गुणीभूत व्यङ्ग्यके साथ, और वाच्यभूत अलङ्कारोंके साथ सङ्कर और संसृष्टिकी व्यवस्था करनेपर लक्ष्यभूत ध्वनि काव्यके बहुतसे भेद दिखाई देते हैं, जैसे—१. ध्वनिके अपने मुख्यभेदों (अविवक्षित वाच्य और अर्थान्तर संक्रमित वाच्य आदि) के साथ संकीर्ण (त्रिविधसंकरयुक्त) २. अपने प्रमुख भेदोंके साथ संसृष्ट (अनपेक्षतया स्थित संसृष्टियुक्त) ३. गुणीभूत व्यङ्ग्यके साथ संकीर्ण, ४. गुणीभूत व्यङ्ग्यके साथ संसृष्ट, ५. वाच्यभूत अलङ्कारोंके साथ संकीर्ण, ६. वाच्यभूत अलङ्कारोंके साथ संसृष्ट, ७. संसृष्ट अलङ्कारोंके साथ संकीर्ण, ८. संसृष्ट अलङ्कारोंके साथ संसृष्ट, इस तरह बहुत प्रकार ध्वनि प्रकाशित होती है। एक वाक्यमें परस्पर सापेक्ष होकर अङ्गाङ्गि भाव (उपकार्योपकारक भाव) आदि रूपसे रहने पर सङ्कर होता है, और सङ्करके 'अङ्गाङ्गिभाव सङ्कर, एकाश्रयानुप्रवेश सङ्कर और सदेह सङ्कर' ये तीन भेद हैं। एवं दो या उनसे अधिक भेदोंके परस्पर निरपेक्ष होकर स्वतन्त्र रूपसे एक वाक्यमें रहनेपर संसृष्टि होती है।

ध्वनिके लक्षणामूल 'अविवक्षितवाच्य' और अभिधामूल 'विवक्षितान्यपरवाच्य' ये दो मूल भेद हैं, उनमें से प्रथम अविवक्षितवाच्यके 'अर्थान्तर संक्रमितवाच्य' और 'अत्यन्त तिरस्कृत वाच्य' ये दो भेद हैं, और दूसरे विवक्षितान्यपरवाच्यके 'संलक्ष्यक्रमव्यङ्ग्य' और 'असंलक्ष्यक्रमव्यङ्ग्य' ये दो भेद हैं, उनमें भी संलक्ष्यक्रम व्यङ्ग्यके 'शब्दशक्त्युद्भव, 'अर्थ शक्त्युद्भव' और 'शब्दार्थोभयशक्त्युद्भव' ये तीन भेद हैं, उनमें भी शब्द शक्त्युद्भवके वस्तु, और अलंकार रूप दो भेद हुए और अर्थ शक्त्युद्भवके 'स्वतः सम्भवी' 'कविप्रौढोक्तिसिद्ध' और 'कवि निबद्धप्रौढोक्तिसिद्ध' इन तीनों भेदों में से प्रत्येकके व्यङ्ग्य और व्यञ्जक इन दोनों की दृष्टि से उक्त वस्तु और अलंकार के चार भेद होकर कुल बारह प्रकार हैं, एवं शब्दार्थोभयशक्त्युद्भव का एक भेद और असंलक्ष्यक्रम व्यङ्ग्य का एक भेद इस प्रकार विवक्षितान्यपर वाच्यके २ + १२ + १ + १ = १६, तथा अविवक्षित्त वाच्यके दो भेद, सब मिलाकर १६ + २ = १८, इनमें उभयशक्त्युद्भव भेदके केवल पद में ही होनेसे एक ही भेद और बाँकी १७ के पद तथा वाक्यमें होनेसे ३४, अर्थ शक्त्युद्भवके प्रबन्ध गत होनेसे १२ अधिक सब मिलाकर १ + ३४ + १२ = ४७ हुए, और असंलक्ष्यक्रम व्यङ्ग्यके पदैकदेश, वर्ण, रचना और प्रबन्ध गत होनेसे ४ भेद कुल योग ४७ + ४ = ५१ भेद हुए।

तत्र दिङ्मात्रदर्शनाय कियतो भेदानुदाहर्तुकामः प्रथमं ध्वनेः स्वप्रभेदेनाङ्गाङ्गिभावसङ्करमुदाहरति—

**तत्र स्वप्रभेदसङ्कीर्णत्वं कदाचिदनुग्राह्यानुग्राहकभावेन, यथा—'एवंवादिनि देवर्षौ' इत्यादौ। अत्र ह्यर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यध्वनिप्रभेदेनालक्ष्यक्रमव्यङ्ग्यध्वनिप्रभेदोऽनुगृह्यमाणः प्रतीयते।**

अनुग्राह्यानुग्राहकभावोऽङ्गाङ्गिभावः। अत्र श्लोकेऽर्थशक्त्युद्भवध्वनिना लज्जालक्षणेनासंलक्ष्यक्रमोऽभिलाषहेतुकविप्रलम्भश्रृङ्गारोऽनुगृह्यमाणः पोष्यमाणः प्रतीयते, लज्जाया व्यभिचारिभावत्वेन रसपोषकत्वात्। तस्याः संलक्ष्यक्रमव्यङ्ग्यता व्यभिचारिभावरूपाया अप्राधान्येन भावत्वानधिगमादवगमनीया।

अब उनमें दिग्दर्शन मात्र कराने के लिये कुछ भेदों को बतलाने की भावनासे पहले ध्वनिके अपने भेदोंके साथ अङ्गाङ्गि भावरूप संकर का उदाहरण देते हैं—तत्रेति। उनमें से अपने भेदोंके साथ संकर कभी अनुग्राह्य–अनुग्राहक भाव (उपकार्य–उपकारक भाव) से होता है, जैसे 'एवं वादिनि देवर्षौ'–इत्यादिमें अर्थशक्त्युद्भव संलक्ष्यक्रमव्यङ्ग्य लज्जादिध्वनिसे असंलक्ष्यक्रम व्यङ्ग्य रूप–अभिलाप हेतुकविप्रलम्भ श्रृङ्गार रूप ध्वनि विशेष पोष्यमाण प्रतीत होता है, क्योंकि यहां पर लज्जाके व्यभिचारि भाव रूपसे प्रतीत होने के कारण अप्राधान्य होनेसे वह (लज्जा) उक्त श्रृङ्गार रस को पोषण कर रही है, इसलिये अङ्गाङ्गिभाव संकर है।

स्वप्रभेदेनैव ध्वनेः सन्देहसङ्करमुदाहरति—

**एवं कदाचित् प्रभेदद्वयसम्पातसन्देहेन यथा—**

अपने भेदोंके साथ ही ध्वनिके सन्देह संकरके उदाहरणार्थ अवतरण दे रहे हैं—एवमिति। इसी प्रकार कभी ध्वनिके अपने ही भेदोंके आ जाने से सन्देह हो जानेके कारण सन्देह संकर हो जाता है, जैसेः—

देवरेऽनुरक्तामुपनायिकामुत्सवागतां तत्पत्न्या कटूक्तिभिः कदर्थितामनुनेतुं तच्चौरकामुकी भ्रातृजाया तं भणति—

**'खणपाहुणिआ देअर! एसा जाआए किंपि दे भणिआ।**
**रुअइ पडोहरवलही घरम्मि अणुणिज्जउ वराई॥'**

'क्षणप्राघुणिका देवर! एषा जायया किमपि ते भणिता।
रोदिति शून्यवलभीगृहेऽनुनीयतां वराकी॥' इतिच्छाया॥

अयि देवर! पत्यनुज! क्षण उत्सवे, क्षणमात्रं वा प्राघुणिकाऽभ्यागता, एषा तव दयिता, ते तव जायया पत्न्या, न तु प्रियया, कमपि वक्तुमनुचितम्, भणिता

कथिता भर्त्सितेति यावत्, सती, शून्ये गृहपश्चाद्भागे वा वलभीगृहे सौधोर्ध्ववेश्मनि, प्रतीकाराक्षमत्वात् त्वय्यत्यनुरक्तत्वाच्च रोदिति। तेन वराकी दीनतया दयनीया, त्वया अनुनीयतां प्रसाद्यतामाश्वास्यतामुपभुज्यतां चेत्यर्थः।

तथा—'स्वामिनो देवृदेवरौ' इत्यमरः। 'शुद्धान्ते वलभीचन्द्रशाले सौधोर्ध्ववेश्मनि' इति रभसश्च।

इह देवरेत्यामन्त्रणेन सहजस्नेहास्पदत्वम्, क्षणप्राघुणिकत्वेनादराधिक्यौचित्येऽप्यनादराद् दुःखातिशयोत्पत्तिसमुचितत्वम्, जायात्वेन प्रणयहीनता, तया तथाऽऽचरणौचिती, त्वदीयत्वेन त्वयैवानुनेयत्वम्, किमपीत्यनेन कटूक्तीनामगणेयताऽनुच्चार्यता च, वलभ्याः शून्यत्वे पश्चाद्भागस्थत्वेन वा रहस्तया रहस्ययोग्यता, रोदितीत्यनेन सद्यःप्रतिकार्यता, रोदनेन तस्याः स्वयं प्रतीकाराक्षमत्वं त्वय्यनुरागोत्कर्षेणान्यत्र पलायितुमसमर्थत्वं च वराकीत्वेनानुनयावश्यकता च सूच्यते।

अत्र 'अनुनीयताम्' इत्यनुनयतेरुपभोगप्रकर्षं प्रत्याययितुं तात्पर्यानुपपत्त्या मुख्यार्थबाधादिसत्त्वादुपभोगे लक्षणेत्यर्थान्तरसङ्क्रमितवाच्यत्वेनाविवक्षितवाच्यध्वनिः, अथवाऽनुनयते रोदननिवर्तकव्यापारोऽनुनयोऽभिधया बोध्यमान एवोपभोगं व्यनक्तीत्यर्थशक्त्युद्भवत्वेन विवक्षितान्यपरवाच्यध्वनिरिति सन्देहः। उभयथोपभोगस्यैव व्यङ्ग्यत्वेनैकतरपक्षसाधकबाधकप्रमाणाभाव इति सङ्करः।

देवरमें अत्यन्त अनुरक्त एक नायिकाको, जो कि किसी उत्सवके कारण उस (देवर) के घर पर सम्मिलित होनेके अवसर पर उस (देवर) की पत्नीसे फटकारी जानेसे अत्यन्त दुखी थी, अनुनयके द्वारा प्रसन्न करनेके लिये प्रच्छन्न कामुकी भावी देवर से कहती है—हे देवर! तुम्हारी पत्नीने क्षण भरके लिये उत्सवके अवसर पर अभ्यागतके रूपमें आई हुई इसको कुछ कटु वचन कह दिया है, जिससे यह विचारी शून्य वलभी गृह (महलके ऊपर का निजी कमरा) में रो रही है, उसको जाकर मना लो।

तदाह—

**अत्र ह्यनुनीयतामित्येतत् पदमर्थान्तरसङ्क्रमितवाच्यत्वेन, विवक्षितान्यपरवाच्यत्वेन च सम्भाव्यते। न चान्यतरपक्षनिश्चये प्रमाणमस्ति।**

वाच्यस्यार्थान्तरसङ्क्रमणं व्यङ्ग्यताद्रूप्यप्राप्तिः, अन्यपरत्वं च स्वरूपावगमपुरस्सरव्यङ्ग्यबोधकत्वमिति भिन्नतयोभयकोटयोर्विरुद्धत्वमवधारणीयम्।

यहां पर 'अनुनीयताम्' इस पदमें उपभोग प्रकर्ष सूचन रूप प्रयोजनसे तात्पर्यानुपपत्तिमूलक लक्षणा द्वारा अर्थान्तर संक्रमित वाच्यरूप अविवक्षित वाच्य ध्वनि,

तथा रोदन निवृत्ति जनक व्यापार रूप अनुनयके अभिधा द्वारा बोधित होनेसे विवक्षितान्य परवाच्यध्वनि, इन दोनों रूपों की सम्भावना है, और उक्त दोनों ही पक्षोंमें उपभोगके व्यङ्ग्य होनेसे किसी एक ही पक्ष के निर्णय करनेमें प्रबलतर युक्ति नहीं है, इसलिये यहां सन्देह संकर है।

स्वप्रभेदेनैकव्यञ्जकानुप्रवेशसङ्करमुदाहरति—

एकव्यञ्जकानुप्रवेशेन तु व्यङ्ग्यत्वमलक्ष्यक्रमव्यङ्ग्यस्य स्वप्रभेदान्तरापेक्षया बाहुल्येन सम्भवति। यथा—'स्निग्धश्यामल-' इत्यादौ।

रसादिध्वनेः स्वकीयभेदान्तरेण सहैकवाचकानुप्रवेशलक्षणः सङ्करो बाहुल्ये सम्भवति, यतो बहुत्र काव्येषु, रसानां भावादीनां चैकव्यङ्ग्यत्वमुपलभ्यते। श्लोकोऽयं सम्पूर्णः प्रागेव व्याख्यातः। अत्र रामपदरूप एकस्मिन्नेव वाचकेऽर्थान्तरसङ्क्रमितवाच्यलक्षणाविवक्षितवाच्यध्वनेर्विप्रलम्भश्रृङ्गारात्मकासंलक्ष्यक्रमलक्षणविवक्षितान्यपरवाच्यध्वनेश्चानुप्रवेशात् सङ्करः। तदुभयमपीह रामरूपैकपदव्यङ्ग्यम्।

अब अपने भेदोंके साथ एक व्यञ्जकानुप्रवेश रूप सङ्कर का उदाहरण बतलाते हैं—एकव्यञ्जकेति। असंलक्ष्य क्रम व्यङ्ग्य रूप रसादिध्वनि का अपने अन्य भेदोंके साथ एकाश्रयानुप्रवेशरूप संकर अन्य प्रभेद की अपेक्षा बहुत अधिक हो सकता है क्यों कि काव्यों में एक ही पद से अनेक रसादि की अभिव्यक्ति उपलब्ध हो रही है जैसे—'स्निग्धश्यामल'—इत्यादि स्थल में स्निग्ध श्यामल इत्यादिसे विप्रलम्भश्रृङ्गार तथा उसके व्यभिचारी भाव शोकावेग इन दोनों की अभिव्यक्ति होनेसे एकाश्रयानुप्रवेश सङ्कर प्रतीत हो रहा है (इस श्लोककी व्याख्या पृ० ८७ में कर चुके हैं)।

तत्रैव ध्वनिद्वयस्य संसृष्टिमुदाहरति—

स्वप्रभेदसंसृष्टत्वं च यथा—पूर्वोदाहरण एव अत्र ह्यर्थान्तरसङ्क्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्यस्य संसर्गः।

पूर्वोदाहरणे 'स्निग्धश्यामल'—इत्यादौ। अर्थान्तरसंक्रमितवाच्यस्य रामपदव्यङ्ग्यस्य, अत्यन्ततिरस्कृतवाच्यस्य लिप्त-सुहृत्-पदाभ्यां व्यङ्ग्यस्य च ध्वनेर्निरपेक्षतया स्थितेः संसृष्टिः। अत्यन्ततिरस्कृतवाच्यस्येति जात्यपेक्षायामेकवचनम्, पदद्वयव्यङ्ग्यध्वनिद्वयस्य सद्भावात्।

नव्यास्तु—अत्रात्यन्ततिरस्कृतवाच्यध्वन्योरेव मिथो नैरपेक्ष्येण संसृष्टिः। ताभ्यां सहार्थान्तरसङ्क्रमितवाच्यध्वनेस्त्वङ्गाङ्गिभावेन सङ्कर इत्यातिष्ठन्ते।

उक्त उदाहरणमें ही ध्वनि द्वय की संसृष्टि बतलाते हैं—स्वप्रभेदेति। 'स्निग्ध श्यामल' इस श्लोक में राम पदके अत्यन्त दुःख सहिष्णुराम रूप व्यङ्ग्यार्थपरक

होनेसे अर्थान्तर संक्रमित वाच्यध्वनि, और लिप्त तथा सुहृत् पदसे व्यज्ञ्यभूत अत्यन्त तिरस्कृत वाच्यध्वनिके निरपेक्ष रूपसे स्थित होनेसे संसृष्टि प्रतीत होती है।

इत्थं ध्वनेः स्वप्रभेदैः सह सङ्कीर्णत्वसंसृष्टत्वे उदाहृत्य, गुणीभूतव्यङ्ग्येन सह सङ्कीर्णत्वमुदाहरति—

**गुणीभूतव्यङ्ग्यसङ्कीर्णत्वं यथा—'न्यक्कारो ह्ययमेव मे यदरयः' इत्यादौ।**

अस्य श्लोकस्य व्याख्यानं व्यङ्ग्यप्रदर्शनं च प्राग् विहितमेव। अत्र वाक्यव्यङ्ग्यासंलक्ष्यक्रम—वीररसध्वनेः पदकदम्बप्रकाशितगुणीभूतव्यङ्ग्यैरुपकारकैः सहाङ्गाङ्गिभावेन सङ्करः।

इह 'अरयः इत्यादिभिः सर्वैरेव पदार्थै रौद्र एवानुगृह्यते' इत्याचार्याः। 'निर्वेदाख्यो व्यभिचारिभाव एव प्राधान्येन व्यज्यते' इति दर्पणव्याख्यातारः। निर्वेद-क्रोधादिभिः पोषितो रावणस्य युद्धोत्साह आस्वादपदवीमवतरन् वीररसत्वमेतीति तु नवीना व्याहरन्ति।

उक्तरीतिसे ध्वनिके अपने भेदोंके साथ संकर और संसृष्टि को बतलाकर अब गुणीभूतव्यङ्ग्यके साथ संकरके उदाहरण बतलाते हैं—गुणीभूतेति। गुणीभूतव्यङ्ग्यके साथ ध्वनि का संकर, जैसे—'न्यक्कारोह्ययमेवेति। यहां पर वाक्य से व्यङ्ग्य असंलक्ष्य क्रम वीररस ध्वनि रूप अङ्गीका, अलग अलग पदों से अभिव्यञ्जित गुणीभूत व्यङ्ग्य रूप अङ्गके साथ अङ्गाङ्गिभाव संकर प्रतीत होता है।

पुनस्तमेवोदाहरति—

**यथा—**

अर्जुनेन सह रिपुबलं संहृत्य दुर्योधनं पित्रोरन्तिकेऽन्विष्यंस्तदनुजीविनो भीमः पृच्छति—

**'कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी,**
**कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः।**
**राजा दुश्शासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं,**
**क्वास्ते दुर्योधनोऽसौ ? कथयत न रुषा द्रष्टुमभ्यागतौ स्वः॥'**

वेणीसंहारे पञ्चमाङ्के पद्यमिदम्। द्यूतस्य दुरोदरस्य छलानां छद्मनां शाठ्यानामिति यावत्, कर्ता सदसि प्राग् विधाता प्रवर्तको वा, जतुमयस्य वारणावतनगरे लाक्षारचितस्य शरणस्य गृहस्य पाण्डवदाहार्थमुद्दीपनो दाहकः, स प्रसिद्धोऽभिमानी-अहङ्कारी, कृष्णाया द्रौपद्याः सदस्येव केशानामुत्तरीयस्य च व्यपनयनेऽपासने पटुर्निपुणः,

तथा यस्य पाण्डवा वयं दासाः किङ्करा इत्युक्तिरिति शेषः, तथा यो राजाऽखण्डितशासनो भूपतिः, दुश्शासनादेः, अनुजानां कनिष्ठसोदराणां शतस्य, गुरुर्ज्यायान् भ्राता शाठ्यशिक्षको वा, तथा योऽङ्गराजस्य कर्णस्य मित्रं सुहृदस्तीति शेषः, असौ दुर्योधनः क्वास्ते कुत्र तिष्ठति ? कथयत ? यूयमिति शेषः, आवां भीमार्जुनौ रुषा क्रोधेन तं द्रष्टुं नाभ्यागतौ स्वो नायातौ स्व इत्यर्थः।

तथा च- 'द्यूते दुरोदरम्', 'शरणं गृहरक्षित्रोः', 'लाक्षा राक्षा जतुक्लीवे' इति चामरः। 'छलं छद्मस्खलितयोः' इति हैमः। 'छलं स्खलितशाठ्ययोः' इति मेदिनी च।

इह वाच्यस्तुत्या निन्दाया व्यज्यमानतया व्याजस्तुतिरलङ्कार इति केचित्। परे तु—विशेषणानां व्यङ्ग्याभिप्रायकत्वेन-'अलङ्कारः परिकरः साभिप्राये विशेषणे।' इति लक्षितं परिकरालङ्कारमाचक्षते। इहापि वाक्यप्रधानव्यङ्ग्यस्य रौद्ररसध्वनेस्तत्तद्विशेषणोपस्थापितैर्गुणीभूतव्यङ्ग्यैः सह सङ्करः।

उसी गुणीभूत व्यङ्ग्यके साथ ध्वनिके संकर का दूसरा उदाहरण बतलाते हैं—यथेति। कौरवोंके सारे ही सैनिकोंके विध्वंस करनेके बाद भाग कर छिपे हुए दुर्योधन को ढूंढते हुए भीम और अर्जुन उस (दुर्योधन) के भृत्योंसे पूछते हैं—जुए में शठता पूर्ण छल प्रपञ्चों को करने वाला, पाण्डवोंके विनाशार्थ वारणावतमें बनवाये हुये लाक्षागृहमें आग लगाने वाला, द्रौपदीके केश और वस्त्राञ्चल को खींचनेमें चतुर, एवं पाण्डवों को अपना दास बनाने वाला, दुःशासन आदि का राजा, सौ अनुजों (भाइयों) का गुरु और अङ्गराज (कर्ण) का मित्र, वह घमण्डी दुर्योधन कहां है ? बताओ ? हम क्रोधसे उसको मारने नहीं आये, अपि तु केवल देखने आये हैं।

तदाह—

**अत्र ह्यलक्ष्यक्रमव्यङ्ग्यस्य वाक्यार्थीभूतस्य व्यङ्ग्यविशिष्टवाच्याभिधायिभिः पदैः सम्मिश्रता।**

अत्र 'न्यक्कारः' इत्यादौ 'कर्ता' इत्यादौ च श्लोके, वाक्यार्थीभूतस्य प्रधानतया वाक्येन व्यज्यमानस्य, असंलक्ष्यक्रमस्य क्रमेण वीरस्य रौद्रस्य च ध्वनेः, व्यङ्ग्येन विशिष्टमुपस्कृतं वाच्यं यान्यभिदधत्यभिधया बोधयन्ति, तादृशैः पदैरुपलक्षितेन गुणीभूतव्यङ्ग्यरूपेणार्थेन सह सम्मिश्रता सङ्कीर्णता सङ्कर इति यावत्।

पदैरित्युपलक्षणे तृतीया, ध्वनेः पदसाहित्यासम्भवात्।

इदमिहावधेयम्—स्वप्रभेदसङ्करवद् गुणीभूतव्यङ्ग्यसङ्करोऽपि त्रिविध एतदुदाहरणयुगले प्रदर्शितः। तथा हि—श्लोकद्वये प्रधानव्यङ्ग्यस्य रसस्य प्रत्येकपदव्यङ्ग्यैर्विभावादिरूपैरुपस्करणादङ्गाङ्गिभावसङ्करः। द्वितीयश्लोके 'पाण्डवा यस्य दासाः' इति

दुर्योधनोक्तेर्यदाऽनुकरणम्, तदा वाच्यार्थस्य व्यङ्ग्यविशिष्टस्य क्रोधोद्दीपकतया गुणीभूतव्यङ्ग्यता। अथवा वाच्येन 'कृतकृत्यैर्दासैः स्वाम्यवश्यं द्रष्टव्यः' इत्यादिरूपप्रधानव्यङ्ग्यस्यार्थशक्त्या ध्वननमित्यर्थशक्त्युद्भवध्वनिरित्युभयोश्चमत्कारितया साधकबाधकप्रमाणविरहेण सन्देहसङ्करः। तत्तत्पदरूपवाचकेषु रसध्वनिना सह गुणीभूतव्यङ्ग्यानामनुप्रवेशादेकवाचकानुप्रवेशसङ्करश्च योजनीयः।

इन दोनों—'न्यक्कारो' और 'कर्ता द्यूतच्छलानां'—श्लोकोंमें प्रधानतया वाक्योंसे व्यज्यमान असंलक्ष्य क्रम व्यङ्ग्यात्मक क्रमशः वीर और रौद्र रसध्वनि का, व्यङ्ग्यार्थ विशिष्ट वाच्यार्थ को अभिधा द्वारा प्रतीत करने वाले पदोंसे द्योत्य गुणीभूत व्यङ्ग्य रूप उक्त अर्थ के साथ अङ्गाङ्गिभाव रूप संकर प्रतीत होता है, यद्यपि यहां पर ध्वनि के अपने भेदोंके साथ पूर्वोदाहृत त्रिविध सङ्करके समान, इन उदाहरणों में गुणीभूत व्यङ्ग्यके साथ ध्वनिके तीनों प्रकारके ही संकर सूक्ष्म रूपसे आ जाते हैं, तथापि ध्वनिकारने उक्त वाक्यार्थभूत असंलक्ष्यक्रम व्यङ्ग्य वीर–रौद्र रसादि ध्वनिके साथ पदप्रकाश्य गुणीभूत व्यङ्ग्य का 'अङ्गाङ्गिभाव' रूप एक ही संकर दिखाया है, बांकी 'सन्देह संकर' और 'एकाश्रयानुप्रवेश संकर' का दीधितिके अनुसार स्वयं ऊहापोह कर लेना चाहिये।

ननु व्यङ्ग्यस्यैव गुणीभूतत्वं प्रधानत्वं च विरुद्धमिति पराक्षेपे सत्यविरोधं समर्थयति—

अत एव च पदार्थाश्रयत्वे गुणीभूतव्यङ्ग्यस्य, वाक्यार्थाश्रयत्वे च ध्वनेः सङ्कीर्णतायामविरोधः स्वप्रभेदान्तरवत्।

अत एव—एतादृशोदाहरणेषु तदुपलम्भादेव, अविरोध इति सम्बन्धः।

उपर्युक्त स्थलमें गुणीभूतव्यङ्ग्य और ध्वनिरूप प्रधान व्यङ्ग्य दोनों ही परस्पर विरुद्ध होनेसे एक ही जगह में किस प्रकार रह सकते हैं? इस सन्देह का समाधान करते हैं—अत एवेति। उक्त उदाहरणों में उक्त ध्वनि और गुणीभूत व्यङ्ग्य, इन दोनों के एक साथ ही उपलब्ध होनेसे ध्वनिके पूर्वोक्त अपने प्रभेदोंके समान गुणीभूत व्यङ्ग्यके पदमें आश्रित होनेसे और ध्वनिके वाक्यमें आश्रित होनेसे विभिन्नाश्रयके कारण परस्पर संकर होने पर भी कोई विरोध नहीं आता। अर्थात् गुणीभूत व्यङ्ग्य पदोंमें रहता है और ध्वनि रूप प्रधान व्यङ्ग्य वाक्य में रहता है, इसलिये इन दोनों का आश्रय भेद हो जानेसे संकर होने में कोई विरोध नहीं होता।

निदर्शनमुपपादयति—

तथा हि—ध्वनिप्रभेदान्तराणि परस्परं सङ्कीर्यन्ते, पदार्थवाक्यार्थाश्रयत्वेन च न विरुद्धानि।

आश्रयो व्यञ्जकः। 'एवंवादिनि' इत्यादौ ध्वनेः स्वप्रभेदान्तरसङ्करोदाहरणे यथाऽधोमुखीपदव्यङ्ग्यलज्जारूपव्यभिचारिभावस्यान्यतः प्राधान्येऽपि, समस्तवाक्यार्थ-व्यङ्ग्यप्रधानीभूताभिलाषविप्रलम्भं प्रत्युपकारकत्वेनाप्राधान्यं व्यञ्जकभेदान्न विरुद्धम्, तथा प्रकृतेऽपीत्यर्थः।

पितृत्वपुत्रत्वे इव प्राधान्याप्राधान्ये निरूपकभेदेन समानाधिकरणे भवितुमर्हत इति तात्पर्यम्।

दृष्टान्तके उपपादनद्वारा प्रस्तुतविषय को पुष्ट करते हैं—तथाहीति। जैसे ध्वनिके अपने अन्य प्रभेदों के साथ संकर होता है और एकके पदार्थमें आश्रित होने से और दूसरे के वाक्यार्थ में आश्रित होनेसे विरोध नहीं होता, वैसे ही ध्वनि और गुणीभूत व्यङ्ग्यके भी क्रमशः वाक्यार्थ तथा पदार्थमें आश्रित होनेसे उनके संकर होने में कोई विरोध नहीं होता है।

ननु समाधानमिदमङ्गाङ्गिभाव-सन्देहसङ्करयोरेव भणितुं शक्यम्, न त्वेक-वाचकानुप्रवेशसङ्करेऽपि, तत्र व्यञ्जकैक्यादित्याक्षेपं परिहरति—

**किञ्चैकव्यङ्ग्याश्रयत्वे तु प्रधानगुणभावो विरुध्यते, न तु व्यङ्ग्यभेदापेक्षया, ततोऽप्यस्य न विरोधः।**

यथा व्यञ्जकभेदेन विरोधपरिहारस्तथा व्यङ्ग्यभेदेनापि। तथा ह्येकमेव व्यङ्ग्यं व्यञ्जकाभेदे गुणीभूतं प्रधानीभूतं च न भवितुं शक्नोति। तद्विरोधस्यैकवाचकानुप्रवेशव्यङ्ग्यसङ्करे न सम्भवः, अन्यस्य व्यङ्ग्यस्य गुणीभावादन्यस्य च प्रधानत्वादिति व्यक्तिभेदेन गुणप्रधानभावो न विरुद्ध इति भावः।

अपिना पूर्वपरिहारापेक्षयाऽस्य सर्वतो मुखत्वं सूच्यते।

उक्त स्थलमें ध्वनि और गुणीभूत व्यङ्ग्य को क्रमशः वाक्याश्रित और पदाश्रित मानकर विभिन्नाश्रय होनेसे संकरके उपपादन द्वारा दोनोंके विरोधका जो परिहार किया है, उसका 'अङ्गाङ्गिभावसंकर' और 'संदेहसंकर' में सम्भव होनेपर भी 'एकाश्रयानुप्रवेशसंकर' में उस (विरोध परिहार) का संभव नहीं है, क्योंकि उस (एकाश्रयानुप्रवेशसंकर) में एक ही आश्रय होनेसे परस्पर विरुद्ध ध्वनि और गुणीभूतव्यङ्ग्य दोनों एक आश्रयमें नहीं रह सकते, इस प्रश्नका समाधान करते हैं—किञ्चेति एक ही व्यङ्ग्यमें प्रधानत्व और गौणत्व (अप्रधानत्व) इन परस्पर दो विरुद्ध धर्मोंके विरोध होनेसे नहीं रह सकने पर भी भिन्न व्यङ्ग्योंमें प्रधानत्व और गौणत्वके रहनेमें कोई विरोध नहीं होता, इसलिये भी उक्त ध्वनि और गुणीभूत व्यङ्ग्यके संकर होनेमें विरोध नहीं है, अर्थात् जैसे पहले एकही जगहमें

पद और वाक्यरूप व्यञ्जकोंके भेदोंसे ध्वनिके अपने ही अन्य भेदोंके साथ रहनेमें कोई विरोध न होनेसे संकर होता है, वैसे ही यहाँ भी एक ध्वनिरूप प्रधान व्यङ्ग्य और दूसरा गुणीभूत व्यङ्ग्य इन दोनों भिन्न भिन्न व्यङ्ग्योंके एक आश्रय (जगह) में रहनेमें कोई विरोध नहीं प्रतीत होता, क्योंकि यदि एक ही व्यङ्ग्यको ध्वनि और उसीको गुणीभूत भी कहा जाता, तो विरोध हो भी सकता था, परन्तु दोनों व्यङ्ग्योंके भिन्नरूप होनेसे ऐसी बात नहीं है।

ननु सङ्कराणां संसृष्टेश्च प्रसिद्धिर्वाच्यालङ्कारेष्वेव विद्यते, न तु व्यङ्ग्यार्थेष्वपीति शङ्कां समाधत्ते—

**अयं च सङ्करसंसृष्टिव्यवहारो बहूनामेकत्र वाच्यवाचकभाव इव व्यङ्ग्यव्यञ्जकभावेऽपि निर्विरोध एव मन्तव्यः।**

बहूनामेकत्रोपनिपाते सङ्करसंसृष्टी भवतः, ते च यथा वाच्यानां तथैव व्यङ्ग्यानामपि, किमत्रैकतरनिर्णये निदानम्? प्रतीतिबलादेव यदि तत्र कल्पना, तर्हि साऽत्रापि केन वार्यते, द्वयोस्तुल्यत्वादित्युत्तरम्।

संकर और संसृष्टि की प्रायः करके वाच्यभूत अलंकारोंमें ही प्रसिद्धि है, इसलिये व्यङ्ग्यार्थोंमें उन दोनोंका संभव नहीं है इस शङ्काका समाधान करते हैं— अयञ्चेति। जिस प्रकर बहुतसे अलंकारोंका एकत्र उपनिपात रूप संकर-संसृष्टिका व्यवहार वाच्यवाचक भावमें होता है, उसी प्रकार व्यङ्ग्य-व्यञ्जक भावमें भी समझना चाहिये, अर्थात् जैसे वाच्यभूत अलङ्कारोंमें संकर-संसृष्टि होती है, वैसे ही व्यङ्ग्यरूप अनेक ध्वनि प्रभेदोंमें या ध्वनि और गुणीभूत व्यङ्ग्यमें भी उसे (संकर और संसृष्टिको) निर्विरोध समझना चाहिये, क्योंकि केवल वाच्यमें ही उसके होनेमें कोई प्रबलतरयुक्ति नहीं प्रतीत होती।

एवं ध्वनिगुणीभूतव्यङ्ग्ययोः सङ्करमुदाहृत्य संसृष्टिमुदाहरति—

**यत्र तु पदानि कानिचिदविवक्षितवाच्यान्यनुरणनरूपव्यङ्ग्यवाच्यानि वा, तत्र ध्वनिगुणीभूतव्यङ्ग्ययोः संसृष्टत्वम्, यथा—'तेषां गोपवधूविलाससुहृदाम्' इत्यादौ। अत्र हि 'विलाससुहृदाम्' 'राधारहस्साक्षिणाम्' इत्येते पदे ध्वनिप्रभेदरूपे, 'ते' 'जाने' इत्येते च पदे गुणीभूतव्यङ्ग्यरूपे।**

अनुरणनरूपं संलक्ष्यक्रमं व्यङ्ग्यं येषां तादृशानि वाच्यानि च येषु तानीति बहुव्रीहिगर्भो बहुव्रीहिः। कानिचिदित्यनेन निरपेक्षार्थतां सूचयता सङ्करसम्भावना निराक्रियते। केषांचित् पदानां यत्राविवक्षितवाच्यध्वनिव्यञ्जकत्वम्, अपरेषां केषांचनार्थशक्त्युद्भवलक्षणसंलक्ष्यक्रमगुणीभूतव्यङ्ग्यव्यञ्जकत्वम्, तत्र ध्वनिगुणी-

भूतव्यङ्ग्ययोः संसृष्टिः। 'तेषाम्' इत्यादिपद्यं पूर्वं विवृतमेव। लतावेश्मविशेषणतयोपात्ते 'विलाससुहृदाम्' इत्यत्र 'राधारहस्साक्षिणाम्' इत्यत्र च, सुहृत्—साक्षिपदे चेतनधर्मयोः सौहृद्य—साक्ष्ययोरचेतनेषु कुञ्जेषु बाधादत्यन्ततिरस्कृतवाच्यध्वन्योः, 'ते' इति 'जाने' इति च पदेऽनुभवैकगोचरत्वमुत्प्रेक्षाविषयीभूतानन्तधर्मवत्त्वं च वाच्योपकारकं गुणीभूतं व्यङ्ग्यं सूचयत इति तद्गुणीभूतव्यङ्ग्याभ्यां संसृष्टिरित्याशयः।

इस प्रकार ध्वनि और गुणीभूत व्यङ्ग्यके संकरका प्रतिपादनकर अब उनकी संसृष्टिका प्रतिपादन करते हुये उदारण देते हैं—यत्र तु पदानीति। जहाँपर कुछ पद लक्षणा मूलक अविवक्षित वाच्य ध्वनिके व्यञ्जक हों और कुछ अन्य पद निरपेक्ष होकर, जहाँकि संकरका सम्भव नहीं है, अर्थ शक्त्युद्भव संलक्ष्य क्रम व्यङ्ग्यके व्यञ्जक हों, वहाँ प्रधानवाक्यसे व्यङ्ग्य ध्वनि और उसकी अपेक्षा गुणीभूत अविवक्षित वाच्य या संलक्ष्यक्रम रूप गुणीभूत व्यङ्ग्य की संसृष्टि होती है, जैसे—'तेषां गोपवधूविलाससुहृदाम्'–इत्यादिमें 'विलाससुहृदाम्' और 'राधारहःसाक्षिणाम्' ये दोनों पद लताकुञ्जगृहोंके विशेषणरूप हैं, परन्तु अचेतन लताकुञ्जगृहोंमें 'मैत्री' और 'साक्षिता' जोकि वास्तव में चेतनके धर्म हैं, नहीं रह सकते हैं, इसलिये उनमें अत्यन्त तिरस्कृत वाच्य ध्वनि होनेसे अविवक्षित वाच्यध्वनि है, और 'ते' तथा 'जाने' ये दोनों पद वाच्यार्थके उपकारक अनुभवैकगोचरत्व और उत्प्रेक्षाविषयी भूत अनन्तधर्मवत्त्वके सूचक हैं, अतः इन दोनोंमें उक्त अनुभवैकगोचरत्वादि गुणीभूत व्यङ्ग्य हैं, इस प्रकार प्रधानवाक्य से गम्य प्रवास हेतुक विप्रलम्भ श्रृङ्गार ध्वनिके साथ उक्त पद द्योत्य निरपेक्ष रूपसे स्थित उक्त गुणीभूत व्यङ्ग्यों की संसृष्टि हो गई है।

इत्थं गुणीभूतव्यङ्ग्येन सह त्रिविधसङ्करैकप्रकारकसंसृष्टियोगादपि भेदचतुष्टमुदाहृत्य, वाच्यालङ्कारेष्वपि तान् भेदानुदाहरति—

**वाच्यालङ्कारसङ्कीर्णत्वमलक्ष्यक्रमव्यङ्ग्यापेक्षया रसवति रसालङ्कारे च काव्ये सर्वत्रैव सुव्यवस्थितम्।**

रसवति रसध्वनिमति, रसालङ्कारे रस एवाऽप्रधानत्वादलङ्कारो यत्र तादृशे रसवदलङ्कारभाजि च, सर्वत्रैव काव्येऽसंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेरपेक्षया वाच्येनालङ्कारेण सङ्कीर्णत्वं सुव्यवस्थितं निश्चितमेवास्तीत्यर्थः।

अलङ्काराणां व्यङ्ग्यत्वे तु प्राधान्ये सति ध्वनेरेव सङ्करसंसृष्टी, अप्राधान्ये तु गुणीभूतव्यङ्ग्यस्यैवेति तद्व्यावर्तनाय वाच्यत्वं विशेषणम्। 'चलापाङ्गां दृष्टिम्' इत्यादिः, 'उप्पहजाआए' इत्यादिश्च श्लोकः सङ्करोदाहरणम्।

पूर्वत्र वाच्येन व्यतिरेकालङ्कारेण शृङ्गारो ध्वन्यमान उपक्रियत इत्यङ्गाङ्गिभावसङ्करः। उत्तरत्र ध्वनिर्वा स्वभावोक्त्यलङ्कारो वेत्यन्यतरकोटिनिर्धारकप्रमाणाभावात् सन्देहसङ्करः। एकवाचकानुप्रवेशसङ्करोऽपि पूर्वत्रैव, व्यतिरेकवाचकपदसमुदयादेव रसस्यापि व्यञ्जनात्।

उक्तरीतिसे गुणीभूतव्यङ्ग्यके साथ ध्वनिके त्रिविध संकर और एक संसृष्टिका उपपादनकर अब वाच्यभूत अलङ्कारोंके साथ भी ध्वनिके उक्त संकर और संसृष्टि भेदोंका प्रतिपादन करते हैं—वाच्यालङ्कारेति। रसध्वनि युक्त तथा रसवत् अलङ्कार युक्त (अर्थात् रस ही अप्रधान होनेसे जहाँ अलङ्कार हो गये हैं ऐसे) सभी काव्यों में असंलक्ष्य क्रम व्यङ्ग्य रसादि ध्वनिके साथ वाच्यभूत अलङ्कारोंका संकर सुनिश्चित ही है, अलंकारके व्यङ्ग्य होनेपर तो, यदि वह व्यङ्ग्य अलङ्कार प्रधानरूपसे प्रतीत होता है, तब अलङ्कार ध्वनिका ही संकर हो जायगा और यदि वह (व्यङ्ग्य अलंकार) अप्रधान है, तब गुणीभूत व्यङ्ग्यका ही संकर हो जायगा, इसलिये उन दोनोंको दूर करनेके लिये वाच्यभूत अलङ्कार कहा गया है, 'चलापाङ्गां दृष्टिम्'–इत्यादिमें वाच्यभूत व्यतिरेकालङ्कारसे व्यज्यमान शृङ्गार रस परिपुष्ट होता है, अतः उक्त व्यतिरेकके साथ शृङ्गाररसका अङ्गाङ्गिभाव संकर है, इसी प्रकार एक वाचकानुप्रवेश संकर भी समझना चाहिये। और 'उत्पथजातायाः'–इत्यादिमें ध्वनि है या स्वभावोक्ति अलंकार है? इन दोनोंमें अन्यतर कोटिके निश्चायक दृढ़तर प्रमाणके न रहनेसे संदेह संकर होता है।

ननु किं रसध्वनेरेव वाच्यालङ्कारेण सह सङ्करो, नान्यध्वनीनाम्? इति प्रश्नं समाधातुमुदाहरति—

**प्रभेदान्तराणामपि कदाचित् सङ्कीर्णत्वं भवत्येव। यथा ममैव—**

पद्यमिति शेषः। प्रभेदान्तराणां रसादिभिन्नवस्त्वलङ्कारध्वनिप्रकाराणाम्।

रसादि ध्वनिके साथ ही क्या वाच्यभूत अलङ्कारोंका संकर होता है? अन्य ध्वनिके साथ नहीं? इस सन्देहको दूर करते हैं—प्रभेदान्तराणामपीति। जैसे रसादि ध्वनिके साथ वाच्यभूत अलङ्कारोंका संकर होता है, वैसे ही वस्तुध्वनि तथा अलङ्कार ध्वनि रूप अन्य ध्वनि प्रभेदोंके साथ भी वाच्य अलङ्कारोंका संकर होता ही है। जैसे मेरे ही निर्मित निम्न श्लोकमें—

पूर्वं भगवद्भक्तिमाश्रितो, मध्ये कौतुकमात्रेण कविपण्डितवृत्तिमवलम्ब्य परिश्रान्तः पुनर्भगवद्भक्तिमेव श्रेयसीं मन्यमानो भगवन्तं वदति—

**'या व्यापारवती रसान् रसयितुं काचित् कवीनां न वा,**
**दृष्टिर्या परिनिष्ठितार्थविषयोन्मेषा च वैपश्चिती।**

ते द्वे अप्यवलम्ब्य विश्वमनिशं निर्वर्णयन्तो वयं,
श्रान्ता नैव च लब्धमब्धिशयन! त्वद्भक्तितुल्यं सुखम् ॥' इति।

हे अब्धिशयन! समुद्रशायिन्! विष्णो! या रसान् शृङ्गारादीन् रसयितुमास्वादयितुम्, स्थायिभावान् वा रस्यमानतां नेतुम्, व्यापारशब्दार्थयोजनादयस्तद्वती, काचिन् सकलजगदलौकिकचोन्मीलनेनाद्भुता, नवा प्रतिक्षणविश्ववैचित्र्यसम्पादिका, कवीनामलौकिकवस्तुवर्णनानिपुणानां, दृष्टिः प्रतिभालक्षणाऽस्ति, या च परिनिष्ठितः प्रमाणपरिग्रहेण दृढोऽर्थविषये ज्ञातव्यपदार्थविषये, उन्मेषो विभालोयस्याः सा, यद्वा-परिनिष्ठिते लोके प्रसिद्धया निर्णीतेऽर्थे, न तु कविदृष्टिवदपूर्व एवार्थे विषये, उन्मेषो यस्यास्तादृशी, विपश्चितां विदुषामियं वैपश्चिती, दृष्टिः परिणतबुद्धिरस्ति। ते द्वे कविविपश्चिद्दृष्टी अपि न त्वेकतरामेव दृष्टिम्, तावन्मात्रेण सकलालोचनासम्भवाद् अवलम्ब्य करणत्वेनाश्रित्य, विश्वमखिलं पदार्थसार्थम्, अनिशमनवरतं मुहुर्मुहुः, निर्वर्णयन्तो निश्शेषेण निश्चयाय वा वर्णयन्तः वयं वृथा प्रयासव्यसनिनः, श्रान्ताः खिन्नाः, न तु सारं किञ्चिदपि गृहीतवन्तः, अभूमेति शेषः। तव परमात्मनो जगदीशस्य भक्तिर्भजनजन्यावेशः, यद्वा त्वयि भक्तिस्त्वद्विषयाऽनुरक्तिस्त्वद्भक्तिः, तया तुल्यं (का कथा? तज्जातीयस्य) सुखं च पुनरस्माभिर्नैव लब्धमनुभूतमित्यर्थः।

रसास्वादसुखाद् दृष्टादृष्टविषयसुखाच्चापि भगवद्भक्तिसुखं गरीय इत्यभिसन्धिः।

अत्र प्रतिभापरिणतबुद्धिरूपतादृशदृष्टिद्वयालम्बनेन निर्वर्णनं चाक्षुषज्ञानलक्षणमसम्भवीति विरोधस्य, निर्वर्णनपदस्य बुद्धिपरत्वे पर्यवसानात् परिहार इति विरोधाभासेनालङ्कारेण सङ्कीर्णः, दृष्टिपदवाच्यार्थस्य निर्वर्णनपदार्थ एव चाक्षुषज्ञानस्य ज्ञानविशेषलक्षणेऽर्थान्तरे सङ्क्रमणादर्थान्तरसङ्क्रमितवाच्यध्वनिः। वस्तुतस्तु वाच्यस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यध्वनिरिति रसादिध्वनिभिन्नस्यापि ध्वनिप्रकारस्य वाच्यालङ्कारसङ्कीर्णता भवत्येवेत्युत्तरम्।

कोई शिक्षित भक्तजन पहले भगवद् भजनमें लगा रहने पर भी बीचमें कुतूहल वश कविता–पाण्डित्य वृत्तिमें पड़कर उसके आयाससे ऊबकर फिर उस (भगवद् भजन) को ही सर्वोत्तम साधन समझता हुआ भगवान्से कहता है—हे समुद्र शायी भगवन्! रसोंके आस्वादके लिये शब्द रचनामें प्रयत्नशील कवियों की प्रतिक्षण विलक्षण नई नई स्फूर्त्तिशालिनी जो एक अद्भुत दृष्टि है, और प्रमाणसिद्ध अर्थों को प्रकाशित करनेवाली जो विद्वानों की वैदुष्य–दृष्टि है, उन दोनोंके द्वारा इस

संसारको हम रात दिन देखते देखते परिश्रान्त हो (थक) गये, लेकिन आप की भक्तिके समान अन्यत्र कहीं भी सुख नहीं मिला। यहाँ कवि की प्रतिभा और दार्शनिक परिपक्व बुद्धिसे निर्वर्णन अर्थात् देखना सम्भव नहीं है इसलिये विरोध उपस्थित होता है, परन्तु निर्वर्णनपदका ज्ञान सामान्य अर्थ कर देनेसे वह विरोध परिहृत होकर विरोधाभास अलङ्कारमें परिणत हो जाता है, और निर्वर्णनपदार्थ चाक्षुषप्रत्यक्ष ज्ञान विशेषके ज्ञान सामान्य रूप अर्थमें संक्रमित हो जानेसे अर्थान्तर संक्रमित वाच्य ध्वनि भी होती है, इस प्रकार विरोधालङ्कार और अर्थान्तर संक्रमित वाच्य ध्वनिका एकाश्रयानुप्रवेश रूप संकर होता है।

तदाह—

**अत्र विरोधालङ्कारेणार्थान्तरसङ्क्रमितवाच्यस्य ध्वनिप्रभेदस्य सङ्कीर्णत्वम्।**

प्राग्वदत्रापि सङ्करप्रकारत्रयं केचिद् व्याहरन्ति।

वृत्तिकार उक्ताशयको ही संक्षेपमें बतलाते हैं—अत्रेति। उक्तस्थलमें विरोधालंकारके साथ अर्थान्तर संक्रमित वाच्यध्वनिभेदका संकर है।

इत्थं वाच्यालङ्कारध्वनिसङ्करमुदाहृत्य तत्संसृष्टिमुदाहर्तुमुपक्रमते—

**वाच्यालङ्कारसंसृष्टत्वं च पदापेक्षयैव।**

वाक्याश्रयास्तु समासोक्त्यादयो वाच्यालङ्काराः प्रधानव्यङ्ग्यमुपकुर्य्युरेवेति तथात्वेऽङ्गाङ्गिभावसङ्करः, वाक्यात्मकैकवाचकप्रकाश्यत्वादेकवाचकानुप्रवेशसङ्करश्च नियमेन स्यादेवेति पदवाच्यालङ्कारेणैव ध्वनेः संसृष्टिः सम्भवतीति भावः।

ननु यत्किञ्चित्पदवाच्यस्याप्यलङ्कारस्य रसाद्यनुपकारकत्वेऽलङ्कारत्वमेव न स्यात्, तदुपकारकत्वे पुनरङ्गाङ्गिभावात् सङ्कर एवेति कथं संसृष्टिरिति चेत्, सत्यम्, ध्वनिपदेनात्र रसादिमात्रं न विवक्षितम्, अपि तु वस्त्वलङ्कारावपि, तदुपकारकत्वं तु नालङ्कारत्वे प्रयोजकमिति वस्त्वलङ्कारध्वनिभ्यां तस्य संसृष्टिः सुवचैव। अतः एवात्यन्ततिरस्कृतवाच्यवस्तुध्वनिसंसृष्टिरेवानुपदमुदाहरिष्यते। उदहारि च प्राक्—'कोपात् कोमललोलबाहुलतिकापाशेन' इत्यादि तथैव। तत्र यद्यपि रसध्वनिरप्यस्ति, किन्तु रूपकेण तस्य नोपकारः कश्चित्, तत एव रूपकमुपक्रान्तमपि तत्र न निर्व्यूढम्। तद्रूपकस्यालङ्कारत्वं तु प्रधानेतररसोपकारकत्वेनैव कल्पनीयमिति प्रेक्षावद्भिः परीक्षणीयम्।

इस प्रकार वाच्यभूत अलङ्कारके साथ ध्वनिका संकर बतलाकर अब उसीके साथ ध्वनि की संसृष्टि बतलानेके लिये उपक्रम करते हैं—वाच्यालङ्कार इति।

वाच्यभूत अलङ्कारोंके साथ ध्वनि की निरपेक्षतया स्थितिरूप संसृष्टि पदों की दृष्टिसे ही होती है, वाक्य की दृष्टिसे नहीं, क्योंकि वाक्यसे प्रकाशित होनेवाले समासोक्ति आदि अलङ्कार तो ध्वनिरूप प्रधान व्यङ्ग्यके परिपोषक ही होते हैं, निरपेक्ष नहीं, इसीलिये उनका ध्वनिके साथ अङ्गाङ्गिभाव संकर ही बन जाता है, अतः पदवाच्य अलङ्कारके साथ ही ध्वनि की संसृष्टि हो सकती है।

पदापेक्षयेत्युक्तं विवृणोति—

यत्र हि कानिचित् पदानि वाच्यालङ्कारभाञ्जि, कानिचिच्च ध्वनि-प्रभेदयुक्तानि।

पदानीति बहुवचनमविवक्षितम्, वक्ष्यमाणोदाहरणे बहूनां तादृशपदानामभावात्। हि यतो यत्र कानिचित् पदानि वाच्यालङ्कारभाञ्जि वाच्योपमाऽऽदिबोधकानि, कानिचित् पदानि च ध्वनेः प्रभेदैर्युक्तानि ध्वनिप्रकारव्यञ्जकानि सन्ति, ततस्तत्र पदापेक्षयैव संसृष्टत्वम्, इति पूर्वग्रन्थावृत्त्यैव सङ्गतिः।

वृत्तिकार उक्तविषयका ही उपपादन करते हैं—यत्रेति। जहाँपर कुछ पद वाच्यभूत उपमादि अलङ्कारसे युक्त हैं और कुछ पद ध्वनिभेदसे युक्त हैं, अर्थात् ध्वनि प्रकारके व्यञ्जक हैं, वहीं व्यङ्ग्य वस्तु आदि ध्वनि और वाच्य अलंकार की संसृष्टि होती है।

उदाहरणमाचष्टे—

**यथा—**

विरही यक्षो जलदं प्रति विशालावर्णनं कथयति—

'दीर्घीकुर्वन् पटुमदकलं कूजितं सारसानां,
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः,
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः॥'

अयि जलद! यत्र विशालायाम्, सारसानां हंसानां, पटु रमणीयं मदकलं मदेनाव्यक्तमधुरं कूजितं वाशितं प्रत्यूषेषु प्रभातेषु दीर्घीकुर्वन् कमलसौरभोल्लासनेनोच्चतरं सम्पादयन् विस्तारयन्निति यावत्, तदानीमेव स्फुटितानां विकसितानां कमलानामामोदस्य सौरभस्य मैत्र्या सख्येन सम्बन्धेनेति यावत्, कषायः सुरभिः, अङ्गानां सुरतश्रमक्लान्तललनाजनावयवानामनुकूलो निर्वृतिकरः, प्रार्थनायां नवनिधुवनयाचनायां चाटुकारः प्रणयेन प्रियानृतशंसी, प्रियतमो वल्लभ इव, शिप्राया-

स्तदाख्यसरितो वातः पवनः, स्त्रीणां सुरतग्लानिं निरन्तरसम्भोगपरम्पराजनित-क्लान्तिं हरत्यपाकरोतीत्यर्थः ।

तथा च—'चक्राङ्गः सारसो हंसः' इति शब्दार्णवः । 'कषायः सुरभौ रसे' इति त्रिकाण्डशेषश्च ।

इहाचेतने वायौ चेतनधर्मस्य मित्रकर्मात्मकमैत्र्या बाधितत्वान्मैत्रीपदस्य सम्बन्धे लाक्षणिकतया सम्बन्धविशेषजसौरभोत्कर्षव्यञ्जकतया चात्यन्ततिरस्कृतवाच्य-रूपाविवक्षितवाच्यव्यङ्ग्यध्वननाद् ध्वनित्वम् । तन्नैरपेक्ष्येण 'प्रियतम इव' इत्यादि-पदानां पुनरुपमाऽऽद्यलङ्कारवाचकत्वमिति ध्वनिवाच्योपमयोर्निरपेक्षयोः संसृष्टिः ।

मल्लिनाथस्तु—'प्रार्थनाचाटुकारः' इत्यत्र खण्डिता नायिकाऽनुनीता ।' इति व्याख्याय, इवशब्दार्थं हरणक्रिययैव योजयन् 'सुरतग्लानिहरणं न सम्भवति, तस्याः पूर्वं सुरताभावात् । पश्चात्तनसुरतग्लानिहरणं तु नेदानींतनकोपशमनार्थ-चाटुवचनसाध्यमित्युत्प्रेक्षैवोचिता विवेकिनाम्' इत्यभिधत्ते ।

जसे—विशाला नामकी उज्जयिनीकी नगरीका वर्णन करते हुए यक्ष मेघसे कहता है—जिस विशाला नगरी में प्रातःकाल सारसों ( हंसजातीय पक्षी विशेषों ) के रमणीय एवं मदसे अत्यन्त अव्यक्त मधुर शब्दको फैलानेवाला, तथा खिले हुए कमलोंकी सुगन्धिके सम्पर्कसे सुगन्धित और अङ्गोंको प्रिय लगनेवाला, शिप्रा नदी का पवन, नव निधुवन ( रतिसंभोग ) के लिये प्रेयसीसे प्रार्थना करते हुए अनुनयात्मक प्रियवचन बोलनेवाले चाटुकार प्रियतमके समान निरन्तर रतिसंभोगसे श्रान्तयुवतियोंकी सुरत जन्य क्लान्तिको दूर करता है ।

यहां पर अचेतन पवनमें चेतनवृत्तिमैत्रीके बाधित होनेसे मैत्रीपदमें लक्षणासे सम्बन्धार्थकी उपस्थिति होकर व्यञ्जना द्वारा सम्बन्ध विशेषजन्य सौरभातिशय रूप व्यङ्ग्यार्थकी प्रतीति होनेसे अत्यन्त तिरस्कृत वाच्यात्मक अविवक्षित वाच्य सौरभोत्कर्षरूप व्यङ्ग्य वस्तु ध्वनित होती है और उसके साथ 'प्रियतम इव' इत्यादि पद वाच्य उपमादि अलकारों के निरपेक्षरूपसे स्थित होनेके कारण दोनोंकी संसृष्टि समझनी चाहिये ।

तदेवाख्याति—

**अत्र हि मैत्रीपदमविवक्षितवाच्यो ध्वनिः, पदान्तरेष्वलङ्कारान्तराणि ।**

इह हिशब्दो भिन्नक्रमो मैत्रीपदमित्यतः परं पठनीयः । तेन—हि यतो मैत्री-पदमविवक्षितवाच्यो ध्वनिः, पदान्तरेषु चालङ्कारान्तराणि, तस्मात् संसृष्टिरत्रेति योजना । ध्वनिशब्दोऽत्र ध्वननकर्तृपरत्वेन मैत्रीपदशब्दसामानाधिकरण्येन निर्दिष्टः ।

वृत्तिकार उक्ताशय का ही उपपादन करते हैं—अत्रहीति। उक्त श्लोकमें उक्त रीति से 'मैत्री'पदमें अविवक्षित वाच्य ध्वनि है, और 'प्रत्यूषेषु' पदमें स्वभावोक्ति एवं 'प्रियतम इव' इसमें उपमा अलंकार वाच्य रूपसे ही प्रतीत होते हैं, इसलिये उक्तध्वनि और वाच्य अलंकारोंकी संसृष्टि है।

अथ 'सगुणीभूतव्यङ्ग्यैः' इत्यादिकारिकायाश्चरणत्रयमुदाहरणप्रदर्शनपुरस्सरं व्याख्याय 'पुनरपि' इत्यनेन बोधितस्य ध्वनेः संसृष्टालङ्कारसङ्कीर्णत्वं संसृष्टालङ्कार-संसृष्टत्वं सङ्कीर्णालङ्कारसंकीर्णत्वं सङ्कीर्णालङ्कारसंसृष्टत्वं चेति प्रकारचतुष्टयस्योदाहरण-प्रदर्शनमारभमाणः प्रथमं प्रभेदमुदाहरति—

**संसृष्टालङ्कारसङ्कीर्णो ध्वनिर्यथा—**

अब ध्वनिके 'संसृष्टालंकारसंकर' 'संसृष्टालंकारसंसृष्टि' 'संकीर्णालंकारसंकर' 'संकीर्णालंकारसंसृष्टि' रूप प्रकार चतुष्टयके उदाहरण प्रदर्शनार्थ उपक्रम करते हुए सबसे पहले प्रथम भेदका उदाहरण बतलाते हैं—संसृष्टेति। संसृष्ट अलंकारके साथ संकीर्णध्वनिका उदाहरण दर्शाते हैं। जैसेः—

बुभुक्षातीक्ष्णत्वेन स्वापत्यमेव भक्षयितुं प्रवृत्तायै सिंहपत्न्यै दयया तदपत्यप-रित्राणाय स्वशरीरमेव समर्पितवन्तं भगवन्तं जिनं कश्चित् सश्लाघं वदति—

'दन्तक्षतानि करजैश्च विपाटितानि,
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे।
दत्तानि रक्तमनसा मृगराजवध्वा,
जातस्पृहैर्मुनिभिरप्यवलोकितानि॥'

हे जिन! प्रोद्भिन्नाः प्रकर्षेण निर्गताः परित्राणप्रमोदात् सात्त्विकभावोल्लासात्, प्रकटीभूताः सान्द्रा घनाः पुलका रोमाञ्चा यत्र, तादृशे भवतः शरीरे, रक्ते शोणिते मनोऽभिलाषो यस्याः पक्षे रक्तमनुरक्तं मनश्चित्तं यस्याः, तादृश्या मृगराजवध्वा सिंहपत्न्या कर्त्र्या दत्तानि कृतानि यानि दन्तैर्दशनैः क्षतानि करजैर्नखैः, विपाटितानि विदारितानि च तानि, जातोत्पन्ना 'अस्माकमप्येवं भवेत्' इति स्पृहा वाञ्छा येषां तादृशैर्मुनिभिरपि, अवलोकितानि दृष्टान्यभूवन्नित्यर्थः।

तथा च—'रक्तः स्यात् कुङ्कुमे ताम्रे प्राचीनामलकेऽसृजि।
अनुरागिणि' इति विश्वः।

अत्र सिंह्यामप्रस्तुतराजपत्नीव्यवहारसमारोपात् समासोक्तिः। तथा च—मृगराज-वधूपदे श्लेषेण मृगाख्यनायकविशेषनृपपत्नीरूपार्थान्तरविवक्षणं कस्यचिदनुचितम्, एवं सति समासोक्तेरेवासम्भवः, तत्र विशेष्यवाचकपदस्य श्लिष्टत्वनियमात्।

अत एव तथा भावे-'अनुरागवन्तमपि लोचनयोर्दधतं वपुःसुखमतापकरम् ॥
निरकासयद् रविमपेतवसुं वियदालयादपरदिग्गणिका ॥' इत्यादौ,

पुनरुक्तत्वदोषोऽन्यत्र दर्शितः । प्रकृते तदर्थस्य व्यञ्जनयैव प्रत्यायनं तस्मादुचितम् । सा च समासोक्तिः—मुनिभिर्मननशीलतया यमनियमादिपरायणैरपि जातस्पृहैस्तादृशनायिकाऽऽरब्धसम्भोगस्पृहायुक्तैरिति विरोधस्य वाच्यार्थमात्रविवक्षणेन परिहाराद् विरोधाभासालङ्कारेण निरपेक्षेण संसृष्टा । संसृष्टाभ्यां तदलङ्काराभ्यां जिनदयोत्साहस्थायिकस्य रोमाञ्चाद्यनुभावितस्य ध्वन्यमानस्य दयावीररसस्य सङ्कीर्णता ।

अत्यधिक बुभुक्षा ( भूख ) के कारण अपने ही बालकको भक्षणार्थं उद्यत किसी एक शेरनीको देखकर उस बालकको बचानेके लिये शेरनीको अपना शरीर ही खानेके लिये देदेनेवाले भगवान् बुद्धकी प्रशंसा करते हुए कोई व्यक्ति कहता है— कारुण्यवश और पक्षान्तरमें श्रृंगारवश उत्पन्न अत्यन्त सघन रोमाञ्च युक्त आपके शरीर पर रक्तपानकी इच्छावाली एवं पक्षान्तरमें आसक्त चित्तवाली मृगराजवधू शेरनी और पक्षान्तरमें किसी राजपत्नीने जो दन्तक्षत एवं नखक्षत किये, उन्हें मुनियोंने भी सस्पृह होकर देखा, अर्थात् दूसरेकी प्राणरक्षाके लिये अपने शरीर का उपहार ( भेंट ) दे देनेका यह सौभाग्य हमको भी प्राप्त होता इस भावनासे सिंहनीकृत दन्त नख क्षतादि को देखा और ( पक्षान्तरमें ) अनुरक्त मनवाली राजवधूके संभोगकालीन दन्त-नख क्षतको प्राप्त करनेकी अभिलाषासे देखा।

यहां पर सिंहनीमें अप्रस्तुत राजपत्नीके व्यवहार समारोप से समासोक्ति अलंकार सूचित होता है और उसके साथ मननशील मुनिके यमनियमादिपरायण परम नैष्ठिक होने पर भी उक्त नायिका कृतसंभोग विषयक स्पृहा युक्त होनेसे भासमान विरोधके केवल मुनिरूप वाच्यार्थ विवक्षणके द्वारा परिहार हो जानेसे पर्यवसान में परिणत विरोधाभास अलंकारकी निरपेक्षरूपसे संसृष्टि हो गयी और संसृष्ट इन दोनों अलंकारोंके साथ बुद्धभगवान्के दयोत्साह स्थायिभाववाले रोमाञ्चादिसे अनुभावित ध्वन्यमान दयावीर रसकी संकीर्णता हो गई है।

तदाचष्टे—

**अत्र हि समासोक्तिसंसृष्टेन विरोधालङ्कारेण सङ्कीर्णस्यालक्ष्यक्रमव्यङ्ग्यस्य, ध्वनेः प्रकाशनम्, दयावीरस्य परमार्थतो वाक्यार्थीभूतत्वात् ।**

केचित्तु-दयावीरशब्दमिहत्यं शान्तपरं मन्वानाः शान्तरसमेव प्रधानं व्यपदिशन्ति । समासोक्तिविरोधाभ्यां जिनदयोत्साहस्य स्पृहणीयताप्रकर्षादिबोधनमुखेन दयावीररसः प्रकृष्टः क्रियत इत्यङ्गाङ्गिभावलक्षणः सङ्करः ।

वृत्तिकार उक्ताशयको ही स्फुट करते हैं—अत्रेति । उक्त श्लोकमें शेरनीमें

राजवधूके व्यवहारका समारोप होनेसे प्रतीयमान समासोक्ति अलंकारके साथ 'मुनिभिरपि जातस्पृहैः'—इससे उक्तरीत्या सूचित विरोध अलंकारकी संसृष्टि है और बादमें इन दोनों संसृष्ट अलंकारोंके साथ रोमाञ्चादि अनुभावसे परिपोषित बोधिसत्त्व (बुद्धभगवान्) के दयोत्साहकी अतिशय स्पृहणीयताके बोधन द्वारा अभिव्यज्यमान दयावीर रस रूप असंलक्ष्यक्रम व्यङ्ग्यध्वनिके प्रकाशन होनेसे उक्त दयावीररस ध्वनिका अङ्गाङ्गिभावरूप संकर प्रतीत होता है, क्योंकि वास्तवमें दयावीररस ही मुख्यरूपसे वाक्यार्थका तात्पर्य विषयीभूत है।

द्वितीयं प्रकारमुदाहरति—

संसृष्टालङ्कारसंसृष्टत्वं ध्वनेर्यथा—

'अहिणअ-पओअरसिएसु पहिअसामाइएसु दिअहेसु।
सोहइ पसारिअगीआणँ णच्चिअं-मोरविन्दाणम्॥'

'अभिनवपयोदरसितेषु पथिक-श्यामायितेषु (सामाजिकेषु) दिवसेषु।
शोभते प्रसारित-ग्रीवाणां (गीतानां) नृत्तं मयूरवृन्दानाम्॥' इति च्छाया।

गाथासप्तशतीपद्यमिदम्। अभिनवं नूतनत्वाद्रमणीयं पयोदानां मेघानां रसितं गर्जितं यत्र, तथाभूतेषु पथिकानां विषये श्यामायितेषु वियोगमोहान्धकारवर्धकतया कृष्णरजनीवदाचरितवत्सु, पथिका एव नृत्तदर्शकत्वात् सामाजिका यत्र—तादृशेषु वा, दिवसेषु वर्षर्तुवासरेषु, प्रसारिताः स्तनितश्रुतिप्रमोदभराद् विलम्बिता ग्रीवाः कृकाटिका यैः, यद्वा—प्रसारितानि तत एव हेतोरुल्लासितानि गीतानि केकारुतानि यैः, तेषां मयूरवृन्दानां नृत्तं गात्रविक्षेपणनटनं शोभत इत्यर्थः।

तथा च—'श्यामा रात्रिर्हर्षच्छथामा श्यामा स्त्री मुग्धयौवना।' इतिक्षपणकः। अत्र 'सामाइएसु' इत्यस्य 'श्यामायितेषु' इतिच्छायायां श्यामावदाचरणकारित्वबोधनादुपमा, 'सामाजिकेषु' इतिच्छायायां च पथिकेषु सामाजिकत्वारोपाद् रूपकम्, न चोभयोर्मिथः सापेक्षत्वमिति संसृष्टाभ्यां ताभ्यां 'सामाइएसु' इत्येतच्छब्दपरिवृत्त्यसहत्वेन व्यज्यमानस्य शब्दशक्तिमूलकोद्दीपकत्वातिशयवस्तुध्वनेः संसृष्टिः, रसध्वनेस्तु संकर एव।

अब संसृष्ट अलंकारके साथ संसृष्टध्वनिरूप द्वितीयभेदका उदाहरण बतलाते हैं—संसृष्टेति। जैसे—नूतन होनेके कारण अत्यन्त रमणीय मेघोंके गर्जनसे युक्त एवं पथिक रूप नृत्यदर्शक सामाजिकोंसे युक्त अथवा पथिकोंके लिये वियोग जन्य मोहान्धकारके वर्द्धक होनेसे काली रातकी तरह प्रतीत होनेवाले वर्षाऋतुके दिनोंमें बादलकी घनघोर घटाके दर्शन जन्य आनन्दसे गर्दन फैलाकर मधुर ध्वनि करते

हुए मोरोंका नृत्य बड़ा ही सुन्दर लगता है। यहाँ पर 'श्यामायित' इस पदसे श्यामाके समान आचरण कर्तृत्वरूप अर्थबोधन द्वारा उपमाकी प्रतीति होती है, और 'सामाजिकेषु' इस पदसे पथिकोंमें सामाजिकत्वके आरोप द्वारा रूपकका बोध होता है, परन्तु परस्परमें निरपेक्षतया स्थित होनेसे संसृष्ट इन दोनों अलंकारों के साथ व्यज्यमान शब्द शक्तिमूल उद्दीपकत्वातिशयरूप वस्तुध्वनिकी संसृष्टि है और शृंगाररसध्वनिके साथ तो संकर ही समझना चाहिये।

तदाह—

**अत्र ह्युपमारूपकाभ्यां शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य ध्वनेः संसृष्टत्वम् ।**

वस्तुतस्तूपमारूपकयोरिह दर्पणदर्शितदिशैकवाचकानुप्रवेशात् सङ्कर एव तदलङ्कारयोः 'सामाइएसु' इत्येकस्मिन्नेव वाचकेऽनुप्रविष्टत्वात् । तस्मान्मदीयमत्र राधापरिणयपद्यमिदमिहोदाहरणीयम्—

'दीव्यत्सु दिव्यकाव्येषु मयाऽप्येतद् वितन्यते ।
पारावारेषु पूर्णेषु पल्वलं किं न खन्यते ॥' इति ।

इह तु मिथोनिरपेक्षत्वेन संसृष्टाभ्यां वृत्त्यन्तानुप्रासाभ्यां वस्तुध्वनेरप्युदासीनत्वेन संसृष्टत्वम् ।

यच्च 'पथिकसामाजिकेषु' इति कर्मधारयस्य स्पष्टत्वाद् रूपकम् इतिव्याख्यानम्, तच्चिन्तनीयम्, यतः कर्मधारये विशेषणवाचकस्य सामाजिकपदस्य पूर्वनिपातावश्यम्भावे तद्धर्मारोपाप्रतीते रूपकासम्भवः । स्वीकृतश्चान्यैः सर्वं रूपकस्थले मयूरव्यंसकादिगणपाठात् समासः ।

अथ सङ्कीर्णालङ्कारसंसृष्टत्वं, सङ्कीर्णालङ्कारसङ्कीर्णत्वं चेति भेदद्वयोदाहरणाप्रदर्शनान्न्यूनत्वं न सङ्कनीयम्, अस्यैव ग्रन्थकृदुपात्तश्लोकस्य तद्भेदयोरप्युदाहरणत्वात् । तथा हि—एकवाचकानुप्रविष्टतया सङ्कीर्णाभ्यामुपमारूपकाभ्यां वस्तुध्वनेः संसृष्टिः, रसादिध्वनेस्त्वङ्गाङ्गिभावात् सङ्करः सम्भवत्येव ।

उसीको वृत्तिकार संक्षेपमें वतलाते हैं—अत्र ह्युपमेति । उक्त श्लोकमें उक्तरीतिसे उपमा और रूपककी संसृष्टिके साथ शब्द शक्त्युद्भव संलक्ष्यक्रमव्यङ्ग्य वर्षाकालके उद्दीपकत्वातिशयरूप वस्तुध्वनिकी संसृष्टि है। यहां उक्तरीतिसे संसृष्टालंकार-संकीर्णत्व और संसृष्टालंकार-संसृष्टत्व इन दोनोंके ही उदाहरण दिये गये हैं, लेकिन संकीर्णालंकार-संकीर्णत्व, तथा संकीर्णालंकार-संसृष्टत्व इन दोनोंके उदाहरण नहीं दिये गये हैं इनसे न्यूनताकी शङ्का नहीं करनी चाहिये, क्योंकि यही पूर्वोक्त श्लोक

इन दोनों का भी उदाहरण हो सकता है, इसलिये अलग नहीं दर्शाये गये हैं, जैसे—एकवाचकानुप्रवेशरूपसे संकीर्ण उपमा-रूपकोंके साथ वस्तुध्वनि की संसृष्टि हो सकती है और रसादिध्वनिका अङ्गाङ्गिभाव रूप संकर हो सकता है।

उपसंहरति—

'एवं ध्वनेः प्रभेदाः प्रभेदभेदाश्च केन शक्यन्ते।
सङ्ख्यातुं, दिङ्मात्रं तेषामिदमुक्तमस्माभिः॥ १०१॥'

एवममुना प्रकारेण सम्भाविनोऽनन्ताः ध्वनेः प्रभेदाः प्रधानप्रकाराः, च तथा प्रभेदभेदास्तदवान्तरप्रकाराः सङ्ख्यातुमेकैकशो गणयितुं केन शक्यन्ते, न केनापीति भावः। अस्माभिः पुनस्तेषां ध्वनिभेदोपभेदानामिदं दिङ्मात्रमुक्तमित्यर्थः।

अनन्ता हि ध्वनिप्रकारा वक्तुमशक्याः प्रेक्षावद्भिः स्वयमुत्प्रेक्षणीया इति भावः।

अब ग्रन्थकार ध्वनि विषयका उपसंहार करते हैं—एवं ध्वनेरिति। इस प्रकार होनेवाले ध्वनिके अनन्त मुख्य भेदों तथा उन मुख्यभेदोंके अवान्तर भेदों (उपभेदों) का परिगणन कौन व्यक्ति कर सकता है? इसलिये हमने उनका यह दिग्दर्शन मात्र कराया है, अर्थात् अनन्त ध्वनि प्रकारोंका वर्णन करना असंभव है, इसलिये बुद्धिमानोंको स्वयं उनका ऊहापोह करलेना चाहिये।

तदाह—

अनन्ता हि ध्वनेः प्रकाराः सहृदयानां व्युत्पत्तये तेषां दिङ्मात्रं कथितम्।

तथा च—'दिङ्मात्रं तूच्यते' इत्यादिकारिकया पूर्वमुपक्षिप्तमिहोपसंहृतं निर्व्यूढं चेत्यवगन्तव्यम्।

वृत्तिकार उक्तकारिका का ही आशय बतलाते हैं—अनन्ता इति। ध्वनिके अनन्त भेद हैं, सहृदयोंके ज्ञानके लिये उनमेंसे थोड़े का दिग्दर्शन मात्र ही हमने कराया है।

किञ्चादौ 'तेन ब्रूमः सहृदयमनःप्रीतये तत्स्वरूपम्' इति यदास्थितम्, तदप्यधुना निर्व्यूढमेवेति सूचयन् ध्वनेरवश्यविवेचनीयतामुपादिशति—

'इत्युक्तलक्षणो यो ध्वनिर्विवेच्यः प्रयत्नतः सद्भिः।
सत्काव्यं कर्तुं वा ज्ञातुं वा सम्यगभियुक्तैः॥ १०२॥'

इत्यमुना दिङ्मात्रदर्शिना सङ्क्षिप्तेन प्रकारेण उक्तं लक्षणं यस्य, तादृशो यो ध्वनिः, स सत्काव्यमुत्कृष्टकाव्यं कर्तुं निर्मातुं ज्ञातुं समवगन्तुं वा अभियुक्तै-

रभियोगवद्भिरुद्यतैरिति यावत्, सद्भिः कवीभवितुं सहृदयीभवितुं वा वाञ्छद्भिर्विद्वद्भिः प्रयत्नतः सावधानतया सम्यगसङ्कीर्णतया विवेच्यो विचारणीय इत्यर्थः ।

उत्तम काव्यको बनाने या जाननेके लिये प्रस्तुत (उद्यत) सज्जनोंको उक्तरीति से जिस ध्वनिका लक्षण किया गया है, उसका विशेष यत्नपूर्वक विवेचन करना चाहिये ।

ध्वनिविवेचनायाः फलमुपदिशति—

**उक्तस्वरूपध्वनिनिरूपणनिपुणा हि सत्कवयः सहृदयाश्च नियतमेव काव्यविषये परां प्रकर्षपदवीमासादयन्ति ।**

तथा च—तत्प्रकर्षलाभ एव फलं ध्वनिविवेचनाया बोध्यम् ।

अव ध्वनिविवेचनाकी आवश्यकताका वृत्तिकार उपसंहार करते हैं—उक्तस्वरूपेति इति। उक्त स्वरूप ध्वनिके निरूपण करनेमें अत्यन्त निपुण सत्कवि और सहृदयजन निश्चय ही काव्यके विषयमें अत्यन्त उत्कृष्ट (उन्नत) पदवी को प्राप्त करते हैं यह प्रकर्षलाभ ही ध्वनि विवेचनाका मुख्य फल है ।

अथ ध्वनेर्मुख्यत्वं रीतीनामानुषङ्गिकतां च दर्शयति—

**'अस्फुटस्फुरितं काव्य-तत्त्वमेतद्यथोदितम् ।**
**अशक्नुवद्भिर्व्याकर्तुं रीतयः सम्प्रवर्तिताः ॥ १०३ ॥**

उक्तलक्षणो यो ध्वनिः सद्भिः प्रयत्नतो विवेच्यः, एतत् तदेव यथोदितं निरूपितप्रपञ्चानुसारि काव्यस्य तत्त्वं सारं जीवनाधायकमिति यावत्, तदेव यतः–अस्फुटं विपुलत्वात् सूक्ष्मबुद्धिवेद्यत्वाद्वाऽव्यक्तं स्फुरितं प्रतिभासः प्रपञ्चो वा यस्य तादृशम्, अत एव तद्व्याकर्तुं विवरीतुम्, अशक्नुवद्भिरसमर्थैर्वामनादिभिः, रीतयो वैदर्भीप्रभृतयः सम्प्रवर्तिताः प्रादुर्भाविताः प्रचारिता वेतिपूर्वकारिकैकवाक्यतयाऽन्वयबोधः ।

अव ध्वनिकी मुख्यता और संघटनात्मक रीतियों की आनुषङ्गिकता (गौणता) का प्रदर्शन कराते हैं—अस्फुटेति। अस्फुट (गूढ़ अव्यक्त) रूप से प्रतीत होने वाले काव्यके जीवनाधायक (सारभूत) इस पूर्वोक्त ध्वनिकाव्यतत्त्व की व्याख्या कर सकनेमें असमर्थ वामन आदि कवियोंने वैदर्भी आदि रीतियोंका प्रचार किया ।

तदेव वक्ति—

**एतद्ध्वनिवर्णनेन निर्णीतं काव्यतत्त्वमस्फुटस्फुरितं सदशक्नुवद्भिः प्रतिपादयितुं वैदर्भी, गौडी, पाञ्चाली चेति रीतयः प्रवर्तिताः ।**

वृत्तिकार उक्त कारिकाशयको व्यक्त करते हैं—एतद्ध्वनिरिति। इस ध्वनिके उक्तरीत्या स्पष्टपूर्वक प्रतिपादनसे निर्णीत, अव्यक्त (गूढ़) रूपसे प्रतीत होनेवाले

इस ध्वनिकाव्य तत्त्वका प्रतिपादन कर सकनेमें असमर्थ वामन आदि आचार्योंने वैदर्भी, गौड़ी और पाञ्चाली आदि रीतियां प्रचलित कीं।

फलितमाह—

**रीतिलक्षणविधायिनां हि काव्यतत्त्वमेतदस्फुटतया मनाक् स्फुरितमासीदिति तदत्र स्फुटतया संप्रदर्शितमित्यन्येन रीतिलक्षणेन न किञ्चित्।**

अयं भावः—शब्दप्रधानासु रीतिषु 'विशिष्टा पदरचना रीतिः' 'विशेषो गुणात्मा' इति वामननयेन गुणा एव विच्छित्तिविशेषमूलतया सारमिति तासां गुणेष्वेव पर्यवसानाद् गुणानां च रसमात्रधर्मतया धर्मधर्मिणोस्तादात्म्यसिद्धान्तेन रसेषु पर्यवसानाद् रसादिध्वनावेव सर्वमापतितमिति रीतीनां काव्यात्मत्वेन रसेभ्यः पृथङ् निरूपणं नोचितम्। यैः पुनर्विहितम्, तेषां ध्वनितत्त्वमिदमीषदेव स्पष्टस्वरूपं मतिपदवीमारूढमिति पर्यालोचयितुमचतुरैरेव तैरपरिनिश्चितध्वनितत्त्वै रीतयः प्रवर्तिताः। यदि तेऽपि तत्तत्त्वं मनागपि नेक्षेरन् सर्वतोभावेन वा परोक्षेरन्, तर्हीमा रीतीर्न प्रवर्त्तयेयुरिति तात्पर्यम्।

उक्तरीतिकारोंको ध्वनिरूप यह काव्यतत्त्व अस्फुटरूपसे कुछ थोड़ा थोड़ा अवश्य प्रतीत होता था ऐसा समझ पड़ता है, उसका अब हमने यहां स्पष्टरूपसे प्रतिपादन कर दिया है, इसलिये अब ध्वनिसे भिन्न दूसरे रीतिलक्षणोंकी कोई आवश्यकता नहीं है। क्योंकि शब्द प्रधान रीतियोंमें गुण ही विच्छित्ति (चमत्कृति) विशेषके जनक होनेसे सारभूत पदार्थ हैं, इसलिये उन (रीतियों) का गुणोंमें ही पर्यवसान हो जाता है और गुणोंके रसमात्रवृत्ति होनेसे धर्म-धर्मिके तादात्म्य सिद्धान्तसे उन (गुणों) का रसमें ही पर्यवसान हो जाता है, अतः रसादिध्वनिमें ही सबके आजाने से रीतियोंके पृथक् निरूपण करनेकी कोई आवश्यकता ही नहीं रह जाती।

इदानीं द्विविधवृत्तीनामपि तादवस्थ्यमेव व्यवस्थापयति—

**'शब्दतत्त्वाश्रयाः काश्चिदर्थतत्त्वयुजोऽपराः।**
**वृत्तयोऽपि प्रकाशन्ते ज्ञातेऽस्मिन् काव्यलक्षणे ॥१०४॥'**

शब्दस्तत्त्वं सारं स्वरूपं वा यासां ताः शब्दतत्त्वाः शब्दाश्रिता वा, याः काश्चिन्निर्धारितस्वरूपा अमुख्या उक्तचरलक्षणा उपनागरिकाऽऽद्याः, याश्चापरास्तदितरा अर्थतत्त्वयुजोऽर्थसम्बन्धिन्योऽर्थाश्रिता वा प्रागभिहितलक्षणाः प्रसिद्धाः कैशिकीप्रभृतयो वृत्तयः, ता अपि अस्मिन्नेतावता प्रबन्धेन निरूपिते व्यङ्ग्यव्यञ्जकभाव-

विवेचनाविजृम्भिते काव्यलक्षणे काव्यस्य सारतया जीवनाधायके ध्वनौ, ज्ञाते व्यापकत्वेनात्मनि तत्तदन्तर्भावेन कर्तृतयाऽवगते सति प्रकाशन्ते रीतिवत् काव्यजीवनत्वप्रकारकानुभूतिविशेष्यतामासादयन्तीत्यर्थः।

अब रीतिके समान द्विविधवृत्तियोंके भी पृथक् निरूपणकी कोई आवश्यकता नहीं है, यह बतलाते हैं—शब्दतत्त्वश्रेति। इस ध्वनिरूप काव्यके सारभूतवस्तुके जानलेने पर कुछ शब्द (तत्त्व) रूप जो भट्ट उद्भटादिके अभिमत उपनागरिका आदि वृत्तियां और दूसरी अर्थ (तत्त्व) सम्बन्धी भरताभिमत कैशिकी आदि प्रसिद्ध जो वृत्तियां हैं, वे भी रीतियोंके समान व्यापकरूप ध्वनिके अन्तर्गत ही प्रकाशित हो जाती हैं, अर्थात् जैसे काव्यके जीवनरूप व्यापक ध्वनि स्वरूपमें पूर्वोक्त रीतियां अन्तर्भूत हो जाती हैं, वैसे ही उक्तवृत्तियां भी अन्तर्भूत हो जावेंगी।

तदभिदधाति—

**अस्मिन् व्यङ्ग्यव्यञ्जकभावविवेचनसमये काव्यलक्षणे ज्ञाते सति, याः काश्चित् प्रसिद्धा उपनागरिकाऽऽद्याः शब्दतत्त्वाश्रया वृत्तयो, याश्चार्थतत्त्वसम्बद्धाः कैशिक्यादयस्ताः सम्यग् रीतिपदवीमवतरन्ति।**

इदमुच्यते—यथा वैदर्भीप्रभृतिरीतयः पृथगाभासमाना अपि पर्यन्ते गुणमुखेन रस एवान्तःपतन्तीति ध्वनिनिरूपणेनैव गतार्थाः। तथा तदेकरूपा उपनागरिकाप्रमुखाश्शाब्द्यो वृत्तयः, तदनतिमात्रभिन्नाः कैशिक्यादय आर्थ्यो वृत्तयश्चापि। रीतिध्वन्योरिव वृत्तिध्वन्योरपि परमार्थतस्त्वैक्यमेव, अविवेकिनामेव पुनर्जीवब्रह्मणोरिव तयोः पार्थक्यं भासते तथा हि—वैदर्भीवदुपनागरिकाकैशिक्योर्माधुर्यद्वारेण शृङ्गारे पर्यवसानम्, 'माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते' 'कैशिकीश्लक्ष्णनेपथ्या शृङ्गाररससम्भवा' 'शृङ्गार एव मधुरः' इत्यादिदर्शनात् एवं गौडीवत् परुषाऽऽरभट्योरोजोमुखेन रौद्रादिषु पाञ्चालीवत् कोमलासात्वत्योः प्रसादमार्गेण हास्यादिषु चान्तःपातो ज्ञेयः।

'वृत्तयः काव्यमातृकाः' इतिमहर्षिभाषणमपि वृत्तिपदस्य रसोचितचेष्टापरतयाऽनुकूलमेवाकलनीयम्। तथा च काव्ये ध्वनिरेव परमं तत्त्वमिति फलितम्।

यदादौ ध्वन्यभाववादिप्रथमविकल्पे रीतिवृत्तीनां प्रसिद्धत्वं ध्वनिभिन्नत्वं चांशतोऽभ्युपगतम्, तत्तादात्म्यव्यवस्थापनात्।

वृत्तिकार उक्त कारिकाशयको स्फुट करते हैं—अस्मिन्निति। इस व्यङ्ग्य व्यञ्जकभावके विवेचनात्मक काव्यलक्षणके ज्ञात हो जानेपर जो प्रसिद्ध शब्द तत्त्वाश्रित उपनागरिका आदि वृत्तियां और अर्थ तत्त्वसे सम्बद्ध कैशिकी आदि वृत्तियां हैं, वे पूर्णरूपसे रीतिमार्गका ही अनुसरण करती हैं, अर्थात् जिस प्रकार व्यापकरूप

उक्तध्वनिमें रीतियोंका अन्तर्भाव हो जाता है, इसी प्रकार उक्तध्वनिमें ही उक्त दोनों प्रकारकी वृत्तियोंका भी अन्तर्भाव हो जायगा, उनके अलग लक्षण आदि करने की आवश्यकता नहीं है। इससे यह सिद्ध होता है कि काव्यमें ध्वनि ही परम सारभूत वस्तु है।

तदनङ्गीकारे दोषं दर्शयति—

**अन्यथा तु तासामदृष्टार्थानामिव वृत्तीनामश्रद्धेयत्वमेव स्यात्, नानुभवसिद्धत्वम्।**

अन्यथा ध्वनितादात्म्यप्रयोज्यसहृदयानुभवगोचरचमत्कारविशेषजनकत्वाभावे, अदृष्टार्थानामदृष्टफलमात्रजनकयागादिक्रियाणामिव तासां वृत्तीनामपि, दृष्टफलाजनिकानाम्, अश्रद्धेयत्वं दृष्टफलमात्रार्थिजनानादरणीयत्वमप्रत्येयत्वं वा स्यात्, न त्वनुभवविषयत्वं स्यादित्यर्थः।

अन्यथा यदि सहृदयहृदयसंवेद्य चमत्कार विशेष जनक ध्वनिके साथ वृत्तियोंका तादात्म्य (अभेद) न मानें तो तादृश चमत्कार विशेष जनकत्वके अतिरिक्त उन (वृत्तियों) का दूसरा कोई दृष्ट प्रयोजन बन ही नहीं सकता, इसलिये अदृष्टफल, मात्र जनक यागादि क्रियाके समान उक्त वृत्तियां भी दृष्टफलार्थजिनोंकी दृष्टिसे अश्रद्धेय हो जावेंगी, प्रत्यक्ष अनुभव सिद्ध विषय न हो सकेंगी।

फलितमाचष्टे—

**एवं स्फुटतयैव लक्षणीयं स्वरूपमस्य ध्वनेः।**

फलितार्थ बतलाते हैं—एवं स्फुटतयैवेति। उक्तरीतिसे इस ध्वनिके स्वरूपका स्पष्टरूपसे ही लक्षण किया जासकता है।

अथादौ ध्वनेरनाख्येयत्वं निरस्तमपि स्थूणाऽभिखननन्यायेन पुनर्निरस्यति—

**यत्र शब्दानामर्थानां च केषांचित् प्रतिपत्तृविशेषसंवेद्यं जात्यत्वमिव रत्नविशेषाणां चारुत्वमनाख्येयमवभासते, काव्ये तत्र ध्वनिव्यवहार इति यल्लक्षणं ध्वनेरुच्यते केनचित्, तदनुक्तमिति नावधेयतामर्हति।**

प्रतिपत्त्रा ज्ञात्रा, विशेषेणानुपदं वक्ष्यमाणेन शब्दार्थवैलक्षण्येन सम्यग् वेद्यं ज्ञेयम्। अनवधेयतामयुक्तत्वादनादरणीयताम्। यत्र रत्नविशेषाणां जात्यत्वमिव केषांचित्, न तु सर्वेषाम्, शब्दानामर्थानां च प्रतिपत्त्रा विशेषेण संवेद्यं चारुत्वमवभासते, तत्र काव्ये ध्वनिव्यवहार इति सम्बन्धः। जात्यत्वमुत्कृष्टजातिकत्वम्।

आक्षेपोऽयमत्रैवोद्द्योते—'स्यान्मतम्' इत्यादिना प्रक्रान्तः खण्डितश्चापि, खण्डनप्रकारविशेषप्रकाशनार्थं पुनरुपात्तोऽवसेयः।

अब ध्वनिके अनाख्येयत्वका खण्डन करते हैं—यत्रेति। जहाँ किन्हीं शब्दों और अर्थोंका चारुत्वविशेष, रत्नविशेषोंके उत्कृष्ट जात्यत्वके समान विशेषज्ञोंके ही संवेद्य और अवर्णनीयरूपमें प्रतीत होता है, उस काव्यमें ध्वनि व्यवहार होता है यह जो किसीने ध्वनिका लक्षण किया है, वह बिल्कुल ही अयुक्त है, इसलिये किसी भी प्रकार वह ध्यान देने योग्य विषय नहीं है।

तत्खण्डनहेतुमाख्याति—

**यतः शब्दानां स्वरूपाश्रयस्तावदक्लिष्टत्वे सत्यप्रयुक्तप्रयोगः, वाचकत्वाश्रयस्तु प्रसादो व्यञ्जकत्वं चेति विशेषः। अर्थानां च स्फुटत्वेनावभासनं, व्यङ्ग्यपरत्वं, व्यङ्ग्यविशिष्टत्वं चेति विशेषः। तौ च विशेषौ व्याख्यातुमशक्यौ व्याख्यातौ बहुप्रकारम्। तद्व्यतिरिक्तानाख्येयविशेषसम्भावना तु विवेकावसादगर्भरभसमूलैव। यस्मादनाख्येयत्वं शब्दार्थगोचरत्वेन न कस्यचित् सम्भवति, अन्ततोऽनाख्येयशब्देन तदभिधानात्।**

शब्दानां स्वरूपाश्रयः स्वरूपनिष्ठो विशेषो विलक्षणधर्मः—अक्लिष्टत्वे श्रुतिकटुत्वादिदोषरहितत्वे सति, अप्रयुक्तस्य प्रयोगोऽपुनरुक्तत्वम्। वाचकत्वमभिधेत्यनर्थान्तरम्। तदाश्रयस्तत्समानाधिकरणस्तु विशेषः—प्रसादो झटित्यर्थसमर्पकत्वं, व्यञ्जकत्वं व्यङ्ग्यबोधनतात्पर्येणोच्चारितत्वं तद्बोधनसमर्थत्वं वा। अर्थानामर्थनिष्ठश्च पुनः स्फुटत्वेनावभासनमसङ्कीर्णतया झटिति प्रतीतिविषयत्वं व्यङ्ग्यपरत्वं व्यङ्ग्यबोधनशक्तत्वं व्यङ्ग्येन विशिष्टत्वं तत्सम्बद्धत्वं तद्योग्यत्वं चेति द्विरूपो विशेष इति शेषः। तौ द्वौ शब्दार्थनिष्ठौ विशेषौ चारुत्वानतिरिक्तौ, व्याख्यातुमशक्याविति कैश्चिन्मन्यमानावपि, बहुप्रकारं बहुधा व्यङ्ग्य–व्यञ्जकनिरूपणप्रसङ्गेनास्माभिरिह यतो व्याख्यातौ। तत्तस्माद् व्यतिरिक्ता विलक्षणा, ततो वा व्यतिरिक्तस्य भिन्नस्य, अनाख्येयस्य वक्तुमशक्यस्य, विशेषस्योक्तरूपस्य, सम्भावना तद्विषयकोत्कटैककोटिकशङ्का या केषांचित्, सा तु विवेकस्य योऽवसादो ध्वंसोऽत्यन्ताभावो वा गर्भे मध्ये यस्य तादृशी रभसो वेगो मूलं निमित्तं यस्यास्तादृगेव, न तु विवेकमूलिका। यस्माद्धेतोः, कस्यचिदपि वस्तुनः सर्व–शब्दार्थगोचरत्वेनानाख्येयत्वं शब्दत्वावच्छिन्नाप्रतिपाद्यत्वमर्थत्वानवच्छिन्नत्वं वा न सम्भवति, अन्यस्य विशेषणवाचकस्य शब्दस्यासत्त्वेऽपि, अनाख्येयेतिशब्देनैव तदभिधानसम्भवादित्यर्थः।

अयं भावः—ये खलु रत्नजात्यत्वमिव शब्दार्थचारुत्वमनाख्येयं बिभ्रतः काव्यस्य ध्वनित्वं मन्यन्ते, त उपेक्षणीया एव, असम्बद्धप्रलापित्वात्। तत्त्वं च तेषां

विशेषरूपस्य शब्दार्थयोश्चारुत्वस्य बहुधाऽस्माभिरेव व्याख्यातत्वेन, अनाख्येयशब्दप्रतिपाद्यत्वेन चानाख्येयत्वाभावात्। अनाख्येय इत्याकारकः शब्दस्तु तमाख्यातुं शक्नोत्येव, तथाऽपि न तेषामभीष्टसिद्धिरिति।

अयुक्तत्वका हेतु बतलाते हैं—यत इति। क्योंकि शब्दोंका स्वरूपगत विशेष, श्रुति कटु आदि दोष राहित्यरूप अक्लिष्टत्व पूर्वक अपुनरुक्तत्व है, और उन (शब्दों) का ही दूसरा वाचकत्व (बोधकत्व) गतविशेष, प्रसाद गुण तथा व्यञ्जकत्व है, अर्थात् ये दोनों शब्दके विशेष धर्म हो सकते हैं, इसी प्रकार अर्थोंकी स्पष्ट प्रतीति, व्यङ्ग्यपरता, तथा व्यङ्ग्यांशविशिष्टता, ये तीन अर्थके विशेष धर्म हो सकते हैं, वे दोनों शब्दगत तथा अर्थगत विशेष धर्म व्याख्या करनेके शक्य नहीं होनेपर भी हमने उनकी अनेक प्रकार व्याख्याकी है। इन शब्दगत तथा अर्थगत विशेष, चारुत्व हेतुओंसे अतिरिक्त किसी अनिर्वचनीय विशेषकी कल्पना करना विवेकके परे की बात होगी, अर्थात् तादृश अवर्णनीय विशेषकी संभावना मूर्खतावश ही की जा सकती है, क्योंकि अनाख्येयत्व शब्दका अर्थ समस्त शब्दोंका अप्रतिपाद्यत्व (अविषयत्व) ही है, परन्तु कोई भी वस्तु कमसे कम सर्व शब्दका विषय अवश्य होती है, इसलिये उन शब्दार्थनिष्ठ विशेषोंको सर्वथा अवर्णनीयरूप अनाख्येय किस प्रकार कह सकते हैं, क्योंकि प्रत्येक पदार्थका कोई न कोई नाम अवश्य होगा, उसी नामसे वह आख्येय हो सकता है, दुर्जनतोष न्यायसे कुछ समयके लिये ऐसी कोई सर्वथा संज्ञारहित वस्तु मान भी लें तो भी अन्ततः (कमसे कम) अनाख्येय इस शब्दसे तो उसका अभिधान (कथन) सम्भव होगा ही, अतः किसी पदार्थको अनाख्येय नहीं कहा जा सकता, इसलिये ध्वनिको अनाख्येय कहना ठीक नहीं है। सारांश यह है कि जो कोई व्यक्ति रत्नविशेषोंके उत्कृष्ट जात्यत्वके समान अवर्णनीय शब्दार्थनिष्ठ रमणीयतावाले काव्यको ध्वनि मानते हैं, वे असम्बद्ध प्रलापी होनेसे सर्वथा उपेक्षणीय ही हैं, क्योंकि तादृश काव्यगत रमणीयता का वर्णन हम हीं पूर्वोक्त प्रकार कर चुके हैं।

तन्मतं तदुक्तदृष्टान्तदार्ष्टान्तिकवैषम्यदर्शनेनापि खण्डयति—

**सामान्यस्पर्शिविकल्पशब्दगोचरत्वे सति प्रकाशमानत्वं तु यदनाख्येय (त्व) मुच्यते क्वचित्, तदपि काव्यविशेषाणां रत्नविशेषाणामिव न सम्भवति; तेषां लक्षणकारैर्व्याकृतरूपत्वात्, रत्नविशेषाणां च सामान्यसम्भावनयैव मूल्यस्थितिपरिकल्पनादर्शनाच्च।**

सामान्यमविशेषं सम्यक् स्पृशतीति सामान्यसंस्पर्शी यो विकल्पः प्रागुक्तस्वरूपश्चित्तवृत्तिविशेषः, तदीयस्तज्जनितोच्चारणकर्मभूतो यश्शब्दस्तद्गोचरत्वे तज्जन्य-

प्रतीतिविषयत्वे अनाख्येयादिसामान्यप्रत्यायकशब्दमात्रबोध्यत्वे सति, प्रकाशमानत्वं प्रसिद्धत्वम्, तदनाख्येयत्वं क्वचिदनिर्वचनीयतावादिभिरुच्यते, तदप्यनाख्येयत्वं यथा रत्नविशेषाणां, तथा काव्यविशेषाणां न सम्भवति, तेषां काव्यविशेषाणां लक्षणकारैर्व्याकृतरूपत्वाद् व्याख्यातस्वरूपत्वात्, च तथा—रत्नविशेषाणां च पुनः सामान्यसम्भावनयैव, न तु विशेषसम्भावनया, मूल्यस्य स्थितेर्व्यवस्थायाः परिकल्पनाया दर्शनादित्यर्थः ।

सामान्यशब्दमात्रवेद्यत्वरूपानाख्येयत्वेन ध्वनिकाव्य-रत्नविशेषाणां न साम्यम्, यतो ध्वनीनामुक्तप्रकारैर्व्याख्यातत्वेन विशेषशब्दजप्रतीतेरपि गोचरत्वम् । रत्नविशेषाणां तु सामान्यरूपेणैव मूल्यनिर्धारणस्योपलम्भ इति सारम् ।

अनिर्वचनीयतावादीके बतलाये हुए दृष्टान्त दार्ष्टान्तिकके वैषम्य प्रदर्शन द्वारा भी उनके मतका खण्डन करते हैं—सामान्येति ।

नाम जात्यादि सामान्यके द्वारा ग्रहण करनेवाला जो सविकल्पक ज्ञान है, उसका विषय न होकर अपितु निर्विकल्पक ( नाम जात्यादि योजना रहित ) ज्ञानरूपमें ही प्रकाश्यमानत्वरूप अनाख्येयत्वका लक्षण कहीं पर बतलाया गया है, वह रत्नविशेषोंके समान काव्यविशेषोंमें सम्भव नहीं है, क्योंकि लक्षणकारोंने उन ( काव्यविशेषों ) की व्याख्या करदी है, इसलिये रत्न और काव्य ये दोनों ही सविकल्पकज्ञानके अगोचर ( अविषय ) नहीं हैं, अपितु उस ( सविकल्पकज्ञान ) के विषय होनेसे अनाख्येय नहीं हो सकते हैं । और रत्नोंमें तो रत्नत्वरूप सामान्यधर्मकी संभावनासे ही मूल्याङ्कनकी कल्पना देखी जाती है, अर्थात् रत्नविशेषोंकी तुलना ध्वनिमें नहीं की जा सकती क्योंकि ध्वनिके उक्त प्रकारोंसे व्याख्यात होनेके कारण वह ( ध्वनि ) विशेष शब्द जन्य प्रतीतिका भी विषय होती है, परन्तु रत्नविशेषके तो रत्नत्वादि समान्यरूपके ज्ञानसे ही मूल्याङ्कन किया जाता है, इसलिये ध्वनिमें रत्नकी तुलना नहीं हो सकती है ।

ननु किं कथंचिदपि ध्वनिकाव्य-रत्नविशेषाणां साम्यं न सम्भवतीत्याक्षेपमभ्युपगमेन निरस्यति—

**उभयेषामपि तेषां प्रतिपत्तृविशेषसंवेद्यत्वमस्त्येव । वैकटिका एव हि रत्नतत्त्वविदः, सहृदया एव च काव्यानां रसज्ञा इति कस्यात्र विप्रतिपत्तिः ।**

प्रतिपत्तृविशेषसंवेद्यत्वं तूभयेषामपि तेषां ध्वनिकाव्यानां रत्नविशेषाणां च तुल्यमस्त्येव, हि यतो वैकटिका रत्नानां परीक्षका एव केवलं रत्नतत्त्वविदः, सहृदया एव केवलं रसादिध्वनिज्ञाः सन्तीति हेतोरिति व्यवस्थायां वा, कस्य विप्रतिपत्तिर्न कस्यापीत्यर्थः ।

वेत्तृविशेषमात्रवेद्यत्वेनोभयेषां साम्यस्योपपादनेऽपि न प्रकृताभीष्टसिद्धिः, ध्वनेरनाख्येयत्वसिद्ध्यभावस्य तादवस्थ्यादित्याशयः।

अब वास्तवमें रत्नोंकी तुलनासे भी ध्वनिको अनाख्येय नहीं कह सकते यह बतलाते हैं—उभयेषामिति। वास्तवमें तो ध्वनिकाव्य तथा रत्नविशेष दोनों ही तत्तत्‌विशेषज्ञोंके द्वारा विशेषरूपसे जाने (पहचाने) ही जाते हैं, क्योंकि जौहरी व्यक्ति रत्नोंके तत्वको पहचानते हैं और सहृदय व्यक्ति काव्योंके रसादि ध्वनिको जानते हैं, इसमें किसीको भी मतभेद नहीं हो सकता है। इसलिये दोनोंके प्रतिपत्तृ विशेषके संवेद्य होनेसे साम्य होनेपर भी ध्वनिके अनाख्येयत्वकी सिद्धि नहीं होती।

ननु क्षणभङ्गवादे सर्वेषामेव वस्तूनां क्षणिकत्वेनानिर्वचनीयता ध्वनेरपि प्राप्नोत्येव, तस्मान्नासङ्गतिरित्याशङ्कां समादधाति—

**यत्त्वनिर्देश्यत्वं सर्वलक्षणविषये बौद्धानां प्रसिद्धम्, तत् तन्मतपरीक्षायां ग्रन्थान्तरे निरूपयिष्यामः।**

तु पुनः सर्वेषां पदार्थानां लक्षणविषये बौद्धानां यदनिर्देश्यत्वमनिर्वचनीयत्वं क्षणिकत्वात् प्रसिद्धम्, तदनिर्देश्यत्वं तन्मतस्य परीक्षायां विवेके, ग्रन्थान्तरे स्वकृतायां विनिश्चयनामकबौद्धनिबन्धस्य विवृतौ धर्मोत्तमाख्यायां निरूपयिष्याम इत्यर्थः।

तदनुमतमनिर्देश्यत्वमपि ध्वनेर्न सम्भवतीति हृदयम्।

बौद्धदर्शनके क्षणभङ्गवादसे सभी वस्तुओंके क्षणिक होनेके कारण उन (क्षणिक वस्तुओं) के लक्षण न हो सकनेसे ध्वनि पदार्थका भी लक्षण नहीं हो सकता, अतः वह (ध्वनि) अनाख्येय ही है, इस पूर्वपक्षका खण्डन करते हैं—यत्तु इति। बौद्धके मतमें समस्त पदार्थोंके लक्षणके विषयमें जो अनिर्वचनीयत्व प्रसिद्ध है, उसका विशद विवेचन हम अपने—'विनिश्चय नामक बौद्धग्रन्थकी धर्मोत्तमाख्य-विवृत्तिग्रन्थमें उन (बौद्धों) के मतकी परीक्षाके अवसर पर करेंगे, अर्थात् उस ग्रन्थका आशय है कि बौद्धोंके क्षणभङ्गवादका सिद्धान्त ही ठीक नहीं है, इसीलिये उसके आधारपर पदार्थोंके लक्षणोंका अनिर्वचनीयत्व विषयक सिद्धान्त भी नहीं बन सकता है। अतएव ध्वनिका भी तदनुमत अनिर्वचनीयत्व नहीं हो सकता है।

नन्विहैव न कथं तन्निरूप्यत इत्यत आह—

**इह तु ग्रन्थान्तरश्रवणलवप्रकाशनं सहृदयवैमनस्यदायीति न प्रक्रियते।**

अत्र पुनरानुषङ्गिकतयोपात्तस्य ग्रन्थान्तरस्य यच्छ्रवणं तस्य लवप्रकाशनं लेश-

तोऽपि व्याख्यानं, सहृदयानां वैमनस्याय मानसोद्वेगाय भवतीति हेतोस्तन्मतपरीक्षणं न प्रक्रियते, नैव प्रस्तूयत इत्यर्थः।

सुकुमारतममनसो हि सहृदया अनत्यपेक्षितशास्त्रान्तरीयविषयविवरणपल्लवनेन नूनं खिद्येरन्निति तन्न विस्तरेण वर्ण्यत इति सारम्।

उस (क्षणभंगवाद) का विवेचन यहाँ करना उचित नहीं है यह बतलाते हैं—इह तु इति। यहां तो उस नीरस और अत्यन्त कठिन ग्रन्थान्तर विषयकी थोड़ीसी चर्चा भी सहृदयोंके लिये वैमनस्याधायक ही होगी, इसलिये हम इस समय उस विषय पर प्रकाश डालना नहीं चाहते, अर्थात् अत्यन्त सुकुमार मनवाले सहृदयजन नहीं अधिक अपेक्षित अत्यन्त दुरूह शास्त्रान्तरविषयक विशदविवेचनसे अत्यन्त ऊब जायेंगे, इसलिये प्रकृतमें उसका विशेष वर्णन ठीक नहीं होगा।

नन्वत्र सौगतमतस्य निराकृतावकृतायामुपायान्तरं किञ्चिदस्ति नवा? इति प्रश्नं पक्षान्तरालम्बनेन समादधाति—

**बौद्धमतेन वा यथा प्रत्यक्षादिलक्षणम्, तथाऽस्माकं ध्वनिलक्षणं भविष्यति।**

बौद्धनये प्रत्यक्षादिज्ञानानां क्षणिकत्वेऽपि यथालक्षणम्, तथैवास्माकं मते ध्वनेरपि क्षणिकत्वाभ्युपगमेऽपि भविष्यतीत्येषोऽप्युपायोऽस्त्येवेत्यर्थः।

फिर भी इतना कह देना तो उचित ही होगा कि बौद्ध लोग सब वस्तुओंको क्षणिक और अनिर्वचनीय मानते हुए भी प्रत्यक्षादि प्रमाणोंके लक्षण करते हैं अतएव उन (बौद्धों) के मतमें क्षणिकत्व और अलक्षणीयत्व (अनिर्वचनीयत्व) होते हुए भी प्रत्यक्षादिके लक्षणके समान हमारा ध्वनि सम्बन्धी लक्षण भी ठीक हो सकता है।

पर्यवसाने निगमयति—

**तस्माल्लक्षणान्तरस्याघटनादशब्दार्थत्वाच्च तस्योक्तमेव ध्वनिलक्षणं साधीयः।**

तस्मादुक्तहेतुसमुदायात्, तस्य ध्वनेर्लक्षणान्तरस्यान्यविधलक्षणस्याघटनादसमन्वयादयुक्तत्वाद्वा, अशब्दार्थत्वाच्छब्दावाच्यत्वाभावाच्च, उक्तं मयाऽत्र विहितं ध्वनिलक्षणमेव साधीयः, साधुतममित्यर्थः।

अन्तमें अकाट्य उक्त ध्वनि लक्षणका उपसंहार करते हैं—तस्मादिति। इसलिये उस ध्वनिके हमारे लक्षणके अतिरिक्त किसी अन्य प्रकारके लक्षणके न घटनेसे और

उस ( ध्वनि ) के शब्दके वाच्य न होनेसे हमारा पूर्वोक्त ध्वनि लक्षण ही ठीक है।

तदर्थसङ्ग्राहकश्लोकमाह—

'अनाख्येयांशभासित्वं निर्वाच्यार्थतया ध्वनेः।
न लक्षणं, लक्षणं तु साधीयोऽस्य यथोदितम् ॥'

इति राजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके तृतीय उद्द्योतः।

ध्वनेरनाख्येयांशभासित्वमनिर्वचनीयांशकाव्यभासनशीलमनिर्वचनीयत्वमिति यावत् लक्षणं निर्वाच्यार्थतया निर्वचनक्षमार्थत्वान्न सम्भवति, यद्वा–ध्वनेरुत्तमकाव्यस्य अनाख्येयांशस्यानिर्वचनीयरसादिव्यङ्ग्यस्य भासित्वं भासकत्वं लक्षणं, निर्वाच्य उक्तरीत्या निर्वचनयोग्योऽर्थो यस्य स तादृशः, तस्य भावो निर्वाच्यार्थता, तया निरुक्तियोग्यार्थबोधकतया हेतुभूतया न सम्भवति। तु पुनरस्य ध्वनेः, यथोदितमस्मदुक्तानुरूपमेव लक्षणं साधीयो भवतीति सिद्धम्।

असंस्तुताध्वपान्थस्य स्खलितैर्मम भूरिभिः।
विदध्यान्नूनमुचितं साहसं सहसान् बुधः ॥
यत्कटाक्षो दयासान्द्रो गहनाद् ध्वनिकाननात्।
अनैषीदसहायं मां पारं ताभ्यां परं नमः ॥

इति ध्वन्यालोकदीधितौ तृतीय उद्द्योतः।

उक्तार्थ संग्राहक श्लोक बतलाते हैं—अनाख्येयांशेति। ध्वनिके निर्वचनयोग्य अर्थ होनेसे उस ( ध्वनि ) का अनाख्येयांशभासित्व ( अनिर्वचनीयत्व ) रूप लक्षण ठीक नहीं हो सकता है, उस ( ध्वनि ) का ठीक लक्षण तो जैसा हमने कहा है वही है।

तृतीय उद्द्योत समाप्त।

---

# अथ चतुर्थ उद्द्योतः।

'भक्ताभिलषितपूर्त्ति–व्रतविदिते क्लिन्नचेतसी कृपया।
वृन्दावने स्फुरन्ती सितशितिमहसी नमाम्यनिशम् ॥'

अथ ध्वनिमनङ्गीकुर्वतां मतमपाकर्तुं कृतस्य तन्निरूपणस्य कविप्रतिभाऽऽनन्त्यलक्षणं विलक्षणं प्रयोजनं प्रतिपादयितुं चतुर्थमुद्द्योतमारभमाणः प्रथमकारिकामवतारयति वृत्तिकारः—

एवं ध्वनिं सप्रपञ्चं विप्रतिपत्तिनिरासार्थं व्युत्पाद्य, तद्व्युत्पादने प्रयो-

जनान्तरमुच्यते—

एवमुद्द्योतत्रयोक्तप्रकारैः सप्रपञ्चं भेदप्रभेदसहितं ध्वनिं विप्रतिपत्तीनां ध्वन्यभावादिवादिप्रतिवादिजनोक्तयुक्तीनां निरासार्थं खण्डनाय, व्युत्पाद्य विशेषतो निरूप्य, तद्व्युत्पादने ध्वनिविशेषनिरूपणे, प्रयोजनान्तरं सहृदयमनःप्रीतये इत्यनेन प्रथमे, 'सत्काव्यं कर्तुं वा ज्ञातुं वा' इत्यमुना तृतीये चोद्द्योते-सामान्यविशेषभावेनोक्ताभ्यां सहृदयहृदयानन्द-सत्काव्यकरणज्ञानान्यतररूपप्रयोजनाभ्यामन्यत् तृतीयं प्रयोजनमुच्यते। यद्वा-सत्काव्यकरण-तज्ज्ञानरूपप्रयोजनयोरन्तरं विशेषो वैलक्षण्यलक्षणः। तथा च केन विशेषेण प्रथममस्य प्रयोजनम्। केन च द्वितीयमिति कथ्यते। तत्रापि कृतस्यैव ज्ञानविषयत्वसम्भवात् प्रथमं सत्काव्यकरणविशेषप्रयोजनमेवोच्यते, कारिकयेत्यर्थः।

ध्वनि नहीं माननेवालेके मत खण्डनके अतिरिक्त कवियोंको अनन्त प्रतिभा गुणकी प्राप्ति भी ध्वनि निरूपणके प्रयोजन हैं, यह बतलानेके लिये वृत्तिकार भूमिका रचते हैं—एवमिति। इस प्रकार पूर्वपक्षियों (वादियों) की विप्रतिपत्तियों (वादों) के निराकरणार्थ भेद-उपभेद के साथ ध्वनिका निरूपण कर उस (ध्वनि) के प्रतिपादनका दूसरा भी प्रयोजन बतलाते हैं।

'ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शितः।
अनेनानन्त्यमायाति कवीनां प्रतिभागुणः॥ १०५॥

गुणीभूतव्यङ्ग्येन सहितस्य ध्वनेः, योऽध्वा मार्गः प्रकार इति यावत्, प्रदर्शित उद्द्योतत्रयेणेति शेषः। अनेन सकलध्वनिप्रपञ्चनिरूपणेन, कवीनां प्रतिभागुण उत्कर्षाधायकधर्म्म आनन्त्यमविच्छिन्नत्वमायाति प्राप्नोतीत्यर्थः।

ध्वनियोगेन वर्ण्यवस्तूनां नवनवीभावात् वर्णने कवीनां प्रतिभाऽप्रतिहता भवतीति भावः।

गुणीभूत व्यङ्ग्यसहित ध्वनिकाव्यका जो पूर्वोक्त पथ प्रदर्शित किया है, उस पथके अनुसरण करनेसे कवियोंकी प्रतिभाशक्ति आनन्त्य गुणको प्राप्त करलेती है।

तदाह—

य एष ध्वनेर्गुणीभूतव्यङ्ग्यस्य च मार्गः प्रकाशितः, तस्य फलान्तरं कविप्रतिभाऽऽनन्त्यम्।

यत्तच्छब्दाभ्यां प्रदर्शनकर्मीभूतोऽध्वा परामृश्यते। कविप्रतिभाऽऽनन्त्यमित्यतः परमस्तीत्यध्याहार्यम्।

उक्तरीतिसे यह जो ध्वनि और गुणीभूत, व्यङ्ग्यका मार्ग बतलाया गया है, उसका दूसरा फल कविकी काव्योत्कर्षजनक प्रतिभाका आनन्त्य गुण है, अर्थात् ध्वनिके सम्पर्कसे वर्ण्य वस्तुओंके एक अद्भुत विलक्षण ( नये ) रूपसे वर्णन करने पर कवियोंकी प्रतिभाशक्ति अप्रतिहत होकर कहीं भी नहीं रुकती है।

ज्ञानद्वारकसामानाधिकरण्यमनवगच्छतः पृच्छामग्रिमकारिकामवतारयितुमनुवदति—

कथमिति चेत् ?—

प्रदर्शितो हि ध्वनिगुणीभूतव्यङ्ग्यप्रपञ्चः काव्यवृत्तिः, कविवृत्तितया व्यधिकरणं प्रतिभाऽऽनन्त्यं कथं जनयेत्, कार्यकारणयोः सामानाधिकरण्यस्य नियमादिति प्रष्टुराकूतम्। ध्वनिप्रकारज्ञानमनन्तप्रतिभा चैकत्रैव कविषु समवैतीति सामानाधिकरण्यमक्षुण्णमेवेति चोत्तरयितुराशयः।

ध्वनि और गुणीभूतव्यङ्ग्य ये दोनों काव्यनिष्ठ धर्म हैं और प्रतिभागुण कविनिष्ठ है, इसलिये इनके भिन्न भिन्न देशमें रहनेसे ध्वनि और गुणीभूत व्यङ्ग्य कविप्रतिभाके प्रति किस प्रकार कारण हो सकते हैं, क्योंकि कार्य-कारणमें सामानाधिकरण्यका नियम है, इस आक्षेपका समाधान यह है कि ध्वनि और गुणीभूत व्यङ्ग्य नहीं अपितु उनका ज्ञान ही कवि प्रतिभाके आनन्त्यका हेतु होता है, इसलिये ज्ञानद्वारक सामानाधिकरण्यको लेकर कार्य-कारणभाव माननेमें कोई आपत्ति नहीं है, क्योंकि उन ( ध्वनि और गुणीभूत व्यङ्ग्य ) का ज्ञान और प्रतिभा दोनों कविनिष्ठ धर्म हैं। इसी आशयको बतलानेके लिये भूमिका रचते हैं—कथमिति। यदि कोई व्यक्ति प्रश्न करे कि ध्वनि और गुणीभूत व्यङ्ग्य कवि प्रतिभाके आनन्त्यके हेतु किस प्रकार हो सकते हैं, तो उसका उत्तर आगे बतलाते हैं:—

कथं पुनः कविप्रतिभाऽऽनन्त्यमित्याकाङ्क्षायामभिदधाति—

'अतो ह्यन्यतमेनापि प्रकारेण विभूषिता।
वाणी नवत्वमायाति पूर्वार्थान्वयवत्यपि ॥ १०६ ॥'

हि यतः, अतोऽस्मादुक्तध्वनिगुणीभूतव्यङ्ग्यप्रभेदानां मध्यात्, अन्यतमेनैकेनापि प्रकारेण, का कथा बहूनाम्, विभूषिता व्यङ्ग्यव्यञ्जकभावेन विशिष्टा, कवीनां वाणी काव्यलक्षणा वाक्, पूर्वैः प्राचीनमहर्षिवाल्मीकिप्रभृतिकविपरम्परावर्णितैरर्थैः, अन्वयवत्यपि वाच्यवाचकभावेन सम्बद्धाऽपि, नवत्वमपूर्वत्वं चारुत्वविशेषमिति यावत्, आयाति प्राप्नोतीत्यर्थः।

उन ध्वनि तथा गुणीभूत व्यङ्ग्यमेंसे किसी एकसे भी अलंकृत होकर वाल्मीकि

व्यास आदि कवियों द्वारा प्रतिपादित वाणी वाच्य-वाचक द्वारा पुराने अर्थोंसे सम्बद्ध होनेपर भी एक अद्भुत नवीनता ( रमणीयता ) को प्राप्त कर लेती है।

तदाह—

**अतो हि ध्वनेरुक्तप्रभेदमध्यादन्यतमेनापि प्रकारेण विभूषिता सती वाणी पुरातनकविनिबद्धार्थसंस्पर्शवत्यपि नवत्वमायाति।**

वर्णनीयपदार्थविषयकनवनवोन्मेषशालिनी प्रज्ञा प्रतिभा, तस्या आनन्त्यं ध्वनिसम्बन्धं विना न सम्भवति। तथा हि—प्राच्यैर्वाल्मीकिप्रमुखैरेव वर्णितत्वा दर्थानां परिशिष्टानां मुष्टिमेयत्वमसत्त्वं वा, तद्विषयकत्वेन च प्रतिभाया अपि तत्त्वं प्राप्तमेव। ध्वनियोगेन पुनरर्थानामानन्त्यम्, तेन च तस्या, ततश्च काव्यस्य नवत्वम्, ततोऽपि कवीनां नव्यानामात्मलाभ इति परम्पराऽत्रानुसन्धेया।

प्राचीनकविवर्णितान् ह्यर्थानेव विषयीकुर्वती तज्जातीयैव स्यात्, न तु ततो विलक्षणा, विषयाणामेव ज्ञाननियामकत्वादिति तस्याः फलं काव्यमपि तज्जातीयमेवानायत्या सम्पद्येत, तथा च नवीनानां कवीनां नैवात्मलाभः। व्यङ्ग्यं हि प्राचीनमप्यर्थं प्रसाध्य नूतनमिव प्रदर्शयति, रञ्जनद्रव्यमिव पटमिति तात्पर्यम्।

वृत्तिकार उक्त कारिकाशयको स्फुट करते हैं—अतोहीति। इन ध्वनिके उक्त भेदों ( ध्वनि तथा गुणीभूत व्यङ्ग्यों ) में से किसी एक भेदसे भी विभूषित होकर, पुरातन कवि निबद्ध अर्थोंका वर्णन करनेवाली वाणी भी चारुत्वातिशयके योगसे अपूर्वताको प्राप्त हो जाती है अर्थात् अत्यन्त चमत्कार जनक व्यङ्ग्य रसादि पुरातन अर्थको भी एक अपूर्व रमणीय बना देता है।

उदाहर्तुमुपक्रमते—

**तथा हि—अविवक्षितवाच्यस्य ध्वनेः प्रकारद्वयसमाश्रयणेन नवत्वं पूर्वार्थानुगमेऽपि।**

पूर्वार्थस्य प्राचीनवर्णितस्यानुगम उपादानेऽपि, अविवक्षितवाच्यस्य ध्वनेरुक्तप्रकारद्वयस्याश्रयणेन योजनेन नवत्वमपूर्वत्वं भवति, ततश्च कविवाण्या अपीत्यर्थः।

उसीके उदाहरणार्थ विचार प्रस्तुत करते हैं—तथाहि इति। पुरातन कवि वर्णित प्राचीन अर्थके उपादान करने पर भी लक्षणामूल अविवक्षित वाच्य ध्वनिके अर्थान्तर संक्रमित वाच्य, तथा अत्यन्त तिरस्कृत वाच्यके आश्रयण द्वारा अपूर्व रमणीयता हो जाती है और उसके द्वारा कविकी वाणी भी एक विलक्षण ही चमत्कार जनक प्रतीत होने लगती है।

तत्रात्यन्ततिरस्कृतवाच्ययोगेनापूर्वत्वमादावुदाहरति—

यथा—

प्रक्रममाणतारुण्यां कोऽपि वर्णयति—

'स्मितं किञ्चिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ।
गतानामारम्भः किसलयितलीलापरिकरः,
स्पृशन्त्यास्तारुण्यं किमिव हि न रम्यं मृगदृशः ॥' इत्यस्य

स्मितं हसितं किञ्चिदीषद्, न तूच्चैः, तच्च मुग्धं मनोहरम्; दृष्टिविभवः कटाक्षलक्ष्मीः, तरलश्चञ्चलोऽत एव मधुरः प्रियः, वाचां परिस्पन्दः प्रसरणं विकास इति यावत्, अभिनवाभिरपूर्वाभिः, विलासोक्तिभिर्विभ्रमवचनैः सरसो नायकान्तस्सन्तापशमनैकशीलत्वाद् रससान्द्रः, गतानां सञ्चरणानामारम्भ उपक्रमः, किसलयितो नितम्बगौरवेण मन्दिमाधिक्याद् विकसितो लीलानां विभ्रमाणां व्यतिकरो मिथस्सम्बन्धस्सञ्चरूपो यत्र तादृशः, हि यतोऽस्ति तस्मादिति शेषः, तारुण्यं यौवनं, स्पृशन्त्या अङ्कुरयौवनायाः, मृगदृशो नायिकायाः सम्बन्धिषु व्यापारेषु, किमिवास्ति किं नामास्ति, यद् रम्यं हृदयङ्गमं नास्तीत्यर्थः ।

तथा च—'मुग्धस्तु सुन्दरे मूढे' 'भवेत् परिकरः सङ्घे पर्यङ्कपरिवारयोः' इति मेदिनी । 'लीलां विदुः केलिविलासखेलाशृङ्गारभावप्रभवक्रियासु' इति विश्वः । 'स्वादुप्रियौ तु मधुरौ' इत्यमरश्च ।

अत्र किञ्चित्पदसमभिव्याहारात् स्मितपदं हसितमात्रपरम् । तरलमधुर इत्यत्र विशेषणवाचकपदयोः केवलयोः समासः क्लिष्टः । अस्य 'स्मितम्' इत्यादिश्लोकस्य 'अपूर्वत्वमेव प्रतिभासते' इत्यग्रिमेण सम्बन्धः । एवमग्रेऽपि योजनीयम् ।

उनमें पहले अत्यन्त तिरस्कृतवाच्य ध्वनिके सम्पर्कसे अपूर्वत्वका उदाहरण बतलाते हैं—यथेति । कोई नवयौवनाका वर्णन करता है—नव यौवनको प्राप्त करनेवाली मृगनयनीकी मधुर मन्द मुसुकान एवं अत्यन्त चञ्चलतापूर्वक रमणीय कटाक्ष विक्षेप, तथा अभिनव विलासपूर्ण उक्तियोंसे सरस वाणीका उपन्यास, और विविध हावभावोंको विकसित करनेवाले मन्द गमनका उपक्रम, इनमेंसे कौनसी वस्तु रमणीय नहीं है, अपितु सभी कुछ सुन्दर और प्रिय है ।

तदर्थकं प्राचीनपद्यं निगदति—

'सविभ्रमस्मितोद्भेदा लोलाक्ष्यः प्रस्खलद्गिरः ।
नितम्बालसगामिन्यः कामिन्यः कस्य न प्रियाः ॥'

विभ्रमेण शृङ्गारचेष्टाविशेषेण सहितः सविभ्रमः स्मितस्योद्भेदो विकासो यासां

न्तास्तथोक्ताः, लोलान्यश्चपलनयनाः, प्रस्खलन्त्यो मदातिरेकेण त्रुटयन्त्यो गिरो यासां तादृश्यः, तथा नितम्बाभ्याम् ( गौरवाद् ) अलसं मन्दं गन्तुंशीलमस्त्यासामिति तथाभूताः कामिन्यः कस्य न प्रियाः स्युः, अपि तु सर्वस्येत्यर्थः।

उक्त आशयका ही एक प्राचीन पद्य प्रस्तुत करते हैं—सविभ्रमेति। श्रृङ्गार चेष्टा विशेष रूप विभ्रमसे युक्त जिनकी मन्द मुसुकान खिल रही है, आँखें अत्यन्त चञ्चल हो रही हैं, वाणी लड़खड़ा रही है, नितम्बके भारसे मन्द गमन है, ऐसी कामिनियाँ किसको प्रिय नहीं लगती हैं।

सङ्गमयति—

**इत्येवमादिषु श्लोकेषु सत्स्वपि तिरस्कृतवाच्यध्वनिसमाश्रयेणापूर्वत्वमेव प्रतिभासते।**

इत्येवमादिषु समानार्थकेष्विति शेषः। 'यस्य च भावेन भावलक्षणम्', इत्यनेन सप्तमी। तिरस्कृतपदमत्यन्ततिरस्कृतम्।

अयं भावः—यद्यपि 'सविभ्रमस्मितोद्भेदाः' इत्यादिश्लोकेन पूर्वं प्राचीनकविः कश्चित् तमर्थं प्रत्यपादयदेव। तमेव पुनरर्वाचीनोऽपि कविः 'स्मितं किञ्चिन्मुग्धम्' इत्यादिना पद्येन प्रतिपादयाञ्चकार। तथाऽपि नवीनपद्ये गतार्थतयाऽनौचित्यं न प्रतीयते नूतनश्लोकेऽत्यन्ततिरस्कृतवाच्यध्वनिसमुदयसंयोगेन पुरातनस्याप्यर्थस्य नवीकरणात्। तथा हि—तत्र मुग्ध-मधुर-विभव-परिस्पन्द-सरस-किसलयित-परिकर-स्पर्शरूपास्तत्तत्पदवाच्यार्थावाधितत्वादत्यन्तं तिरस्कृता सन्तो लक्षणामूलव्यञ्जनया क्रमेण सौन्दर्यातिरेक—सकलहृदयहरणदक्षत्व-सन्तन्यमानत्वरूपाक्षीणप्रसरत्व-सवैलक्ष्योच्चारितत्वविशिष्टाक्लिष्टत्व — तृप्तिजनकत्वसमानाधिकरणतापोपशमकत्वसद्यःप्रवृत्तिविशिष्टसुकुमारत्व—गलितावधिप्रतिरूपत्व—स्पृहणीयतमत्वानि ध्वनयन्तः प्राग्वर्णितत्वेन प्रसिद्धा अपि ध्वननमहिम्नाऽभिनवीक्रियमाणा भासन्ते। एवमग्रेऽप्याकलनीयम्।

उक्त विषयका प्रकृतमें समन्वय करते हैं—इत्येवमिति। 'सविभ्रम'—इत्यादि प्राचीन कवि रचित समानार्थक श्लोकोंके रहते हुए भी बादमें उसके ही आशयको लेकर लिखे गये 'स्मितं किञ्चिन्मुग्धम्'—इत्यादि नवीन श्लोकमें मुग्ध, मधुर, विभव, परिस्पन्द, सरस, किसलयित, परिकर, स्पर्श आदि पदोंसे मुख्यार्थके अत्यन्त बाधित होनेके कारण लक्षणामूल व्यञ्जनाके द्वारा अत्यन्त तिरस्कृतवाच्य ध्वनिरूप क्रमशः व्यज्यमान युवजन हृदयहरण क्षमत्व, सौन्दर्यातिरेक, अविच्छिन्न रमणीयत्व,

लज्जापूर्वक मन्दोच्चारण जन्य चारुत्व, तृप्तिजनकत्व, सन्तापोपशामकत्व, अपरिमितत्व, अतिशयस्पृहणीयत्व आदि व्यङ्ग्योंके सम्पर्कसे तादृश पुराना अर्थ भी अत्यन्त रमणीय प्रतीत होता है, अर्थात् पूर्वमें साधारण रूपसे वर्णित होने से पुराने जैसे होनेपर विभ्रम आदि पदार्थ ध्वनिकी महिमासे अत्यन्त अभिनवके समान अपूर्व चमत्कारजनक प्रतीत होने लगते हैं।

अथार्थान्तरसङ्क्रमितवाच्यध्वनियोगेनापूर्वत्वमुदाहरति—

तथा—'यः प्रथमः प्रथमः स तु, तथा हि हतहस्तिबहलपललाशी।
श्वापदगणेषु सिंहः सिंहः केनाधरीक्रियते॥' इत्यस्य—

यः प्रथमः प्रधानं स तु प्रथमः प्रधानमेव, न तु गौणो भवति। तथा हि-हतानां स्वयं घातितानां हस्तिनां वहलानि विपुलानि पललानि मांसान्यशितुं शीलमस्येति तथाभूतः सिंहो मृगेन्द्रः, श्वापदगणेषु, हिंस्रपशुसमूहेषु, सिंहः पराक्रमातिरेकवान्, केन श्वापदेन अधरीक्रियते न्यूनीक्रियते, न केनापीत्यर्थः। अर्थान्तरन्यासश्चालङ्कारः।

तथा च—'प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्' इति मेदिनी। 'पिशितं तरसं मांसं पललम्' इत्यमरः। 'वहुले वहलं वहु' इति द्विरूपकोशः। 'अथ हिंस्रपशुर्व्याडिः श्वापदः शिविरित्यपि' इति त्रिकाण्डशेषश्च।

अव अर्थान्तरसंक्रमितवाच्यध्वनिके सम्पर्कसे अपूर्वत्वका उदाहरण वतलाते हैं—तथेति। तथा—जो प्रथम है, वह तो प्रथम ही है, जैसे श्वापद (हिंस्र, घातक) प्राणियोंमें अतिशय पराक्रमशाली सिंह अपनेसे मारे हुए हाथियोंके प्रचुर मांसको खानेवाला सिंह ही है, उसे कौन नीचा (तिरस्कृत) कर सकता है। इसका—

तदर्थकं प्राचीनश्लोकमाह—

'स्वतेजःक्रीतमहिमा केनान्येनातिशय्यते।
महद्भिरपि मातङ्गैः सिंहः केनाभिभूयते॥'

स्वस्य तेजसा प्रतापेन क्रीतः स्वायत्तीकृतो महिमा महत्त्वं येन तादृशः कोऽपि केन पुनरन्येन, अतिशय्यतेऽतिक्रम्यते। तथा हि-महद्भिर्विशालकायैरपि मातङ्गैर्हस्तिभिः कर्तृभिः सिंहः केन हेतुना प्रकारेण वा अभिभूयते पराभूयते, न कैरपीत्यर्थः। कैरभिभूयत इति पाठस्त्वतोऽपि समीचीनः। इहापि स एवालङ्कारः।

उक्ताशयका दूसरा श्लोक वतलाते हैं—स्वतेज इति। अपने प्रतापसे गौरव (प्रतिष्ठा) प्राप्त करनेवाले महापुरुषसे वढ़कर कौन हो सकता है, क्या वहुत वड़े-वड़े विशालकाय हाथी भी सिंह को कभी दवा सकते हैं?

सङ्गमयति—

**इत्येवमादिषु श्लोकेषु सत्स्वपि, अर्थान्तरसङ्क्रमितध्वनिसमाश्रयेण नवत्वम् ।**

समानार्थकेषु 'स्वतेजः—'इत्यादिश्लोकेषु सत्सु विद्यमानेष्वपि, 'यः प्रथमः' इत्यादिश्लोकस्य प्रथम-सिंह-शब्दयोः पुनरुपात्तयोरर्थपौनरुक्त्यादनन्वितार्थकयोरजहत्स्वार्थलक्षणामूलव्यञ्जनया, क्रमशोऽसाधारण्यसमानाधिकरणानपाकरणार्हत्वादिना परानपेक्षाद्भुतवीर्यवत्त्वादिना च व्यङ्ग्येन विशिष्टयोः स्ववाच्ययोर्बोधकत्वादर्थान्तरसङ्क्रमितवाच्यध्वनिद्वयसम्बन्धेनार्थयोः काव्यस्य च नवत्वमाभातीत्यर्थः ।

स्वतेजः—इत्यादि प्राचीन श्लोकोंके रहते हुए भी 'यः प्रथमः'—इत्यादि नवीन-श्लोकमें द्वितीय बार प्रयुक्त 'प्रथम' तथा 'सिंह' पदोंमें पुनरुक्त होनेसे यथाश्रुत अन्वित न हो सकनेके कारण 'अजहत्स्वार्था लक्षणा' से 'असाधारण्य' और 'दूसरोंसे अनभिभवनीयत्व' आदि विशिष्ट 'प्रथम' तथा 'सिंह' अर्थके बोधन द्वारा अन्यकी अपेक्षा अतिशयवीर्यशालित्व-प्रतीतिपूर्वक अर्थान्तरसंक्रमितवाच्यध्वनिद्वयके सम्पर्कसे नवीनता आगई है ।

इत्थमविवक्षितवाच्यस्य ध्वनेर्भेदद्वयस्य योगेनापूर्वत्वमुदाहृत्य, विवक्षितान्यपरवाच्यस्याप्यसंलक्ष्यक्रमस्योदाहर्तुमभिधत्ते—

**विवक्षितान्यपरवाच्यस्याप्युक्तप्रकारसमाश्रयेण नवत्वम् । तत्रासंलक्ष्यक्रमप्रकारसमाश्रयेणान्यथात्वम् ।**

अन्यथात्वमपूर्वत्वम् ।

इस प्रकार अविवक्षितवाच्यध्वनिके उक्त भेदद्वयके सम्पर्कसे अपूर्वत्वका उदाहरण देकर अब विवक्षितान्यपरवाच्यध्वनिके असंलक्ष्यक्रमव्यङ्ग्यके उदाहरणार्थ प्रतिपादन करते हैं—विवक्षितेति । अभिधामूल विवक्षितान्यपरवाच्यध्वनिके भी पूर्वोक्त संलक्ष्यक्रमव्यङ्ग्य, तथा असंलक्ष्यक्रमव्यङ्ग्यप्रकारोंमेंसे असंलक्ष्यक्रमव्यङ्ग्यध्वनिरूप प्रकारके संपर्कसे अपूर्वत्व प्राप्त हो जाता है ।

उदाहरति—

**यथा—**

नवोढाव्यवहारं वर्णयति—

**'निद्राकैतविनः प्रियस्य वदने विन्यस्य वक्त्रं वधू-**
**र्बोधत्रासनिरुद्धचुम्बनरसाऽप्याभोगलोलं स्थिता ।**

वैलक्ष्याद् विमुखीभवेदिति पुनस्तस्याप्यनारम्भिणः,
साकाङ्क्षप्रतिपत्ति नाम हृदयं यातं तु पारं रतेः ॥' इत्यस्य श्लोकस्य,

वधूर्नवपरिणीता, निद्रायां कैतविनः कपटिनः कृतकसुप्तस्य, प्रियस्य, वदने, वक्त्रं स्वमुखं, विन्यस्य, प्रियवदनस्पर्शचुम्बनादिजन्यसुखविशेषलाभलोभादासज्य, बोधस्य चुम्बनजन्यप्रियजागरणस्य, त्रासेन भयेन निरुद्धः प्रसरन्नपि बलान्निगृहीतश्चुम्बनस्य रसोऽभिलाषो यया, तादृगपि, आभोगेन मुहुर्मुहुस्तन्निद्रापरीक्षणयत्नेन लोलं तरलं यथा स्यात् तथा स्थिताऽभूत्, न तु चुम्बनप्रयासात् सर्वथा निवर्तितुमशकत् । वैलक्ष्यान्मत्प्रबोधावगमजलज्जायाः प्रिया कदाचिद् विमुखी भवेत् पराङ्मुखी स्याद्, इति हेतोः, तस्य प्रियस्यापि अनारम्भिणश्चुम्बनाद्यनारभमाणस्य, आकाङ्क्षयाऽभिलाषेण सहिता साकाङ्क्षा प्रतिपत्तिः स्थितिः प्रवृत्तिर्वा यस्य तादृक्, चुम्बनोत्कण्ठाकलुषितं न तु परिपूर्णाभिलाषं यद्यपि हृदयम्, तु तथाऽपि रतेराह्लादविशेषधारायाः, पारं परिणतत्वं, नाम निश्चितं, यातं प्राप्तमित्यर्थः ।

तथा च—'आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि', 'प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च' इति मेदिनी ।

जैसे—नवोढा का व्यवहार बतलाते हैं—नवविवाहिता वधू, बहाना करके लेटे हुए पतिके मुख पर अपना मुख रख कर उन ( पति ) के जग जाने के भयसे अपनी चुम्बन की अभिलाषा को रोक कर भी चुम्बनेच्छाके प्रतिक्षण उत्तरोत्तर बढ़ने के कारण बार बार प्रिय की निद्रा का परीक्षण करती हुई चञ्चल होकर खड़ी है और मेरे द्वारा चुम्बन कर लेनेसे लज्जा के कारण यह ( प्रेयसी ) कहीं मुझसे विमुख न हो जाय यह सोच कर चुम्बन व्यापार को न कर सकनेवाले उस ( नायक ) का भी हृदय मनोरथ पूर्ण न हो सकनेसे साकांक्ष भले ही हो, लेकिन रतिरसास्वादके पार तो पहुंच ही गया । इस श्लोक का—

तदर्थकं प्राचीनपद्यमुदाहरति—

'शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं,
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥'

अमरुशतके पद्यमिदम् । वासगृहं भोगावासं शयनगृहमिति यावत्, शून्यं जनरहितं विलोक्य प्रच्छन्नसखीसत्त्वशङ्कया विशेषेण दृष्ट्वा, शयनात्तल्पात्, किञ्चिदीषद-

परकायमात्रेण, न तु सर्वतः, शनैः प्रतिबोधभिया मन्दम्, उत्थाय, निद्रायाः सुषुप्ते- र्व्याजं कपटम्, प्रणयपरीक्षार्थमुपागतस्याश्रितस्य, पत्युः, मुखं सुचिरं बहुकालं निद्रानिर्णयाय प्रणयातिरेकेण वा, निर्वर्ण्यालोक्य, तथा विस्रब्धं ससुषुप्तिविश्वासं यथा- भवति तथा परिचुम्ब्य परितः कपोलयोर्दंशोष्ठ चुम्बित्वा, जातः प्रियावदनस्पर्शा- दुत्पन्नः पुलको रोमाञ्चो यत्र तादृशीं तस्य गण्डस्थलीं कपोलपालिम्, आलोक्य, स्थिता, लज्जया पतिजागरणनिर्णयेन स्वरहस्यप्रकाशेन च जातया ह्रिया नम्रमधोमुखं यस्याः, सा बाला नवोढा, स्वाभिलषितस्यायत्नसम्पत्त्या हसता प्रियेण तेन, चिरं व्रीडाऽपसरण-सम्भोगस्वीकरणं यावत्, चुम्बिताऽभूदित्यर्थः।

तथा च—'भोगावासो वासगृहम्' इति हारावली। 'निर्वर्णनं तु निध्यानं दर्शना- लोकनेक्षणम्' इत्यमरश्च।

इह 'गण्ड-' इत्यश्लीलमिति केचित्, तन्न लोकप्रसिद्धासभ्यार्थस्मारकत्वा- भावात्। अन्यथा 'सुभगा' 'भगिनी' इत्यादावपि तत्त्वं दुर्वारमेव। विलोक्येत्यादि- क्त्वाऽन्तप्रतिपाद्यक्रियासमानकर्तृकत्वलाभाय कृदन्तं लज्जेति पृथक् पदमित्यपि परै- रुक्तं न मनोरमम्, 'कृत्प्रत्ययानामभिधाननियम्यतया' लज्जापदस्य तदाश्रयबोधने सामर्थ्याभावात्, स्थितेत्यस्याध्याहारेणैव कृतार्थत्वाच्च।

उक्ताशयका सरा उदाहरण बतलाते हैं—शून्यंवासगृहमिति। अपने केलिभवन को अन्य सखी आदिसे रहित (खाली) देखकर धीरेसे पलङ्ग परसे तनिकसा उठकर निद्राका बहाना मात्र किए हुए प्रियके मुखको बहुत देर तक कहीं जागे तो नहीं हैं इस भावनासे देखनेके अनन्तर वास्तवमें सो रहे हैं ऐसा विश्वास हो जाने पर चुम्बन करके उन (पति) के कपोलोंको चूमनेके कारण रोमाञ्च युक्त देख कर लज्जाके मारे नतमुखी उस नवोढा (प्रेयसी) को हंसते हुए पतिने बहुत देर तक गाढालिङ्गनपूर्वक इच्छाभर चुम्बन किया।

सङ्गतिमाचष्टे—

इत्यादिषु सत्स्वपि, नवत्वम्।

'शून्यम्' इत्यादिश्लोके बालाद्यालम्बनेन, शून्यगृहाद्युद्दीपनेन, लज्जाऽऽदिव्य- भिचारिणा, उभयारब्धचुम्बनाद्यनुभावेन च यद्यपि सम्भोगशृङ्गारस्चर्वणागोचरतां नीयत एव, किन्तु लज्जाऽऽत्मकव्यभिचारिभावस्य स्वशब्दवाच्यत्वाद् 'निर्वर्ण्य' इत्यादौ श्रुतिकटुत्वसद्भावाच्च रसस्यापकर्षो दुर्वार इति तदपेक्षया तत्प्रायवाचकेऽपि 'निद्राकैत- विन' इत्यादिश्लोके द्वयोः परस्परचुम्बनाभिलापधाराया निरोधपरम्परायाः पर्यव-

सानासम्भवेन सूच्यमाना रतिरुभयोरपि समानाकारिकां चित्तवृत्तिं प्रकाशयन्ती केन-चिदद्भुतेन प्रकारेण तमेव परिपोषं नयति, न चासौ केनाप्यपकृष्यत इत्यक्षतसौभाग्य-महिम्नि तस्मिन्नपूर्वत्वमेव, असंलक्ष्यक्रमध्वनिसाम्राज्यादिति भावः ।

उक्तार्थ का संगमन करते हैं—इत्यादिषु इति । 'शून्यम्'—इत्यादि श्लोकोंके रहते हुए भी 'निद्राकैतविनः'—इत्यादि पूर्वोक्त नवीन श्लोकमें एक अद्भुत नवीनता प्रतीत होती है । क्योंकि 'शून्यं वासगृहम्'—इसमें बालारूप आलम्बन, शून्यवास-गृहादि उद्दीपन विभाव, लज्जा आदि संचारीभाव, नायक-नायिकारब्ध चुम्बनरूप अनुभाव आदिसे यद्यपि शृंगार रस आस्वाद विषय प्रतीत होता है, तथापि लज्जा व्यभिचारीभावके स्वशब्दवाच्य तथा 'निर्वर्ण्य' पदमें श्रुतिकटुत्व आदि दोषोंके कारण रस का अपकर्ष होना स्वाभाविक है, परन्तु उसकी अपेक्षा तदर्थकेही बोधक 'निद्राकैतविनः' इसमें नायक-नायिका की परस्परमें चुम्बन विषयक अभिलाषधारासे सूच्यमान रति दोनोंके समानाकार चित्तवृत्तिको अभिव्यञ्जित करती हुई कुछ विलक्षण ही रूपसे परिपुष्टिको प्राप्त होकर चर्वणा का विषय बन जाती है । और उस रसके आस्वादनमें कोई प्रतिबन्धक नहीं है, इसलिये असंलक्ष्यक्रमव्यङ्ग्य ध्वनिके साम्राज्यसे एक अद्भुत नवीनता ( चमत्कारिता ) प्रतीत होती है ।

दार्ढ्याय पुनरुदाहरति—

**यथा वा—'तरङ्गभ्रूभङ्गा' इत्यादिश्लोकस्य, 'नानाभङ्गिभ्रमद्भ्रूः' इत्यादिश्लोकापेक्षयाऽन्यत्वम् ।**

'तरङ्गभ्रूभङ्गा' इत्यादिश्लोकः प्रागेव विवृतः । अपरस्त्वन्वेष्टव्य एव । अन्यत्वं नवत्वमित्यनर्थान्तरम् ।

रसध्वनिना नातिपूर्णे प्राचीने नानेत्यादिश्लोके सत्यपि, यद्ध्वनिपरिष्कृतस्य तरङ्गेत्यादिश्लोकस्यापूर्वत्वमित्याशयः ।

अथवा जैसे—'तरङ्गभ्रूभंगा'—इत्यादि श्लोक में 'नानाभङ्गि' इत्यादि पुरातन श्लोक की अपेक्षा असंलक्ष्यक्रमव्यङ्ग्य ध्वनिके प्रभावसे अपूर्वता प्रतीत होती है ।

इत्थमविवक्षितवाच्य—विवक्षितान्यपरवाच्यत्वाभ्यां प्रत्येकं द्वैविध्याच्चतुर्विधमपि प्रधानं ध्वनिं समाश्रयतः काव्यस्यापूर्वत्वं समानार्थवाचकत्वेऽप्युदाहरणप्रदर्शनेन व्यवस्थाप्य, सामान्येनासंलक्ष्यक्रमध्वनिविषये तदतिदेशमुपदिशति—

**'दिशाऽनयाऽनुसर्तव्यो रसादिर्बहुविस्तरः ।**
**मितोऽप्यनन्ततां प्राप्तः काव्यमार्गो यथाश्रयात् ॥१०७॥'**

वहुविस्तरः प्रकारवैपुल्येन महाप्रपञ्चो रसादी रसभावाद्यष्टकम्, अनया पूर्वोक्तया सर्वेषां वस्तूनां विभावादिप्रकारविशेषकल्पनारूपया मिथस्तेषां सङ्करसंसृष्टिविवेचनाऽऽत्मिकया दिशा रीत्या युक्त्या वा अनुसर्तव्य उदाहरणीयः कविभिरिति शेषः। यस्य रसादेराश्रयणमाश्रयो व्यञ्जनं तस्मात्, काव्यमार्गः काव्यं तद्वर्णितविषयो वा, अनन्तप्रत्नकविरत्ननिकरवर्णनाविषयीकृतत्वान्मितो मुष्टिमेयोऽपि, अनन्ततामपरिच्छिन्नतामवर्णितप्रायत्वमिति यावत्, याति प्राप्नोतीत्यर्थः।

रसादिव्यञ्जकत्वसम्बन्ध एव हि प्राग्वर्णितमपि पदार्थं संस्कार इव नवीकरोतीत्युक्त एव भावः।

इस प्रकार अविवक्षितवाच्यत्व, एवं विवक्षितान्यपरवाच्यत्व रूपसे प्रत्येकके द्वैविध्यसे चार प्रकारके प्रधानभूत ध्वनिकाव्यकी अपूर्वताको पूर्वरीत्या उदाहरण प्रदर्शन द्वारा व्यवस्थापित कर अव सामान्यरूपसे असंलक्ष्यक्रमव्यङ्ग्यध्वनि का विषय वतलाते हैं–दिशेति। इसी प्रकार अत्यन्त विस्तृत रसादि का अनुसरण करना चाहिये, जिसके आश्रयण से परिमित काव्यका मार्ग भी आनन्त्य को प्राप्त हो जाता है।

तदभिदधाति—

**बहुविस्तारोऽयं रसभाव-तदाभास-तत्प्रशमनलक्षणो मार्गो यथास्वं विभावानुभावप्रभेदकलनया, यथोक्तं प्राक्, स सर्व एवानया दिशाऽनुसर्तव्यः। यस्य रसादेराश्रयादयं काव्यमार्गः पुरातनैः कविभिः सहस्रसङ्ख्यैरसङ्ख्यैर्वा बहुप्रकारं क्षुण्णत्वान्मितोऽप्यनन्ततामेति।**

तृतीयान्तविभावादिपदं विस्तारवहुत्वोपपादकम्। यथोक्तं प्रागिति पृथगन्वयि।

तदुक्तिश्च—'तस्याङ्गानां प्रभेदा ये प्रभेदाः स्वगताश्च ये।

तेषामानन्त्यमन्योऽन्य-सम्बन्धपरिकल्पने॥' इत्यनेनावगन्तव्या।

वहुप्रकारमिति क्रियाविशेषणम्।

जैसा कि पहले कह चुके हैं–जो रस, भाव, रसाभास, भावाभास, भावप्रशम आदि रूप रसादि मार्ग अपने विभाव, अनुभाव आदि प्रभेदोंके परिगणनसे अत्यन्त विस्तृत हो जाता है, उस सवका उसी प्रकार अनुसरण करना चाहिये, जिस रसादि के आश्रयण करनेसे सहस्रों या असंख्य प्राचीन कवियों द्वारा विविध प्रकारसे क्षुण्ण (मर्दित) होनेसे परिमित काव्यमार्ग भी अनन्तता को प्राप्त हो जाता है।

उक्तमुपपादयति—

**रसभावादीनां हि प्रत्येकं विभावानुभावव्यभिचारिसमाश्रयादपरिमि-**

तत्वम्। तेषां चैकैकप्रभेदापेक्षयाऽपि तावज्जगद्वृत्तमुपनिबध्यमानं सुकविभिस्तदिच्छावशादन्यथास्थितमप्यन्यथैव विवर्तते।

एकैकप्रभेदापेक्षयाऽपि रसादीनां विभावत्वेनानुभावत्वेन व्यभिचारिभावत्वेन वा सुकविभिः, उपनिबध्यमानं प्रतिपाद्यमानं जगतश्चराचरस्य वृत्तं व्यापारः स्वरूपं च, अन्यथाऽन्येन प्रकारेण स्थितमपि, तेषां सुकवीनामिच्छावशात्, अन्यथैव विवर्तते तद्भिन्नप्रकारेणैव व्यापारं स्वरूपं चाविष्करोतीत्यर्थः।

उक्तार्थ का ही उपपादन करते हैं—रसभावादीनामिति। रस, भाव आदिमें से प्रत्येक पदार्थ अपने अपने विभाव, अनुभाव, सञ्चारी भावके आश्रयणसे अपरिमित हो जाता है, उनमेंसे एक एक भेदकी दृष्टिसे भी सुकवियों द्वारा वर्णित संसार-वृत्तान्त वास्तवमें अन्य रूपमें वर्तमान रहते हुए भी उन (कवियों) की इच्छाके अनुसार दूसरे रूपसे ही प्रतीत होने लगता है।

उक्तमेतत्सम्बन्धे स्मारयति—

प्रतिपादितं चैतच्चित्रविचारावसरे।

अप्यर्थकश्चकार एतदन्वयी, तेनैतदपि प्रतिपादितमित्यर्थः। प्रतिपादनं च तृतीयोद्द्योते–'भावानचेतनानपि' इत्यादिना विहितम्।

उक्त विषय का ही स्मरण दिलाते हैं—प्रतिपादितमिति। यह विषय चित्रकाव्यके विचारके अवसर पर 'भावानचेतनानपि चेतनवत्' इत्यादि रूपसे तृतीय उद्द्योतमें कह चुके हैं।

तदर्थे प्राचीनसम्मतिं दर्शयति—

गाथा चात्र कृतैव महाकविना—

अत्रास्मिन्नर्थे। गाथाऽऽर्याकल्पं मात्राच्छन्दः। महाकविना शालिवाहनेन परेण वा।

उक्तविषयमें प्राचीनों की सम्मति भी दिखलाते हैं—गाथेति। इस विषयमें महाकवि शालिवाहन या अन्य किसी कविने गाथा भी रची है।

कविवाणीं वर्णयति—

'अतहट्ठिए वि तहसट्ठिए व्व हिअअम्मि जा णिवेसेइ।
अत्थविसेसे सा जअइ विकडकइगोअरा वाणी॥'

'अतथास्थितानपि तथास्थितानिव हृदये या निवेशयति।
अर्थविशेषान् सा जयति विकटकविगोचरा वाणी॥' इतिच्छाया।

या-अतथास्थितानन्येन केनापि प्रकारेण स्थितानपि 'कामिनीमुखादीनर्थविशेषान्, चमत्कारितया विलक्षणान् पदार्थान् तथास्थितानिव प्रतिभाविशेषोन्मेषवशात् पद्मत्वादिमत इव हृदये कवेः सकलभावकनकपरीक्षानिकषायमाणे मनसि, निवेशयत्याविर्भावयति-अर्थानां विशेषत्वप्राप्तये सहृदयस्फूर्तिविषयीकरोतीति यावत्, सा, विकटा लोकोत्तरवर्णनावैभवेन निरवधीभूतपदार्थसार्थप्रकाशकरचनाकारित्वेनोत्कृष्टाः कवयो गोचरा विषया आश्रया यस्यास्तादृशी वाणी कविगीर्जयति तन्न्यूनगुणकसृष्टिकारि-प्रजापतेरप्युत्कर्षेण वर्तत इत्यर्थः।

इदमेव 'नियतिकृतनियमरहिताम्' इत्यादिना मम्मटः, 'करबदरसदृशमखिलम्' इत्यादिना सुबन्धुश्च निबबन्धतुः।

कविकी वाणी का वर्णन करते हैं--जो (कविवाणी) उस परम रमणीय रूपमें न रहने वाले मुख आदि वस्तुविशेषों को भी उस अलौकिक रमणीय रूपमें रहता हुआ सा हृदयमें बैठा देती है, महाकवियों की वह वाणी सर्वोत्कृष्ट है।

रसादिध्वनिसम्बन्धे कवेः प्रतिभाया गिरश्चानन्त्यप्राप्तिं प्रागुक्तामुपपत्त्या निरूपयितुं कारिकामवतारयति--

**तदित्थं रसभावाद्याश्रयेण काव्यार्थानामानन्त्यं सुप्रतिपादितम्। एतदेवोपपादयितुमिदमुच्यते--**

सुप्रतिपादनं च वृत्तिकृत्कृतमवसेयम्। कारिकाकारेण तु न प्रतिपादितमिति पुनरुच्यते। उच्यत इत्यत्र सङ्ग्रहश्लोकोऽयमिति शेषः। वृत्तिकारेणाव्याख्यातत्वादेवाग्रिमश्लोकस्य सङ्ग्रहश्लोकत्वमवधार्यत इति केचित्।

इस प्रकार रस, भाव आदिके आश्रयणसे काव्य का अर्थ अनन्त हो जाता है, यह विषय अच्छी तरह प्रतिपादित किया गया। अब उक्तार्थ का ही उपपादन करने के लिये आगे कहते हैं--

**'दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात्।**
**सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः॥ १०८॥**

हि निश्चयेन यतो वा दृष्टपूर्वाः पूर्वं दृष्टाः प्रत्यक्षादिप्रमाणैरवधारिताः प्राचीनकविवर्णिताः सर्वेऽपि, अर्थाः, रसस्य रसादेः परिग्रहात् स्वीकाराद् व्यञ्जनादिति यावत्, मधुमासे चैत्रे मासि द्रुमा वृक्षा इव, नवा नूतना इव, आभान्ति प्रतिभासन्त इत्यर्थः।

यथा पूर्वं दृष्टा अपि वृक्षा वसन्तसमये कौसुमसम्पद्विशेषेण नवीना इव भान्ति, तथैव लौकिकप्रमितिगोचराः प्राचीनकविवर्णिता अपि पदार्था व्यज्यमानप्रधानरसा-

दिसम्बन्धमहिम्ना नवा इवाभान्ति । तेन च परिमितानामप्यर्थानां नवनवीभावेनानन्त्यं न दुरुपपादमिति सिद्धम् , काव्यमधुमासयोश्च साम्यं प्रसिद्धमिति सारम् ।

वसन्त ऋतुमें नये २ पल्लव-पुष्पोंसे सुसज्जित होकर वृक्ष जिस प्रकार शोभने लगते हैं, उसी प्रकार काव्यमें रसादि पाकर पूर्वदृष्ट सारे पदार्थ भी नए जैसे परम रमणीय मालूम पड़ने लगते हैं ।

अयं संलक्ष्यक्रमध्वनियोगेनापूर्वत्व उदाहरणीये, प्रथमं शब्दशक्त्युद्भवध्वनिसमाश्रयणेनापूर्वत्वमुदाहर्तुमाख्याति—

**तथा विवक्षितान्यपरवाच्यस्यैव शब्दशक्त्युद्भवानुरणनरूपव्यङ्ग्यप्रकारसमाश्रयेण नवत्वम् ।**

शब्दशक्त्युद्भवध्वनिप्रकारश्चात्र वाक्यप्रकाश इत्युक्तमेव ।

संलक्ष्यक्रम व्यङ्ग्यध्वनिके सम्पर्कजन्य अपूर्वताके उदाहरण प्रसङ्गसे पहले शब्दशक्त्युद्भव ध्वनिसम्पर्कजन्य नवीनताके उदाहरणार्थ कहते हैं—तथा इति । उसी प्रकार विवक्षितान्यपरवाच्यध्वनिके शब्दशक्त्युद्भव रूप संलक्ष्यक्रमव्यङ्ग्य भेदके आश्रयणसे एक अपूर्व नवीनता प्रतीत होने लगती है ।

उदाहरति—

**यथा—'धरणीधारणायाधुना त्वं शेषः' इत्यादौ ।**

नवत्वमित्यनेनान्वयः प्राग्वत् । व्याख्यातमिदं द्वितीयोद्द्योत एव ।

उदाहरण बतलाते हैं—यथेति । पृथिवी को धारण करनेके लिये अब तुम शेष नाग हो, 'धरणीधारणाय'—इस श्लोक की व्याख्या द्वितीय उद्द्योत में कर चुके हैं । वहाँ पर इसका पूरा आशय व्यक्त किया गया है ।

तदर्थकं प्राचीनश्लोकमाह—

**'शेषो हिमगिरिस्त्वं च महान्तो गुरवः स्थिराः ।**
**यदलङ्घितमर्यादाश्चलन्तीं बिभृथ क्षितिम् ॥'इत्यादिषु सत्स्वपि ।**

नवत्वमिति शेषः । चाटुकारो राजानं स्तौति—हे राजन् ! शेषः सहस्रफणः, हिमगिरिर्हिमालयः, त्वं च, महान्तो विपुलाकारा महत्त्ववन्तश्च, गुरवो भूभारसहत्वाद् गौरवभृतः प्रतिष्ठिताश्च, स्थिरा अचला दृढप्रतिज्ञाश्च, तुल्याः स्थ । यद्यस्मात् कारणात् , अलङ्घिताऽतिरस्कृता मर्यादा सीमा लोकस्थितिश्च यैस्तथाभूताः, चलन्तीं कम्पमानामव्यवस्थां च, क्षितिं धरणीं बिभृथ धारयथ पालयथ चेत्यर्थः ।

इह 'बिभ्रते भुवम्' इति पाठः क्वचिद् दृश्यते । क्वचिच्च 'बिभृयाः क्षितिम्' इति;

तत्पाठद्वयमपि पर्यालोचनायां सङ्गतेः पराङ्मुखीभवति। तथा हि आद्ये-आख्यातार्थस्य युष्मदर्थसामानाधिकरण्येन मध्यमपुरुष एवोचितः, न तु प्रथमपुरुषः, तस्य मध्यमोत्तमपुरुषयोरविषय एव विधानाद् युष्मदर्थेतरसामानाधिकरण्य एवोद्भवनात्। प्रकृते युष्मदर्थेतरसामानाधिकरण्येऽपि तत्सामानाधिकरण्यस्याप्यपरिहार्यतया प्रथमपुरुषविधायकसूत्रानुपस्थानम्। सौत्रं परत्वं च परव्यावर्तने हेतुः एतच्च 'अस्मद्युत्तमः' इतिसूत्रस्य विवरणे शब्देन्दुशेखरे सिद्धान्तचन्द्रिकायां च निरूपितम्। अत्रैव—'त्वमेवं सौन्दर्या स च रुचिरतायां परिचितः, कलानां सीमानं परमिह युवामेव भजथः। इत्यादिप्राचीनं पद्यं प्रयुञ्जानयोर्वामनमम्मटयोरपि स्वरसः। द्वितीये तु-मध्यमपुरुषैकवचनविधाने युष्मदर्थमात्रान्वयसम्भवे पुरुषविपरिणामेनान्यत्रान्वय इति कष्टकल्पना। तदङ्गीकारेऽपि लिङर्थविधेयतायाः सर्वत्रानन्वयः, शेषहिमगिरिकर्तृकभूभरणस्य विधेयत्वाभावात्। राज्ञोऽपि प्रशंसायामेव कवेस्तात्पर्यं न त्वाशीर्वितरणे, तस्माल्लिङ्गाऽनौचित्यम्। बहुवचनान्तपाठे तु-चकारसूचितेन क्रियासमुच्चयेन नानुपपत्तिः। 'बिभृध्वे भुवम्' 'बिभृत भुवम्' इति पाठकल्पने तु छन्दोभङ्गप्रसङ्ग इति 'बिभृथ क्षितिम्' इति पाठः कल्पितः।

अत्र यद्यपि द्वयोरपि वाक्ययोरर्थसाम्यम्, तथाऽपि प्रथमवाक्यस्य शेषशब्दशक्त्युद्भवोक्तध्वनियोगेन न द्वितीयवाक्याद् गतार्थता, अपि त्वपूर्वार्थकत्वमेव।

उक्त आशयका ही एक दूसरा प्राचीन श्लोक बतलाते हैं—शेष इति। शेषनाग, हिमालय और आप तीनों ही महान् विशाल आकार वाले तथा महत्त्वशाली एवं गुरु (भूभार सहनक्षम और प्रतिष्ठित) और अचल तथा दृढप्रतिज्ञ हैं, क्योंकि मर्यादा का उल्लंघन न करते हुए चलायमान तथा सामाजिक मर्यादा से च्युत होती हुई पृथिवीका धारण तथा पालन करते हैं। 'शेष' इत्यादि श्लोकोंके रहने पर भी पूर्वोक्त 'धरणीधारणाय'—इत्यादि श्लोक में एक अद्भुत अपूर्वता प्रतीत होती है, क्योंकि इसमें शेषनागके साथ राजा का औपम्यरूप शब्दशक्त्युद्भवव्यङ्ग्य अलंकार ध्वनिके सम्पर्कसे अभिनव चमत्कार आ गया है।

अथ स्वतस्सम्भव्यर्थशक्त्युद्भवध्वनियोगेनापूर्वत्वमुदाहर्तुं वदति—

**तस्यैवार्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यसमाश्रयेण नवत्वम्।**

तस्यैव संलक्ष्यक्रमव्यङ्ग्यध्वनेरेव।

अब स्वतःसम्भवी अर्थशक्त्युद्भवध्वनिके योगसे प्रतीयमान अपूर्वताके प्रतिपादनार्थ कहते हैं—तस्यैवेति। उसी विवक्षितान्यपरवाच्यध्वनिके अर्थशक्त्युद्भव संलक्ष्यक्रमव्यङ्ग्यके आश्रयसे नवीनता प्रतीत होने लगती है।

उदाहरति—

**यथा—'एवंवादिनि देवर्षौ' इत्यादिश्लोकस्य।**

द्वितीयोद्योते व्याख्यातस्य लज्जारूपसंलक्ष्यक्रमव्यभिचारिव्यञ्जकस्य नवत्वमिति सम्बन्धः।

उदाहरण बतलाते हैं—यथेति। जैसे 'एवं वादिनि'—इत्यादि श्लोकमें लज्जारूप अर्थशक्त्युद्भवसंलक्ष्यक्रम व्यङ्ग्य व्यभिचारी भावध्वनिके सम्पर्कसे एक अपूर्व रमणीयता प्रतीत होती है।

प्राचीनं समानार्थकं पद्यं दर्शयति—

**'कृते वरकथाऽऽलापे कुमार्यः पुलकोद्गमैः।**
**सूचयन्ति स्पृहामन्तर्लज्जयाऽवनताननाः।' इत्यादिषु सत्स्वपि।**

नवत्वमिति पूर्वेणान्वयः। वरकथायाः परिणेतृवृत्तान्तस्यालापे संभाषणे प्रस्ताव इति यावत्, कृते गुरुजनैर्विहिते सति लज्जया स्वविवाहचर्चाश्रवणजन्यया ह्रिया, अवनतमधोमुखमाननं यासां तादृश्यः कुमार्यः कन्यकाः पुलकस्य रोमहर्षस्योद्गमैरुदयैः, अन्तर्मनसि वर्तमानां स्पृहां पाणिपीडनसमीहां सूचयन्ति प्रकाशयन्तीत्यर्थः।

अत्र श्लोके स्पृहालज्जयोः शब्दवाच्यत्वेन तथा न चमत्कारिता, यथा पूर्वश्लोके पितृपार्श्वस्थितिपूर्वक-लीलाकमलदलाकलनव्याजकवदननमनलक्षणानुभावमुखेन व्यज्यमानयोरिति ध्वनियोगेन तस्यापूर्वार्थकत्वमवसेयम्।

तत्समानार्थक ही प्राचीन पद्य दर्शाते हैं—कृते वरकथेति। वर की चर्चा होनेके अवसर पर लज्जाके मारे मुखको अवनत करती हुई कुमारियाँ रोमाञ्चोंके उद्गम (खड़े होने) से ही अपनी हार्दिक इच्छाको अभिव्यक्त कर देती हैं। 'कृते वरकथालापे-'इस श्लोकमें लज्जा और स्पृहाके अपने वाचक शब्दोंसे ही वाच्यरूपमें कथित होनेसे उतनी चमत्कारजनकता नहीं प्रतीत होती, जितनी कि 'एवंवादिनि-' श्लोकमें पिताके पासमें रहनेसे लीलाकमलके गिननेके बहानेसे मुखनमनके द्वारा व्यज्यमान पार्वती की लज्जा और स्पृहा चमत्कारजनक प्रतीत होती है।

अथ कविप्रौढोक्तिसिद्धार्थशक्त्युद्भवध्वनिसम्बन्धेनापूर्वत्वमुदाहरति—

**अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य कविप्रौढोक्तिनिर्मितशरीरत्वेन नवत्वम्। यथा—'सज्जेहि सुरहिमासो' इत्यादेः।**

अर्थशक्त्युद्भवध्वनेः कविप्रौढोक्तिनिर्मितशरीरत्वेनोपलक्षितस्य समाश्रयेण 'सज्जेहि' इत्यादेर्वाच्यस्य नवत्वं न तु ध्वनेरेव, तस्य नवत्वसम्पादकत्वात्। अत एव पूर्वो-

दाहरणेषु ध्वनियोगेन वाच्यापूर्वत्वमेव प्रदर्शितम्। ध्वनेरपूर्वत्वं तु सिद्धमेव नाधुनाऽपि साधनीयमेव। किञ्च प्राचीनकविस्पृष्टत्वेन वाच्यस्यैव गतार्थत्वस्य सम्भावनेति तस्यैव नूतनत्वार्थमयं प्रयासोऽपि सङ्गच्छत इति विवेचनीयम्। एतत्पद्यस्य छाया-प्रदर्शनपुरस्सरं विवरणन्तु प्रागेव विहितम्।

अब कविप्रौढोक्तिसिद्ध अर्थशक्त्युद्भवध्वनिके सम्बन्धसे प्रतीयमान अपूर्वताका उदाहरण बतलाते हैं—अर्थशक्त्युद्भवेति। कविप्रौढोक्तिसिद्ध अर्थशक्त्युद्भव संलक्ष्यक्रमव्यङ्ग्यध्वनिके सम्पर्कसे एक विलक्षण चमत्कारिता प्रतीत होने लगती है, जैसे 'सज्जयति सुरभिमासो'–इत्यादिमें कविप्रौढोक्तिसिद्ध अचेतन वसन्त-कर्तृक कुसुमशर-निर्माणादिसे प्रतीयमान मदनविजृम्भण रूप वस्तुव्यङ्ग्यके साम्राज्य-से सहृदयोंको अत्यन्त रमणीयता प्रतीत होती है।

तदर्थकं प्राचीनश्लोकमाह—

**'सुरभिसमये प्रवृत्ते सहसा प्रादुर्भवन्ति रमणीयाः।**
**रागवतामुत्कलिकाः सहैव सहकारकलिकाभिः॥'**
**इत्यादिषु सत्स्वप्यपूर्वत्वमेव।**

सुरभिसमये वसन्तौ प्रवृत्ते प्रारब्धे सति, सहकारस्य चूतस्य कलिकाभिर्मञ्जरीभिः सहैव सहसा शीघ्रं रागवतां प्रणयिजनानामुत्कलिका उत्कण्ठाः, रमणीयाः स्पृहणीयाः प्रादुर्भवन्त्युत्पद्यन्त इत्यर्थः।

चूतमञ्जरीप्रभृतिसमुद्गमेन नितरामुद्दीपको वसन्तसमय इति सारम्।

तथा च–'वसन्ते पुष्पसमयः सुरभिः' इत्यमरः। 'चिन्ता तु स्मृतिराध्यानं स्मरणं सस्पृहे पुनः। उत्कण्ठोत्कलिके तस्मिन्नभिध्या तूभयोरपि॥' इति शब्दार्णवश्च।

इह सहकारकलिकाप्रादुर्भावजन्यत्वेऽपि रागवदुत्कलिकानां प्रादुर्भावस्य समकालिकत्ववर्णनहेतुकातिशयोक्तिमूलकत्वात् सहोक्तिरलङ्कारः, किन्तु तदपेक्षया 'सज्जेहि' इत्यादिप्रतिपाद्यस्य प्राधान्ये व्यङ्ग्यपदवीसमारोहक–कविप्रौढोक्तिसिद्ध–वसन्तधर्मिककामोद्दीपकत्वातिशयप्रकाशकत्वेन नवीनत्वम्, तादृशध्वनिसम्बन्धमाहात्म्यात्।

उक्ताशयका प्राचीन श्लोक बतलाते हैं—'सुरभिसमये' इति। 'वसन्त ऋतुके आनेपर आम्र-मञ्जरियोंके साथ ही प्रणयी जनों की अत्यन्त स्पृहणीय उत्कण्ठायें सहसा प्रकट होने लगती हैं, इत्यादि श्लोकमें यद्यपि सहकार-मञ्जरीके प्रादुर्भावसे जनित होने पर भी रागियों की उत्कण्ठाप्रादुर्भावके समानकालिकत्ववर्णनहेतुक-अतिशयोक्तिमूलक सहोक्ति अलङ्कार प्रतीत होता है तथापि उसकी अपेक्षा पूर्व श्लोकमें वसन्त ऋतुके कामोद्दीपकत्वातिशयके व्यञ्जन द्वारा अतिशय रमणीयता

प्रतीत होती है। क्योंकि वसन्त बाण बनाने वाला है, एवं कामदेव शर चलाने-वाला योद्धा है, आम्रमञ्जरी आदि बाण हैं और युवतियाँ उनके लक्ष्य हैं, यह अर्थ केवल कविप्रौढोक्ति मात्रसे निष्पन्न है, लोक व्यवहारमें इस प्रकार की कोई वस्तु प्रसिद्ध नहीं है इसीसे वसन्तमें मदनोन्मथनका प्रारम्भ और उत्तरोत्तर उस (मदन) का विकास रूप व्यङ्ग्यार्थके सम्पर्कसे अलौकिक चमत्कार प्रतीत होता है।

अथ कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नार्थशक्त्युद्भवध्वनिसम्बन्धेनापूर्वत्वमुदाहर्तुमाख्याति—

**अर्थशक्त्युद्भवानुरणनरूपव्यङ्ग्यस्य कविनिबद्धवक्तृप्रौढोक्तिनिष्पन्नशरीरत्वे सति नवत्वम्।**

अत्राप्यनुपदोक्तरीत्यैव सन्दर्भसङ्गतयेऽन्वयबोधो बोधनीयः।

अब कविनिबद्धजन प्रौढोक्तिनिष्पन्न अर्थशक्त्युद्भव ध्वनिके सम्बन्धसे प्रतीयमान अपूर्वताके उदाहरणार्थ उपक्रम करते हैं—अर्थशक्त्युद्भवेति। अर्थशक्त्युद्भव संलक्ष्यक्रमव्यङ्ग्यके कविनिबद्ध वक्तृप्रौढोक्तिसिद्ध रूप होनेपर एक अपूर्व नवीनता की प्रतीति होने लगती है।

उदाहरति—

यथा—'साअर विइण्णजोव्वणहत्थालम्बं समुण्णमन्ते हिं।
अब्भुट्ठाणंविअ मम्महस्स दिण्णं तुह थणेहिं॥'

अस्य हि गाथाऽर्थस्य।

छायाप्रदर्शनपुरस्सरं व्यख्यातेयं गाथा प्राक्।

उदाहरण बतलाते हैं—साअर इति। आदरपूर्वक आगे बढ़कर सहारा देते हुए यौवनके सहारे उठनेवाले तुम्हारे दोनों स्तन उठकर कामदेवको स्वागत करनेके लिये अभ्युत्थान सा प्रदान कर रहे हैं; अर्थात् यौवनके कारण उन्नत होते हुए तुम्हारे स्थूल कुचद्वय 'मानो उठकर अभ्युत्थानके द्वारा कामदेवका स्वागत कर रहे हों' इस प्रकार कविकल्पित कामुक जन प्रौढोक्ति निष्पन्न यौवन हेतुक उन्नतिशाली स्तनद्वयसे व्यज्यमान तादृश उत्प्रेक्षण रूप व्यङ्ग्यार्थके सम्पर्कसे लोकोत्तर आह्लाद प्रतीत होता है।

तत्समानार्थकं प्राचीनं पद्यं प्रकटयति—

'उद्दित्तरकआभोआ जह जह थणआ विणन्ति बालाणम्।
तह तह लद्धावासो व्व मम्महो हिअअमाविसइ॥'

एतद्गाथाऽर्थे न पौनरुक्त्यम्।

'उदित्वरकचाभोगा यथा यथा स्तनका वर्धन्ते बालानाम् ।
तथा तथा लब्धावास इव मन्मथो हृदयमाविशति ॥' इतिच्छाया।

गाथेयमस्फुटत्वेन परित्यक्ताऽप्यन्यैः कथंचिद् व्याख्यायते पाठकल्पनेन। उदित्वरः प्रसमरः कचानां केशानामाभोगः पूर्णता विस्तारो येषु तादृशा व्यालम्बमानकचाच्छन्नाः, बालानामुद्यन्मात्रयौवनानाम्, अल्पा ईषदाविर्भूताः स्तनाः कुचा एव लब्धः प्राप्त आवास अवकाश आश्रयो येन तादृश इव मन्मथस्तासां हृदयमाविशतीत्यर्थः।

अत्र यौवनारम्भे बालानां मदनोद्रेको यद्यप्युत्प्रेक्षाभङ्गीपरिष्कृतवाच्यमुखेन द्वितीयश्लोकेनापि व्यज्यते, किन्तु प्रथमश्लोकेन कविनिबद्धवक्तृप्रौढोक्तिसिद्धार्थस्य व्यञ्जकतया चमत्कारातिरेको वितीर्यत इति नवत्वं तदर्थस्य तस्य ज्ञेयम्।

तत्समानार्थक ही प्राचीन श्लोक बतलाते हैं—उदित्तरेति केशपाशसे अत्यन्त शोभायमान बालिकाओंके कुच ज्यों ज्यों बढ़ते जाते हैं, त्यों त्यों अवसर पाकर कामदेव हृदयमें प्रविष्ट होते जाते हैं। इस द्वितीय प्राचीन श्लोकके अर्थसे पूर्वोक्त 'सावर–' इस श्लोकके अर्थमें पुनरुक्ति नहीं होती, क्योंकि द्वितीय श्लोकमें वाच्योत्प्रेक्षा द्वारा यौवनारम्भमें बालिकाओंके हृदयमें कामदेवके प्रवेशके वर्णन से यद्यपि यौवनारम्भमें उन (बालिकाओं) का मदनोद्रेक अभिव्यञ्जित होता है तथापि प्रथम श्लोकमें वही अर्थ कवि निबद्ध जन प्रौढोक्ति निष्पन्न तादृश विलक्षण व्यङ्ग्यार्थके सम्पर्कसे अतिशय चमत्कार जनक प्रतीत होता है।

पर्यवसाने दार्ढ्याय पुनरुदाहरति—

यथा वा—'वाणिअअ! हत्थिदन्ता' इत्यादिगाथाऽर्थस्य।

प्रागवदग्रेसरेणानालीढतैवेत्यनेन सम्बन्धः।

अन्तमें दार्ढ्यके लिये दूसरा उदाहरण बतलाते हैं—वाणिअअ इति। हे वणिक्! जब तक चञ्चल घुँघरीले बालोंसे अलंकृत मुखवाली पुत्रवधू घरमें भ्रमण करती है तब तक हमारे यहाँ हाथी दांत और व्याघ्रचर्म कहां से आए। इस श्लोकमें 'लुलितालकमुखी' यह पद स्वतः संभवी अर्थनिष्ठ शक्तिसे व्याधवधूकी सुरत क्रीडासक्तिको सूचित करता हुआ उस (वधू) के पति व्याधकी निरन्तर रतिसंभोगमें आसक्त रहनेसे उत्पन्न दुर्बलता (क्षीणता) को अभिव्यक्त करता है।

समानार्थकं प्राचीनं पद्यं निर्दिशति—

'करिणीवेहव्वअरो मह पुत्तो एक्ककाण्डविणिवाई।
हअसोह्लाए तह कहो जह कण्डकरण्डअं वहइ ॥'

'करिणीवैधव्यकरो मम पुत्र एककाण्डविनिपाती ।
हतस्नुषया तथाकृतो यथा काण्डकरण्डकं वहति ॥' इतिच्छाया ।

तव गृहे हस्तिदन्तादि विक्रेयमस्ति ? इति पृष्टवन्तं वणिजं प्रति वर्षीयसो व्याधपितुर्वचनमिदम् । एककाण्डविनिपाती—एकमात्रवाणप्रेरणशीलः, तावतैव लक्ष्यवेधसम्भवात्, करिण्या हस्तिन्या वैधव्यस्य विधवात्वस्य करः सम्पादको हस्तिघाती (अपि) मम पुत्रः, हतया जीविकाप्रतिबन्धकारकत्वाद् दुष्टया, स्नुषया मत्पुत्रवध्वा, तथा-तेन प्रकारेण सन्ततसन्तन्यमानसुरतक्षामतया स्वविचित्रविभ्रम-निरन्तरविलोकनैकव्यसनितया वा स्वेतरसकलविषयोदासीनः, यथा काण्डानां बाणानां करण्डकं वंशादिनिर्मितपात्ररूपं तूणीरविशेषं वहति—अन्यमनस्कतया प्रागवदेकबाणेनैव लक्ष्यवेधस्यासम्पत्तेर्बहूनां बाणानामपेक्षणात् तदाधारपात्रमेव धारयति, न तु बाण-मात्रम्, न वा लक्ष्यं विध्यति, तेन कुतो मद्गृहे हस्तिदन्तादीनां सम्भव इत्यर्थः ।

तथा च—'काण्डः स्तम्बे तरुस्कन्धे बाणेऽवसरनीरयोः' इति मेदिनी । 'करण्डो वंशादिकृतभाण्डविशेषः' इत्यमरविवरणे महेश्वरश्च ।

तत्समानार्थक एक प्राचीन श्लोक का निर्देश करते हैं—करिणीति । केवल एक ही बाणके प्रक्षेपसे मतवाले हाथियोंको मारकर हथिनियोंको विधवा करनेवाले हमारे पुत्रको उस अभागिनी पुत्रवधूने निरन्तर रतिसंभोग द्वारा इतना क्षीणवीर्य ( दुर्बल ) कर दिया कि अब वह सारा तूणीर ( तरकस ) पीठ पर लादे घूमता है । अर्थात् जो पहले एक ही बाणसे दिग्गज हाथीको मार देता था, वही आज अत्यन्त रतिसंभोगसे नितान्त क्षीणताके कारण एक बाणसे भी मारनेमें असमर्थ होकर बाण समूहके पात्रको ही लादे फिरता है न कि केवल बाण मात्रको धारण करता न वा लक्ष्यको ही बींधता है इसलिये हमारे घरमें हाथी दांतोंका किस प्रकार सम्भव हो सकता है ।

सङ्गमयति—

**एवमादिषु सत्स्वप्यनालीढतैव ।**

एवमादिषु समानार्थकपद्येषु सत्स्वपि, 'वाणिअअ' इत्यादिगाथाऽर्थस्य-अना-लीढतैवागतार्थतैव ध्वनिविशेषसम्बन्धेन तदर्थस्य नवीकरणात् । तथा हि—तत्र लुलितालकमुखीति स्नुषाविशेषणमपूर्वं वस्तुप्राधान्येन व्यनक्तीति कविनिबद्धवक्तृ-प्रौढोक्तिनिष्पन्नार्थशक्त्युद्भवध्वनियोगेनापूर्वत्वं सम्पद्यते ।

उक्तार्थका संगमन करते हैं—एवमादिषु इति । 'वणिजक'—इस श्लोकके समाना-

र्थक 'करिणी–' इत्यादि श्लोकके रहते हुए भी प्रथम श्लोकमें कविनिवद्ध वक्तृ-प्रौढोक्ति सिद्ध व्यङ्ग्यके प्रभावसे अत्यन्त चमत्कारिता प्रतीत होती है।

अथ यथा नानाविधानां प्रधानव्यङ्ग्यानां सम्बन्धेन समानवाच्यकत्वेऽपि काव्यानामपूर्वत्वं भवति, तथैवोच्चावचानां व्यञ्जकानां सम्बन्धेनापि सम्भवतीति स्फुटं तदप्रतिपादनान्न्यूनतां परैरापाद्यमानां परिहरन्नुपसंहरति—

**यथा व्यङ्ग्यभेदसमाश्रयेण ध्वनेः काव्यार्थानां नवत्वमुपपद्यते, तथा व्यञ्जकभेदसमाश्रयेणापि, तत्तु ग्रन्थविस्तरभयान्न लिख्यते, स्वयमेव सहृदयैरूह्यम्।**

ध्वनेः सम्बन्धिनां काव्यप्रतिपाद्यानामर्थानां नवत्वमिति, यद्वा—ध्वनेर्व्यङ्ग्यभेदसमाश्रयेण काव्यार्थानां नवत्वमिति योजना।

तृतीयोद्द्योते प्रदर्शितानां व्यञ्जकप्रकाराणां समाश्रयेणापि काव्यार्थानां नवत्वं भवत्येव, किन्तु तेषामत्रोपादाने ग्रन्थविस्तरः स्यादिति–तत एव स्वयं सहृदयैस्तदूहः कर्तव्यः, न तु तदप्रतिपादनादिह न्यूनता शङ्कनीयेति सारम्।

सन्दर्भेऽस्मिन् क्वचित् काव्यार्थानां नवत्वं, क्वचित् काव्यस्य चेति प्रतिपादनादसङ्गतिर्न शङ्कनीया, ध्वनियोगेन साक्षात् काव्यार्थानां, तद्द्वारा तु काव्यस्य नवत्वमित्यारम्भ एव प्रतिपादितत्वात्।

जिस प्रकार व्यङ्ग्य विशेषके सम्पर्कसे अपूर्व रमणीयता प्रतीत होने लगती है, उसी प्रकार व्यञ्जक विशेष के सम्पर्कसे भी अपूर्वता हो जाती है इस वातको उपसंहार द्वारा संक्षिप्त करते हैं—यथेति। जैसे ध्वनिके व्यङ्ग्य भेदके आश्रयणसे काव्यार्थोंमें नवीनता आजाती है वैसे ही व्यञ्जक भेदके आश्रयणसे भी नवीनता हो जाती है, ग्रन्थविस्तरके भयसे उस विषयको नहीं लिख रहे हैं, पाठकगण उसको स्वयं ऊहापोह करलें।

प्रागुक्तमपि रसादीनां व्यङ्ग्यानां प्राधान्यं मुख्योद्देश्यत्वं च दार्ढ्याय पुनरुपदिशन् पौनरुक्त्यं च परिहरन् कारिकामवतारयति—

**अत्र च पुनःपुनरुक्तमपि सारतयेदमुच्यते—**

अत्रास्मिन् प्रवन्धे। पुनःपुनरादित एव। सारतैव पौनरुक्त्यपरिहारहेतुः।

व्यङ्ग्यरसादि पदार्थोंके प्राधान्य एवं काव्यके मुख्य उद्देश्यत्वको पहले बतला चुकने पर भी दार्ढ्यके लिये पुनः प्रतिपादनार्थ भूमिका रचते हैं—अत्र चेति। इस काव्य प्रवन्धमें रसादि व्यङ्ग्य पदार्थों के वार वार कहे हुए होने पर भी काव्य सारभूत होनेसे फिर आगे उसीका प्रतिपादन करते हैं।

**'व्यङ्ग्यव्यञ्जकभावेऽस्मिन् विविधे सम्भवत्यपि ।**
**रसादिमय एकस्मिन् कविः स्यादवधानवान् ॥ १०९ ॥'**

अस्मिन् काव्यार्थानामानन्त्यस्य हेतावुक्ते व्यङ्ग्यव्यञ्जकभावे विविधे दर्शितदिशा व्यङ्ग्यभेदेन व्यञ्जकभेदेन चानेकप्रकारके सम्भवत्यपि, एकस्मिन्नभीष्टसम्पादकतया प्रधानतमे रसादिमये रसादिरूपे तत्प्रचुरे व्यङ्ग्यव्यञ्जकभावे वा, कविः, अवधानवान्-अवहितस्तद्विषयकप्रयत्नवानिति यावत्, स्यादित्यर्थः ।

काव्येन रसादिप्रकाशनमेव कवेर्मुख्योद्देश्यमिति सारम् ।

इस व्यङ्ग्य-व्यञ्जकभावके विविध प्रकार सम्भव होनेपर भी कविको केवल एक रसादिमय व्यङ्ग्य भेदमें ही विशेष ध्यान देना चाहिये, अर्थात् काव्यसे रसादिका प्रकाशन करना ही कविका प्रधान उद्देश्य होना चाहिये ।

तदाह—

**अस्मिन् अर्थानन्त्यहेतौ व्यङ्ग्यव्यञ्जकभावे विचित्रे सम्भवत्यपि, कविरपूर्वलाभार्थे रसादिमय एकस्मिन् व्यङ्ग्यव्यञ्जकभावे यत्नादवदधीत ।**

अपूर्वलाभः काव्यार्थानां चमत्कारप्रकर्षावाप्तिरर्थः प्रयोजनं यस्य, तादृशे । तथा च—'एकोऽन्यार्थे प्रधाने च' इति विश्वः ।

उक्त कारिकाशयको ही वृत्तिकार स्फुट करते हैं—अस्मिन्निति । अर्थोंके आनन्त्यके कारण इस व्यङ्ग्य-व्यञ्जकभावके नाना प्रकार सम्भव होने पर भी एक अपूर्व ( अलौकिक ) चमत्कारजनक काव्यार्थकी सिद्धिके लिये कवि महानुभावोंको केवल एक रसादिमय व्यङ्ग्यव्यञ्जक भावमें विशेष यत्नपूर्वक ध्यान देना चाहिये ।

उपपादयति—

**रसभावतदाभासरूपे हि व्यङ्ग्ये, तद्व्यञ्जकेषु च यथामति निर्दिष्टेषु वर्णपदवाक्यरचनाप्रबन्धेष्ववहितमनसः कवेः सर्वमपूर्वं काव्यं सम्पद्यते ।**

रसादिरूपव्यङ्ग्य— वर्णपदादिरूपतद्व्यञ्जकप्रविवेकपूर्वकसन्निवेशकुशलस्यैव कवेः काव्यमुत्कृष्टं भवति, नान्यस्य, तस्मात्तत्र यतनीयमिति निर्गलितम् ।

'यथामति' इति पृथक् पाठः । अन्यथा 'यथानिर्दिष्टम्' इत्येव स्याद्, अव्ययीभावे नपुंसकैकवचनान्तत्वयोर्दुर्वारत्वात् । सम्पद्यत इत्यनेन कारणान्तरानपेक्षय तदवधानस्यापूर्वकाव्यजनने स्वातन्त्र्यमव्यभिचारित्वं च सूच्यते ।

उक्त विषयका ही उपपादन करते हैं—रसभाव इति । क्योंकि रस, भाव, रसाभास, भावाभास रूप व्यङ्ग्य और उसके व्यञ्जक पूर्वोक्त वर्ण, पद, वाक्य,

रचना तथा प्रबन्धात्मक काव्यमें अत्यन्त सावधानपूर्वक उद्यम (रचनात्मक कार्य) करनेवाले कविका सारा ही काव्य एक अपूर्व रमणीय बन जाता है।

उदाहरणप्रदर्शनेनोक्तमर्थं द्रढयति—

**तथा च—रामायणमहाभारतादिषु सङ्ग्रामादयः पुनःपुनरभिहिता अपि नवनवाः प्रकाशन्ते।**

नवनवा अत्यपूर्वाः। उक्तपूर्वाणामपि समरादिवृत्तान्तानामपूर्वतयाभाने ध्वनि-सम्बन्ध एव मूलमित्याकलनीयम्।

उदाहरण प्रदर्शनपूर्वक उक्तार्थको दृढ़ करते हैं—तथा चेति। इसीलिये रामायण, महाभारत आदि काव्यप्रबन्धोंमें युद्ध आदिके अनेक बार वर्णन होने पर भी सभी जगह नए नएसे पदार्थ प्रतीत होते हैं, अर्थात् बहुत बार उक्त होने पर भी संग्रामादि वृत्तान्तोंके अत्यन्त अपूर्व रूपसे भान होनेमें ध्वनिका सम्पर्क ही मूल कारण है।

ननु रामायणादिप्रबन्धेषु बहूनां रसानां सत्त्वमतिरोहितमेवेत्यनियतानेकसम्बन्धेन कथमर्थानामपूर्वत्वमित्याक्षेपे वदति—

**प्रबन्धे चाङ्गीरस एक एवोपनिबध्यमानोऽर्थविशेषलाभं छायाऽतिशयं च पुष्णाति।**

चस्त्वर्थे। अर्थविशेषपोषणं च छायाऽऽधिक्यपोषणद्वारकम्।

प्रबन्धेषु बहुरससद्भावेऽपि कस्यचिदेकस्यैव प्राधान्यम्, इतरेषान्त्वङ्गत्वमिति प्रधानस्यैवार्थविशेषच्छायाऽतिशयपोषकता नासङ्गतेत्याकूतम्।

रामायणादि प्रबन्धोंमें स्थल स्थलपर प्रतीयमान अनेक रसोंके अस्तित्वका अपलाप नहीं किया जा सकता, इसलिये किसी एक रसके नियत सम्बन्ध प्रतीत न होनेसे किस प्रकार पुनरुक्त पदार्थोंमें अपूर्वता हो सकती है? इस आक्षेपका समाधान करते हैं—प्रबन्ध इति। प्रबन्धात्मक काव्यमें एक ही प्रधान रस कवि द्वारा विलक्षण ढङ्गसे उपनिबद्ध होकर अर्थ विशेषकी सिद्धि तथा सौन्दर्यातिशयकी पुष्टिका सम्पादन करता है, अर्थात् प्रबन्धोंमें आनुषङ्गिक (अप्रधान) रूपसे अनेक रसोंके जगह जगहपर होनेपर भी किसी एक ही रस प्रधान रूपसे रहता है, इसलिये उसी (प्रधान रस) में अर्थ विशेषकी साधकता तथा सौन्दर्यातिशयकी पोषकता होती है।

प्रबन्धविशेषोल्लेखेनोक्तमर्थमुदाहरन् समर्थयति—

**कस्मिन्निवेति चेत्, यथा रामायणे, यथा वा महाभारते।**

कस्मिन् प्रबन्धे को रस इवेति योजना।

प्रवन्ध विशेपका नामोल्लेख कर उदाहरण प्रदर्शन द्वारा समर्थन करते हैं—कस्मिन्निति। किस प्रवन्ध में कौन सा रस अर्थ विशेष आदि को पुष्ट करता है? यह पूछो तो, उसका यह उत्तर है कि जैसे रामायणमें अथवा महाभारतमें एक ही प्रधान रस अर्थविशेष के पोषण द्वारा चमत्कार विशेष जनक होता है।

उक्तप्रवन्धद्वयमध्ये कुत्र को रसः प्रधानमिति जिज्ञासायां रामायणे करुणस्य प्राधान्यमुक्त्वोपपादयति—

**रामायणे हि करुणो रसः स्वयमादिकविनाऽऽसूत्रितः—'शोकः श्लोकत्वमागतः' इत्येवंवादिना। निर्व्यूढश्च स एव सीताऽत्यन्तवियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता।**

'क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः' इत्येवमादौ रामायणप्रारम्भे वादिना आदिकविना वाल्मीकिना, आसूत्रितः सूक्सूत्रन्यायेन सङ्क्षेपेणोपक्षिप्तः, सीताया अत्यन्तो निरवसानो यो वियोगस्तत्पर्यन्तमेव स्वप्रबन्धं रामायणम्, उपरचयता निर्मिमाणेन, करुणो रसो निर्व्यूढः समाप्ति यावन्नीतश्च यतः, ततस्तत्र करुणस्यैव प्राधान्यमित्यर्थः।

इदमुक्तं भवति—रामायणप्रवन्धप्रधानव्यङ्ग्यः करुणरसः, यत आदौ क्रौञ्चवधजन्यक्रौञ्च्याक्रन्दप्रभवकरुणस्थायिशोकप्रकाशकवृत्तान्तेन प्रवन्धस्यारम्भः, अन्ते तद्व्यञ्जकसीतापातालप्रवेशवृत्तान्तेन विरामश्च कविना कृतः। मुखनिर्वहणसन्ध्योर्जागरूकतया करुणस्य प्राधान्ये वीरादीनां च प्रासङ्गिकत्वेनाङ्गत्वे न कस्यचिद् विप्रतिपत्तिः। तथा चाङ्गरसोपस्कृतः प्रधानं करुणोऽत्र प्रवन्धसुषमाप्रकर्षं जनयतीत्युत्तानमेव।

इदं पुनरिह चिन्त्यम्—'शोकः श्लोकत्वमागतः' इत्येवंवादिता ध्वनिकारस्यैव, न त्वादिकवेः। न वाऽस्य रामायणघटकत्वम्। तथा च कथमुपपद्यतामेतदुक्तिः? शोकव्यञ्जकतयैतत्सदृशम्—'मा निषाद।' इत्यादिश्लोकमादायेति चेत्, तर्हि लक्षणैव विलक्षणापत्तिः।

उक्त प्रवन्धमें ही रसविशेपके नामका उल्लेखकर प्राधान्य वतलाते हैं—रामायण इति। रामायणमें आदि कवि महर्षि वाल्मीकिने 'क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः' इस प्रकार संक्षेपसे प्रतिपादन करते हुए स्वयं ही करुण रसका प्राधान्य सूचित किया है और वैदेही (जानकी) के अत्यन्त विरह पर्यन्त ही काव्यकी रचना करके उस (करुण रस) को निभाया भी है। इसलिये उस (रामायण) में करुण रसका ही प्राधान्य प्रतीत होता है, अर्थात् रामायण काव्यका प्रधान

व्यङ्ग्यभूत करुण रस ही है, क्योंकि आदिमें क्रौञ्चपक्षीके वधजन्य क्रौञ्चीके आक्रन्दनसे उत्पन्न करुणरसके स्थायी भाव शोकके प्रकाशक वृत्तान्तसे काव्यका आरम्भ हुआ है और अन्तमें करुणरसके ही व्यञ्जक सीताके पाताल प्रवेशके वृत्तान्तसे कविने समाप्त भी किया है, इसलिये प्रस्तुत मुख सन्धि और निर्वहण सन्धिके द्वारा करुणके प्राधान्य और वीरादिरसोंके प्रासङ्गिक होनेसे अप्राधान्य माननेमें किसीका भी मतभेद न होगा, अतएव वीरादि अप्रधानरसोंसे उपस्कृत प्रधानरूप करुणरस प्रबन्धकी अतिशय सुषमाको बढ़ाता है, यह सिद्ध हुआ।

अथ क्रमप्राप्तं महाभारतेऽपि प्रधानतया शान्तं रसं व्यवस्थापयति—

**महाभारतेऽपि शास्त्रकाव्यरूपच्छायाऽन्वयिनि, वृष्णिपाण्डव-विरसावसानवैमनस्यदायिनीं समाप्तिमुपनिबध्नता महामुनिना वैराग्यजनन-तात्पर्यं प्राधान्येन स्वप्रबन्धस्य दर्शयता मोक्षलक्षणः पुरुषार्थः, शान्तो रसश्च मुख्यतया विवक्षाविषयत्वेन सूचितः।**

शास्त्राणि पातञ्जलादीनि, काव्यानि रामायणादीनि, तेषां यद्रूपं स्वलक्षण आत्मा, तस्य या छाया प्रतिबिम्बं सुषमा वा, तामन्वेतुमनुसर्तुं शीलमस्य, तादृशे शास्त्रवत्तत्त्वनिर्णायके, काव्यवच्चमत्कारकारके। वृष्णयो यादवाः, पाण्डवा युधिष्ठिरादयः, तेषां विरसेन तुच्छेनावसानेन यादवानां परस्परयुद्धेन, पाण्डवानां महापथप्रस्थानेन च विनाशेन, यद् वैमनस्यं 'तेषामेव यदीदृशः परिणामः, तर्हि का कथाऽन्येषाम्?' इति सकलसांसारिकपदार्थभङ्गुरत्वग्रहेण वैराग्यं, तद्दातुमुत्पादयितुं शीलमस्यास्तादृशीं वैराग्यजननीं समाप्तिं ग्रन्थावसानमुपनिबध्नता रचयता, महामुनिना कृष्णद्वैपायनेन। स्वप्रबन्धस्य महाभारतस्य वैराग्यजनने तात्पर्यं दर्शयता, मोक्षो मुक्तिरेव लक्षणं स्वरूपं यस्य सः। पुरुषाणामर्थः परमप्रयोजनम्। मुख्यतया सर्वप्राधान्येन।

अयं भावः—महाभारते महर्षिणा व्यासेन सहृदयानामामोदाय शान्तो रसः, मुमुक्षूणां सन्तोषणाय मोक्षः पुरुषार्थश्च प्राधान्येन प्रकाशितः। अत एव तेन भारतान्ते यदु-कुरुकुलावसानं वर्णितम्। तेन च शरीरिणां सर्वेषामेषैव परिणतिरिति संसारालम्प्रत्ययोत्पादनात्, तृष्णाक्षयजन्यसुखविशेषात्मकशमस्थायिकः शान्तरसतत्तादात्म्याध्यासेन तु पार्यन्तिकस्थितिशालितया भङ्गुरत्वाभावेन च प्रधानमाशंसा, विषयत्वेन मोक्षरूपः पुरुषार्थश्च प्रकाशितः।

यद्यपि—'धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ!।
यदिहास्ति तदन्यत्र, यन्नेहास्ति न तत् क्वचित्॥' इत्युक्त्या पुरुषार्थ-

चतुष्टयप्रकाशकताऽप्यस्य निगदिता, किन्तु तत्रापि प्राधान्येन मोक्षप्रकाशनमेवाभिप्रेतमिति नैवासामञ्जस्यम्।

क्रम प्राप्त महाभारतमें भी शान्तरस की प्रधानता बतलाते हैं—महाभारतेऽपीति। 'शास्त्र और काव्य रूप दोनों की छायासे युक्त महाभारत प्रबन्धमें भी यदुवंशियों (यादवों) और पाण्डवोंके अत्यन्त वैराग्य जनक विनाश (यादवोंके परस्पर युद्धसे और पाण्डवोंके महापथ (मृत्युपथ) प्रस्थानसे उत्पन्न विनाश) के कारण नितान्त वैमनस्य प्रतिपादक समाप्ति की रचनाकर (अर्थात् जब उन लोगों की ही ऐसी दुर्दशा भुगतनी पड़ी तब दूसरों की बात ही क्या? इस प्रकार सकल सांसारिक पदार्थोंको क्षणभङ्गुर बतलाते हुए वैराग्य सूचक ग्रन्थ की समाप्तिकर) महामुनि व्यासने अपने काव्य (महाभारत) के वैराग्योत्पादन रूप तात्पर्यको प्रधान रूपसे प्रतिपादित करते हुए मोक्षरूप परमपुरुषार्थ तथा शान्तरस ही मुख्यतया इस (महाभारत) का प्रधान विषय है यह सूचित किया है।

उक्तार्थे प्राचीनसम्मतिमपि दर्शयति—

**एतच्चांशेन विवृतमेवान्यैर्व्याख्याविधातृभिः।**

एतद् भारतस्य प्राधान्येन शान्तरस-मोक्षयोर्व्यञ्जकत्वम्। अंशेन, न तु साकल्येन। व्याख्या भारस्य नीलकण्ठादिप्रणीता, ध्वन्यालोकस्यैव वा चन्द्रिकानाम्नी।

उक्तार्थ विषयमें ही प्राचीनोंकी सम्मति भी बतलाते हैं—एतच्चेति। दूसरे व्याख्याकारोंने भी किसी अंशमें इसकी यही व्याख्याकी है।

स्वयं व्यासस्यापि सम्मतिमत्र प्रकटयति—

**स्वयं चोद्गीर्णं तेनोदीर्णमहामोहमग्नमुज्जिहीर्षता लोकमतिविमलज्ञानालोकदायिना लोकनाथेन—**

उदीर्णे कृतसत्त्वरजोऽभिभवे, महति दृढबन्धप्रयोजके, मोहेऽज्ञाने तमःपरिणामे मग्नं लोकम्, उज्जिहीर्षतोद्धर्तुमिच्छता। अतिविमलस्य तत्तमस्तिरोधायकस्य, ज्ञानालोकस्य तत्वज्ञानप्रकाशस्य, दायिना सम्पादकेन, लोकानां नाथेन सदुपदेशकत्वाद् भगवदंशत्वाद्वा स्वामिना। तेन व्यासेन च, स्वयम् उद्गीर्णमुक्तम्। अग्रिमं कथयतेत्यन्तमपि तद्विशेषणमेव।

स्वयं व्यासकी भी सम्मति बतलाते हैं—स्वयमिति। उमड़ते हुए घोर अज्ञानान्धकारमें निमग्न संसारका उद्धार करनेकी इच्छासे विशुद्ध ज्ञानरूप प्रकाशको प्रदान करनेवाले जगदुद्धारक व्यासजीने भी स्वयं निम्न प्रकार कहा है:—

'यथा यथा विपर्येति लोकतन्त्रमसारवत्।
तथा तथा विरागोऽत्र जायते नात्र संशयः॥

इत्यादिबहुशः कथयता ।

लोकतन्त्रे मोक्षेतरपुरुषार्थ-तदुपायरूपं लौकिकपदार्थपटलम्, असारवत् स्वप्नावस्थाऽवलोकितवस्त्विव निस्सारं, यथा यथा पर्यवसानेऽसत्परिणामदर्शनेन, विपर्येति विपरीततामसत्तां वा प्रतिपद्यते, तथा तथा प्रेक्षावतां लोकानामत्र लौकिकवस्तु-व्यूहे विरागोऽनासक्तिरवहेला वा जायते । अत्र विरागोत्पत्तौ संशयो नास्तीत्यर्थः ।

ज्यों ज्यों इस संसार प्रपञ्चकी असारता (तुच्छता) एवं मिथ्यारूपताकी प्रतीति होती है, त्यों त्यों प्रेक्षावान् पुरुषोंको इस सांसारिक विषयमें वैराग्य होता जाता है, इस विषयमें लेशमात्र भी संदेह नहीं है । अनेकों जगह इस प्रकार कह कर वैराग्योत्पादन द्वारा शान्त रस को प्रकट किया है ।

पर्यवसितमाह—

**ततश्च शान्तो रसो रसान्तरैः, मोक्षलक्षणः पुरुषार्थः पुरुषार्थान्तरैस्त-दुपसर्जनत्वेनानुगम्यमानोऽङ्गित्वेन विवक्षाविषय इति महाभारततात्पर्यं सुव्यक्तमेवावभासते ।**

रसान्तरैर्वीरादिरसैः, तदुपसर्जनत्वेन शान्ताङ्गतया, अनुगम्यमानः पोष्यमाणः, शान्तो रसः, पुरुषार्थान्तरैर्धर्मादिभिः, तदुपसर्जनत्वेन मोक्षोपकारकतया, पोष्यमाणो मोक्षलक्षणः कैवल्यरूपः, पुरुषार्थश्चाङ्गित्वेन, विवक्षाया महाभारतकर्तुरिच्छाया विषयोऽस्तीति महाभारतस्य तात्पर्यं सुव्यक्तमतिस्फुटमेव, अवभासते, न त्वत्र संशयावकाश इत्यर्थः ।

इहानुगमनक्रियाकर्तृतया रसान्तरैरिति पुरुषार्थान्तरैरिति च तृतीया । ततश्चेत्यस्यावभासत इत्यनेन सम्बन्धः ।

सबका सारांश बतलाते हैं—ततश्चेति । इसलिये गुणीभूत अन्य रसोंसे अनुसृत शान्त रस तथा गुणीभूत अन्य धर्म, अर्थ, कामरूप पुरुषार्थोंसे अनुसृत परम पुरुषार्थरूप मोक्ष ही मुख्यरूपसे इस (महाभारत) का वर्णनीय विषय है, यह महाभारत का तात्पर्य स्पष्टरूपसे प्रतीत होता है, इसमें लेशमात्र भी संशय नहीं है ।

ननु रसानामङ्गाङ्गिभावो न सम्भवतीति कुतश्शान्तस्याङ्गिता भारत इत्यपि न शङ्कनीयमिति ब्रूते—

**अङ्गाङ्गिभावश्च यथा रसानां, तथा प्रतिपादितमेव ।**

प्रतिपादितमेव तृतीयोद्द्योते—'विवक्षिते रसे' इत्यादिना ।

सब रसोंके प्रधानरूपसे ही चर्वणाविषयीभूत होनेसे उनमें अङ्गाङ्गिभाव ही नहीं हो सकता, इसलिये महाभारतमें भी केवल एक शान्त रसकी ही प्रधानता किस

प्रकार हो सकती है ? इस आक्षेप को दूर करते हैं—अङ्गाङ्गिभावश्चेति। प्रधान रसके साथ दूसरे रसों का अङ्गाङ्गिभाव जिस प्रकार होता है, उसका प्रतिपादन कर ही चुके हैं।

ननु तर्हि भारते वीरादिरसानां धर्मादिपुरुषार्थानामपि प्राधान्येन चमत्कारिता कुतोऽवगम्यत इत्याशङ्कायामाचष्टे—

**पारमार्थिकान्तस्तत्त्वानपेक्षया शरीरस्येवाङ्गभूतस्य रसस्य पुरुषार्थस्य च, स्वप्राधान्येन चारुत्वमप्यविरुद्धम्।**

पारमार्थिकं यदन्तस्तत्त्वं वास्तविकोऽर्थस्तदपेक्षया तस्याज्ञानेन। अङ्गभूतत्व-विशेषणमुपमाने शरीरे, उपमेये रसे पुरुषार्थे चान्वेति।

इदमुच्यते—यथाऽङ्गिनं सारमात्मानमजानतां मूढानामङ्गभूतस्य शरीरस्यैव प्राधान्यमात्मत्वं च प्रतीतं भवति, तथैव भारते प्रधानव्यङ्ग्यं सारं च शान्तं रसं मोक्षं पुरुषार्थं चावधारयितुमसमर्थानामावान्तरिकस्य वीरादिरसस्य धर्मादिपुरुषार्थस्य च प्राधान्यम्। तच्च प्राधान्यं नैव वास्तविकम्, परमार्थविवेके-शान्तरसमोक्षयोः प्राधान्यस्यैव निर्धारितत्वात्।

यदि महाभारतमें शान्त रस की ही प्रधानता है तो वीरादि रसों तथा धर्मादि पुरुषार्थोंमें किस प्रकार प्रधानरूपसे चमत्कारिता प्रतीत होती है ? इस प्रश्न का समाधान करते हैं—पारमार्थिकेति। परमार्थतः ( वास्तविक रूपसे ) आन्तरिक तत्त्व ( सार ) भूत मुख्य आत्मा की उपेक्षा करके आपाततः (आभास मात्रसे) प्रतीयमान शरीरके प्राधान्यके समान वास्तविक प्रधानभूत शान्त रस तथा मोक्षरूप परम पुरुषार्थ की उपेक्षा करके अन्य वीरादि रस तथा केवल धर्मादि पुरुषार्थके अपने प्राधान्य की दृष्टिसे चारुता माननेमें भी कोई हमें आपत्ति नहीं है, अर्थात् जिस प्रकार सारभूत अङ्गी ( प्रधान ) आत्मा को नहीं जाननेवाले मूढ़ों को अप्रधान शरीर ही प्रधानतया आत्मरूपसे प्रतीत होता है, उसी प्रकार महाभारतमें प्रधान 'व्यङ्ग्य' तथा सार भूत शान्तरस और मोक्षरूप परम पुरुषार्थको तत्त्वतः जाननेमें असमर्थ पुरुषोंको आनुषङ्गिकरूपसे प्रतीयमान वीरादिरस तथा धर्मादि पुरुषार्थ ही प्रधानरूपसे प्रतीत होता है, परन्तु उसकी वास्तविक प्रधानता नहीं है, अपितु परमार्थ विवेचन से शान्त रस और मोक्षरूप परमपुरुषार्थ की ही प्रधानता प्रतीत होती है। इसलिये वीरादि रसको पारमार्थिक रूप मानने का विचार मूढविचारके समान ही होगा।

ननु तदैवेदं सङ्गच्छेत, यदि महाभारतप्रथमाध्याये तद्वर्णनीयवृत्तान्तानुक्रमणी-रूपे शान्त-मोक्षप्राधान्यमपि वर्णनीयतयोपादीयेत, तदेव तु न दृश्यत इत्याशङ्कते—

**ननु महाभारते यावान् विवक्षाविषयः, सोऽनुक्रमण्यां सर्व एवानुक्रा-**

न्तो, न चैतत् तत्र दृश्यते, प्रत्युत सर्वपुरुषार्थप्रबोधहेतुत्वं सर्वरसगर्भत्वं च, महाभारतस्य तस्मिन्नुद्देशे स्वशब्दनिवेदितत्वेन प्रतीयते।

एतत् शान्त–मोक्षप्राधान्यप्रकाशकत्वम्। प्रत्युतोक्तवैपरीत्येन। तस्मिन्नुद्देशेऽनुक्रमण्याम् भारतस्य सर्वपुरुषार्थादिप्रकाशकत्वमनुक्रमणिकाऽध्याये यथा—

'वेद–योगं सविज्ञानं धर्मोऽर्थः काम एव च।
धर्मार्थकामशास्त्राणि शास्त्राणि विविधानि च॥
लोकयात्राविधानं च सम्भूतं दृष्टवानृषिः।
इतिहासाः सवैयाख्या विविधाः श्रुतयोऽपि च॥
इह सर्वमनुक्रान्तमुक्तं ग्रन्थस्य लक्षणम्!' इत्यादिना।

हरिवंशभविष्यपर्वणि—

'भारतं परमं पुण्यं भारते विविधाः कथाः।
भारतं सेव्यते देवैर्भारतं परिकीर्तयेत्॥
भारतं सर्वशास्त्राणामुत्तमं भरतर्षभ!।
भारतात् प्राप्यते मोक्षस्तत्त्वमेतद् ब्रवीमि ते॥' इत्यादिना।

'धर्मे चार्थे च' इत्यादिना च विस्तरेण प्रकाशितम्।

(पूर्वपक्ष) महाभारतमें जितने भी प्रतिपाद्य विषय हैं, वे सारे ही विषय उस (महाभारत) की अनुक्रमणिकामें स्वयं ही क्रमसे लिख दिये गये हैं, परन्तु उसमें शान्त रस तथा मोक्षरूप परम पुरुषार्थ का प्राधान्य दिखलाई नहीं देता है, प्रत्युत (इसके विपरीत) महाभारतमें धर्मादि पुरुषार्थोंके बोधका हेतुत्व और सर्वरस युक्तत्व उस अनुक्रमणिकामें स्वयं शब्दसे ही सूचित किया जाता हुआ दिखलाई देता है अर्थात् सभी रसों तथा धर्मादिपुरुषार्थों का अपने वाचक शब्दोंके द्वारा ही प्रतिपादन किया गया है।

उत्तरयति—

अत्रोच्यते—'सत्यं शान्तस्यैव रसस्याङ्गित्वं महाभारते मोक्षस्य च सर्वपुरुषार्थेभ्यः प्राधान्यम्' इत्येतन्न स्वशब्दाभिधेयत्वेनानुक्रमण्यां दर्शितम्, दर्शितन्तु व्यङ्ग्यत्वेन।

अनुक्रमण्यां यद्यपि रसेषु शान्तस्य, पुरुषार्थेषु च मोक्षस्य प्राधान्यं वाचकत्व-शक्त्या शब्दैर्न प्रकाश्यते, किन्तु व्यञ्जकत्वशक्त्या प्रकाश्यत एव, अनुक्रमणीघटक-श्लोकानां कियतां तद्व्यञ्जकत्वात्। तस्मादनुक्रमण्यां तदसङ्ग्रहो न शङ्क्य इति भावः।

( उत्तरपक्ष ) इस विषयमें हमरा कहना है कि यद्यपि यह ठीक ही है, कि महाभारतमें शान्तरस तथा अन्य सब पुरुषार्थोंकी अपेक्षा मोक्ष का ही प्राधान्य अपने वाचक शब्दों द्वारा स्पष्ट रूपमें अनुक्रमणिकामें नहीं दिखाए गये हैं, तथापि व्यङ्ग्यरूपमें अवश्य दिखाये गये हैं, इसलिये अनुक्रमणिकामें उन ( शान्त रस तथा मोक्ष ) के असंग्रह की शंका नहीं करनी चाहिये।

ननु तत्रापि केन शब्देन कथं व्यज्यते ? इति जिज्ञासायामभिधत्ते—

'भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः।' इत्येतस्मिन् वाक्ये ह्ययमर्थो व्यङ्ग्यत्वेन विवक्षितो 'यदत्र महाभारते पाण्डवादिचरितं यत् कीर्त्यते, तस्मात् तस्मिन्नेव परमेश्वरे भगवति भवत भावितचेतसो, माभूत विभूतिषु निस्सारासु रागिणो, गुणेषु वा नयविनयपराक्रमादिष्वमीषु केवलेषु केषुचित् सर्वात्मना प्रतिनिविष्टधियः, तथा चाग्रे पश्यत निस्सारतां संसारस्य' इत्यमुमेवार्थं द्योतयत् स्फुटमेवावभासते। व्यञ्जकशक्त्याऽनुगृहीतश्च शब्दः। एवंविधमेव चार्थं गर्भीकृतं सन्दर्शयन्तोऽनन्तरश्लोका लक्ष्यन्ते—'स हि सत्यम्' इत्यादयः।

अत्र भारते, सनातनोऽनादिनिधनो भगवानचिन्त्याद्भुतशक्तिशाली, वासुदेवः परमात्मा श्रीकृष्णः कीर्त्यते प्रस्तूयत, अत्र भारते यद् यादृशं पाण्डवादिचरितं यद् यस्मात् कीर्त्यते, तस्मात् तस्मिन् प्रसिद्धे भगवति जगदुदयपालनलयलीलापरमैश्वर्यशालिनि, परमेश्वरेऽखण्डाद्वितीयब्रह्मात्मनि, एव, न तु विषयेषु, भावितं तद्विषयकभावनाऽऽश्रयीकृतं चेतो यैस्तादृशा यूयं भवत। निस्सारासु पर्यन्तविरसत्वात् तुच्छासु, विभूतिषु सांसारिकसम्पत्सु, रागिणोऽनुरक्ता माभूत। अमीषु परोक्षतयाऽसनातनेषु, नयविनयपराक्रमादिषु गुणेषु धर्मेषु, केवलेषु सकलेषु, केषुचिद्वा, यद्वा—केवलेषु गुणेषु बन्धप्रयोजकविषयमात्रेषु, न तु मुक्तप्रयोजकभगवत्सम्बन्धिविषयेष्वपि, प्रतिनिविष्टधियोऽत्यासक्तबुद्धयोऽपि यूयं माभूत। तथा—अग्रे पर्यवसाने संसारस्यासारतां पश्यत च।' इत्यमुमुक्तवाक्यकदम्बप्रतिपाद्यमर्थमेव द्योतयद् व्यञ्जनावृत्त्या प्रकाशयत् तत् पाण्डवादिचरितं स्फुटमवभासते। व्यञ्जकस्य शक्तिर्व्यञ्जकशक्तिर्व्यक्तिः, तयाऽनुगृहीतस्तद्वान्, अत्र च शब्दः। एवंविधं संसारानित्यत्व—ब्रह्मनित्यत्व—मोक्षपरमपुरुषार्थत्वादिरूपमेवार्थं गर्भीकृतं व्यङ्ग्यत्वेन निगूढं सन्दर्शयन्तो व्यञ्जनया बोधयन्तः 'स हि सत्यम्' इत्यादयोऽनन्तरश्लोकाः 'भगवान् वासुदेवश्च' इत्यतः परं पठिताः श्लोकास्तत्रत्या लक्ष्यन्ते इत्यर्थः।

तथा च ते श्लोकाः—

'भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः।
स हि सत्यमृतं चैव पवित्रं पुण्यमेव च ॥
शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम्।
यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः ॥' इत्यादयोऽनुक्रमण्याम्।

यद्यप्यत्र पाण्डवादिचरितं वर्णितम्, तस्यापि पार्यन्तिकवैरस्यवत्तया वैराग्यमात्रजनकत्वेन मोक्षप्राधान्य—शान्तरसविश्रान्त्योरेव व्यञ्जकत्वमिति भारतस्य तदुभयप्रकाशकता प्रागुक्ता निश्चितैवेति तात्पर्यम्।

उक्त दोनों ( शान्त रस और मोक्ष ) के प्रधानरूपसे व्यञ्जक शब्दोंको एक दृष्टान्तके रूपमें बतलाते हैं—भगवानिति। इस महाभारत काव्य में नित्य भगवान् वासुदेव का गुणानुवाद तथा यश गाया गया है—इस प्रकार 'भगवान्'—इत्यादि वाक्यसे यह अर्थ व्यङ्ग्यरूपसे विवक्षित है कि—'इस महाभारतमें पाण्डव आदिके चरित्रों का जो वर्णन किया जा रहा है, वह सब अन्तमें विरसमें ही पर्यवसान होने वाला तथा अविद्या प्रपञ्च ( माया का जाल ) रूप ही है, वास्तव में तो सत्यस्वरूप भगवान् वासुदेव का ही गुणानुवाद किया गया है, इसलिये उस परम ऐश्वर्यशाली भगवान् में ही अपना मन लगाना उचित है, वास्तवमें साररहित इन ऐहलौकिक विभूतियों ( सुख सम्पदाओं ) में अत्यन्त आसक्त न होना चाहिये, या नीति, विनय, पराक्रम आदि केवल इन किन्हीं गुणों में सर्वथा ( पूर्णरूपसे ) अपने मनको न लगाना चाहिये, क्योंकि यह संसार बिल्कुल सारहीन आपात रमणीय मात्र है' इसी अर्थ को व्यङ्ग्य-व्यञ्जकभाव शक्तिके द्वारा प्रकाशित करते हुए शब्द प्रतीत होते हैं, इसी प्रकारके अन्तर्हित ( अन्दरमें छिपे हुए ) व्यङ्ग्यार्थ को प्रकट करनेवाले आगे वक्ष्यमाण—'स हि सत्यम्'—इत्यादि श्लोक प्रतीत होते हैं। सारांश यह है कि—यद्यपि 'भगवान्'—इत्यादि श्लोकोंमें पाण्डवोंके चरितका वर्णन किया गया है, तथापि पर्यवसानमें वैरस्य बोधन द्वारा वैराग्य मात्रके जनक होनेसे मोक्ष का प्राधान्य और शान्त रस की विश्रान्ति ही मुख्यतया प्रतीत होती है, इसलिये महाभारत की प्रधानतया तदुभय ( शान्तरस और मोक्ष ) प्रकाशकता निश्चित ही सिद्ध होती है।

उक्तमेव द्रढयति—

**अयं च निगूढरमणीयोऽर्थो महाभारतावसाने हरिवंशवर्णनेन समाप्तिं विदधता कविवेधसा कृष्णद्वैपायनेन सम्यक् स्फुटीकृतः।**

निगूढश्चासौ रमणीय इति विग्रहः। तत्र निगूढता व्यङ्ग्यत्वेन, रमणीयता च

तेन तत्त्वोपदेशमयत्वेन च। कविषु वेधाः प्रजापतिरिव स्वैरं काव्यसर्गप्रवर्तकः, तेन। हरिवंशे हि यादवानामन्येषां वा समुत्पत्तिसम्पत्ती सम्यग् वर्णयित्वा, पर्यन्ते विलयं वर्णयता व्यासेन, जगदसारतामवधार्य जीवैः शान्तास्वादपरिष्कृतस्वान्तैर्मोक्ष-एवाश्रयणीय इति सूचितम्। तावता महाभारतस्यापि तदेव द्वयं व्यङ्ग्यं प्रधानफलमिति निर्णीतम्, पर्यन्त एव प्रधानफलप्रतिपादनस्यान्यत्रापि दर्शनादित्याकूतम्।

उक्ताशय को ही पुष्ट करते हैं—अयंचेति। इस अत्यन्त निगूढ एवं रमणीय अर्थको महाभारतके अवसान (अन्त) में हरिवंशके वर्णन द्वारा समाप्त करते हुए उन्हीं कवि शिरोमणि कृष्ण द्वैपायन (व्यास) ने भलीभांति स्फुट रूपसे प्रकट कर दिया है।

समर्थयति—

**अनेन चार्थेन संसारातीते तत्त्वान्तरे भक्त्यतिशयं प्रवर्तयता सकल एव सांसारिको व्यवहारः पूर्वपक्षीकृतोऽध्यक्षेण प्रकाशते।**

अनेन सांसारिकपदार्थानामत्यन्ततुच्छत्वप्रतिपादनरूपेणार्थेन। संसारातीतेऽलौकिके, तत्वान्तरे परब्रह्मलक्षणे श्रीकृष्णे। व्यवहारो व्यापारस्तद्विषयीभूतः पदार्थश्च। पूर्वपक्षीकृतोऽसत्यत्वेन खण्डनार्हीकृतः अध्यक्षेण प्रत्यक्षेण। तादृशविलयान्तभारतवर्णनेन भगवतो माहात्म्यप्रकर्षसूचनात् तत्र भक्त्यतिरेकः, सांसारिकपदार्थानामनित्यत्वेन तुच्छत्वं च सूच्यत इति सारम्।

उसीका समर्थन करते हैं—अनेनेति। क्योंकि इस सांसारिक पदार्थके अति तुच्छत्व प्रतिपादनरूप अर्थसे अलौकिक परब्रह्म तत्त्वमें अत्यन्त प्रगाढ़ भक्ति का प्रवर्तन करते हुए महाकवि व्यासने सभी सांसारिक व्यवहार योग्य पदार्थोंको आपात रमणीय बतला कर अन्ततः सर्वथा हेय बना दिया है, यह बात प्रत्यक्ष दिखाई देती है। एतावता सभी सांसारिक पदार्थोंके अन्तमें विनाशके वर्णन द्वारा भगवानके अतिशय माहात्म्य सूचित होनेसे उनमें अतिशय भक्ति और सांसारिक पदार्थों की अति तुच्छता सूचित होती है।

ननु यदि भारतस्य परब्रह्मतादात्म्यप्राप्तिलक्षणे मोक्ष एव तात्पर्यम्, तर्हि तत्र सामान्येन विशेषेण च देवतानां तीर्थानां तपसां माहात्म्यं, पाण्डवादीनां चरितं च कथं विस्तरेण वर्णितम्? इत्याशङ्कामपाकरोति—

**देवतातीर्थतपःप्रभृतीनां च प्रभावातिशयवर्णनं तस्यैव परब्रह्मणः प्राप्त्युपायत्वेन, तत्तद्विभूतित्वेनैव वा देवताविशेषाणामन्येषां, पाण्डवादिचरितवर्णनस्यापि वैराग्यजननतात्पर्याद्, वैराग्यस्य च मोक्षमूलत्वाद्,**

**मोक्षस्य च भगवत्प्राप्त्युपायत्वेन मुख्यतया गीताऽऽदिषु प्रदर्शितत्वात् परब्रह्मप्राप्त्युपायत्वमेव।**

इदमुक्तं भवति—देवानां तीर्थानां तपसां चान्यत्र भगवद्रूपताऽऽम्नानाद्, देवताविशेषाणामन्येषां महापुरुषाणां वा—

'यद्यद् विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा।

तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम् ॥' इति गीतादशमाध्याये भगवदुक्तेस्तदात्मताऽऽख्यातेश्च तदनुभावोत्कर्षवर्णनमिहत्यं भगवद्भावापत्तिलक्षणमोक्षस्यैव प्रयोजकम्, न तु विक्षेपस्य। किञ्च पाण्डवादिचरितवर्णनमपि दर्शितदिशा जगद्विभूतितुच्छत्वप्रमितिजननमात्रपर्यवसायितया तत्प्रयोजकमेव। मोक्षश्च भगवत्प्राप्तिकारणीभूत इति तत्प्रपञ्चोऽत्रोपादीयमानो न त्रुटिमादधाति।

वस्तुतस्तु भगवद्भावापत्तिरेव सायुज्यमुक्तिरिति तदुपायत्वमिह तत्तादात्म्यरूपमवसेयम्। न हि मोक्षानन्तरं भगवत्सायुज्यम्, अपि तु तदेवेति श्रुतिषु गीताप्रभृतिस्मृतिषु च स्पष्टम्।

यदि महाभारत का परब्रह्म प्राप्तिरूप मोक्षमें ही मुख्य तात्पर्य है, तो सामान्य और विशेषरूपसे देवता, तीर्थ, तप आदि के माहात्म्य का तथा पाण्डव आदिके चरित का वर्णन क्यों किया? इस आक्षेप का समाधान करते हैं—देवतेति। देवता, तीर्थ और तप आदिके अतिशय प्रभाव का वर्णन उसी परमात्मा (परब्रह्म) की प्राप्तिके साधन (उपाय) होनेसे ही किया गया है, एवं उस (परब्रह्म) की विभूतिरूप होनेसे ही अन्य देवविशेषों का वर्णन किया गया है। इसी प्रकार पाण्डव आदिके चरित्र के वर्णन का भी वैराग्योत्पादनमें तात्पर्य होनेसे और वैराग्यके मुक्ति हेतु तथा मुक्तिके मुख्यरूपसे परब्रह्म की प्राप्ति के उपायरूपसे गीता आदिमें प्रतिपादित होनेसे परम्परया उस (पाण्डवादि के चरित वर्णन) का भी परब्रह्म की प्राप्तिके उपाय रूपमें ही पर्यवसान समझना चाहिये।

ननु श्रीकृष्णो यदि भवदभिमतः परब्रह्मात्मा भगवान् परमेश्वरः, तर्हि वसुदेवापत्यार्थकेनाधुनिकत्वं प्रथयता वासुदेवशब्देन कथमभिधीयते? इति शङ्कां समादधाति—

**परम्परया वासुदेवसञ्ज्ञाऽभिधेयत्वेन चापरिमितशक्त्यास्पदं परं ब्रह्म गीताऽऽदिप्रदेशान्तरेषु तदभिधानत्वेन लब्धप्रसिद्धिमाथुरप्रादुर्भावानुकृतसकलस्वरूपशंसि रूपं विवक्षितम्, न तु माथुरप्रादुर्भावांश एव, सनातनशब्दविशेषितत्वात्।**

परम्परयाऽनादिप्रवाहेण । वासुदेवसंज्ञाऽभिधेयत्वेन लब्धप्रसिद्धिरूपमिति सम्बन्धः । अपरिमितायाः शक्तेः परमैश्वर्यस्यास्पदमाश्रयः । तदभिधानत्वेन वासुदेवसञ्ज्ञया ।

तथा हि गीतायाम्—

'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥' इति सप्तमाध्याये ।
'वासुदेवपरा वेदा वासुदेवपरा मखाः ।
वासुदेवपरा योगा वासुदेवपराः क्रियाः ॥
वासुदेवपरं ज्ञानं वासुदेवपरं तपः ।
वासुदेवपरो धर्मो वासुदेवपरा गतिः ॥
स एवेदं ससर्जाग्रे भगवानात्ममायया ।
सदसद्रूपया चासौ गुणमय्याऽगुणो विभुः ॥'

इत्यादि प्रथमस्कन्धे श्रीमद्भागवते च प्रतिपादितम् ।

मथुरायां भवो माथुरः स चासौ प्रादुर्भावोऽवतारः, तेनानुकृतं विडम्बितं सकलं स्वरूपं शंसितुं शीलमस्येति तादृशं, रूपं वस्तु रूप्यत्वात् । 'भगवान् वासुदेवश्च कीर्त्यतेऽत्र सनातनः ।' इति वासुदेवस्य सनातन इति विशेषणम् ।

यद्यपि वासुदेवशब्दो वसुदेवापत्यं पुमानिति विग्रहे वसुदेवशब्दादपत्यार्थे, इञ्बाधकेन 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इति पाणिनिसूत्रविहिताण्प्रत्ययेन निष्पन्न-तया मथुरोत्पन्न-वसुदेवपुमपत्यबोधक इति तत्प्रतिपाद्यस्य तस्य न परमेश्वरत्व-मुचितम् । तथाऽपि शब्दनित्यत्वनये वसुदेवापत्यप्रादुर्भावात् प्रागपि वासुदेवशब्द-सद्भावस्य स्वीकार्यत्वे गत्यन्तरविरहेण तादृशनित्यापूर्ववासुदेवपदार्थः कश्चन स्वी-करणीय एव । यद्वा-सर्वत्रात्मरूपेण वसतीति वासुः, वसेर्बाहुलकादुण्, दीव्यतीति देवः, वासुश्चासौ देव इति व्युत्पत्तिः । अत एवात्र वासुदेवस्य सनातनत्वं विशेष-णम् । अन्यथाऽनित्यत्वाद्वसुदेवापत्यस्य तन्न सङ्गच्छेत । तस्माद्वासुदेवस्य परमेश्वर-त्वमविरुद्धमित्याशयः ।

यदि श्रीकृष्ण भगवान् ही आपके अभिमत परब्रह्म परमेश्वर हैं तो उन (कृष्ण) को वसुदेव का पुत्र कहना किस प्रकार संगत हो सकता है? इस आक्षेप का समाधान करते हैं—परम्परयेति । अनादिकालीन प्रवाहसे 'वासुदेव' आदि संज्ञाओंके वाच्यार्थसे गीता आदि अन्य स्थलों में इस (वासुदेव) नामसे प्रसिद्धि

को प्राप्त किये हुए अपरिमित ( निःसीम ) शक्तिशाली मथुरामें प्रादुर्भूत कृष्णावतार द्वारा धारण किये हुए रामादि समस्त रूपयुक्त परब्रह्म ही अभिप्रेत हैं, न कि केवल मथुरा में उत्पन्न वसुदेवके पुत्ररूप कृष्ण अंश मात्र ही, क्योंकि वह वासुदेव 'सनातन' इस विशेषण शब्दसे विशेषित ( युक्त ) बतलाया गया है, अन्यथा यदि वसुदेव का पुत्र ही वासुदेव पदसे विवक्षित हो तो उसका 'सनातन' यह विशेषण संगत न होगा, इसलिये वासुदेव पदसे परब्रह्म परमेश्वर ही विवक्षित है।

तत्रैव हेत्वन्तरमप्याह—

**रामायणादिषु चानया सञ्ज्ञया भगवन्मूर्त्यन्तरे व्यवहारदर्शनात्।**

भगवन्मूर्त्यन्तरे कपिलादौ। अनया वासुदेवेत्याकारिकया सञ्ज्ञया।

अन्यथा कपिलादेर्वसुदेवापत्यत्वविरहादसङ्गतिस्तत्र स्फुटैवेति तात्पर्यम्।

तथा हि, वाल्मीकीयरामायणे बालकाण्डचत्वारिंशत्तमाध्याये—

'यस्येयं वसुधा कृत्स्ना वासुदेवस्य धीमतः।
महिषी माधवस्यैषा स एव भगवान् प्रभुः॥' इति।

आदिपदग्राह्ये विष्णुपुराणे—

'वासुस्सर्वनिवासश्च विश्वानि सर्वलोमसु।
तस्य देवः परं ब्रह्म वासुदेव इतीरितः॥' इति।

भारते—वासनात् सर्वभूतानां वासुत्वाद्देवयोनितः।
वासुदेवस्ततो वेद्यो बृहत्त्वाद्विष्णुरुच्यते॥' इति।

कालिकापुराणे—'बीजन्तु वासुदेवस्य पुरैव प्रतिपादितम्॥' इति।

कूर्मपुराणे—'एका भगवतो मूर्त्तिर्ज्ञानरूपा शिवामला।
वासुदेवाभिधाना सा गुणातीता सुनिष्फला॥' इति।

पद्मपुराणे—'वासुदेवः सनातनः' इत्यादि च।

वासुदेव पदके परब्रह्म परक तात्पर्य को ही दूसरी युक्तिसे पुष्ट करते हैं— रामायण इति। रामायण आदिमें 'यस्येय वसुधा कृत्स्ना वासुदेवस्य धीमतः'—इत्यादि-श्लोकद्वारा 'वासुदेव' इस नामसे भगवान् के कपिल आदि अन्य अवतार का भी व्यवहार देखा जा रहा है।

उक्तार्थे परसम्मतिमपि दर्शयति—

**निर्णीतश्चायमंशः शब्दतत्त्वविद्भिरेव।**

चकारोऽप्यर्थको भिन्नक्रमः। अयं वासुदेवशब्दस्य नित्यापूर्वार्थकत्वरूपोंऽशः शब्दतत्त्वविद्भिर्वैयाकरणैरपि निर्णीत इत्यर्थः।

तथा च, 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इति सूत्रे—

'कथं पुनर्नित्यानां शब्दानामनित्यान्धकादिवंशाश्रयेणान्वाख्यानं युज्यते ?, अत्र समाधिः—त्रिपुरुषानूकं नाम कुर्यादिति न्यायेनान्धकादिवंशा अपि नित्या एव। अथवाऽनित्योपाश्रयेणापि नित्यान्वाख्यानं दृश्यते—यथा शकाश्रयेण कालस्य' इति कैयटः।

'शब्दा हि नित्या एव सन्तोऽनन्तरं काकतालीयवशात् तथा सङ्केतिताः।' इति काशिकाकारश्च।

उक्तार्थ विषयमें अन्य की सम्मति भी दर्शाते हैं—निर्णीत इति। शब्दतत्त्ववेत्ताओं ( वैयाकरणों ) ने भी वासुदेव शब्दके नित्यत्व और अत्यन्त अपूर्वार्थकत्वरूप अंश का उक्त प्रकार निर्णय किया है।

प्राक् प्रतिज्ञातं निगमयति—

**तदेवमनुक्रमणीनिर्दिष्टेन वाक्येन भगवद्व्यतिरेकिणः सर्वस्यान्यस्यानित्यतां प्रकाशयतो मोक्षलक्षण एवैकः परः पुरुषार्थः शास्त्रनये, काव्यनये च तृष्णाक्षयसुखपरिपोषलक्षणः शान्तो रसो महाभारतस्याङ्गित्वेन विवक्षित इति सुप्रतिपादितम्।**

अयमाशयः—द्विविधा हि पुरुषाः, केचन विषयविरक्ता विद्वांसः शास्त्रप्रणयिनः, केचन विदग्धाः काव्यरसास्वादिनः। तत्र शास्त्रप्रणयिनां कृते भारते मोक्षरूपः परमपुरुषार्थः प्रकाशितः, काव्यरसास्वादिनां तु कृते तृष्णाक्षयजन्यात्मविश्रमानन्दपरिपोषलक्षणश्शान्तरस इत्युभयविधाधिकारिपरितोषोऽस्माद् भवति। सुप्रतिपादितमित्यनेन नेदानीं संशयलेशोऽपि कस्यचिदुदेतुं शक्नोतीति सूचितम्।

पूर्व प्रतिज्ञात विषयका ही उपसंहार करते हैं—तदेवमिति। इस प्रकार परमेश्वर को छोड़कर अन्य सभी पदार्थों की अनित्यता को बतलानेवाले अनुक्रमणिकानिर्दिष्ट वाक्यसे शास्त्रदृष्टया केवल मोक्षरूप परम पुरुषार्थ ही महाभारत का मुख्य पुरुषार्थ है और काव्य दृष्टया तृष्णा के क्षय से उत्पन्न सन्तोष सुख के परितोषरूप शान्त रस ही उस ( महाभारत ) का मुख्य रस अभिप्रेत है, यह भलीभांति प्रतिपादन कर दिया गया, इसमें अब लेशमात्र भी संदेह नहीं है।

मोक्षशान्तरसयोरनभिधेयत्वे निमित्तमभिधत्ते—

**अत्यन्तसारभूतत्वाच्चायमर्थो व्यङ्ग्यत्वेनैव दर्शितो न तु वाच्यत्वेन। सारभूतो ह्यर्थः स्वशब्दानभिधेयत्वेन प्रकाशितः सुतरामेव शोभामावहति।**

महाराष्ट्रवधूकुचकलश इवेषत्प्रच्छन्न एवार्थश्चमत्कारीति व्यञ्जनयैवैतौ प्रतिपादिताविति सारम्।

शान्त रस और मोक्ष महाभारत का वाच्यवृत्त्या प्रतिपाद्यविषय नहीं है, यह बतलाते हैं—अत्यन्तेति। अत्यन्त साररूप होनेसे महाभारत में शान्तरस और मोक्ष रूप परमपुरुषार्थ का प्राधान्य व्यङ्ग्यात्मकध्वनिरूपसे ही प्रतिपादित किया गया है, वाच्यरूपसे नहीं, क्योंकि सारभूत अर्थ अपने वाचक शब्दसे वाच्यरूपमें उपस्थित न होकर व्यङ्ग्य रूपसे ही प्रकाशित होनेसे अत्यन्त रमणीयता को प्राप्त होता है।

न चेयं ममैव कल्पनेत्याह—

**प्रसिद्धिश्चेयमस्त्येव विदग्धविद्वत्परिषत्सु, यदभिमततरं वस्तु व्यङ्ग्यत्वेन प्रकाश्यते, न साक्षाच्छब्दवाच्यत्वेनैव।**

चकारो हेत्वर्थकः। तेन यतः इयं लोके प्रसिद्धिरस्त्येव, यद् विदग्धा विद्वांसः श्रेष्ठतमं तत्त्वं व्यञ्जनयैव सूचयन्ति, ततो महाभारतेऽपि भगवद्द्वैपायनस्य व्यञ्जनया तयोः प्रकाशनं नानुचितम्। अन्यथाऽन्येषामपि भारतघटकपद्यानां तत्तदाशयनिर्धारणमसङ्गतं स्यादिति तात्पर्यम्।

यह केवल मेरी ही कल्पना नहीं है, अपि तु अन्य प्रतिष्ठित विद्वानों की भी यही कल्पना है, यह बतलाते हैं—प्रसिद्धिरिति। लोकमें भी यह बात देखी जाती है कि विदग्धजन व्यञ्जनासे ही अत्यन्त रमणीय अर्थ को सूचित करते हैं नकि साक्षात् वाच्यवृत्तिसे ही, इसीलिये व्यासने भी महाभारतमें शान्तरस तथा मोक्षको व्यञ्जना द्वारा ही सूचित किया है।

प्रागुक्तमुपसंहरति—

**तस्मात् स्थितमेतत्—अङ्गिभूतरसाद्याश्रयेण काव्ये क्रियमाणे नवनवार्थलाभो भवति, बन्धच्छाया च महती सम्पद्यत इति।**

तस्मादुक्तहेतोः। स्थितं पर्यवसितं निर्णीतमिति यावत्।

तथा च—'रसादिमय एकस्मिन् कविः स्यादवधानवान्।' इति,

'दृष्टपूर्वा अपि ह्यर्थाः काव्ये रसपरिग्रहात्।

सर्वे नवा इवाभान्ति मधुमास इव द्रुमाः॥' इति च प्रागुपक्षिप्तमिहोपसंहृतमिति बोध्यम्। अङ्गिभूतेत्युक्त्या रसानां प्राधान्येन व्यङ्ग्यतैव काव्येऽभिप्रेयते।

इसलिये यह सिद्ध हुआ कि प्रधानभूत रसके आश्रयसे काव्य की रचना करने

पर एक अपूर्व चमत्कार जनक नवीन अर्थ की प्राप्ति होती है और रचना का सौन्दर्य अत्यधिक बढ़ जाता है।

उक्तमुपोद्बलयति—

अत एव च रसानुगुणार्थविशेषोपनिबन्धनमलङ्कारान्तरविरहेऽपि च्छायाऽतिशययोगि लक्ष्ये दृश्यते।

अत एव रसानां सम्बन्धस्यैव प्राधान्येन काव्यत्व–तच्छोभाऽतिशयप्रयोजकत्वादेव। अलङ्कारान्तरस्यालङ्कारविशेषस्य। 'अन्तरशब्दो विशेषवाची' इत्याचार्याः। तथा च मेदिनी—

'अन्तरमवकाशावधि–परिधानान्तर्धिभेदतादर्थ्ये।
छिद्रात्मीयविनाबहि–रवसरमध्यात्मसदृशेषु॥' इति।

यद्वा–वक्ष्यमाणे 'मुनिर्जयति' इत्याद्युदाहरणेऽद्भुतरसस्य मुनिविषयकरतिभावाङ्गतया रसवदलङ्कारसद्भावादलङ्कारान्तरस्य रसवद्भिन्नालङ्कारस्य। योगीत्यन्तं निबन्धस्य विशेषणम्। इत्थञ्च 'मुनिर्जयति' इत्यादिलक्ष्येऽलङ्कारवैधुर्येऽपि न काव्यशोभाहानिः। इतरथा स्यादेव। यत्तु तत्र लक्ष्ये भाविकालङ्कारोऽस्तीति रुय्यकेनास्थितम्, तन्न सहृदयहृदयङ्गमम्, भूतभविष्यदर्थानां प्रत्यक्षायमाणत्वेनोपादान एव तस्यालङ्कारिकैरङ्गीकरणात् प्रकृते भूतयोर्मत्स्यकच्छपयोर्भूतकालिकप्रत्यक्षविषयतयैव वर्णनेन साम्प्रतिकप्रत्यक्षायमाणत्वाभावादिति मदीयमञ्जूषायां विस्तरः।

रसका सम्बन्ध ही प्रधान रूपसे काव्यत्व और उसकी शोभातिशयका प्रयोजक है, इस बातको पुष्ट करते हैं—अत एवेति। इसीलिए दूसरे अलंकारोंके नहीं रहनेपर भी रसके अनुरूप अर्थ विशेष की रचना काव्योंमें अतिशय सौन्दर्यशालिनी दिखाई पड़ती है। अथवा वक्ष्यमाण—'मुनिर्जयति'–इत्यादि उदाहरणमें अद्भुतरसके अगस्त्य मुनि विषयक भक्त्याख्यरति भावके प्रति अङ्ग होनेके कारण रसवद् अलंकारके होनेसे रसवद् भिन्न अलंकारके नहीं रहनेपर भी सतिशय रमणीयता की प्रतीति होनेसे काव्य शोभा की हानि नहीं होती है।

तदुदाहरणमाचष्टे—

यथा—'मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
येनैकचुलके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥' इत्यादौ।

योगीन्द्रो योगिनां श्रेष्ठो महात्मा महनीयानुभावः, मुनिर्मननशीलः, कुम्भसम्भवो घटजन्माऽगस्त्यो जयति सर्वोत्कर्षेण वर्तते। येनागस्त्येन, एकचुलके एकस्यां प्रसृतौ,

तौ—'अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तरः' इत्यादिभिः प्रसिद्धौ, दिव्यावलौकिकौ मत्स्यकच्छपौ, दृष्टौ समुद्रपानावसरेऽवलोकितावभूतामित्यर्थः।

तथा च—'चुलकः प्रसृतौ' इति मेदिनी।

उसीका उदाहरण बतलाते हैं—यथा मुनिरिति। योगिराट् महात्मा अगस्त्य ऋषि सर्वोत्कृष्ट रूपसे विराजमान हो रहे हैं, जिन्होंने एक ही चुल्लूमें उन दिव्य (अलौकिक) मत्स्य और कच्छपको समुद्रके पानावसरमें देख लिया।

सङ्गतिमाह—

**अत्र ह्यद्भुतरसानुगुणमेकचुलके मत्स्य-कच्छपदर्शनं छायाऽतिशयं पुष्णाति।**

एकस्मिन्नेव चुलके तादृशात्यनिर्वचनीयमत्स्यकच्छपयोर्दर्शनं विस्मयाधिक्योत्पादकतया विस्मयस्थायिकाद्भुतरसास्वादप्रयोजकमितीहाद्भुतरसास्वादेनैव मुख्यतया काव्यस्य सुषमाप्रकर्ष इति भावः।

एतेनात्र मत्स्यकच्छपदर्शनसूच्यमानैकचुलकाधिकरणकजलधिसन्निधानेन मुनेर्माहात्म्यं व्यज्यते, न त्वद्भुतरस आस्वाद्यत इति वदन्तः परास्ताः, तादृशमत्स्यकच्छपरूपविभावादिसंसृष्टविस्मयोल्लासेनाद्भुतरसास्वादस्य निह्नोतुमशक्यत्वात्।

वृत्तिकार उक्त श्लोकार्थका ही संगमन करते हैं—अत्रेति। उक्त श्लोकमें अद्भुत रसके अनुकूल एक ही चुल्लू भरमें मत्स्य और कच्छपका दर्शन काव्यके अतिशय सौन्दर्यको बढ़ाता है, अर्थात् एक ही चुलकमें अत्यन्त अनिर्वचनीय मत्स्य, कच्छपका दर्शन, अतिशय विस्मयके जनन द्वारा विस्मय स्थायीभाववाले अद्भुत रसके आस्वादका प्रयोजक है, इसलिये अद्भुत रसके आस्वादसे ही मुख्यतया काव्य की अतिशय सुषमा प्रतीत होती है।

नन्वत्रैकचुलके दिव्यमत्स्यकच्छपदर्शनरूपेण वाच्येन व्यज्यमानं चुलके जलधिसम्मानमेवाद्भुतरसं पुष्णाति, न तु वाच्यमितिशङ्कायामभिदधाति—

**तत्र ह्येकचुलके जलधिसन्निधानादपि दिव्यमत्स्यकच्छपदर्शनमक्षुण्णत्वादद्भुतरसानुगुणतरम्।**

अक्षुण्णत्वादप्रतीतचरत्वेनानुद्भिन्नत्वात्। यद्यप्येकचुलके जलधिसन्निधानादपि व्यज्यमानादद्भुतरसः पोष्यत एव, किन्त्वदृष्टाश्रुतपूर्वतादृशमत्स्यकच्छपदर्शनं ततोऽप्यधिकाश्चर्यजनकमिति तदपेक्षयाऽप्यद्भुतरसपोषकमिति सारम्।

उक्त श्लोकमें एक चुल्लूमें दिव्य मत्स्य और कच्छपके दर्शनरूप वाच्यार्थसे व्यज्यमान चुल्लू मात्रमें अगाध समुद्रका समा जाना रूप व्यङ्ग्यार्थ ही अद्भुत

रसको पुष्ट करता है, उक्त वाच्यार्थ पुष्ट नहीं करता, इस आक्षेपका समाधान करते हैं—नत्रेति। उक्तस्थलमें व्यङ्ग्य रूपसे प्रतीयमान एक चुल्लूमें सम्पूर्ण समुद्रके समा जानेसे भी अधिक चमत्कार जनक रूपसे भासमान अदृष्ट अश्रुतपूर्व दिव्य मत्स्य तथा कच्छपका दर्शन बिल्कुल अपूर्व होनेसे अद्भुत रसका अधिक पोषक है, अर्थात् यद्यपि एक ही चुल्लूमें समुद्रका समा जाना भी आश्चर्यजनक होनेसे अद्भुत रसका पोषक ही है, तथापि अदृष्ट एवं अश्रुत पूर्व तादृश अलौकिक मत्स्य-कच्छप का दर्शन उस ( समुद्रके समा जाने ) से भी अधिक आश्चर्य जनक है, इसलिये उसकी अपेक्षा भी उक्त वाच्यार्थ ही अद्भुत रसका अधिक पोषक है।

व्यतिरेकमुखेन समर्थयति—

**क्षुण्णं हि वस्तु लोकप्रसिद्ध्याऽद्भुतमपि नाश्चर्यकारि भवति।**

यतो लोकप्रसिद्ध्या क्षुण्णं पिष्टपेषणन्यायेन भूयो भूयो लोकप्रसिद्धिगोचरीभूतमद्भुतमपूर्वमपि वस्तु विस्मयजनकं न भवति, यथेदानीमद्भुतमपि व्योमयानं नाश्चर्याय कल्पते प्रसिद्धतरत्वात्, किञ्चिदाश्चर्यजनकत्वं तस्यापीष्टमेव, अतएव तरवुपात्तः। तस्मादिह जलधिसन्निधानस्य नाद्भुतरसव्यञ्जकतरत्वमित्याकूतम्।

व्यतिरेक द्वारा उक्तार्थका ही समर्थन करते हैं—क्षुण्णमिति। लोक प्रसिद्धिमें अत्यन्त अद्भुत होनेपर भी वार-वार देखी हुई वस्तु आश्चर्यजनक नहीं होती है, अर्थात् पिष्टपेषण या चर्वित चर्वण न्यायसे अनेक वार लोकमें अत्यन्त प्रसिद्ध हो जाने पर अपूर्व वस्तु भी विस्मयजनक नहीं होती है, जैसाकि अभी भी व्योमयानके अपूर्व होनेसे भी प्रसिद्ध हो जानेके कारण वह आश्चर्यकारक नहीं प्रतीत होता है, इसलिये अगस्त्यके चुल्लूभरमें सम्पूर्ण समुद्रका समा जाना लोकमें प्रसिद्ध हो जानेसे अत्यन्त अद्भुत रसका व्यञ्जक नहीं प्रतीत होता है।

न चेयं स्थितिरद्भुतरस एव यावदन्यस्मिन्नपि रस इति बहुलक्ष्यव्यापकत्वं प्रकटयति—

**न चाक्षुण्णं वस्तूपनिबध्यमानमद्भुतरसस्यैवानुगुणं, यावद् रसान्तरस्यापि।**

किन्त्वर्थकं यावदित्यव्ययम्।

उक्त विषय केवल अद्भुत रसमें ही नहीं, अपितु अन्य रसमें भी है, यह बतलाते हैं—नचाक्षुण्णमिति। अपूर्व ( अदृष्ट-अश्रुतपूर्व ) वस्तुका वर्णन न केवल अद्भुत रसका ही, अपितु अन्यरसोंका भी अनुकूल होता है।

उदाहरति—

तद्यथा—

नायिकाया दूती नायकं ब्रवीति—

'सिज्जइ रोमञ्चिज्जइ वेवइ रच्छातुलग्गपडिलग्गो।
सो पासो अज्ज वि सुहअ! तीइ जेणासि वोलीणो॥',
'स्विद्यति रोमाञ्चति वेपते रथ्या तुलाग्रप्रतिलग्नः।
स पार्श्वोऽद्यापि सुभग! तस्या येनास्यतिगतः॥' इतिच्छाया।

अयि सुभग! तस्या मत्सख्याः येन पार्श्वेन, रथ्यायां प्रत्नत्वात् सङ्कीर्णायां प्रतोल्यां, तुलाऽग्रेण काकतालीयेन अकस्मात् प्रतिलग्नः संस्पृष्टस्त्वमतिगतोऽसि पुरा निर्गतोऽसि। स तस्याः पार्श्वोऽद्यापि, न तु तत्कालएव, स्विद्यति सघर्म्मो भवति, रोमाञ्चति पुलकं प्राप्नोति, वेपते कम्पते चेत्यर्थः।

त्वत्स्पर्शरूपकारणाभावेऽप्यद्यापि स्वेदादिसात्त्विकभावात्मककार्योद्गमेन विभावनाऽलङ्कारः। चकारं विनाऽपि 'गामश्वं पुरुषं पशुम्' इत्यादिवत् समुच्चयप्रतीतिः। प्राकृते गमेर्वोलादेशः। 'तुलाग्रं काकतालीयम्' इत्याचार्याः। इहापि सन्दर्भशुद्ध्यनुरोधेन पाठः परिवर्तितः।

उदाहरण बतलाते हैं—यथेति। नायिका की दूती नायकसे कहती है—हे सुभग! उस पुरानी संकीर्ण गलीमें काकतालीय न्यायसे (अकस्मात्) उस मेरी सखी नायिकाके जिस पार्श्व (बगल) से लगकर (सटकर) तुम निकल गये थे, वह पार्श्व अब भी स्वेदयुक्त (पसीनेसे तर), रोमाञ्चित, और कम्पित हो रहा है। यहां पर दूतीके कथनकालमें नायकके स्पर्शरूप कारणके नहीं होनेपर भी स्वेदादि सात्त्विक भावात्मक कार्य की उत्पत्तिसे विभावना अलंकार प्रतीत होता है।

सङ्गमयति—

**एतद्गाथाऽर्थाद् भाव्यमानाद् या रसप्रतीति र्भवति, सा 'त्वां द(स्पृ)ष्ट्वा स्विद्यति रोमाञ्चति वेपते' इत्येवंविधादर्थात् प्रतीयमानात्मना मनागपि नो जायते।**

एतत्पद्यार्थभावनया नायकमिथुननिष्ठपारस्परिकरतिस्थायिकश्रृङ्गाररसास्वादो यो भवति, तत्र वाच्यस्य नोपयोगिता, अपित्वेतावत्कालातिक्रान्तकारणजन्यकार्योपनिबन्धस्यापूर्वतरस्य वस्तुन एवेति-श्रृङ्गारादिरसास्वादानुलोमत्वमप्यद्भुतवस्तुवर्णनस्य निर्णीतमेवेति तात्पर्यम्।

इदं पुनरिह विचारणीयम्—वाच्यार्थभावनयैव जन्यमानायां रसप्रतीतौ तस्य कथं नोपयोगितेति!

उक्त श्लोकार्थका संगमन करते हैं—एतदिति। उक्त पदार्थ की भावना (मनन) करनेसे जो रस की प्रतीति होती है, वह (प्रतीति) तुमको देखकर वह नायिका स्वेदयुक्त, पुलकित और कम्पित होती है, इस प्रकारके प्रतीयमान अर्थसे विलकुल नहीं होती है, अर्थात् 'त्वां दृष्ट्वा स्विद्यति रोमाञ्चति वेपते' इत्यादि अर्थके चिरपरिचित होनेसे उसके व्यङ्ग्य होनेपर उतना चमत्कार नहीं प्रतीत होता, जितना ऊपरके श्लोकमें वर्णित अपूर्व कल्पनायुक्त अर्थके व्यङ्ग्य होनेपर प्रतीत होता है।

इदानी—'ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शितः॥

अनेनानन्त्यमायाति कवीनां प्रतिभागुणः॥' इत्यनेनोपक्रान्तं ध्वनिप्रभेदानां कविप्रतिभाऽऽनन्त्यप्रयोजकत्वमुपसंहृत्य, गुणीभूतव्यङ्ग्यप्रकाराणामपि तत्त्वं समासेनोपदिशति—

**तदेवं ध्वनिप्रभेदसमाश्रयेण यथा काव्यार्थानां नवनवत्वं जायते, तथा प्रतिपादितम्। गुणीभूतव्यङ्ग्यस्यापि त्रिभेदव्यङ्ग्यापेक्षया ये प्रकाराः, तत्समाश्रयेणापि काव्यवस्तूनां नवत्वं भवत्येव।**

त्रिभेदता च वस्त्वलङ्काररसादिरूपत्वेनैव।

यथा सत्स्वपि समानार्थकेषु प्राचीनकाव्येषु ध्वनियोगेन नवीनकाव्यानामपूर्वत्वं भवतीतिप्राग्विशिष्य दर्शितम् तथा गुणीभूतव्यङ्ग्ययोगेनापि भवतीति सारम्।

उक्तरीति से ध्वनि प्रभेदोंका कवि प्रतिभाके आनन्त्यका प्रयोजकत्व वतलाकर अब गुणीभूत व्यङ्ग्य प्रभेदोंका भी उक्त आनन्त्य प्रयोजकत्व वतलाते हैं—तदेवमिति। इस तरह ध्वनि भेदोंके आश्रयसे जिस प्रकार काव्यार्थोंमें नवीनता आ जाती है, वह प्रतिपादन कर दिया, अब व्यङ्ग्य रसादि, वस्तु और अलङ्कारके भेदसे जो तीन प्रकारके गुणीभूत व्यङ्ग्य हैं, उनके आश्रयसे भी काव्य वस्तुओंमें नवीनता आ जाती है, अर्थात् जिस प्रकर समानार्थक प्राचीन काव्योंके रहनेपर भी ध्वनिके सम्पर्कसे नवीन काव्योंमें अपूर्वता प्रतीत होती है, उसी प्रकार गुणीभूत व्यङ्ग्यके सम्पर्कसे भी अपूर्वता प्रतीत होने लगती है।

तर्हि कथं न तदुदाहृतम्? इत्याशङ्कायामाह—

**तत्त्वतिविस्तारकारीति नोदाहृतम्।**

गुणीभूतव्यङ्ग्यस्यालङ्काराणां बाहुविध्येन विपुलध्वनिप्रभेदसम्भेदेन च भूयांसः प्रकाराः कात्स्न्येंनोदाहर्तुमशक्या इति न तदर्थं चेष्टितमितिभावः।

उनके योगसे अपूर्वत्वके नहीं प्रदर्शन करनेमें युक्ति बतलाते हैं—तत्तु इति। अत्यन्त विस्तारके भयसे उसके उदाहरण नहीं बतलाये गये हैं, अर्थात् गुणीभूत

व्यङ्ग्यके अलंकारोंके आनन्त्य एवं विपुल ध्वनि प्रभेदके संमिश्रणसे बहुत ही प्रकार हो जाते हैं, उन सबका उदाहरण बतलाना असम्भव है, इसलिये तदर्थं प्रयास नहीं किया।

तर्हि तज्ज्ञानार्थं कउपायः ? इत्यतोऽभिदधाति—

**सहृदयैः स्वयमुत्प्रेक्षणीयम् ।**

उत्प्रेक्षणीयमूहनीयम् । ध्वनिदर्शितदिशा तदुदाहरणमिति शेषः ।

ऊहश्चेत्थम्—'तदोडुराजः ककुभः करैर्मुखं प्राच्या विलिम्पन्नरुणेन शन्तमैः ।
सचर्षणीनामुदगाच्छुचो मृजन् प्रियः प्रियाया इव दीर्घदर्शनः ॥'
इत्यस्मिन् प्राचीनपद्ये सत्यपि—
'करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य ।
विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः ॥'
इत्यस्य समासोक्त्यलङ्कारसम्पादकवस्तुरूपगुणीभूतव्यङ्ग्ययोगेनापूर्वत्वम् ।

तथा—'क्षुत्तृष्णाकाममात्सर्य-मरणाच्च महद्भयम् ।
पञ्चैतानि विवर्धन्ते वार्धके विदुषामपि ॥' इत्येतस्मिन् पुराणपद्ये सत्यपि ।
'वसन्तमत्तालिपरम्परोपमाः कचास्तवासन् किल कामवृद्धये ।
श्मशानभूभागपरागभासुराः कथं तदेतेन मनोविरक्तये ॥' इत्यस्य वाच्योपस्कारकविभावनाऽलङ्काररूपगुणीभूतव्यङ्ग्ययोगेनापूर्वत्वम् ।

एवं—'जराजीर्णे शरीरेऽस्मिन् वैराग्यं यन्न जायते ।
तन्नूनं हृदये मृत्युर्हरं नास्तीति निश्चयः ॥' इत्यस्मिन् पुरातने सत्यपि—
'जरा नेयं मूर्ध्नि ध्रुवमयमसौ कालभुजगः,
क्रुधाऽन्धः फूत्कारैः स्फुटगरलफेनं प्रकिरति ।
तदेनं सम्पश्यत्यथ च सुखितम्मन्यहृदयः,
शिवोपायं नेच्छन् बत बत सुधीरः खलु जनः ॥' इत्यस्य गुणीभूताद्भुतरसयोगेनापूर्वत्वं भवतीति विभावनीयम् ।

उनके ज्ञानार्थ उपाय बताते हैं—सहृदयैरिति । ध्वनिके ज्ञानार्थ बतलाये हुए मार्गोंसे सहृदयजन स्वयं ही इसका ऊहापोह करलें ।

प्रतिभाप्राधान्यमुपदिशन्नुपसंहरति—

**ध्वनेरित्थं गुणीभूत-व्यङ्ग्यस्य च समाश्रयात् ।**
**न काव्यार्थविरामोऽस्ति यदि स्यात् प्रतिभागुणः ॥११०॥**

यदि कवीनां प्रतिभागुणः प्रागुक्तलक्षणः स्यात्, तर्हि—इत्थमुक्तप्रकारेण ध्वने र्गुणीभूतव्यङ्ग्यस्य च समाश्रयात्सम्बन्धात् काव्यार्थानां विरामोऽन्तो नास्ति, किन्तूक्तरीत्या तदानन्त्यमेव सम्पद्यत इत्यर्थः।

काव्यों की अपूर्व रमणीयता प्राप्त होनेमें कवि की प्रतिभा ही प्रधान हेतु है, यह बतलाते हैं—ध्वनेरिति। यदि कविमें प्रतिभा गुण हो तो इस तरह ध्वनि और गुणीभूत व्यङ्ग्यके आश्रयसे काव्यके वर्णन योग्य अतिशय रमणीय अर्थ की कभी समाप्ति ही नहीं हो सकती।

अंशतः कारिकां व्याचष्टे—

सत्स्वपि पुरातनकविप्रबन्धेषु यदि स्यात् प्रतिभागुणः।

तदाऽर्वाचीनकाव्यार्थानामप्यपूर्वत्वेनानन्त्यं भवत्येवेति शेषः।

उक्त कारिकाके एक एक अंशका क्रमशः व्याख्या करते हैं—सत्स्वपीति। प्राचीन कवियोंके गद्य-पद्यादि अनेक काव्योंके रहते हुए भी यदि कविमें प्रतिभा गुण है तो नवीन काव्यार्थोंके भी उत्तरोत्तर अपूर्वत्व प्राप्ति द्वारा आनन्त्य ही होता जायगा, कभी भी समाप्ति नहीं हो सकती है।

ननु तदभावे का क्षतिरित्यत आह—

तस्मिंस्त्वसति न किञ्चिदेव कवेर्वस्त्वस्ति।

एवकारोऽप्यर्थकः। तस्मिन्नपूर्वत्वानन्तत्वसम्पादके प्रतिभागुणेऽसत्यविद्यमाने, कवेर्वर्णनीयं न किञ्चिदपि वस्त्वस्ति, प्रायः सर्वेषामर्थानां सामान्येन कविभिरेव वर्णितत्वादित्यर्थः।

प्रतिभा गुणके नहीं रहनेपर त्रुटि बतलाते हैं—तस्मिन्निति। और उस (प्रतिभा) के न होनेपर तो कविके निकट कोई ऐसी वर्णनीय वस्तु ही नहीं है, जिससे वह एक अपूर्व चमत्कार जनक काव्यका निर्माण कर सके, क्योंकि प्रायः करके सभी वर्णनीय पदार्थ अनादिकालसे कवियों द्वारा वर्णित हो ही चुके हैं।

ननु माभूदर्थापूर्वत्वम्, किन्तूक्तिवैचित्र्यमात्रेणापि नवनवा बन्धच्छाया तु स्यादेव, तथाऽपि न हानिरित्याक्षेपं समादधाति—

बन्धच्छायाऽप्यर्थद्वयानुरूपशब्दसन्निवेशार्थप्रतिभानाभावे कथमुपपद्यते।

अर्थद्वयस्य ध्वनिगुणीभूतव्यङ्ग्यरूपस्यानुरूपो व्यञ्जकतयाऽनुकूलो यः शब्दानां सन्निवेशः प्रबन्धे घटनम्; स एवार्थः प्रयोजनं यस्य, तादृशस्य प्रतिभानस्य प्रतिभाया अभावे बन्धच्छायाऽपि कथमुपपद्यत इत्यर्थः।

सभी अर्थोंके वर्णित होनेसे अपूर्वत्व भले ही न हो किन्तु उक्तिके वैचित्र्य मात्रसे भी एक नया २ प्रवन्ध-सौन्दर्य होगा, उतनेसे ही कविका प्रयास सफल हो जायगा इस आक्षेपका समाधान करते हैं—बन्धच्छायेति। ध्वनि तथा गुणीभूत व्यङ्ग्य रूप अर्थद्वयके अनुरूप व्यञ्जक शब्दोंके सन्निवेशात्मक रचनाका सौन्दर्य भी रमणीयताके प्रयोजक प्रतिभाके अभाव दशामें किस प्रकार हो सकता है, अर्थात् प्रतिभाके विना रमणीय अर्थके अभिव्यञ्जन करनेवाले शब्दोंका सन्निवेश भी नहीं किया जा सकता है।

ननु तद्व्यङ्ग्यद्वयाभावेऽपि शब्दचारिमसम्पदैव प्रबन्धस्य चारुत्वं स्यादिति शङ्कायामाह—

**अनपेक्षिताऽर्थविशेषाक्षररचनैव बन्धच्छायेति नेदं नेदीयः सहृदयानाम्।**

नापेक्षितोऽर्थविशेषो ध्वनिगुणीभूतव्यङ्ग्यरूपो यत्र, तादृगक्षराणां केवलशब्दानां रचनैव, नत्वर्थगौरवम्, बन्धस्य छाया लक्षणया तत्कृदितीदं कथनं मतं वा सहृदयानां नेदीयः सन्निकृष्टं बुद्धिगोचरीभूतं नेत्यर्थः।

ध्वनि तथा गुणीभूत व्यङ्ग्यार्थके अभावमें केवल शब्दोंकी चारुतासे ही काव्यकी चारुता नहीं हो सकती है यह बतलाते हैं—अनपेक्षितेति। ध्वनि या गुणीभूत व्यङ्ग्यरूप अर्थ विशेषकी अपेक्षाके विना ही केवल वर्णोंका विन्यासरूप रचनामात्र ही प्रबन्धोंका सौन्दर्यजनक है, इस बातको माननेके लिये सहृदयजन कभी भी सहमत नहीं हो सकते हैं।

तत्र किं कारणमित्याशङ्क्य निरस्यति—

**एवं हि सत्यर्थानपेक्षचतुरमधुरवचनरचनायामपि काव्यव्यपदेशः प्रवर्तते।**

हि यत एवं व्यङ्ग्यद्वयार्थनैरपेक्ष्येऽपि शब्दवैचित्र्यमात्रेण बन्धचारुत्वेन काव्यत्वाभ्युपगमे सति, व्यङ्ग्यार्थानपेक्षिण्यां चतुरायां समासादिसौष्ठवेन सङ्घटितायां, मधुरायां मृदुलाक्षरमालाकलितायां रचनायामपि काव्यमिदमिति व्यपदेशः प्रवर्तते प्राप्नोति, तस्मान्नेदं युक्तमित्यर्थः।

उसीमें युक्ति दर्शाते हैं— एवं हीति। क्योंकि ऐसा होनेपर अर्थात् ध्वनि और गुणीभूत व्यङ्ग्यके विना भी वर्णोंके विन्यासमात्रसे प्रबन्धमें सौन्दर्य माननेपर तो तादृश अर्थ ( ध्वनि तथा गुणीभूत व्यङ्ग्य ) रहित केवल समासादि सौष्ठवसे मनोहर एवं मृदुल अक्षरोंसे परिपूर्ण मधुर रचनामें भी काव्यका व्यवहार होने लगेगा इसलिये उक्त कल्पना ठीक नहीं है।

ननु शब्दमात्रचारुत्वभृति बन्धेऽर्थचारुत्वाभावेन सहृदयहृदयाह्लादजनकशब्दार्थयुगलात्मककाव्यत्वं न सम्भवतीत्याक्षेपं निराकरोति—

**शब्दार्थयोः साहित्येन काव्यत्वे कथं तथाविधे विषये काव्यव्यवस्थेति चेत्, परोपनिबद्धार्थविरचने यथा तत्काव्यत्वस्य व्यवहारः, तथा तथाविधानां काव्यसन्दर्भाणाम्।**

यदि चमत्कारिशब्दार्थोभयं काव्यम्, तर्हि शब्दमात्रस्य चमत्कारित्वे काव्यत्व व्यवहारो नोचित इति शङ्कितुराशयः।

यथा काव्यान्तरोपनिबद्धार्थस्य रचनायामन्यकृतायां परकीयकाव्यत्वव्यवहारो गौणः काव्यत्वव्यवहारो वा भवति, तथैव शब्दचारिम्णाऽपूर्वच्छायाभृतां काव्यसन्दर्भाणामपि तत्त्वव्यवहारो भाक्तएव, न तु वास्तविकः स्यादित्युत्तरयितुरभिप्रायः।

इह कवेर्भावः काव्यम्, तस्य भावः काव्यत्वमिति भावप्रत्ययान्ताद् भावप्रत्ययोद्भवो न शङ्कनीयः, कवेरनिर्वचनीयरचनात्मककर्मणएव काव्यपदार्थत्वात्। तथा चात्र सकृदेव भावप्रत्ययोत्पत्तिरिति बोध्यम्।

शब्द और अर्थ इन दोनोंके रहनेपर ही काव्यत्व होता है, अतः उस प्रकारके अर्थहीन केवल मनोहर वर्णविन्यासके विषयमें काव्यत्वकी व्यवस्था किस प्रकार होगी अर्थात् केवल सुन्दर अक्षर रचनामात्रमें काव्यका व्यवहार नहीं होगा यह कहना ठीक नहीं, क्योंकि जिस प्रकार काव्यान्तरमें दूसरे कविके उपनिबद्ध अर्थविशेषकी रचना करनेपर गौण या जिस किसी रूपमें काव्यका व्यवहार होता है, उसी प्रकार इस तरहके अर्थनिरपेक्ष शब्द रचनामात्रसे अपूर्व सौन्दर्यशाली काव्यसन्दर्भोंमें भी काव्यव्यवहार होने लगेगा, इसलिये अर्थनिरपेक्ष शब्दरचनामात्र ही प्रबन्ध-सौन्दर्यका हेतु नहीं है।

अथ व्यङ्ग्यप्रसङ्गेन वाच्यस्याप्यर्थानन्त्यप्रयोजकत्वं प्रख्यापयितुं कारिकामवतारयति—

**नचार्थानन्त्यं व्यङ्ग्यार्थापेक्षयैव, यावद् वाच्यार्थापेक्षयाऽपीति प्रतिपादयितुमुच्यते—**

अब व्यङ्ग्यार्थके प्रसङ्गसे वाच्य भी अनन्त अर्थका प्रयोजक है, इस बातको सूचित करनेके लिये अग्रिम कारिकाकी भूमिका रचते हैं—न चेति। केवल व्यङ्ग्यार्थके कारण ही अर्थोंमें आनन्त्य (अपूर्वत्व या वैचित्र्य) नहीं आता है, अपितु वाच्यार्थ विशेषकी दृष्टिसे भी अर्थोंकी नवीनता हो सकती है, इसी विषयका प्रतिपादन करनेके लिये आगे कहते हैं:—

'अवस्थादेशकालादि-विशेषैरपि जायते ।
आनन्त्यमेव वाच्यस्य शुद्धस्यापि स्वभावतः॥ १११॥'

शुद्धस्य व्यञ्जनव्यापारानपेक्षस्यापि वाच्यस्याभिधेयस्य, अवस्थानां विशेषणभेदेन देशानां विशेषेण, कालानां विशेषेण, आदिशब्दात् स्वरूपाणां विशेषेण च स्वभावत आनन्त्यमेव जायते भवतीत्यर्थः।

वाच्यं वास्तवेकमपि अवस्थाऽऽदिभेदेन वर्णनीयत्वे नानेव भवतीति सारम्। इदं पुनरिह रहस्यम्—वाच्यं न तत्र सर्वथा व्यञ्जनाशून्यम्, अपि तु व्यञ्जनात् प्रागेवावस्थाऽऽदिभेदेनानन्त्यमासादयति, पश्चाद् व्यञ्जनाबलेन प्रतीयमानमर्थं प्रकाशयत्येव। तदस्वीकारे व्यङ्ग्यात्मकत्वाभावप्रयुक्तः काव्यत्वाभाव एव तादृशलक्ष्येष्वापतेत्। एवञ्चैतल्लक्ष्यसमुदये रसादिध्वनिसद्भावोऽस्त्येव।

व्यङ्ग्यार्थं निरपेक्ष केवल शुद्धवाच्यार्थकी भी अवस्था, देश, काल आदिके वैशिष्ट्यसे स्वभावतः अनन्तता या विचित्रता हो ही जाती है अर्थात् एक भी वाच्यवस्तु अवस्थादिभेदोंसे वर्णनीय होकर अनेककी तरह प्रतीत होने लगती है।

कारिकां विवृणोति—

**शुद्धस्यानपेक्षितव्यङ्ग्यस्यापि वाच्यस्यानन्त्यमेव जायते स्वभावतः। स्वभावोह्ययं वाच्यानां चेतनाचेतनानां यदवस्थाभेदाद् देशभेदात् कालभेदात् स्वालक्षण्यलक्षणभेदाच्चानन्तता भवति। तैश्च तथा व्यवस्थितैः सद्भिः प्रसिद्धानेकस्वभावानुसरणरूपया स्वभावोक्त्याऽपि तावदुपनिबध्यमानैर्निरवधिः काव्यार्थः सम्पद्यते।**

स्वमेव लक्षणं यस्य, स स्वलक्षणस्तस्य भावः स्वालक्षण्यं स्वरूपं, तल्लक्षणभेदात् स्वरूपभेदात्। तथाव्यवस्थितैरवस्थाऽऽदिभेदभिन्नैः। प्रसिद्धा येऽनेके स्वभावास्तेषामनुसरणमधिगमस्तद्रूपया स्वभावोक्त्या स्वरूपवर्णनयाऽपि, उपनिबध्यमानैस्तैर्वाच्यैः काव्यार्थो निरवधिरनन्तः सम्पद्यते भवतीत्यर्थः।

अवस्थादिभेदभिन्नवस्तुनैकविधस्वभाववर्णनेनापि काव्यार्थानन्त्यं भवतीति सारम्।

वृत्तिकार उक्त कारिकाशयको स्पष्ट करते हैं—शुद्धस्येति। शुद्ध अर्थात् व्यङ्ग्यनिरपेक्ष वाच्यार्थकी भी अनन्तता हो ही जाती है, क्योंकि चेतन और अचेतन सभी वाच्यार्थोंका यह स्वभाव है कि अवस्थाभेद, देशभेद, कालभेद और स्वरूपभेदसे उन (वाच्यार्थों) का आनन्त्य हो जाता है, उन वाच्यार्थोंके उस देश, काल, अवस्थादि भेदसे नए नए अर्थोंके प्रकाशनरूपमें व्यवस्थित होनेपर अनेक

प्रकार प्रसिद्ध स्वभावोंके वर्णनरूप स्वभावोक्तिसे भी वाच्यार्थोंकी रचना करनेपर काव्यार्थ अनन्तरूप को प्राप्त कर लेता है।

समासेनोक्तं तमेवार्थं व्यासेनैकैकशो व्यवस्थापयितुकाम उद्देशक्रमेण प्रथममवस्थाभेदप्रयुक्तमर्थानन्त्यं दर्शयति—

तथा ह्यवस्थाभेदान्नवत्वं यथा—भगवती पार्वती कुमारसम्भवे—'सर्वोपमाद्रव्यसमुच्चयेन' इत्यादिभिरुक्तिभिः प्रथममेव परिसमापितरूपवर्णनापि, पुनर्भगवतः शम्भोर्लोचनगोचरमायान्ती—'वसन्तपुष्पाभरणं वहन्ती' इत्यादिमन्मथोपकरणभूतेन भङ्ग्यन्तरेणोपवर्णिता। सैव च पुनर्नवोद्वाहसमये प्रसाध्यमाना—'तां प्राङ्मुखीं तत्र निवेश्य तन्वीम्' इत्याद्युक्तिभिर्नवेनैव प्रकारेण निरूपितसौष्ठवा। न च ते तस्य कवेरेकत्रैवासकृत् कृता वर्णनप्रकाराः पुनरुक्तत्वेन वा नवनवार्थनिर्भरत्वेन वा प्रतिभासन्ते।

यद्यपि कुमारसम्भवे प्रथमसर्गे—'असम्भृतंमण्डनमङ्गयष्टेः' इत्यादित्रिंशश्लोकतः 'सर्वोपमाद्रव्यसमुच्चयेन' इत्याद्यूनचत्वारिंशश्लोकं यावत् प्रथमं वर्णिता। पुनस्तृतीयसर्गे—'निर्वाणभूयिष्ठमथास्य वीर्यं सन्धुक्षयन्तीव वपुर्गुणेन' इत्यादिद्विपञ्चाशच्छ्लोकतः कामकर्तृकशिववशीकरणोपयोगित्वेन रूपेण पञ्चभिः पद्यैर्वर्णिता। पुनरपि सप्तमसर्गे—'तांप्राङ्मुखी तत्र निवेश्य तन्वीम्' इत्यादि त्रयोदशश्लोकतः परिणयप्रसाधनाङ्गत्वेन वर्णिता, तथाऽपि तद्वर्णनेऽर्थपौनरुक्त्यं मनागपि न प्रतीयते, अवस्थाभेदेन पार्वत्या वर्णनीयाया भेदाद् भिन्नवस्तुवर्णनादिति सारम्।

संक्षेपसे उक्त विषयोंको ही विस्ताररूपसे वर्णन करनेकी भावनासे सबसे पहले अवस्थाभेदसे अपूर्वता बतलाते हैं—तथा हीति। इनमें अवस्थाभेदके कारण एक पदार्थमें ही अनन्तता या नवीनता प्रतीत होने लगती है, जैसे—कुमारसंभवमें 'सर्वोपमाद्रव्यसमुच्चयेन'—इत्यादि उक्तियोंसे पहले पहल भगवती पार्वतीके रूप वर्णनके समाप्त हो जानेपर भी फिर शङ्करभगवान्‌के सामने आती हुई पार्वतीका 'वसन्तपुष्पाभरण वहन्ती' इत्यादि उक्तियोंसे कामदेवके साधनरूपमें दूसरे ढगसे दुबारा वर्णन किया गया है, और फिर नूतन विवाहके समय अलंकृतकी जाती हुई पार्वतीके सौन्दर्यका 'ता प्राङ्मुखीं तत्र निवेश्य तन्वीम्—इत्यादि उक्तियोंसे तीसरी बार नये ढंगसे वर्णन किया गया है। इस प्रकार एक ही पार्वतीके उक्त तीन स्थानोंपर एक अद्भुत छटासे वर्णन होनेके कारण अर्थमें लेशमात्र भी पुनरुक्ति नहीं प्रतीत होती है, क्योंकि अवस्थाके भेदसे वर्णनीय पार्वतीके भी भेद हो जानेसे भिन्न भिन्न वस्तुओंके वर्णनके समान प्रतीत होता है। परन्तु कविके द्वारा एक ही

अन्ते पदार्थानां स्वरूपभेदप्रयुक्तं भेदं दर्शयति—

**स्वालक्षण्यभेदाच्च सकलजगद्गतानां वस्तूनां विनिबन्धनमविगीतमेव। तच्च यथाऽवस्थितमपि तावदुपनिबध्यमानमनन्ततामेव काव्यार्थस्यापादयति।**

स्वालक्षण्यं स्वरूपं तद्व्यक्तित्वमिति यावत्। अविगीतमनिन्दितमुचितमित्यनर्थान्तरम्। यथाऽवस्थितं तत्तदवस्थाविशिष्टं स्वभावानुरूपं वा।

स्वभावभेदेन भिन्नानामपि पदार्थानां वर्णनेन काव्यार्थानन्त्यं भवत्येवेति सारम्।

अब अन्तमें पदार्थोंके स्वरूप-भेद-प्रयुक्त भेद बतलाते हैं—स्वालक्षण्यमिति। समस्त संसारके पदार्थोंके अपने स्वरूप ( तद्व्यक्तित्व ) भेदसे विशेषता काव्यमें अनिन्दित ( प्रसिद्ध ) ही है और वह स्वरूप जिस प्रकारका है, उसी रूपमें उपनिबद्ध होकर भी काव्यके विषयको अनन्तरूप बना देता है, अर्थात् स्वभाव-भेदसे भिन्न पदार्थोंके भी वर्णनसे काव्यार्थका आनन्त्य हो ही जाता है।

इदानीं वाच्यार्थानामित्थं नानात्वेन काव्यार्थानन्त्यमस्वीकुर्वतां मतमपाकर्तुमुपन्यस्यति—

**अत्र केचिदाचक्षीरन्-यथा सामान्यात्मना वस्तूनि वाच्यतां प्रतिपद्यन्ते, न विशेषात्मना। तानि हि स्वयमनुभूतानां सुखादीनां तन्निमित्तानां च स्वरूपमन्यत्रारोपयद्भिः स्वपरानुभूतसामान्यमात्राश्रयेणोपनिबध्यन्ते कविभिः। न हि तैरतीतमनागतं वर्तमानं च परचित्तादिस्वलक्षणं योगिभिरिव प्रत्यक्षीक्रियते। तच्चानुभाव्यानुभावकसामान्यं सर्वप्रतिपत्तृसाधारणं परिमितत्वात् पुरातनानामेव गोचरीभूतम्। तथाऽस्य विषयस्यानुपपत्तेः। अत एव स प्रकारविशेषो यैरद्यतनैरभिनवत्वेन प्रतीयते, तेषां भ्रममात्रमेव। भणितिकृतं वैचित्र्यमात्रमत्रास्तीति।**

आचक्षीरन्निति लिङः आग्वत् तत्प्रतिपाद्यानां सम्भावनामात्रविषयत्वेनासत्त्वस्य, बहुवचनस्य च विप्रतिपन्नबहुलतायाश्च प्रकाशकत्वम्। यथेत्याख्यानस्याख्येस्य वा प्रकारं परामृशत् तथेत्यनेनान्वेति। तानि वस्तूनि। तन्निमित्तानां सुखाद्युपभोगसाधनानां स्रक्चन्दनादीनाम्। चकारः समुच्चयार्थः स्वेन परैश्चानुभूतानां ( वस्तूनां ) यत् सामान्यं तन्मात्रस्य विशेषशून्यसामान्यस्याश्रयेण वर्णनीयतयाऽवलम्बनेन। नहीति प्रत्यक्षीक्रियत इत्यनेनान्वेति। तैः कविभिः। अतीतं भूतम्, अनागतं भविष्यत्। परचित्तादिस्वलक्षणं परकीयचित्तप्रभृतिस्वरूपम्।

अनुभवितुं योग्यमनुभाव्यं सुखादि, अनुभावयतीत्यनुभावकं तत्साधनीभूतं वस्तु। सर्वप्रतिपत्तृसाधारणमखिलज्ञातृबुद्धिविषयीभूतम्। तत्र निमित्तं परिच्छिन्नत्वलक्षणं परिमितत्वम्। पुरातनानां वाल्मीकिप्रभृतीनाम्। गोचरीभूतं धिय इति शेषः। तथा तेन प्रकारेण सामान्यस्यावगतचरत्वेनास्य विषयस्य काव्यर्थनवनवीभावस्य। अतएव—अर्थसामान्यस्य प्राचीनवर्णितपूर्वत्वादेव। स वाच्यानन्त्यरूपः। भणितिकृतमुक्तिजनितं वैचित्र्यमात्रं केवलं तदेव।

यथा योगिनां योगजसन्निकर्षेण लोकप्रत्यक्षागोचरस्यापि परकीयचित्तादिवस्तुनः प्रत्यक्षीकरणसामर्थ्यं, न तथा कवीनाम्, येन ते भूतान् वर्तमानान् भविष्यतश्च पदार्थान् साकल्येन तत्तद्विशेषाकारेण प्रत्यक्षीकर्तुं शक्नुयुः। तस्मात् कवीनां सामान्याकारेणैव कथंचित् त्रैकालिकपदार्थावगम इति निश्चितम्। तथा सति सुष्टिमेयं तत् पदार्थसामान्यं वाल्मीकिप्रभृतिप्राचीनकविभिरध्यक्षीकृतमेवेति नाक्षुण्णम्। तस्मादिदानीन्तनकविकाव्यार्थानन्त्याय तत् कथं कल्पेत। किन्तु यथा माल्यं पुष्पाणामनिर्मातुरपि मालाकारस्य गुम्फनपाटवं किञ्चित् प्रकटयत्येव, तथा तदपि नूतनकवेरुक्तिवैचित्र्यघटनकौशलं किञ्चित् प्रकाशयेत्, न तूक्तरूपं नवनवीभावम्। ततश्च स्वालक्षण्यभेदप्रयोज्यवस्तुभेदः काव्यार्थानन्त्यप्रयोजक इति रिक्तं वच इत्ययमभिसन्धिः शङ्काकृताम्।

अब उक्त प्रकार वाच्यार्थोंके नानात्वसे काव्यार्थकी अनन्तताको नहीं मानने वालोंका मत दूर करनेके लिये भूमिका रचते हैं-अत्रेति। (पूर्वपक्ष) पदार्थोंके स्वरूपकृत भेदके विषयमें कुछ व्यक्ति इस प्रकार प्रश्न करते हैं कि पदार्थ सामान्य रूपसे ही वाच्य होते हैं, विशेष रूपसे नहीं, क्योंकि कविगण स्वयं अनुभूत उन सुखादि पदार्थों को एवं उन (सुखादि) के साधनभूत स्रक्, चन्दन, वनिता आदिके स्वरूपको नायकादिमें आरोपित करके अपने तथा अन्य नायकादिके अनुभूत सामान्य मात्रके आश्रयसे ही उन नायकादिके सुखादि तथा उसके साधनरूप स्रक्, चन्दनादिका वर्णन करते हैं, क्योंकि वे कविगण योगियोंके समान अतीत (भूत), भविष्य तथा वर्तमान कालिक अन्य व्यक्तिगत स्वरूप (स्वभाव) तथा सुख-दुःखादिका प्रत्यक्ष नहीं कर सकते हैं, और सुखादिरूप अनुभाव्य तथा सुखादिके अनुभावकरूप स्रक्-चन्दनादि सामान्य पदार्थ सकल अनुभव कर्ताओंके लिये समान (एक) रूप ही हैं, और परिमित होनेसे प्राचीन कवि ही उसको जान चुके हैं, वे (प्राचीन कवि) उसको जान न सके हों यह सम्भव नहीं है, इसलिये उस स्वस्वरूप प्रकार विशेषको जो आधुनिक लोग एक अभिनव रूपमें अनुभव करते हैं, वह उनका

अभिमान ( भ्रम ) मात्र ही है, क्योंकि इसमें केवल उक्तिवैचित्र्य ( वचनभङ्गी ) से ही एक नया चमत्कार प्रतीत होता है, अर्थात् पदार्थमें कोई वास्तविक नवीनता नहीं है, अपितु उक्तिवैचित्र्यके कारण ही नवीनताका आभासमात्र होता है यह पूर्वपक्षका आशय है ।

समादधाति—

तत्रोच्यते—यदिसामान्याश्रयेण काव्यप्रवृत्तिः, तत्प्रदर्शितप्रकारं काव्यवैचित्र्यमवस्थाऽऽदिविशेषात् किं पुनरुक्तमेवास्तु ? न चेत् तथा, तत्कथं न काव्यानन्त्यम् ।

किंशब्दः पौनरुक्त्यस्य प्रमाणापरिगृहीतत्वेनास्वीकरणीयतां सूचयति । नहि सामान्याकारेणैव पदार्थग्रहः, अपि तु यत्किञ्चिद्विशेषाकारेणापि । अतएव वाल्मीक्यादिकाव्ये सत्यपि कालिदासादिकाव्यानामर्थवैचित्र्यं दुरपह्नवमनुभूयत एवेत्युत्तरयितुराशयः ।

( उत्तर पक्ष ) उक्त पूर्व पक्षका खण्डन करते हैं—तत्रोच्यत इति । यदि सामान्य मात्रके आश्रयसे ही कवियोंकी काव्यमें प्रवृत्ति मानी जाय तो पूर्व प्रदर्शित अवस्थादि भेदसे अत्यन्त रमणीयतया प्रतीयमान काव्य विशेषका विषय पुनरुक्त ही हो जायगा । यदि उक्त काव्य विशेषमें सहृदय विद्वानों द्वारा अनुभूयमान एक नवीन चमत्कार विशेषका हठात् अपलाप नहीं किया जा सकता यह कहें तो काव्यार्थोंका आनन्त्य स्वयं सिद्ध हो जाता है, अर्थात् काव्य में सामान्य रूपसे ही पदार्थोंका चित्रण ( वर्णन ) नहीं किया जाता है, अपितु कुछ विशेष रूपसे भी वर्णन किया जाता है, यह मानना होगा, अतएव वाल्मीकि आदि काव्यके रहनेपर भी सहृदयोंको कालिदासादि काव्योंके अर्थवैचित्र्यका निर्बाध अनुभव होता है, यह उत्तर पक्षका आसय है ।

तदेवानूद्य खण्डयति—

यत्तूक्तम्—'सामान्यमात्राश्रयेण काव्यप्रवृत्तिः, तस्य च परिमितत्वेन प्रागेव गोचरीकृतत्वान्नास्ति नवत्वं काव्यवस्तूनामिति । तदुक्तम्—यतो यदि सामान्यमात्रमाश्रित्य काव्यं प्रवर्तते, किंकृतस्तर्हि महाकविनिबध्यमानानां काव्यानामतिशयः ?

अतिशय उत्कर्षो विशेष इति यावत् ।

स च सकलसहृदयहृदयगोचरतयाऽपलपितुमशक्योऽतिशयो विशेषाश्रयेणापि काव्यप्रवृत्तिं प्रमाणयतीति तात्पर्यम् ।

उक्तार्थका ही अनुवाद करते हैं—यत्तूक्तमिति। आप (पूर्वपक्षी) ने जो यह कहा है कि सामान्यमात्रके आश्रयसे ही काव्यकी रचना होती है, तथा उस (सामान्य) का ज्ञान पहले ही प्राचीन कवियोंको हो चुका है, इसलिये काव्यार्थोंमें अपूर्वता नहीं हो सकती है, यह कहना आपका उचित नहीं है, क्योंकि यदि सामान्यमात्रके आश्रयसे काव्यकी रचना होती है तो महाकवियों द्वारा वर्णित काव्य पदार्थोंमें किस कारण विशेष तारतम्य होता है, अतः उसी तारतम्य विशेषके सहृदयों द्वारा अनुभूयमान होनेसे अपलाप नहीं किये जा सकनेके कारण यह सिद्ध होता है कि विशेषके आश्रयसे भी काव्यार्थोंकी रचनामें कवियोंकी प्रवृत्ति होती है।

ननु तेन का क्षतिरित्यतआह—

**एवं वा वाल्मीकिव्यतिरिक्तस्यान्यस्य कवि (जंनस्य कृते व्यर्थत्वापातः।**

वाशब्दश्चकारार्थकः। 'एवं वा' इति सन्दर्भशुद्ध्यनुरोधेन पूर्ववाक्यएवोत्तर वाक्यादपकृष्टम्, उत्तरवाक्ये तस्यानपेक्षणात्त्रापेक्षितत्वाच्च। एवं प्रकोष्ठान्तर्गतः पाठश्चोहितएव।

उक्त विषयमें सामान्यमात्रके नहीं आश्रय करनेमें युक्ति दर्शाते हैं—एवमिति। वैसा माननेसे वाल्मीकि आदि कविको छोड़कर अन्य किसी को कवि ही किस आधारपर कहा जा सकता है अर्थात् अन्य कविकी कृति ही व्यर्थ हो जायगी।

अन्यकविकृते व्यर्थत्वापाते हेतुमाचष्टे—

**सामान्यव्यतिक्तस्यान्यस्य काव्यार्थस्याभावात्, सामान्यस्य चादिकविनैव प्रदर्शितत्वात्।**

चकारस्त्वर्थकः। वाल्मीकिना सर्वमर्थसामान्यं हि वर्णितमेवेति पुनस्तद्वर्णनमर्वाचीनानां चर्वितचर्वणमेवेति— तत्काव्यानर्थक्याय कल्पेत, तस्मादर्थविशेषेणापि काव्यप्रवृत्तिरवश्यं स्वीकरणीया, नत्वर्थसामान्यमात्रेणेत्याकूतम्।

कवि कृतिके व्यर्थ होनेमें कारण बतलाते—सामान्येति। क्योंकि आपके विचारसे सामान्यके अतिरिक्त दूसरा कोई काव्यका वर्ण्य विषय ही नहीं हो सकता है, और सामान्यका प्रदर्शन आदि कवि वाल्मीकि ही कर चुके हैं, सारांश यह है कि यदि सामान्यमात्रके आश्रयसे ही काव्यमात्रका निर्माण मान लिया जाय तो अन्य किसी कविके पास नवीन वर्ण्य विषय न होनेसे अन्य कोई कवि न तो कवि ही गिना जा सकता है, और न वाल्मीकिसे भिन्न उसकी रचनामें कोई नवीनता ही आ सकती है, इसलिये अर्थविशेषके आश्रयणसे भी काव्यमें प्रवृत्ति अवश्य माननी चाहिये।

ननूक्तमाल्यतुल्यन्यायेनोक्तिवैचित्र्यमात्रेण नवीनकविकृतेश्चमत्कारिता स्यादेवेति शङ्कामुपपादनेन निराकरोति—

उक्तिवैचित्र्यान्नैष दोष इति चेत्, किमिदमुक्तिवैचित्र्यम्? उक्तिर्हि वाच्यविशेषप्रतिपादनवचनम्, तद्वैचित्र्येण कथं न वाच्यवैचित्र्यम्? वाच्यवाचकयोरविनाभावेन प्रवृत्तेः। वाच्यानां च काव्ये प्रतिभासमानानां यद्रूपं, तत्तु ग्राह्यविशेषाभेदेनैव प्रतीयते। तेनोक्तिवैचित्र्यवादिना वाच्यवैचित्र्यमनिच्छताऽप्यवश्यमभ्युपगन्तव्यम्।

प्रतिपाद्यते बोध्यतेऽनेनेति प्रतिपादनं, तादृशं च तद्वचनमिति कर्मधारयः। तद्वैचित्र्येण वाचकात्मिकाया उक्तेर्वैचित्र्येण। अविनाभावे प्रवृत्तेश्शब्दार्थयोस्तादात्म्येन शब्दं विनाऽर्थस्यासत्त्वात्। ग्राह्यः प्रत्यक्षादिप्रमाणैर्निर्णीततया बोध्यो यो विशेषः सामान्यातिरिक्तउक्तस्वरूपस्तस्य योऽभेदस्तादात्म्यं, तेनैव काव्ये वाच्यं वाच्यसामान्यं प्रतीयत इति सम्बन्धः। तेनेत्यादिना फलितकथनम्।

इदमुच्यते—नह्युक्तिवैचित्र्यमात्रेणार्वाचीनकविकाव्यानामपूर्वत्वम्, वाच्यवाचकयोरभेदेन वाचकवैचित्र्यस्थले वाच्यवैचित्र्यस्याप्यवश्यम्भावेन प्रतिनियतवाच्यवैचित्र्यस्यैव तदपूर्वतामूलत्वेनाभ्युपगन्तुमौचित्यात्, केवलवाचकवैचित्र्यस्य त्वसम्भवात्, सम्भवेऽपि तदपेक्षयाऽकिञ्चित्करत्वाच्च। किञ्च काव्यघटकपदानां वाच्यसामान्ये शक्तावपि सामान्यविशेषयोरुक्तरीत्या तादात्म्याद् विशेषप्रत्यायकताऽस्त्येवेति न प्रकृतेऽनुपपत्तिरिति विभावनीयम्।

उक्तिवैचित्र्यमात्रसे ही नवीन कविकी कृतिमें चमत्कारिता हो सकती है? इस आक्षेपका खण्डन करते हैं—उक्तिवैचित्र्येति। उक्तिके वैचित्र्यके कारण उक्त दोष नहीं होगा, अर्थात् कथनशैलीकी विलक्षण छटासे महाकवियोंकी रचनाओंमें तारतम्य या नवीनताका भान होता है और इसी उक्तिवैचित्र्यके आधारपर अन्य कवियोंको कवि कहा जा सकता है, यह नहीं कह सकते हैं, क्योंकि यह उक्तिवैचित्र्य पदार्थ क्या है? यदि वाच्यविशेषको प्रतिपादन करनेवाले वचनकी छटा (कथनशैली) को ही उक्तिवैचित्र्य कहते हैं, तो उस प्रकारके वचनवैचित्र्यके माननेपर उसके वाच्यार्थ में वैचित्र्य क्यों नहीं होगा? क्योंकि वाच्य और वाचककी अविनाभाव (व्याप्य–व्यापकभाव) सम्बन्धसे प्रवृत्ति होती है। इसलिये वचनात्मक वाचक शब्दमें वैचित्र्य होनेसे वाच्यमें भी वैचित्र्य होना आवश्यक है, काव्यमें प्रतीत होनेवाले वाच्योंका जो स्वरूप है, वह कविके स्वयं अनुभूत ग्राह्यविशेष (प्रत्यक्ष प्रमाणसे गृहीत सुखादि तथा उसके साधनभूत स्रक्–चन्दन–

वनितादि ) के अभिन्न रूपमें ही प्रतीत होता है, इसलिये उक्तिवैचित्र्य माननेवाले व्यक्तिको इच्छा न रहते हुए भी वाच्यका वैचित्र्य अवश्य मानना होगा।

पर्यवसितं समासेनोपदिशति—

तदयमत्र सङ्क्षेपः—

'वाल्मीकिव्यतिरिक्तस्य यद्येकस्यापि कस्यचित्।
इष्यते प्रतिभाऽऽनन्त्यं तत्तदाऽऽनन्त्यमक्षतम्॥'

यदि वाल्मीकेर्व्यतिरिक्तस्य भिन्नस्य, कस्यचिदेकस्यापि कवेः, प्रतिभायास्तत्प्रयोज्यवर्णनविषयार्थसम्पत्ते रानन्त्यमनवधित्वम्, इष्यतेऽभिलष्यते। तत्तदा तदानन्त्यं सर्वेषां नूतनकवीनामर्थनिष्ठमानन्त्यम्, अक्षतं नियतमित्यर्थः। तुल्यन्यायादन्येषामपि कवीनां तदानन्त्यं मन्तव्यमेव भवेदिति भावः।

अब सबका सारांश बतलाते हैं—तदयमत्रेति। यदि वाल्मीकिके अतिरिक्त किसी एक भी कविके प्रतिभाविशेषके प्रयुक्त वर्णनीय काव्यार्थ का आनन्त्य अभीष्ट समझते हैं, तो सभी नूतन कवियोंके काव्यार्थका आनन्त्य होना निश्चित है, अर्थात् उक्त तुल्य युक्तिसे अन्य कवियोंके अर्थका भी आनन्त्य मानना ही होगा।

परपक्षमभ्युपगत्यापि स्वपक्षं स्थापयति—

किञ्च—उक्तिवैचित्र्यं यत् काव्यनवत्वेननिबन्धनमुच्यते, तदस्मत्पक्षानुगुणमेव, यतो यावानयं काव्यानन्त्यभेदहेतुः प्रकारः प्राग्दर्शितः, स सर्व एव पुनरुक्तिवैचित्र्याद् द्विगुणतामापद्यते।

'काव्यनवत्वे निबन्धनम्' इति पठनीयम्, यथाश्रुते तु तृतीयाऽर्थस्यानन्वयो दुष्परिहरः। एवं 'काव्यानन्त्यभेदहेतुः' इति 'काव्यभेदानन्त्यहेतुः' इति वा सुपठम्, आनन्त्य-भेदयोरभेदेनान्वयासम्भवात्। अभिनिवेशे तु-काव्यानां तत्प्रतिपाद्यार्थानां चानन्त्ये भेदे च हेतुरवस्थाभेदादिरिति द्वन्द्वगर्भतत्पुरुषेण कथंचिद्योजनीयम्।

अवस्थाऽऽदिभेदै भिन्ना अपि काव्यार्था उक्तिवैचित्र्यसहकारेण विपुलीभवन्तो नितरां शोभन्ते, शब्दार्थयो र्द्वयोरपि चमत्कारित्वात्। अत्रैव कुन्तलसिद्धान्तोऽन्तर्भवतीति बोध्यम्।

परपक्षको मान कर भी स्वपक्षकी स्थापना करते हैं—किञ्चेति। उक्तिवैचित्र्यको जो काव्यमें अपूर्वता लानेका हेतु कहते हैं, वह तो हमारे पक्षके अनुकूल ही है, क्योंकि काव्यार्थके आनन्त्यके हेतु रूपमें जो ये अवस्था, देश, काल आदि जितने प्रकार पहले दिखाये गये हैं, वे सभी उक्तिके वैचित्र्यसे अनन्त हो जाते हैं, अर्थात् अवस्थादि भेदसे भिन्न काव्यार्थ भी उक्तिवैचित्र्यके सहकारसे अत्यन्त वैपुल्यको

प्राप्त करते हुए अत्यन्त शोभाको पाने लगते हैं, क्योंकि शब्द और अर्थ दोनों ही वैचित्र्याधायक होते हैं।

उक्तिवैचित्र्यस्यार्थानन्त्यहेतुतां समर्थयति—

**यश्चायमुपमाश्लेषादिरलङ्कारमार्गः प्रसिद्धः, स भणितिवैचित्र्यादुपनिबध्यमानः स्वयमेवानवधिर्धत्ते शतशाखताम्।**

भणितिरुक्तिः। अनवधिर्निस्सीमः, अलङ्काराणां संसृष्टिसंकरयोगेनामितप्रकारत्वात्। शतशाखतामनन्तप्रकारताम्।

उपमाप्रभृतयो येऽमी वाच्यालङ्कारास्ते स्वतोविविधाकारा अपि, भणितिवैचित्र्येणोपादीयमाना अनन्तप्रकारान् भजन्ति। तथाहि—एकमेवोपमानं निभप्रतिमप्रतिबिम्बतुल्यसमानसदृशाभासनीकाशसब्रह्मचारिसोदरप्रतिच्छायादिभि रनेकाभि र्भणितिभि र्विचित्राभि रुपादीयमानं विचित्रतां प्राप्नोतीति स्फुटमेवोक्तिवैचित्र्यस्यालङ्कारवैचित्र्यसम्पादनद्वारकार्थवैचित्र्यसम्पादकत्वम्।

उक्तिवैचित्र्यके अर्थानन्त्य-प्रयोजकत्वका समर्थन करते हैं—यश्चायमिति। और जो ये उपमा, श्लेष आदि वाच्य अलङ्कार-समूह प्रसिद्ध हैं, वे स्वयं ही अपरिमित होनेपर भी उक्तिवैचित्र्यसे उपनिबद्ध होकर फिर अनन्तों शाखाओंसे युक्त हो जाते हैं।

पुनरपरथा तदेव दर्शयति—

**भणितिश्च भाषाभेदेन व्यवस्थिता सती, प्रतिनियतभाषागोचरार्थवैचित्र्यनिबन्धनं पुनरपरं काव्यार्थानामानन्त्यमापादयति।**

भाषाभेदेन व्यवस्थिता विभिन्ना सती भणितिश्च पुनः कर्त्री प्रतिनियताया स्तत्तत्तया निश्चिताया भाषाया गोचरेण तज्जन्यबोधविषयीभूतेन वाच्येन कृतं सम्पादितं वैचित्र्यमेव निबन्धनं निमित्तं यस्य, तादृशं पुनरपरं काव्यार्थानामानन्त्यं कर्मीभूतमापादयति करोतीत्यर्थः।

प्रतिभाषं खलु भिन्नभिन्नतया विचित्रैव भवति भणितिरिति प्रसिद्धमेव। तच्च भणितिवैचित्र्यमर्थवैचित्र्यस्यापि बोधद्वारा निमित्तीभवत् सत् काव्येऽलङ्काराणां तदितरार्थानां चानन्त्यं सम्पादयतीति सारम्।

सन्दर्भसङ्गतये 'कथाभेदेन, इति पाठं विहाय 'भाषाभेदेन' इति पाठोऽङ्गीकृतः।

उक्त विषयको ही दूसरे ढङ्गसे प्रतिपादन करते हैं—भणितिश्चेति। अपनी भाषाओंके भेदसे व्यवस्थित भणिति (उक्ति) भी विशेषभाषाविषयक अर्थोंके वैचित्र्यके कारण काव्यार्थोंमें फिर और भी आनन्त्य उत्पन्न कर देती है।

तदेवोदाहरति—

यथा ममैव—

'महमह इन्ति भणिन्तउ बच्चइ कालो जणस्स तेइ ॥
ण देओ जाणद्दणो गोअरो होदि मणसो महुमहणो ॥'

'मम ममेति भणतो व्रजति कालोजनस्य तथाऽपि ॥
न देवो जनार्दनो गोचरो भवति मनसो मधुमथनः ॥' इति च्छाया ।

यद्यपि मम जनार्दनोमम जनार्दन इति भणतः कथयतो जनस्य कालो व्रजति निर्गच्छति, तथाऽपि देवो भगवान् मधुमथनो मधुसूदनो जनार्दनः तस्य मनसो गोचरो बुद्धिविषयो न भवतीत्याश्चर्यमित्यर्थः ।

इहानुपलं मम ममेति भणतोऽपि जनार्दनः कथं बुद्धिविषयो न भवतीति प्रतीयमानां विरोधालङ्कारच्छायां 'महमह' इति सैन्धवभाशमयी भणितिर्विचित्रीकरोतीति भाषाभेदविभिन्नभणितिवैचित्र्यस्यालङ्कारावर्थवैचित्र्यसम्पादकत्वं व्यक्तम् ।

अस्फुटेयं गाथा कथिता कैश्चित् । अस्माभिः पुनर्लोचनदर्शितच्छायाऽनुसारं कथंचित् स्फुटीकृता ।

उसीका उदाहरण बतलाते हैं—यथा ममैवेति । 'यह मेरा-वह मेरा' कहते-कहते ही मनुष्यके जीवनका सारा समय बीत जाता है, परन्तु हृदयमें जनार्द्दन भगवान्‌का साक्षात्कार नहीं हो पाता । अथवा यद्यपि 'मेरा जनार्द्दन मेरा जनार्दन' इस प्रकार प्रतिक्षण बोलनेवालेका समय बीतता है, तथापि भगवान् जनार्द्दन उसके मनका प्रत्यक्ष विषय नहीं होते । यहाँपर प्रतिपल जनार्द्दनको मेरा-मेरा कहनेवालेको भी जनार्द्दन प्रत्यक्ष नहीं होते यह विरोधच्छाया 'मह मह' इस सैन्धव भाषामयी उक्तिसे वैचित्र्यशालिनी हो जाती है ।

उपसंहरति—

इत्थं यथा यथा निरूप्यते, तथा तथा न लभ्यतेऽन्तः काव्यार्थानाम् ।

इत्थमनया रीत्या, यथा यथा येन येनावस्थाभेदभिन्नत्वादिना प्रकारेण निरूप्यते, तथा तथा काव्यार्थानां काव्याभिधेयानामन्तो न लभ्यते, किन्तु काव्यार्था अनन्ता एव भवन्तीत्यर्थः ।

वीप्साद्वयेन प्रकाराणां बाहुल्यमर्थानां च नियमेनानन्त्यमिति सूच्यते ।

अब उक्त विषयका उपसंहार करते हैं—इत्थमिति । इस प्रकार जितना जितना ही इस पर विचार करते हैं, उतना उतना-ही काव्यार्थोंका अन्त नहीं मिलता है, अर्थात् उतना ही काव्यार्थ में आनन्त्य प्रतीत होता है ।

किं तर्हि वाच्यवैचित्र्यमेव मुख्यम् ? इत्यत आह—

इदन्तूच्यते—

'अवस्थाऽऽदिविभिन्नानां वाच्यार्थानां निवन्धनम्।'

व्याख्यास्यतेऽनुपदमिदं पूर्णायां कारिकायाम्।

किमिदमवस्थाऽऽदिविभिन्नत्वमित्याकाङ्क्षायामन्तरैवाभिधत्ते वृत्तिकारः—

यत् प्रदर्शितं प्राक्।

'अवस्थादेशकालादिविशेषैः' इत्यादिकारिकयाऽत्रैवोद्द्योते।

यहाँपर यह समझना चाहिये कि—अवस्था, देश, काल आदिके भेदसे वाच्यार्थोंकी रचना जो अभी कुछ पहले ( १११वीं कारिकामें ) कही जा चुकी है:—

कारिकां पूरयति—

'भूम्नैव दृश्यते लक्ष्ये न तच्छक्यमपोहितुम् ॥११२॥''

अवस्थाऽऽदिभिः प्रागुक्तैर्विभिन्नानां वाच्यार्थानां निवन्धनं योजनं लक्ष्ये भूम्ना बाहुल्येनैव दृश्यते, तस्माद् वहुलप्रचारं तत् तादृशार्थनिवन्धनम्, अपोहितुं पृथक् कर्तुं न शक्यमित्यर्थः।

एतेन, अवतरणवाक्यघटकतुशब्दद्योत्यारुचिनिदानमस्यानुपादेयत्वं व्यक्तीकृतम्, तत्तु समीचीनं नास्ति, किन्त्वशक्यापोहमिति कथञ्चिन्मृष्यत इति कारिकातात्पर्यावधारणात्।

उस ( रचना ) का काव्योंमें वहुतायतसे दिखाई देनेसे अपलाप नहीं किया जा सकता है।

तत्सम्यक्त्वाय क उपायः ? इति जिज्ञासायामाचष्टे—

तत्तु भाति रसाश्रयात्।

तु शब्दोऽप्यर्थकः। तदपि तादृशवाच्यनिवन्धनमपि रसाश्रयाद्रसव्यञ्जनाद् भाति छायामासादयतीत्यर्थः। एतच्च कारिकातुरीयचरणतात्पर्यगोचरीभूतम्।

उसके सौन्दर्य प्राप्त करनेका उपाय वतलाते हैं—तत्तु इति। उस प्रकार की वाच्यार्थ रचना भी रसके व्यञ्जक होनेसे ही सुशोभित होती है।

उपसंहरन्नुक्तार्थं द्रढयति—

तदिदमत्र सङ्क्षेपेणाभिधीयते सत्कवीनामुपदेशाय—

तेन न पौनरुक्त्याक्षेपः सम्भवति।

उपसंहार करते हुए उक्तार्थको दृढ करते हैं—तदिदमिति। अतः अपनेको सुकवि बनने की अभिलाषा करनेवाले नूतन कवियोंके उपदेशके लिये इस विषयमें संक्षेपसे यह कहते हैं कि :—

'रसभावादिसम्बद्धा यद्यौचित्यानुसारिणी।
अन्वीयते वस्तुगति र्देशकालादिभेदिनी ॥ ११३ ॥'

अस्या अग्रिमकारिकया सहैकवाक्यतयैव वाक्यार्थबोध इति तत्रैव व्याख्यास्यामः।

यदि औचित्यके अनुसार रस, भाव आदिसे सम्बद्ध तथा देश, काल, अवस्था आदिके भेदसे युक्त पदार्थ-रचनाका अनुसरण किया जाय तो :—

कारिकाद्वयानुषक्तमनुक्तमंशं वृत्तिकृदाह—

का गणना कवीनामन्येषां परिमितशक्तीनाम् ?—

'वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः।
निबद्धाऽपि क्षयं नैति प्रकृतिर्जगतामिव ॥ ११४ ॥'

यदि रसभावादिसम्बद्धा रसादिव्यञ्जिका, औचित्यानुसारिणी—औचित्येन निबद्धा, देशकालादिभेदेन भिन्ना, वस्तुगतिर्विपुलीभूता वाच्यततिः, अन्वीयते कविभिरुपनिवेश्यते, तदा परिमितशक्तीनामल्पप्रतिभाजुषामाधुनिककवीनां का गणना ?, वाचस्पतेः स्वयं बृहस्पतेः सहस्राणां सहस्रैरपि यत्नतः प्रयासान्निबद्धाऽपि सा, जगतां प्रकृतिरिव वैभवी विश्वविरचनशक्तिरिव, क्षयमवसानं नैति न प्राप्नोतीत्यर्थः।

तादृशवस्तुनिबन्धनेऽर्थानन्त्यं भवत्येवेति तत्र रसादिसम्बन्ध औचित्यानुरोधश्च नितरामपेक्ष्य इत्यभिसन्धिः।

इह सहस्रशब्दाद् बहुवचनस्य प्रयोगे—'विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोः' इत्यनुशासनविरोधपरिहारोपायश्चिन्तनीयः। अनेकसहस्रतात्पर्यकं वा तत्।

अत्यन्त परिमित शक्तिवाले अन्य साधारण कवियोंको कौन पूछता है, अर्थात् यदि हजारों-लाखों बृहस्पति भी एक साथ मिलकर उसका वर्णन करें तो भी जगत्के उपादानकारण प्रकृतिकी तरह उसकी समाप्ति नहीं हो सकती है, सारांश यह है कि अवस्थादिके भेद से पदार्थों की रचना में अर्थानन्त्य तो निश्चित ही है, इसलिये ऐसी स्थितिमें काव्यमें रमणीयता लानेके लिये रसका सम्बन्ध और औचित्य का अनुरोध अवश्य करना चाहिये।

विवृणोति वृत्तिकारः—

यथा हि—जगत्प्रकृतिरतीतकल्पपरम्पराऽऽविर्भूतविचित्रवस्तुप्रपञ्चा

सती, पुनरिदानीं परिक्षीणा पदार्थनिर्माणशक्तिरिति न शक्यतेऽभिधातुम्, तद्वदेवेयं काव्यस्थितिरनन्ताभिः कविमतिभिरुपभुक्ताऽपि, नैदानीं परिहीयते प्रत्युत नवनवाभिर्व्युत्पत्तिभिः परिवर्धते।

प्रकृतिः प्रधानाख्या सत्त्वरजस्तमसां साम्यावस्था, ऐशी शक्तिर्वा। अतीताः विगताः याः कल्पानां संवर्तानां परम्पराः, ताभिस्तासु वाऽऽविर्भूतः प्रकटित उत्पन्नो वा, विचित्रो नैकविधो वस्तूनां पदार्थानां प्रपञ्चो विस्तारो यत्र तादृशी। काव्यानां स्थितिर्मर्यादाऽर्थपरम्परेति यावत्। उपभुक्ता निर्माणोपयोगित्वेन गोचरीकृता।

वृत्तिकार उक्ताशय को ही स्फुट करते हैं—यथा हीति। जिस प्रकार अतीत कल्प-कल्पान्तरोंमें नानाविध पदार्थमय प्रपञ्च की रचना करनेमें जगत्की प्रकृतिरूप उपादान कारणके व्यय होने पर भी वह (प्रकृति) अब अन्य वस्तुओंके निर्माण करनेमें शक्ति रहित हो गई है, यह नहीं कहा जा सकता है, इसी प्रकार यह काव्यार्थ-परम्परा असंख्य कवि-बुद्धियोंसे उपभुक्त (वर्णित) होने पर भी इस समय शक्तिहीन या सारहीन नहीं है, अपितु उन कवियोंके वर्णनोंसे नयी नयी व्युत्पत्तियोंके प्राप्त करनेसे अधिक वृद्धि को ही प्राप्त कर रही है।

ननु तर्हि क्वचित् कविद्वयरचनयोः संवादो दृश्यमानः कथमुपपद्यतामित्यत आह—

इत्थं स्थितेऽपि—

'संवादास्तु भवन्त्येव बाहुल्येन सुमेधसाम्॥'

द्वितीयार्धेनैकवाक्यतया व्याख्यास्यते।

देश, काल, अवस्था आदिके भेदसे पदार्थोंके आनन्त्य होने पर भी अत्यन्त प्रतिभाशाली कवियोंमें एक जैसी उक्तियां तो बहुतायतसे होती ही हैं।

वृत्तिकृत् कारिकाऽनुक्तमप्यपेक्षितमंशमाचष्टे—

स्थितं ह्येतत्—संवादिन्यो मेधाविनां बुद्धयः।

मेधाविनां सुबुद्धीनां बुद्धयः संवादिन्यः समानविषयकपरामर्शभाजो भवन्तीत्येतद्धि स्थितं निर्णीतमित्यर्थः।

अर्थात् यह तो निश्चित ही बात है कि प्रतिभाशाली कवियों की बुद्धियां एक-दूसरीसे मिलती-जुलती सी होती हैं।

विशेषमभिधातुं कारिकोत्तरार्धमवतारयति—

किन्तु—

'नैकरूपतया सर्वे ते मन्तव्या विपश्चिता॥ ११५॥'

सुमेधसां कवीनां काव्ये संवादा इतरसादृश्यरूपास्तु बाहुल्येन भवन्त्येवेति न चित्रम्। यतो मेधाविनां बुद्धयः संवादिन्यो भवन्ति। किन्तु ते सर्वे संवादा एकरूपतया—एकाकारत्वेन विपश्चिता विदुषा न मन्तव्या इत्यर्थः।

अज्ञातपरस्पररचनमपि विलक्षणप्रातिभं कविद्वयमेकविषयं विवर्णयिषु कदाचित् सदृशमेव काव्यं रचयेदिति नाश्चर्यम्। किन्तु तत्सादृश्यं वक्ष्यमाणक्रमेण नानाविधमिति तत्र सर्वे प्रकारा नैकरूपा न च मर्षणीया वा भवन्तीति तात्पर्यम्।

परन्तु विद्वान् पुरुष उन सब संवादों (समान उक्तियों) को एक रूप ही न समझें, अर्थात् एक दूसरेकी रचना को नहीं जानते हुए भी विलक्षण प्रतिभावाले दो कवि एक ही विषय का वर्णन करनेके लिये उद्यत हों तो यह कोई आश्चर्य की बात नहीं है कि एक सदृश काव्यको ही न रच डालें, किन्तु वक्ष्यमाण रीतिसे अनेक तरहके सादृश्यके सारे ही प्रकार एकरूप ही नहीं माने जा सकते हैं, इसलिये बुद्धिमानोंको पुनरुक्ति का संदेह नहीं करना चाहिये।

कुतस्ते संवादा ऐकरूप्येण न मान्या इत्याशङ्क्य, तत्स्वरूपव्याक्रियैव समाधातुं कारिकामवतारयति—

**कथमिति चेत्?—**

संवादस्वरूप–प्रकारान्निरूपयति—

**'संवादो ह्यन्यसादृश्यं, तत् पुनः प्रतिबिम्बवत्।**
**आलेख्याकारवत् तुल्यदेहिवच्च शरीरिणाम्॥ ११६॥'**

अन्येन काव्यार्थेन सादृश्यं समानाकारत्वं काव्यार्थस्य संवाद इत्युच्यते। तदन्यसादृश्यं काव्यार्थस्य पुनः शरीरिणां जीवानां प्रतिबिम्बवद् दर्पणपतितप्रतिच्छायतुल्यमेकम्, तेषामालेख्यं भित्त्यादौ लिखितं चित्रं, तत्प्रख्यं तत्सदृशं पुनर्द्वितीयम्, तेषामेव तुल्यः स्वसदृशोऽन्यो यो देही, तद्वच्च तृतीयमिति त्रिविधं भवतीत्यर्थः।

प्रथमचरणेन लक्षणम्, तदितरचरणैस्तु विभागोऽत्र प्रतिपाद्यते। शरीरिणामित्यस्य प्रतिवाक्यं सम्बन्धः।

यथा हि–देहिनां दर्पणादिपतितप्रतिबिम्बे, भित्त्यादिलिखितचित्रे, समानाकारकव्यक्त्यन्तरे च सादृश्यं त्रिविधं भवति, तथैव काव्यार्थानामिति सारम्।

क्योंकि अन्यके साथ सादृश्य को ही संवाद कहते हैं, और वह सादृश्य १. प्राणियों के प्रतिबिम्बके समान, २. एवं चित्र के आकार के समान, ३. और दूसरे शरीरधारी

जीवके समान, इस तरह तीन प्रकार का होता है, अर्थात् १. जिसप्रकार प्राणियों का दर्पण आदिमें प्रतिभासित प्रतिविम्बमें तथा २. भित्ति (दीवार) आदि पर लिखित चित्रमें ३. और समान आकारवाले दूसरे प्राणीमें त्रिविध सादृश्य प्रतीत होता है, इसी प्रकार काव्यार्थोंमें भी समझना चाहिये।

तदाह—

संवादो हि काव्यार्थस्योच्यते तदन्येन काव्यवस्तुना सादृश्यम्। तत् पुनः शरीरिणां प्रतिबिम्बवदालेख्याकारवत् तुल्यदेहिवच्चत्रिधा व्यवस्थितम्। किञ्चिद्धि काव्यवस्तु वस्त्वन्तरस्य शरीरिणः प्रतिबिम्बः प्रतिबिम्बकल्पम्, अन्यदालेख्यप्रख्यम्। अन्यत् तुल्येन शरीरिणा सदृशम्।

वृत्तिकार उसी को विशद करते हैं—संवाद इति। क्योंकि दूसरे काव्य पदार्थके साथ काव्यार्थका सादृश्य ही संवाद कहा जाता है, फिर वह सादृश्य प्राणियोंके दर्पणादिगत प्रतिविम्बके समान, या चित्रलिखित आकारके समान तथा तुल्य दूसरे शरीरधारीके समान तीन प्रकार का होता है, एवं कोई काव्यपदार्थ दूसरे काव्य पदार्थके प्रतिविम्बके समान होता है, तथा दूसरा (काव्यपदार्थ) चित्रके समान और तीसरा (काव्यपदार्थ) तुल्य देहधारी प्राणीके समान होता है।

नन्वेतेनोक्तशङ्कायाः समाधिः कथमिति जिज्ञासायामाख्याति—

'तत्र पूर्वमनन्यात्म तुच्छात्म तदनन्तरम्।
तृतीयं तु प्रसिद्धात्म नान्यसाम्यं त्यजेत् कविः॥ ११७॥'

कविः—तत्र तेष्वन्यसादृश्येषु पूर्वं प्रथमं प्रतिविम्वतुल्यम्, अविद्यमानोऽन्यः पूर्वनिबद्धातिरिक्त आत्मा स्वरूपं यस्य तादृशं यद् भवति, तत्परिहरेदिति शेषः। तदनन्तरं द्वितीयमालेख्यप्रख्यं यत् तुच्छः शून्य आत्मा यस्य तथाविधम् भवति, तदपि परिहरेदेव, असत्वात्। तृतीयं तु पुनस्तुल्यदेहिवत् प्रसिद्धः काव्येषु प्रख्यात आत्मा यस्य तादृग् यद् भवति, तदन्यसाम्यं सादृश्यं कमनीयतया प्रसिद्धत्वान्न त्यजेन्न परिहरेदित्यर्थः।

उनमें पहला तो केवल प्रतिविम्बके समान पूर्ववर्णित पदार्थसे विल्कुल ही भिन्न स्वरूप न होनेसे सर्वथा परित्याज्य है, तथा दूसरा भी (काव्यार्थ) चित्रके समान केवल तुच्छरूप (असद्रूप) होनेसे परित्याज्य ही है और तीसरा (काव्यार्थ) समानाकार देहीके सदृश होनेसे वास्तविक प्रसिद्ध स्वरूप है, अतः इस तृतीय प्रकारके साम्य को कवि परित्याग न करे।

तदाह—

तत्र पूर्वं प्रतिबिम्बकल्पं काव्यवस्तु परिहर्तव्यं सुमतिना, यतस्तदनन्यात्म तात्त्विकशरीरशून्यम्। यदनन्तरमालेख्यप्रख्यमन्यसाम्यं शरीरान्तरयुक्तमपि, तुच्छात्मत्वेन त्यक्तव्यम्। तृतीयं तु कमनीयं शरीरसद्भावे सति ससंवादमपि काव्यवस्तु न त्यक्तव्यं कविना। नहि शरीरी शरीरिणाऽन्येन सदृशोऽप्येक एवेति शक्यते वक्तुम्।

प्रतिबिम्बं हि च्छायामात्रं वास्तविकाकारशून्यत्वादसत्। आलेख्यमपि तुरगाद्यनुकार्यमात्रबुद्धिकृत्, न तु रञ्जनसाधनीभूतद्रव्यप्रत्यायकमित्यसदेव। अन्यदेहिसादृश्यं तु सदृशयोरपि द्वयोःसर्वथैक्यप्रतीतेरप्रसिद्धेः कमनीयतमत्वाच्च सत्स्वरूपं नैव त्यक्तव्यमित्यर्थः।

संवादविभागनिरूपणेनामुना कुतो न संवादानामैकरूप्यमिति शङ्का निरस्ता।

उनमें से प्रथम प्रतिबिम्बरूप काव्य पदार्थ को बुद्धिमान् व्यक्ति छोड़ दे, क्योंकि वह अनन्यात्म अर्थात् पूर्ववर्णित पदार्थसे बिल्कुलही अतिरिक्त तात्त्विक स्वरूपसे रहित है, उसके बाद दूसरा ( काव्यार्थ ) चित्रतुल्य साम्य होनेके कारण काल्पनिक कलेवरसे युक्त होने पर भी तुच्छ रूप होनेसे परित्याज्य ही है, परन्तु तीसरे ( काव्यार्थ ) को दूसरे शरीरीके समान पूर्ववर्णित काव्यार्थके सदृश होने पर भी ( अन्य काव्य वस्तु से मिलती जुलती सी होने पर भी ) उससे भिन्न और वास्तविक सुन्दर शरीरसे युक्त होनेके कारण कविको नहीं छोड़ना चाहिये, क्योंकि एक शरीरधारी मनुष्य या अन्य कोई भी प्राणी दूसरे शरीरधारीके समान होने पर भी उससे अभिन्न ही है ऐसा नहीं कहा जा सकता है।

कारिकाऽन्तरमवतारयति—

एतदेवोपपादयितुमुच्यते—

एतत् तृतीयसंवादस्यात्याज्यत्वम्।

तृतीय संवादके विषयको ही अत्याज्य उपपादन करने के लिये आगे कहते है—

'तत्त्वस्यान्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि ॥
वस्तु भातितरां तन्व्याः शशिच्छायमिवाननम् ॥ ११८ ॥'

अन्यस्य प्रसिद्धवाच्यादिविलक्षणस्य, तत्वस्य व्यङ्ग्यरसादिरूपस्य सारतयाऽऽत्मनः सद्भावे सति, पूर्वस्थितेः प्राचीनकविवर्णितार्थततेः, अनुयायि तुल्यमपि, वस्तु नवीनकविकाव्यप्रतिपाद्यं, सारभूतलावण्यसद्भावे, तन्व्या ललनायाः, शशिच्छायं

चन्द्रकान्ति, आननमिव भातितराम्, न तु पौनरुक्त्येन पुष्टं प्रतीतं भवतीत्यर्थः ।

यथा हि ललनाया मुखं चन्द्रतुल्यमपि सारभूतलावण्यसद्भावेन नितरां शोभत एव, न तु तुच्छतया प्रतीतं भवति, तथैव प्राचीनकाव्यार्थसंवादभागपि नवीनकाव्यप्रतिपाद्यार्थो रसादिव्यङ्ग्यसद्भावेन शोभत एव, नतु पुनरुक्तत्वेन प्रतीतं भवतीति सारम् ।

प्रसिद्ध वाच्यादिसे विलक्षण व्यङ्ग्य रसादिरूप सारभूत तत्वके होनेपर पुरातन कविवर्णित पदार्थोंका अनुसरण करनेवाला नवीन काव्यार्थ भी चन्द्रमा की कान्तिसे युक्त कामिनीके मुखमण्डलके समान अधिक रमणीय प्रतीत होता है, अर्थात् जिस प्रकार ललनाका मुखमण्डल चन्द्रतुल्य होनेपर भी सारभूत लावण्यके प्रभावसे अत्यन्त कमनीय मालूम पड़ता है, इसी प्रकार नवीन काव्यार्थ प्राचीन काव्यार्थके सदृश होनेपर भी रसादि व्यङ्ग्यार्थके सम्पर्कसे अत्यन्त रमणीय ही प्रतीत होता है, पुनरुक्त जैसा नहीं प्रतीत होता ।

तदाह—

**तत्त्वस्य सारभूतस्यात्मनः सद्भावे ऽन्यस्य, पूर्वस्थित्यनुयाय्यपि वस्तु, भातितराम् । पुराणरमणीयच्छायाऽनुगृहीतं हि वस्तु शरीरवत् परां शोभां पुष्यति, न तु पुनरुक्तत्वेनावभासते । तन्व्याः शशिच्छायमिवाननम् ।**

वृत्तिकार उक्ताशयको स्फुट करते हैं—तत्त्वस्येति । रसादिरूप सारभूत व्यङ्ग्य पदार्थके होनेपर पूर्ववर्णित पदार्थका अनुसरण करनेवाला भी नवीन काव्य पदार्थ अधिक शोभित होता है, क्योंकि पुरातन रमणीय सौन्दर्यसे उल्लसित होनेवाला पदार्थ शरीरके समान परम सुषमाको प्राप्त होता है, पुनरुक्त सा प्रतीत नहीं होता अर्थात् जिस प्रकार चन्द्र की पुरातन रमणीय छायासे युक्त ललनाका मुखमण्डल अभद्र नहीं प्रतीत होता अपितु अत्यन्त कमनीय ही प्रतीत होता है, इसी प्रकार काव्यार्थमें भी समझना चाहिये ।

इत्थं वाक्यार्थसादृश्येषु ग्राह्याग्राह्यविवेकं विधाय पदार्थसादृश्ये ग्राह्यत्वं वक्तुं कारिकामवतारयति—

**एवं तावत् ससंवादानां वाक्यवेदितानां काव्यार्थानां विभक्ताः सीमानः । पदार्थरूपाणां च वस्त्वन्तरसदृशानां काव्यवस्तूनां नास्त्येव दोष इति प्रतिपादयितुमुच्यते—**

संवादेनेतरसादृश्येन सहिताः ससंवादास्तेषाम् । वाक्येन वेदितानां बोधितानां वाक्यार्थानामिति यावत् । सीमानोऽवधयः । दोषः पूर्वसंवादात् पौनरुक्त्यलक्षणः ।

उक्तरीतिसे वाक्यार्थ-सादृश्योंमें ग्राह्या-ग्राह्यविषयक विवेक ( विचार ) सम्पन्न कर अब पदार्थ-सादृश्यमें ग्राह्यत्वको बतलानेके लिये भूमिका रचते हैं—एवमिति। इस प्रकार अबतक पदसमुदायरूप वाक्यों द्वारा प्रतिपादित सादृश्यसहित काव्यके वाक्यार्थोंकी अवधिका विभाग किया गया, अब आगे अन्य प्राचीन पदार्थरूप वस्तुओंसे मिलती जुलतीसी पदार्थरूप नूतन काव्यवस्तुओंकी रचना करने में कोई दोष ही नहीं है, यह बतलानेके लिये कहते हैं—

**'अक्षरादिरचनेव योज्यते यत्र वस्तुरचना पुरातनी।**
**नूतने स्फुरति काव्यवस्तुनि व्यक्तमेव खलु सा न दुष्यति ॥१९॥'**

यत्र यस्मिन् प्रबन्धे, नूतने प्रत्यग्रतयाऽभिरामे, काव्यवस्तुनि काव्यार्थे, स्फुरति विराजति सति, अक्षराणां वर्णानाम् , आदिशब्दात् पदानां च या रचना, सेव, पुरातनी प्राचीनकविपरम्परानिबद्धा, वस्तुरचना पदार्थरचना, योज्यते निबध्यते, सा ताहृशवस्तुरचना, न दुष्यति नैव दुष्टा भवतीत्यर्थः।

जिस काव्यमें नूतनरूपसे स्फुरण होनेवाली काव्यवस्तुओंमें पुरातन कवि-वर्णित कोई पुरानी वस्तु वर्ण, पदकी पुरातनी रचनाके समान उपनिबद्धकी जाती है, वह निश्चितरूपसे दूषित नहीं होती यह स्पष्ट ही है।

तदेव विशदीकरोति वृत्तिकारः—

**नहि वाचस्पतिनाऽप्यक्षराणि पदानि वा कानिचिदपूर्वाणि घटयितुं शक्यन्ते। तानि तान्येवोपनिबद्धानि न काव्यादिषु नवतां विरुध्यन्ति, तथैव पदार्थरूपाणि श्लेषादिमयान्यर्थतत्त्वानि।**

अपूर्वाणि प्रसिद्धेभ्योऽकारादिवर्णेभ्यो घटादिपदेभ्यो वाऽन्यानि स्वोपात्तरूपाणि। तानि तानि पूर्वप्रसिद्धानि। नवतां तेषामपूर्वत्वं न विरुध्यन्ति नैव प्रतिबध्नन्ति दैवादिकरुधधातोरूपमिदम्। पदार्थरूपाण्यपूर्वाणि न घटयितुं शक्यन्त इति पूर्ववत्सम्बन्धः। श्लेषादिमयानीति स्वरूपे प्राचुर्ये वा मयट्। अर्थतत्त्वान्यर्थाः।

यथा विदुषां प्रधानतमेनापि बृहस्पतिना ऽक्षराणि पदानि वा ऽपूर्वाणि वाक्ये योजयितुं न कथमपि प्रभूयते, किमु वक्तव्यमाधुनिकानां बुधानाम्?, तथैवेदानीन्तनैः कविभिरपि प्राचीनकविपरम्परयाऽस्पृष्टान् पदार्थान् स्वकाव्ये सन्निवेशयितुं न क्षम्यते। तथाहि—श्लेषघटनायां गुण-बाण-शिलीमुख-हरि-कौशिक-विष-कमल-तेजो-द्विजादिशब्दाः प्राचीनैः प्रयुक्ता एव प्रयुज्यन्ते। मुखस्य चन्द्रकमलाभ्यां, स्तनयोर्गिरिकलशाभ्यां, केशानां कलापतिमिराभ्यां सहोपमानोपमेयभावश्च पूर्वप्रसिद्ध एवोप-